मधिश्रयति । हे उखे त्वं वायोर्घर्मः दीपकोऽन्तरिक्षलोकोऽसि । मातर्यन्तरिक्षे श्वसिति निश्वासवच्चेष्टां करोतीति मातरिश्वा वायुः ॥ घर्मः ॥ घृ क्षरणदीप्त्योः । घर्मो दीपकः । संचारस्थानप्रदानेन वायोर्दीपकोऽभिव्यञ्जकोऽन्तरिक्षलोकः । हे स्थालि तवोदरेऽप्यन्तरिक्षरूपस्यावकाशस्य वायुसंचारस्य सद्भावात्त्वमपि वायोर्घर्मरूपासि ॥ द्यौरसि पृथिव्यसीति पूर्वमन्त्रे लोकद्वयरूपत्वमुखाया उक्तम् । अत्र मातरिश्वनो घर्मोऽसीत्यन्तरिक्षलोकरूपत्वमुच्यते । तस्मादेषां त्रयाणां लोकानां धारणात् विश्वधा असि । विश्वं दधातीति विश्वधाः । विश्वधारणसमर्थासि लोकत्रयरूपत्वात् । किं च । परमेण धाम्ना उत्तमेन बहुक्षीरधारणसामर्थ्यरूपेण तेजसा हे उखे त्वं दृंहस्व दृढा भव त्वन्निष्ठस्य क्षीरस्य गलनं वारयितुम् । अन्यथा भग्नायास्तव छिद्रेण क्षीरं गलेत् । दृहि वृहि वृद्धाविति [धा° १७. ८४.] धातुर्यद्यपि वृद्ध्यर्थस्तथापि दार्ढ्ये सति भङ्गाभावेन चिरमवस्थानाद्दार्ढ्यं नाम कालवृद्धिरेव भवति । किं च हे उखे मा ह्वाः कुटिला मा भव । ह्वृ कौटिल्ये । यद्युखा कुटिला भवेत्तदानीमवाङ्मुखायां (33.) सत्यां तत्स्थं क्षीरं गलेत् । अतः क्षीरधारणाय दार्ढ्यमकौटिल्यं चार्थ्यते । किं च । ते यज्ञपतिस्त्वत्सम्बन्धी यजमानो मा ह्वार्षीत् कुटिलो मा भूत् । त्वन्निष्ठक्षीरस्कन्दनेनानुष्ठानविघ्न एव यजमानस्य कौटिल्यं तच्च त्वदीयेन दार्ढ्येन कौटिल्याभावेन च न भविष्यतीति प्रार्थ्यते ॥ २॥

a. वसोः॑ प॒वित्र॑मसि श॒तधा॑रं॒ वसोः॑ प॒वित्र॑मसि स॒हस्र॑धारम् । b. दे॒वस्त्वा॑ सवि॒ता पु॑नातु॒ वसोः॑ प॒वित्रे॑ण श॒तधा॑रेण सु॒प्वा । c. काम॑धुक्षः ॥३॥

का° [४. २. २१.] वसोः पवित्रमिति पवित्रमस्यां करोत्युदग्वेति । अस्यामुखायां स्थापनीयस्य पवित्रस्य प्रागग्रत्वं सामान्यतः प्राप्तमिति सिद्धवत्कृत्योदगग्रत्वं (34.) विकल्प्यते ॥ हे शाखापवित्र वसोरिन्द्रदेवतानिवासहेतोः पयसः शोधकं पवित्रं त्वमसि । पवित्रेण व्यवधाने सति क्षीरेण सह स्थाल्यां पततां तृणपर्णादीनां प्रतिबध्यमानत्वात्पवित्रस्य क्षीरशोधकत्वम् । किंभूतं पवित्रम् । शतधारम् । शतसंख्या धारा यस्मिन् । तथा सहस्रधारम् । सूक्ष्मैः पवित्रछिद्रैः स्थाल्यां पतन्तीनां क्षीरधाराणां शतसहस्रसंख्याकानां सद्भावाच्छोदकत्वमाहर्तुम् । वसोः पवि-

त्रमिति द्विरुक्तिः । अभ्यासे भूयांसमर्थं मन्यंते [निरु° १०.४२.] ॥ का° [४.२.२३.] देवस्त्वेत्यासिच्यमाने जपतीति । पयो देवता । दोहनादूर्ध्वं स्थाल्यां सिच्यमान हे क्षीर सविता प्रेरको देवः पूर्वोक्तरीत्या शतधारेण वसोः पवित्रेण त्वा वां पुनातु शोधयतु । सुप्वेति पवित्रविशेषणं सुष्ठु पुनातीति सुपु तेन सुप्वा । का° कामधुक्ष इति प्रश्न इति [४.२.२४.] एकस्यां गवि दुग्धायां दोग्धारं प्रत्यध्वर्युः पृच्छेत् । हे दोग्धः विद्यमानानां गवां मध्ये कामधुक्षः दुग्धवानसि ॥३॥

a. सा विश्वायुः । b. सा विश्वकर्मा । c. सा विश्वधायाः । d. इन्द्रस्य त्वा भागꣳसोमेनातनच्मि । e. विष्णो हव्यꣳरक्ष ॥४॥

का° [४.२.२५.] प्रोक्ते सा विश्वायुरित्याहेति ॥ पूर्वोक्तप्रश्नस्योत्तरे अमूं गामिति दोग्धा प्रोक्ते सति सा विश्वायुरिति मन्त्रेण दोग्धारं प्रत्यध्वर्युर्ब्रूयात् । या गौस्त्वया दुग्धा मया च पृष्टा सा विश्वायुःशब्देनाभिधेया । विश्वमायुर्यस्याः सा विश्वायुः यजमानस्य सम्पूर्णमायुः प्रयच्छतीत्यर्थः ॥ का° [४.२.२६.] एवमितरे उत्तराभ्यामिति । यथा प्रथमा गौः पृष्टा एवमितरे द्वितीयतृतीये गावौ तद्दोहनादूर्ध्वं कामधुक्ष इति मन्त्रेण प्रष्टव्ये । दोग्धा तूत्तरेऽमूमिति प्रोक्ते सा विश्वकर्मा सा विश्वधाया इति मन्त्राभ्यां क्रमेण तयोराशिषं ब्रूयात् । या द्वितीया गौस्त्वया पृष्टा सा विश्वकर्मा या तृतीया गौस्त्वया पृष्टा सा विश्वधायाः । डुधाञ् धारणपोषणयोः । विश्वान्सर्वान्देवान्दधाति क्षीरदध्यादिहविर्दानेन पुष्णातीति विश्वधायाः । असुन्प्रत्ययो णिच्च । णित्वादातो युक्चिण्कृतोरिति [पा° ७.३.३३.] युक् । यद्वा । धेट् पाने । विश्वानिन्द्रादिदेवान्क्षीरादिहव्यं धापयति पाययतीति विश्वधायाः ॥ का° [४.२.३३.] उद्वास्यातनक्ति प्राग्घुतशेषेणेन्द्रस्य त्वेति ॥ क्वथितं क्षीरमग्नेरुद्वास्य मन्दोष्णे (35.) तत्र प्रातःकालीनहोमावशिष्टेन दध्ना दधिनिष्पत्तये आतञ्चनं कुर्यात् । हे क्षीर इन्द्रस्य भागं त्वां सोमेन सोमवल्लीरसेनातनच्मि । दध्यर्थं कठिनीकरोमि । तञ्चतिः कठिनीकरणार्थः । यद्यप्यत्रातञ्चनहेतुर्दधिशेषस्तथापि भावनया तस्य सोमत्वं संपद्यते । यथा कश्चित्पुमान्बन्धुत्वेन भावितो बन्धुर्भवति प्रातिकूल्येन भावितः शत्रुश्च । तदुक्तं वसिष्ठेन । बन्धुत्वे भावितो बन्धुः परत्वे भा-

वितः परः । विषामृतदृशैवेह (36.) स्थितिर्भावनिबन्धिनीति ॥ भोज्यं वा विषत्वेन भावितं वान्तिं करोति अमृतत्वेन भावितं जीर्णं सद्बलहेतुर्भवति । तथात्र दधिशेषस्य (37.) भावनया सोमत्वम् ॥ का° [४. २. ३४.] सोदकेनापिदधात्यमृन्मयेन विष्णो हव्यमितीति ॥ हे विष्णो इदं हव्यं क्षीरं रक्ष । सर्वत्र सृष्टौ पालने संहारे च ब्रह्मविष्णुमहेश्वरा अभिमानिन्यो देवताः । अतो विष्णुं सम्बोध्य हविषो रक्षा प्रार्थ्यते ॥४॥

III. a. अग्ने॑ व्रतपते व्र॒तं च॑रिष्यामि॒ तच्छ॑केयं॒ तन्मे॑ राध्यताम् । b. इ॒दम॒हम॒नृ॑तात्स॒त्यमुपै॑मि ॥५॥

का° [२. १. ११.] अपरेणाहवनीयं प्राङ्तिष्ठन्नग्निमीक्षमाणोऽप उपस्पृश्य व्रतमुपैत्यग्ने व्रतपत इदमहमितिवेति ॥ हे व्रतपते व्रतस्यानुष्ठेयस्य कर्मणः पते पालक हे अग्ने त्वदनुज्ञया व्रतं चरिष्यामि कर्मानुष्ठास्यामि । तत् शकेयम् तत्कर्मानुष्ठातुं शक्तो भूयासं । त्वत्प्रसादात् । तन्मे राध्यतां मदीयं तत्कर्म निर्विघ्नं सत् फलपर्यन्तं सिध्यतु । शकेराशीर्लिङ्यासुट् । लिङ्याशिष्यङ् [पा° ३. १. ८६.] । अतो येयः [पा° ७. २. ८०.] गुणः शकेयम् । अग्निर्वै देवानां व्रतपतिरिति श्रुतिः [१. १. १. २.] ॥ इदमहं ॥ अहं यजमानोऽस्मादनृतान्मनुष्यजन्मन उद्धृत्य सत्यं देवताशरीरं उपैमि प्राप्नोमि । सत्यमनुष्ठीयमानकर्मरूपेण प्रत्यक्षमिति मन्वान इदमिति विशिनष्टि । अनृतं मनुष्यजन्म शीघ्रविनाशित्वात् । यथा स्वप्नगजादयो बोधमात्रेण शीघ्रं निवर्तमाना अनृता उच्यन्ते । सत्यं देवजन्म बहुकालस्थायित्वात् यथा जागरणगजादयः । श्रुतिरपि [१. १. १. ४.] । इदमहमनृतात्सत्यमुपैमीति तन्मनुष्येभ्यो देवानुपावर्तत इति । यद्वा लोकप्रसिद्धे एव सत्यानृते ग्राह्ये । नानृतं वदेदिति कर्मण्यनृतनिषेधात् । अनृतवदनादुद्धृत्याहमिदं सत्यवदनमुपैमि । अत इदं सत्यवदनं कर्माङ्गत्वात्कर्मकाले पालनीयम् ॥५॥

a. कस्त्वा॑ युनक्ति॒ स त्वा॑ यु॑नक्ति॒ कस्मै॑ त्वा युनक्ति॒ तस्मै॑ त्वा युनक्ति । b. कर्म॑णे वां॒ वेषा॑य वाम् ॥६॥

एवं व्रतमुपेत्य ब्रह्माणं वृत्वापां प्रणयनं कुर्यात् । का° [२.३.२.३.] ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेत्याहानुज्ञात उत्तरेणाहवनीयᳬ संप्रति निदधाति कस्त्वा युनक्तीति ॥ अत्र मन्त्रे प्रयुञ्जानोऽध्वर्युर्यज्ञारम्भकर्मण्यात्मनः कर्तृत्वमपनीय प्रजापतेर्यज्ञकर्तृत्वं प्रश्नोत्तररूपाभ्यां मन्त्रवाक्याभ्यां प्रतिपादयति । प्रणीतानामपां धारक हे पात्र त्वां कः पुरुषो युनक्ति आहवनीयस्योत्तरभागे स्थापयतीति प्रश्नः । तच्छब्दः प्रसिद्धार्थवाची । सर्वेषु वेदेषु जगन्निर्वाहकत्वेन प्रसिद्धो यः प्रजापतिरस्ति स एव परमेश्वरः हे पात्र त्वां युनक्तीत्युत्तरं । पुनरपि कस्मै प्रयोजनाय त्वां युनक्तीति प्रश्नः तस्मै प्रजापतये तत्प्रीत्यर्थं त्वा युनक्तीत्युत्तरम् । सर्वकर्माणि परमेश्वरप्रीत्यर्थमनुष्ठेयानीति भगवद्गीतास्वर्जुनं प्रति भगवतोक्तम् । भ° गी° १८. ५६. । ९. २७. इति च । ४. २४. °नेतिच ॥ परिस्तीर्य द्वन्द्वशः पात्राण्यासाद्य शूर्पं चाग्निहोत्रहवणीं चादत्ते । का° [२.३.१०.] कर्मणे वामिति शूर्पाग्निहोत्रहवण्यादायेति (38.) ॥ कर्मणे ॥ हे अग्निहोत्रहवणि हे शूर्प युवां कर्मार्थमहमादद इति शेषः । वेषाय च । विष्लृ व्याप्तौ । घञ् वेषो व्याप्तिः । सूचितकर्मसु व्याप्त्यर्थं च वां युवामहमाददे । शकटेऽवस्थितानां व्रीहीणां हविरर्थं पृथक्करणं प्रोक्षणार्थोदकधारणमित्यादयोऽग्निहोत्रहवणीव्यापाराः । व्रीहिनिर्वापधारणमुलूखले व्रीहिप्रक्षेपः पुनरुद्धरणं चेत्यादयः शूर्पव्यापाराः ॥ ६॥

a. प्रत्युष्टᳬ रक्षः प्रत्युष्टा अरातयः ।

b. निष्टप्तᳬ रक्षो निष्टप्ता अरातयः ।

c. उर्वन्तरिक्षमन्वेमि ॥ ७॥

का° [२.३.११.] प्रतपनं प्रत्युष्टं निष्टप्तमिति वेति । रक्षः राक्षसजातिः । प्रत्युष्टं प्रत्येकं दग्धं । उष दाहे । अनेनाग्निहोत्रहवणीशूर्पयोः प्रतपनेनात्रस्थिता राक्षसा दग्धा इत्यर्थः । अरातयोऽपि प्रत्युष्टाः प्रत्येकं दग्धाः । रा दाने । हविषो दक्षिणाया वा दानं रातिः । रातिः प्रतिबन्धका अरातयस्तेऽपि दग्धा अन्यथा (35.) न यज्ञसाधनमित्यर्थः । शूर्पादौ निगूढं रक्षो निष्टप्तं निःशेषेण तप्तं संतप्तम् । तप संतापे । अरातयश्च निष्टप्ताः । अनयोर्मन्त्रयोर्विकल्पः ॥ का° गच्छत्युर्वन्तरिक्षमि-

तीति । उरु विस्तीर्णमन्तरिक्षमवकाशमन्वेमि अनुसृत्य गच्छामि । गच्छतः पुरुषस्य पार्श्वयोरेव स्थितं रक्षोऽनेन मन्त्रेण निराक्रियते इत्याशयः ॥७॥

a. धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्व यं वयं धूर्वामः ।

b. देवानामसि वह्नितमꣳ सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् ॥८॥

का° [२.३.१२.१३.] अपणस्य पश्चादनस्तिष्ठत्समङ्गि धूरसीति धुरभिमर्शनमिति । अस्यायमर्थः अपणस्य पुरोडाशपाकहेतोर्गार्हपत्यस्य पश्चादनः शकटं व्रीहियुक्तं तिष्ठति । तच्च समङ्गि सम्यगङ्गानि यस्य तत् सर्वाङ्गोपेतं तस्य धुरं बलीवर्दवहनयोग्यं युगप्रदेशं धूरसीति मन्त्रेण स्पृशेदिति ॥ अथ मन्त्रार्थः । व्रीहिरूपहविर्धारकशकटसम्बन्धिनो युगस्य बलीवर्दवहनप्रदेशे कश्चिद्धिंसकोऽग्निः शास्त्रदृष्टोऽस्ति तं प्रार्थयते । अग्निर्वाऽएष धुर्यस्तमेतदत्येष्यन्भवतीति श्रुतेः [१.१.२.१०.] । हे वह्ने त्वं धूरसि हिंसकोऽसि । तुर्वीथुर्वीदुर्वीधुर्वी हिंसार्थाः धुर्वतेः क्विप् । यतो धूरसि अतो धूर्वन्तं हिंसन्तं पाप्मानं धूर्व विनाशय । किंच यो राक्षसादिर्यागविघ्नेनास्मान्धूर्वति हिंसितुमुद्युक्तस्तमपि धूर्व विनाशय यं च वयं धूर्वामस्तमपि धूर्व यमालस्यादिरूपं वैरिणं वयमनुष्ठातारो धूर्वामो हिंसितुमुद्यतास्तमपि धूर्व विनाशय । शकटस्थिताग्न्यतिक्रमणनिमित्तमपराधमपह्नोतुमग्न्याधारभूता शकटस्य धूरनेन मन्त्रेण स्पृश्यते ॥ का° [२.३.१४.] देवानामित्युपस्तम्भनस्य पश्चादीषामिति । शकटस्य दीर्घं काष्ठमीषा तदग्रस्य भूमिस्पर्शो मा भूदिति तदाधारत्वेन स्थापितं काष्ठमुपस्तम्भनं तस्य पश्चाद्भागे तामीषां स्पृशेत् । देवानामसि । हे शकट त्वं देवानां सम्बन्धि भवसि । किम्भूतं वह्नितमं वह प्रापणे वहतीति वह्निः । अतिशयेन वह्नि वह्नितमम् । व्रीहिरूपस्य हविषोऽतिशयेन प्रापकम् । तथा सस्नितमम् ष्णा शौचे अतिशयेन शुद्धम् आदृगमेत्यादिना [पा° ३.२.१७१.] किप्रत्ययः । यद्वा ष्णै वेष्टने । दार्ढ्याय चर्मादिभिरतिशयेन वेष्टितम् । पप्रितमम् प्रा पूरणे व्रीहिभिरतिशयेन पूरितम् । जुष्टतमम् जुषी प्रीतिसेवनयोः । देवानामतिशयेन प्रियम् । देवहूतमम् ह्वेञ् स्पर्धायां शब्दे च देवानामतिशयेनाह्वातृ व्रीहिपूर्णं शकटं दृष्ट्वा देवा आहूता इव शीघ्रमागच्छन्ति ॥८॥

अह्रुतमसि हविर्धानं दृꣳहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीत् । c. विष्णुस्त्वा क्रमताम् । d. उरु वाताय । e. अपहतꣳ रक्षः । f. यच्छन्तां पञ्च ॥९॥

अह्रुतमसि । ह्वृ कौटिल्ये क्तप्रत्ययः । ह्वरेश्छन्दसीति [पा° ७. २. ३१.] निष्ठायां ह्रु आदेशः । अह्रुतमकुटिलमसि । आरोहणेऽपि भङ्गभीतिर्नास्तीत्यर्थः । हविर्धानम् डुधाञ् धारणपोषणयोः । हविषो व्रीहिरूपस्य धारकं पोषकं भवसि । अतो दृꣳहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीदिति पूर्ववद्व्याख्येयम् ॥ का° [२. ३. १५.] विष्णुस्त्वेत्यारोहणमिति । हे शकट विष्णुर्व्यापको यज्ञः त्वा त्वां क्रमतां पादेनाक्रम्यारोहतु नाहं समर्थ इति भावः ॥ का° [२. ३. १६.] प्रेक्षत उरु वातायेति हविष्यानिति । हे शकट वाताय उरु भवेति शेषः । त्वदन्तर्वर्तिव्रीहिषु वायुसंचाराय विस्तीर्णं भव । शकटस्य व्रीहीणां तृणाद्याच्छादितत्वात्संकोचे वायुप्रवेशाभावादाच्छादनमपनीय यथा वायुः प्रविशति तथा संकोचं परित्यजेत्यर्थः । वायुरूपप्राणप्रवेशाद्धविः सप्राणं क्रियते मन्त्रेण । किं च वायुप्रवेशरहितं सर्वं वस्तु वरुणदेवत्यं भवति । वरुणश्च बन्धकारित्वाद्यज्ञनिरोधकस्तन्निवृत्त्यर्थमयं (37.) मन्त्रः । यद्वै किं च वातो (38.) नाभिभवति तत्सर्वं वरुणदेवत्यमुरु वातायेत्यास्ववारुणमेवैतत्करोतीति तित्तिरिवचनात् ॥ का° [२. ३. १७. १८.] अपहतमिति निरस्यत्यन्यदविद्यमानेऽभिमृशेदिति । व्रीहिभ्योऽन्यत्तृणादि यदि तत्र भवेत्तदनेन निरस्येत्तृणाद्यभावे व्रीहीनभिमृशेदिति (39.) सूत्रार्थः । अथ मन्त्रार्थः । रक्षो यज्ञविघातकमपहतं निराकृतं तृणादिकमेव रक्ष उच्यते ॥ का° [२. ३. १९.] यच्छन्तामित्यालभत इति । पञ्चसंख्याका अङ्गुलयो व्रीहिरूपं हविर्यच्छन्तां नियच्छन्तु । अनेन पञ्चाङ्गुलियुक्तेन मुष्टिना व्रीहीन्गृह्णीयादित्यर्थ उक्तो भवति ॥९॥

a. देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।

b. अग्नये जुष्टं गृह्णामि ।

c. अग्नीषोमाभ्यां जुष्टं गृह्णामि ॥१०॥

का° [२.३.२०-२२.] देवस्य त्वेति गृह्णात्याग्नेयं चतुरो मुष्टीनेवमग्नीषोमीयं यथादेवतमन्यदिति । हे हविः सवितुः देवस्य प्रसवे प्रेरणे सति तेन प्रेरितोऽहमग्नये जुष्टं प्रियं त्वा गृह्णामि । अग्नीषोमाभ्यां व्यासक्तदेवाभ्यां च जुष्टं त्वा गृह्णामि । काभ्यामश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां च । अंसमणिबन्धयोर्मध्यभागो दीर्घदण्डाकारो बाहुः । पञ्चाङ्गुलियुक्तोऽग्रभागो हस्तः । अश्विनौ हि देवानामध्वर्यू । पूषा हि देवानां भागधुक् । अतो ग्रहणसाधनयोः स्वबाह्वोरश्विबाहुभावना कार्या । हस्तयोस्तु पूषहस्तभावनेति भावः । सर्वात्मकस्याग्नेर्हविस्तादृशं मनुष्येण कथं ग्रहीतुं शक्यमिति सवित्रानुज्ञातोऽश्विबाहुभ्यां पूष्णो हस्ताभ्यां गृह्णामीत्यर्थः । किं च सत्यं देवा अनृतं मनुष्या इति श्रुतेः [१.१.२.१७.] देवानां सत्यरूपत्वात्तदनुस्मृतिपूर्वकं हविर्ग्रहणं फलपर्यवसायित्वात्सत्यं भवति । देवतास्मृत्यभावे तु मनुष्याणामनृतरूपत्वात्तत्कृतमनुष्ठानं निःफलत्वादनृतं भवतीति देवतास्मरणमित्यभिप्रायः । हविर्गृह्णन्तमध्वर्युं देवताः सेवन्ते मम नाम ग्रहीष्यतीति । अनामग्रहे हविषि गृहीते तासां मिथः कलहो भवेदिदं मदर्थं गृहीतमिति । तत्कलहनिवृत्त्यर्थमग्नये जुष्टमग्नीषोमाभ्यां जुष्टमिति देवतानिर्देशपूर्वकं हविर्ग्रहणमित्यभिप्रायः ॥१०॥

a. भूताय त्वा नारातये । b. स्वरभिविख्येषम् ।

c. दृꣳहन्तां दुर्याः पृथिव्याम् ।

d. उर्वन्तरिक्षमन्वेमि ।

e. पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थेऽग्ने हव्यꣳरक्ष ॥११॥

का° [२.३.२३.] भूताय त्वेति शेषाभिमर्शनमिति । हे व्रीहिशेष शकटावस्थित भूताय भवनाय यागान्तराणां ब्राह्मणभोजनस्य च पुनरपि सद्भावाय त्वा संपरिशेषयामीति शेषः । न अरातये अदानाय शेषयामि ॥ का° [२.३.२४.] स्वरिति प्राङीक्षत इति । अहं स्वरभिविख्येषं यज्ञं पश्येयं यज्ञो वै स्वरहर्देवाः सूर्य इति श्रुतेः [१.१.२.२३.] यज्ञदिवसदेवसूर्याः स्वःशब्देनोच्यन्ते । स्वर्गहेतुत्वादपि स्वःशब्देन यज्ञः । ख्या प्रकथने अभिविख्येषमभितो विशेषेण ख्यापयेयं पश्येयमित्यर्थः ।

अनेन मन्त्रेण प्राङ्मुखो यज्ञभूमिं वीक्षते ॥ का° [२. ३. २५.] दृꣳहन्तामित्यवरोहतीति । पृथिव्यां वर्तमाना दुर्या गृहा दृꣳहन्तां दृढा भवन्तु । अनेन मन्त्रेण शकटादवरोहेत् । दुरो द्वाराण्यर्हन्तीति दुर्या गृहाः । हविर्गृहीत्वोत्तरतोऽध्वर्योर्भारेण गृहक्षोभः सम्भाव्यते सोऽनेन मन्त्रेण वार्यते ॥ का° [२. ३. २६.] गच्छत्युर्वन्तरिक्षमिति व्याख्यातम् ॥ का° [२. ३. २७.] अपणस्य पश्चात्सादयति पृथिव्यास्त्वेति । हे हविः पृथिव्या नाभौ मध्ये त्वां सादयामि स्थापयामि । तस्यैव व्याख्यानम् । अदित्या उपस्थ इति । (40. a.) उपस्थेऽङ्के यथा सुप्तं बालं पुत्रं माता स्वाङ्के स्थापयति । एवमिदं हविरदित्या उपस्थे भूम्या अङ्के सादयामि । हे अग्ने तव समीपे स्थापितमिदं हव्यं त्वं रक्ष । सुप्तं पुत्रमिव बाधकेभ्यः (40.) पालय ॥ ११ ॥

IV. a. पवित्रे स्थो वैष्णव्यौ ।

b. सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।

c. देवीरापोऽअग्रेगुवोऽअग्रेपुवोऽग्रऽइममद्य यज्ञं नयताग्रे यज्ञपतिꣳ सुधातुं यज्ञपतिं देवयुवम् ॥ १२ ॥

का° [२. ३. ३२.] कुशौ समावप्रशीर्णाग्रावनन्तर्गर्भौ कुशैश्छिनत्ति पवित्रे स्थ इति त्रीन्वेति । वैष्णवे इति प्राप्ते व्यत्ययो बहुलमिति [पा° ३. १. ८५.] स्त्रीत्वम् । हे पवित्रे शोधके कुशद्वयरूपे युवां वैष्णवे यज्ञसम्बन्धिनी स्थः भवथः । यज्ञो वै विष्णुर्यज्ञिये स्थ इति श्रुतेः [१. १. ३. १.] ॥ का° [२. ३. ३३.] हविर्ग्रहण्यामपः कृत्वा ताभ्यामुत्पुनाति सवितुर्व इतीति । सवितुः प्रेरकस्य प्रसवे प्रेरणे सति हे आपो वो युष्मानुत्पुनामि केन अच्छिद्रेण पवित्रेण छिद्रहीनेन शोधकेन वायुरूपेण । यो वा अयं पवत एषोऽच्छिद्रं पवित्रमिति श्रुतेः [१. १. ३. ६.] । सूर्यस्य रश्मिभिः शुद्धिहेतुभिरुत्पुनामीति सम्बन्धः । वायोः सूर्यरश्मीनां च पादप्रक्षालनाद्युपहतभूमिशुद्धिहेतुत्वं प्रसिद्धम् ॥ का° [२. ३. ३५.] सव्ये कृत्वा दक्षिणेनोदिङ्गयति देवीराप इतीति । उत्पूताभिरद्भिः पूरितामग्निहोत्रहवणीं सव्यहस्ते स्थापयित्वा मन्त्रमुच्चारयन्दक्षिणहस्तेनोर्ध्वं चालयेदिति सूत्रार्थः । मन्त्रार्थस्तु हे देवीः आपः द्योतनात्मिका आपो यूयमद्यास्मिन्दिने इममिदानीं प्रवर्तमानं यज्ञमग्रे नयत पुरतः प्र-

वर्तयत निर्विघ्नं समापयत । किम्भूता आपः । अग्रेगुवः अग्रे गच्छन्तीत्यग्रेगुवः पुरतो निम्नदेशं प्रति गमनशीलाः । तथा अग्रेपुवः अग्रे पुनन्त्यग्रेपुवः अग्रे यस्मिन्पूर्वभागे गच्छन्ति तस्मिन्नपच्छतिनिवारणेन शोधनशीलाः । यद्वाग्रे पिबन्तीत्यग्रेपुवः प्रथमं सोमरसस्य पानकर्त्र्यः । गमेः क्विप्प्रत्यये गमः क्वावित्यनुनासिकलोपे [पा° ६.४.४०.] पुनातेः पिबतेर्वा क्वौ ऊङ् गमादीनामित्यूकारः [पा° का° ६.४.४०. वा° २.] । किं च यज्ञपतिं यजमानमग्रे नयतेत्यनुवर्तते फलभोगाय प्रेरयत कथम्भूतम् सुधातुम् सुष्ठु दक्षिणादिना दधाति यज्ञं पुष्णातीति सुधातुस्तं यज्ञस्य पतिं पालयितारम् । एको यज्ञपतिशब्दो योगेन व्याख्येय एको रूढ्या । तथा देवयुवम् । यु मिश्रणे । देवान्यौति यज्ञादिना मिश्रीकरोति देवयुस्तं । क्विप् । अनित्यमागमशासनमिति तुगभावः । यद्वा देवान्कामयते इति देवयुस्तं । इदम्युरिदं कामयमान इति यास्कोक्तेः [निरु° ६.३१.] सुप आत्मनः क्यजिति क्यच् [पा°३.१.८.] क्यचि चेतीत्वे [पा° ७.४.३३.] प्राप्ते न छन्दस्यपुत्रस्येति [पा° ७.४.३५.] ईत्वाभावः । अश्वाघस्यादिति [पा° ७.४.३७.] अश्वाघयोरेवात्वविधानादकृत्सार्वधातुकयोरिति [पा° ७.४.२५.] प्राप्तो दीर्घो न भवति । ततः क्याच्छन्दसीति [पा° ३.२.१७०.] उप्रत्ययः । देवयुशब्दस्यामि पूर्व इति [पा° ६.१.१०७.] प्राप्तस्य पूर्वरूपस्य वा छन्दसीति [पा° ६.१.१०६.] विकल्पेन तन्वादीनां वा इयङुवङावित्युवङ् [पा° का° ६.४.७८. वा° १.] ॥१२॥

युष्मा इन्द्रोऽवृणीत वृत्रतूर्य्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्य्ये । d. प्रोक्षिता स्थ । e. अग्नये त्वा जुष्टं प्रोक्षामि । f. अग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि । g. दैव्याय कर्मणे शुन्धध्वं देवयज्यायै यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामि ॥१३॥

हे आपः इन्द्रो देवः वृत्रतूर्ये तूर्यतिर्बधकर्मा (41.) । वृत्रबधे निमित्तभूते सति युष्माः युष्मानवृणीत आकारश्छान्दसः । सहकारित्वेन प्रार्थितवान्यूयमपि वृत्रतूर्ये निमित्ते तमिन्द्रमवृणीध्वं वृतवत्यः सहकारित्वेन ॥ का° [२.३.३६.] प्रोक्षिता स्थेति तासां प्रोक्षणमिति । हे आपो यूयं प्रोक्षिता भवथ । असंस्कृता अन्यसं-

स्कारहमा न भवन्तीति ॥ का° [२. ३. ३७. ३८.] हविराग्नेये त्वाग्नीषोमाभ्यां त्वेति यथादेवतमन्यदिति । अन्यदपि हविस्तद्देवतोच्चारेण (42.) प्रोक्षणीयम् । अग्नये त्वां जुष्टं प्रोक्षामि । अग्नीषोमाभ्यां जुष्टं त्वां प्रोक्षामि ॥ का° [२. ३. ३९.] पात्राणि दैव्यायेति । कृष्णाजिनोलूखलादीनि प्रोक्षेत् । हे यज्ञपात्राणि यूयं शुन्धध्वं शुद्धानि भवत । किमर्थम् दैव्याय कर्मणे अग्न्यादिदेवतासम्बन्धिने कर्मणे । तदेव कर्म विशिष्यते । देवयज्यायै देवसम्बन्धिन्यै यागक्रियायै दर्शादिकायै । किं च । अशुद्धाः नीचजातयस्तक्षादयो वो युष्माकं सम्बन्धि यदङ्गं पराजघ्नुः पराहतं कृतवन्तः । छेदनतक्षणादिकाले स्वकीयहस्तस्पर्शरूपमशुचित्वं चक्रुः । तदिदं वो युष्माकमङ्गं शुन्धामि प्रोक्षणेन शुद्धं करोमि ॥ १३ ॥

V. a. शर्मा॑सि । b. अव॑धूत॒ꣳ रक्षो॒ऽव॑धूता॒ अरा॑तयः ।

c. अदि॑त्या॒स्त्वग॑सि॒ प्रति॒ त्वादि॑तिर्वे॑त्तु ।

d. अद्रि॑रसि वानस्प॒त्यः ।

e. ग्रावा॑सि पृथुबु॑ध्नः॒ प्रति॒ त्वादि॑त्या॒स्त्वग्वे॑त्तु ॥ १४ ॥

का° [२. ४. १.] शर्मासीति कृष्णाजिनादानमिति । हे कृष्णाजिन त्वमुलूखलस्य धारणार्थं शर्म सुखहेतुरसि । अजिनस्य चर्मेति मानुषं नाम शर्मेति दैवं नाम ॥ का° [२. ४. २.] अपेत्य पात्रिभ्योऽवधूनोत्यवधूतमितीति । रक्षः कृष्णाजिने गूढमवधूतम् । कृष्णाजिनकम्पनेन भूमौ पतितम् एवमरातयोऽपि पातिताः ॥ का° [२. ४. ३.] प्रत्यग्ग्रीवमास्तृणात्यदित्यास्त्वगितीति । हे कृष्णाजिन त्वमदित्या भूमिदेवतायास्त्वग्रूपमसि ततोऽदितिर्भूमिस्त्वा त्वां प्रति वेत्तु प्रतिगृह्य मदीयेयं त्वगिति वेत्तु जानातु । पुरा यज्ञो देवेषु रुष्टः कृष्णमृगो भूत्वागमत्तदा देवा ज्ञात्वा तदीयां त्वचमुत्क्षिप्य जगृहुस्तस्माच्चर्मास्तरणमित्यभिप्रायः श्रुतावाम्नातः [१. १. ४. १.] ॥ का° [२. ४. ४. ५.] सव्याशून्ये निदधात्युलूखलमद्रिरसि ग्रावासीति वा प्रति त्वेत्युभयोरिति । विकल्पितयोर्मन्त्रयोः प्रति त्वेति शेषो योजनीयः । हे उलूखल त्वं यद्यपि वानस्पत्यः दारुमयस्तथापि दृढत्वादद्रिरसि पाषाणोऽसि । किम्भूतः पृथुबुध्नः स्थूलमूलः । मुसलघातोपद्रवेण चाञ्चल्यराहित्याय मूलस्थूलत्वम् । हे उलूखल

तथाविधस्त्वं ग्रावासि दार्व्येन पाषाणसदृशोऽसि ॥ अदित्यास्त्वक् । अधस्तादास्तीर्णा कृष्णाजिनरूपा भूमिर्या त्वगस्ति सा त्वां प्रति वेत्तु स्वकीयत्वेन जानातु ॥ १४ ॥

a. अग्नेस्तनूरसि वाचो विसर्जनं देववीतये त्वा गृह्णामि ।

b. बृहद्ग्रावासि वानस्पत्यः ।

c. स इदं देवेभ्यो हविः शमीष्व सुशमि शमीष्व ।

d. हविष्कृदेहि हविष्कृदेहि (43.) हविष्कृदेहि ॥ १५ ॥

का° [२. ४. ६.] हविरावपत्यग्नेस्तनूरसीतीति । हे हविः त्वमग्नेराहवनीयस्य तनूः शरीरमसि । यतस्त्वत्रक्षिप्तं हविरग्नीभवति । अतो हविरग्नेस्तनूः । किम्भूतं हविः । वाचो विसर्जनम् अपां प्रणयनकाले नियमिताया यजमानवाचो हविरावपनकाले विसर्गो भवति । तस्मादिदं हविर्वाचो विसर्जनम् । अतो देववीतये देवानां तर्पणाय त्वा त्वां गृह्णामि आवपामीत्यर्थः ॥ का° [२. ४. ११.] बृहद्ग्रावेति मुसलमादत्त इति । हे मुसल त्वं यद्यपि वानस्पत्यो दारुमयस्तथापि ग्रावासि दार्व्येण पाषाणसदृशोऽसि । तथा दीर्घत्वेन बृहन्महानसि ॥ का° [२. ४. १२.] स इदमित्यवदधातीतीति । हे मुसल त्वं देवेभ्योऽग्न्यादिदेवोपकारार्थमिदं हविर्व्रीहिरूपं शमीष्व शमय । भक्षणविरोधितुषापनयनेन शान्तं कुरु । तस्यैव पदस्य व्याख्यानम् । सुशमि शमीष्व सुष्ठु शान्तं यथा भवति तथा शमीष्व शमय । शमु उपशमे व्यत्ययेन शपो लुक् (44.) । तुरुस्तुशम्यमः सार्वधातुक इतीडागमः (45.) [पा° ७. ३. ९५.] । शान्तिर्द्विविधा । बाह्यतुषापनयनादाद्या (46.) । सा (47.) प्रथमावघातेन स्यात् (48.) । अन्तःस्थितमालिन्यस्यापनयनादन्या (49.) । सा (50.) फलीकरणेन भवति । तं (51.) द्विविधं तण्डुलसंस्कारं कुर्वित्यर्थः । का° [२. ४. १३.] हविष्कृदेहीति त्रिराह्वयतीति । यजमानः पत्नी वान्यो वा यो व्रीहीनवहन्ति स सम्बोध्याहूयते (52.) । हे हविष्कृत् हविः करोतीति हविष्कृत् एहि अत्रागच्छ । त्रिवारमुक्तमर्थं देवा मन्यन्त इति त्रिराह्वानम् ॥ १५ ॥

a. कुक्कुटोऽसि मधुजिह्व इषमूर्जमावद त्वया वयं संघातं - संघातं जेष्म ।

b. वर्षवृद्धमसि । c. प्रति त्वा वर्षवृद्धं वेत्तु ।

d. परापूतꣳ रक्षः परापूता अरातयः ।

e. अपहतꣳ रक्षः । f. वायुर्वो विविनक्तु ।

g. देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना ॥ १६ ॥

का° [२. ४. १५.] आहन्त्यन्यो दृषदुपले कुक्कुटोऽसीति त्रिः शम्यया द्विर्दृषदं सकृदुपलामिति । हे शम्यारूप यज्ञायुधविशेष त्वं कुक्कुटोऽसि असुराणां मुधुजिह्वकश्चासि देवानाम् । असुराः क्व क्वेति तान्हन्तुमिच्छन्योऽटति सर्वत्र संचरति स कुक्कुटः । यद्वा कुकं कुत्सितशब्दं कुटति तनोतीति कुक्कुटः । यद्वा कुक्कुटाख्यपक्षिवद्ध्वनिविशेषमसुरभीत्यर्थं तनोतीति कुक्कुट इत्युपचर्यते । मधुजिह्वकनामा कश्चिद्देवानां भृत्यः । मधुर्मधुरभाषिणी जिह्वा यस्य । तद्रूप हे यज्ञायुध त्वमसुरान्पराभवन्यजमानस्य इषमूर्जं चावद । अन्नं रसं च यथा समागच्छति तथा शब्दं कुरु । तवशब्देनासुरेषु पराभूतेषु तदीयमन्नं रसं च यजमानः प्राप्नोति । ततस्त्वया कृत्वा वयं संघातं संघातं जेष्म असुरैः सह क्रियमाणं तं तं सङ्ग्रामं जेष्म जयेम कदाचिदपि पराजयोऽस्माकं मास्त्वित्यर्थः । सम्यक् हन्यन्तेऽसुरा यत्रेति संघातो युद्धं । मनो राज्ञ एको वृषभ आसीत्तस्मिन्नसुरघ्नी वाक् स्थिता तस्मिन्शब्दं कुर्वति तं श्रुत्वैवासुरा म्रियन्ते ततः किलाताकुलीनामानावसुरयाजकौ मनुं गत्वा तेनैव ऋषभेणायाजयतामृषभे हते सा वाङ्मनोर्जायां प्रविष्टा तौ पुनस्तयापि मनुमयाजयतां ततः सा वाग्यज्ञपात्राणि प्रविष्टेत्यसुरपराभावाय तद्वाक्प्रकटनार्थं शम्यया दृषदुपलहननमिति श्रुत्युक्तोऽभिप्रायः [१. १. ४. १४.] ॥ का° [२. ४. १६.] वर्षवृद्धमसीति शूर्पमादत्त इति । हे शूर्प त्वं वर्षवृद्धमसि वर्षेण वृष्ट्या तद्भूतजलेन वृद्धं वर्षवृद्धम् । वर्षवृद्धवेणुशलाकानिर्मितत्वात् शूर्पस्य वर्षवृद्धत्वम् ॥ का° [२. ४. १७.] प्रति त्वेति हविरुद्वपतीति । हे हविः वर्षवृद्धं शूर्पं त्वा त्वां प्रतिवेत्तु स्वकीयत्वेन जानातु व्रीहिशूर्पयोर्वर्षवृद्धत्वाद्भ्रातृत्वम् (53.) ॥ का° [२. ४. १८.] परापूतमिति निष्पुनातीति । रक्षः परापूतं निराकृतं शूर्पेण तुषेषु परापूतेषु तद्गतं रक्षोऽपि तैः सह भूमौ पातितम् । अरातयः हविः प्रतिकूला आलस्या-

दिशत्रवश्च परापूताः निराकृताः ॥ का॰ [२. ४. १९.] अपहतमिति तुषान्निरस्यतीति । रक्षः अपहतं दूरेऽपनीय मारितम् । भूमौ पतितान्दूरे निःसारयेत् ॥ का॰ [२. ४. २०.] वायुर्व इति विविनक्तीति । हे तण्डुला वायुः शूर्पचालनोत्थो वो युष्मान्विविनक्तु सूक्ष्मकणेभ्यः पृथक्करोतु ॥ का॰ [२. ४. २१.] देवो व इति पात्र्यामोप्याभिमन्त्रयतऽइति । हे तण्डुलाः सविता देवो वो युष्मानच्छिद्रेण पाणिना अङ्गुलिविश्लेषहीनेन स्वहस्तेन प्रतिगृभ्णातु स्वीकरोतु हृग्रहोर्भश्छन्दसीति हस्य भः [पा॰ क॰ ८. २. ३२. वा॰ १.] । पात्रीप्रक्षेपसमये भूमौ पतनं मा भूदिति सवितृग्रहणं प्रार्थ्यते । किम्भूतः सविता हिरण्यपाणिः हिरण्ययुक्तावङ्गुलीयाद्याभरणयुक्तौ पाणी यस्य स हिरण्यपाणिः । यद्वा दैत्यैः प्राशित्रहरिण (54.) छिन्नौ सवितृपाणी देवैर्हिरण्मयौ कृताविति सवितुर्हिरण्यपाणित्वमिति बह्वृचश्रुतौ कथा ॥१६॥

VI. a. धृष्टि॑रसि ।

b. अपा॑ग्नेऽअ॒ग्निमा॒मादं॑ जहि॒ निष्क्र॒व्यादं॑ᳪ सेध ।

c. आ दे॑व॒यजं॑ वह ।

d. ध्रु॒वम॑सि पृथि॒वीं दृ॑ᳪह ब्रह्म॒वनि॑ त्वा क्षत्र॒वनि॑ सजा॒तव॒न्युप॑दधामि॒ भ्रातृ॑व्यस्य ब॒धाय॑ ॥१७॥

4362

का॰ मूलतः शाखां परिवास्योपवेषं करोतीति (55.) । [२. ४. २६.] धृष्टिरसीत्युपवेषमादायेति च (56.) । पलाशशाखाया मूलदेशे छिन्नः काष्ठभाग उपवेषस्तमादत्ते । हे उपवेष त्वं धृष्टिरसि प्रगल्भोऽसि । ञिधृषा प्रागल्भ्ये । तीव्राङ्गाराणामितस्ततश्चालने प्रभुत्वादस्य प्रागल्भ्यम् ॥ का॰ [२. ४. २६.] अपाग्न इत्यङ्गारान्प्राचः करोतीति । तत्र त्रयोऽग्नयः सन्ति । एकः आमात् । आममपक्वमत्तीत्यामाल्लौकिकोऽग्निः । द्वितीयः क्रव्यात् शवदाहे क्रव्यं मांसमत्तीति क्रव्यात् चिताग्निः । तृतीयो यागयोग्यः । तथाविधांस्त्रीनङ्गारान्गार्हपत्यात्प्राग्भागे पृथक्कृत्य तेषां मध्ये यागयोग्यताहीनौ द्वावग्नी आमात्क्रव्यात्संज्ञौ त्याजयितुं गार्हपत्यं प्रत्युच्यते । हे अग्ने हे गार्हपत्य आमादमग्निमप जहि परित्यज । व्यवहितास्चेति

[पा° १.४.८२.] क्रियापदोपसर्गयोर्व्यवधानम् । तथा क्रव्यादमग्निं निः सेध निःशेषं दूरे गमय परित्यजेत्यर्थः ॥ का° [२.४.२७.] आ देवयजमित्यङ्गारमाहृत्येति । हे गार्हपत्य देवयजं देवानां योग्यं तृतीयमङ्गारमावह समीपमानय । देवा इज्यन्ते यस्मिन्नसौ देवयाट् तं देवयजम् ॥ का° [२.४.२७.] कपालेनावहादयति ध्रुवमसीतीति । देवयजमङ्गारं कपालेनाछादयेत् । हे कपाल त्वं ध्रुवमसि स्थिरं भवसि । अङ्गारोपरि वर्तमानमपीतस्ततो न पतसि पृथिवीं भूमिं दृंह दृढीकुरु । पुरोडाशपाकसमये त्वत्कृतव्यवधानेन भूमेर्दाहकृतं शैथिल्यं न भविष्यतीत्यर्थः । किं च । त्वामुपदधामि अङ्गारे स्थापयामि । किमर्थं भ्रातृव्यस्य शत्रोरसुरस्य पाप्मनो वा बधाय हिंसार्थम् । व्यन् सपत्ने [पा° ४.१.१४५.] इत्याद्युदात्तत्वात् भ्रातृव्यशब्दः शत्रुवाची । किम्भूतं त्वाम् । ब्रह्मवनि वन षन सम्भक्तौ ब्रह्मणा ब्राह्मणेन वन्यते पुरोडाशनिष्पत्त्यर्थं स्वीक्रियते इति ब्रह्मवनि । तथा क्षत्रवनि सजातवनीति पदद्वयं योज्यम् । सजाताः समानकुले जाताः यजमानस्य ज्ञातयः तैर्वन्यत इति ॥१७॥

a. अग्ने ब्रह्म गृभ्णीष्व ।

b. धरुणमस्यन्तरिक्षं दृꣳह ब्रह्मवनि -- बधाय ।

c. धर्त्रमसि दिवं दृꣳह ब्रह्मवनि -- बधाय ।

d. विश्वाभ्यस्त्वाशाभ्य उपदधामि ।

e. चित स्थोर्ध्वचितः ।

f. भृगूणामङ्गिरसां तपसा तप्यध्वम् ॥१८॥

का° [२.४.३०.] सव्याङ्गुल्याभून्येऽङ्गारं निदधात्यग्ने ब्रह्मेतीति । हे अग्ने निधीयमानाङ्गाररूप ब्रह्म प्रौढं कर्मास्माभिः क्रियमाणं गृभ्णीष्व गृह्णीष्व । नाशकरणोबधेनानुगृह्णीष्व (57.) यद्वा ब्रह्म ब्राह्मणं मामनुगृह्णीष्व अङ्गुलिदानासक्तं मा दहेत्यर्थः ॥ का° [२.४.३१.] धरुणमिति पश्चादिति । पूर्वस्थापितकपालस्य पश्चाद्भागे द्वितीयं निदधाति । हे द्वितीय कपाल त्वं धरुणं पुरोडाशस्य धारकमसि

अतोऽन्तरिक्षं दृंह दृढीकुरु । पुरोडाशपाकोत्पन्नज्वलयान्तरिक्षलोकोपद्रवो यथा न स्यात्तथा कुरु । यद्यप्येतत्कपालं ज्वालान्तरिक्षयोर्मध्ये व्यवधायकं नास्ति । तथाप्यन्तरिक्षदार्ढ्याय कपालदेवता प्रार्थ्यते । ब्रह्मवनीत्यादि पूर्ववत् । का° [२.४.३२.] पुरस्ताद्धर्त्रमितीति । प्रथमस्य पूर्वभागे तृतीयं स्थापयेत् । हे कपाल त्वं धर्त्रं धारकमसि । दिवं दृंह । ज्वालाग्रेण दाहाभावो द्युलोकस्य दार्ढ्यम् । अन्यत्पूर्ववत् । का° [२.४.३३.] विश्वाभ्य इति दक्षिणत इति । हे चतुर्थ कपाल विश्वाभ्य आशाभ्यः सर्वदिग्भ्यः सर्वदिग्दार्ढ्याय त्वामुपदधामि । एवं कपालत्रयोपधानेन यजमानो लोकत्रयं जयति चतुर्थेन दिशो जयति । तद्गतः पुरोडाशो लोकत्रयरूपो भूत्वा देवताः प्रीणातीत्याशयः ॥ का° [२.४.३४.] समं विभज्य द्वे दक्षिणत एवमुत्तरतश्चित स्थेतीति । आग्नेयपुरोडाशस्याष्टकपालत्वाच्चतुर्णां स्थापितत्वादवशिष्टानां चतुर्णां मध्ये द्वे द्वे दक्षिणोत्तरयोर्निदध्यात् । चिञ् चयने क्विबन्तस्य चित इति बहुवचनम् । हे कपालविशेषा यूयं चितः स्थ प्रथमकपालोपचयकारिणः स्थ भवथ । तथा ऊर्ध्वचितः स्थ ऊर्ध्वमुपहितानां द्वितीयादिकपालानामुपकारिणो भवथ ॥ का° [२.४.३८.] भृगूणामित्यङ्गारैरभ्यूहतीति । अङ्गारैः कपालानि छादयेत् । हे कपालानि यूयं भृगूणामङ्गिरसां भृगुनामकानामङ्गिरोनामकानां देवर्षीणां तपसा तपोरूपेणाग्निनानेन तप्यध्वं तप्तानि भवत । अस्याग्नेस्तदीयतपोरूपत्वं भावयेदित्यर्थः ॥१८॥

VII. a. शर्मासि । b. अवधूतꣳ रक्षोऽवधूता अरातयः ।

c. अदित्यास्त्वगसि प्रति त्वादितिर्वेत्तु ।

d. धिषणासि पर्वती प्रति त्वादित्यास्त्वग्वेत्तु ।

e. दिव स्कम्भनीरसि ।

f. धिषणासि पार्वतेयी प्रति त्वा पर्वती वेत्तु ॥१९॥

का° [२.५.२.] कृष्णाजिनमादत्ते पूर्ववदिति । यथावघातार्थं कृष्णाजिनप्रयोगस्तद्वदत्रापि । शर्मासि । अवधूतम् । अदित्याः इति मन्त्रत्रयं व्याख्यातम् ॥ का° [२.५.३.] तस्मिन्दृषदं धिषणासीति । तस्मिंश्चर्मणि शिलां स्थापयेत् हे शिले पे-

15

पणाधारभूते त्वं पर्वती पर्वतात्मिका तदुत्पन्ना त्वं धिषणासि धियं बुद्धिं कर्म वा सनोति व्याप्नोति ददाति वा धिषणा । ह्रस्वत्वमार्षम् । पर्वतवद्धारयत्यसि । अ-दित्या भूमिस्त्वक् कृष्णाजिनरूपा तादृशीं त्वा त्वां प्रति वेत्तु त्वदवस्थानमनुजानातु ॥ का° [२.५.४.] पश्चाच्छम्यामुपोहत्युदीचीं दिव इतीति । दृषदः पश्चाद्भागेऽधस्ता-च्छम्यां स्थापयेत् । तां प्रत्युच्यते । हे शम्ये दिवः द्युलोकस्य स्कम्भनीः (58.) स्त-म्भनकारिणी त्वमसि व्यत्ययेन द्वितीयाबहुवचनम् पतनवारणायान्तरिक्षरूपेण स्तम्भनकारित्वम् । अन्तरिक्षेण हीमे द्यावापृथिवी विष्टब्धे इति श्रुतेः [१.२.१.१६.] ॥ का° [२.५.५.] दृषदुपलां धिषणासीतीति । हे उपले उपरितनशिले त्वं धिषणासि पेषणव्यापारधारिकासि । किम्भूता । पार्वतेयी पर्वत्या अधस्तनदृषदः पुत्री पार्वतेयी बालस्वरूपा । कनीयसी ह्येषा दुहितेव भवतीति श्रुतेः [१.२.१.१७.] । अतः पर्वती मातृसमा त्वां प्रतिवेत्तु पुत्रीं जानातु ॥१९॥

a. धान्यमसि धिनुहि देवान् ।

b. प्राणाय त्वा । c. उदानाय त्वा । d. व्यानाय त्वा ।

e. दीर्घामनु प्रसितिमायुषे धां देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना ।

f. चक्षुषे त्वा । g. महीनां पयोऽसि ॥२०॥

का° [२.५.६.] धान्यमसीति तण्डुलानोप्येति । हे हविस्त्वं धान्यमसि धिनोतीति प्रीणातीति धान्यम् । अतो देवानग्न्यादीन्धिनुहि प्रीणय ॥ का° [२.५.६.] पिनष्टि प्राणाय त्वेति प्रतिमंत्रमिति । प्रकर्षेण अनिति सर्वदा मुखे चेष्टत इति प्राणः श्वासवायुः । उदनिति ऊर्ध्वं चेष्टत इत्युदानः उत्क्रान्तिवायुः । व्यनिति व्याप्य चेष्टते इति व्यानो व्यापको बलहेतुर्वायुः । हे तण्डुल त्वा त्वां प्राणाय प्राणादानार्थं पिनष्मीति शेषः एवमुत्तरमन्त्रयोर्योज्यम् । देवानां सञ्जीवं हविर्भवतो-त्येभिर्मन्त्रैर्हविषां प्राणादिदानेन सञ्जीवत्वं क्रियत इत्यभिप्रायः ॥ का° [२.५.७.] दीर्घामिति कृष्णाजिने प्रोहतीति । प्रसयनं प्रसितिः । षिञ् बन्धने प्रबन्धः कर्मसंततिः । दीर्घामविच्छिन्नां प्रसितिमनु कर्मसंततिमनुलक्ष्य आयुषे यजमानस्यायुर-

मित्रुत्वार्य हे हविः त्वां धां कृष्णाजिनं दधामि । दधातेर्लुङि बहुलं छन्दस्यमाङ्योगे ऽपीति [पा° ६.४.७५.] अडागमाभावः । यजमानस्यायुर्वृद्धौ सत्यां कर्मसंततिः प्रवर्ततऽइति भावः । यद्वायमर्थः । पूर्वमन्त्रैर्हविषः प्राणादिदानेन सजीवत्वं कृतमनेन पुनरायुर्दीयते हविषः । हे हविः दीर्घां प्रसितिं कृष्णाजिनाख्यामनु त्वां धां धारयामि कृष्णाजिने प्रक्षिपामीत्यर्थः । किमर्थमायुषे त्वदीयायुर्वृद्ध्यर्थम् । प्रसितिः प्रसयनात्तन्तुर्वा जालं वेति [निरु° ६.१२.] यास्कोक्तेरिह पिष्टयाद्दकत्वात्प्रसितिशब्देन कृष्णाजिनमुच्यते । देवो व इत्यादिमन्त्रशेषो व्याख्यातः ॥ का° [२.५.८.] चक्षुषे त्वेतीक्षतऽइति । हे हविः चक्षुषे यजमानस्य चक्षुरिन्द्रियपाटवाय त्वां पश्यामीति शेषः । यद्वा चक्षुषे चक्षुरादिबाह्येन्द्रियदानाय त्वामीक्षे । हविषः सजीवत्वे कृते चक्षुराद्यपेक्षा भवतीत्यनेन तत्क्रियत इति भावः ॥ का° [२.५.९.] पिक्ष्यमाणेषु निर्वपत्यन्यो महीनामित्याज्यमिति । हे आज्य त्वं महीनां गवां पयो ऽसि क्षीरमसि क्षीरोत्पन्नत्वात् घृतं पयःशब्देनोच्यते । महीति गोनाम [निघ° २.११.] ॥२०॥

VIII. a. दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम् ।

b. सं व॑पामि ।

c. समाप॑ ओष॑धीभिः॒ समोष॑धयो॒ रसे॑न । सꣳ रे॒वती॒र्जग॑तीभिः पृच्यन्ता॒ꣳ सं मधु॑मती॒र्मधु॑मतीभिः पृच्यन्ताम् ॥२१॥

का° [२.५.१०.] पात्र्याꣳ सपवित्रायां पिष्टान्यावपति देवस्य त्वेतीति । हस्ताभ्यामित्यन्तं व्याख्यातम् । एतानि पिष्टानि संवपामि पात्र्यां सम्यक्क्षिपामि ॥ का° [२.५.१२.१३.] उपसर्जनीरानयत्यन्यः पवित्राभ्यां प्रतिगृह्णाति समाप इतीति । पिष्टसंवपनीया (59.) आप उपसर्जन्यः । ता अग्नीदानयेदध्वर्युः पवित्राभ्यां गृह्णीयात् । आप उपसर्जनीरूपा ओषधीभिः पिष्टरूपाभिः सं पृच्यन्ताम् पृची संपर्के संगच्छन्तां सम्यगेकीभवन्तु । तथा ओषधयः पिष्टाख्या रसेन उपसर्जनीरूपेणोदकेन सं पृच्यन्ताम् । आपो हि ओषधीनां रसः । तथा रेवतीः रेवत्य आपः जगतीभिः पिष्टाख्याभिः सं पृच्यन्ताम् । रेवत्य आपो जगत्य ओषधय इति श्रुतेः [१.२.२.२.] ।

मधुमतीर्माधुर्योपेता आपो मधुमतीभिः माधुर्योपेताभिः पिष्टरूपौषधीभिः सं पृच्यन्ताम् । अपामोषधीनां [च] परस्परं प्रीतिहेतुत्वात्संपर्को भवत्वित्यर्थः ॥२१॥

a. जनयत्यै त्वा संयौमि । b. इदमग्नेः ।

c. इदमग्नीषोमयोः । d. इषे त्वा ।

e. घर्मोऽसि विश्वायुः ।

f. उरुप्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम् ।

g. अग्निष्टे त्वचं मा हिंसीत् ।

h. देवस्त्वा सविता श्रपयतु वर्षिष्ठेऽधि नाके ॥२२॥

का° [२.५.१४.] संयौति जनयत्यै त्वेतीति । अपां पिष्टानां च मिश्रीकरणं संयवनम् । हे जलपिष्टरूपपदार्थद्वय त्वां संयौमि संयग्मिश्रीकरोमि । यु मिश्रणामिश्रणयोः । किमर्थं जनयत्यै यजमानस्य प्रजोत्पादनार्थं । जलपिष्टयोर्यथा मिश्रणं तथा शुक्रशोणितमिश्रणेन यजमानस्य प्रजोत्पत्तिर्भवति तदर्थं त्वां संयौमि । यद्वा जनयत्यै पुरोडाशोत्पत्त्यै त्वां संयौमि ॥ का° [२.५.१५.] संविभज्यासंस्पर्शयन्नालभत (60.) इदमग्नेरिदमग्नीषोमयोरितीति । मिश्रीकृतस्य पिष्टस्यावदानाङ्कितं पिण्डद्वयं कृत्वा पुनरमेलयिष्यन् इदमग्नेरग्निसम्बन्धि भवत्विति प्रथमं पिण्डं स्पृशेत् । इदमग्नीषोमयोर्भवत्विति द्वितीयं स्पृशेत् ॥ का° [२.५.१७.] इषे त्वेत्याज्यमधिश्रयतीति । हे आज्य इषे इष्यमाणवृष्ट्यर्थं त्वामधिश्रयामीति शेषः । आज्यप्रविलापनार्थं तत्पात्रस्याग्नौ स्थापनमधिश्रयणम् ॥ का° [२.५.१९.] घर्मोऽसीति पुरोडाशमिति । हे पुरोडाश त्वं घर्मोऽसि । घृ क्षरणदीप्त्योः । घर्मशब्देन दीप्यमानः प्रवर्ग्य उच्यते । श्रप्यमाणतया (61.) दीप्यमानत्वात्प्रवर्ग्योऽसि । तथा विश्वायुः विश्वं कृत्स्नमायुर्यस्मात्स विश्वायुः । यस्माद्यजमानः सर्वमायुराप्नोतीति भावः ॥ का° [२.५.२०.] उरुप्रथा इति प्रथयति यावत्कपालमिति । सर्वकपालेषु संश्लेषयितुं तं प्रसारयेत् । हे पुरोडाश त्वं स्वभावतः उरुप्रथाः उरु विस्तीर्णं यथा तथा प्रथते प्रसरतीत्युरुप्रथाः । अत इदानीमपि उरु प्रथस्व प्रख्यातो भव । किं च ते यज्ञप-

तिस्तव यजमानः उरु विस्तीर्णं पुत्रपश्वादिभिः प्रथतां प्रख्यातो भवतु ॥ का° [५.२.२१.] अग्निष्टऽइत्यङ्गिरभिमृशतीति । हे पुरोडाश अग्निः श्रपणाय प्रवृत्तः ते तव त्वचं त्वक्सदृशमुपरितनभागं मा हिंसीत् मा विनाशयतु । अतिदाहेन मषीभावो विनाशः स मास्त्वित्यर्थः (62.) । अवघातपेषणोत्थः श्रपणाज्जायमानश्च हविष उपद्रवो जलस्पर्शेन शाम्यतीति भावः ॥ का° [२.५.२३.] देवस्त्वेति श्रपणामिति । हे पुरोडाश सविता देवः वर्षिष्ठे अत्यन्तवृद्धे नाके द्युलोकवर्तिनि नाकनाम्नि अग्नौ त्वा त्वामधि अधिश्रित्य श्रपयतु पक्वं करोतु । मनुष्यस्य श्रपणे कर्तृत्वं मा भूदित्यभिप्रेत्य देवस्त्वेत्युच्यते । दिवि नाको नामाग्नी रक्षोहेति तित्तिरिवचनान्नाको नाम स्वर्गस्थोऽग्निः (63.) ॥२२॥

a. मा भेर्मा संविक्थाः ।

b. अतमेरुर्यज्ञोऽतमेरुर्यजमानस्य प्रजा भूयात् ।

c. त्रिताय त्वा । d. द्विताय त्वा । e. एकताय त्वा ॥२३॥

का° [२.५.२४.] मा भेरित्यालभत इति । हे पुरोडाश त्वं मा भेः । भयं मा कार्षीः । मा सं विक्थाः चलनं मा कार्षीः । ञिभी भये । ओविजी भयचलनयोरित्यनयोः प्रयोगौ ॥ का° [२.५.२५.] अतमेरुरिति धृतावभिवासयति भस्मना वेदेनोपवेषेण वेति । यज्ञो यागहेतुः पुरोडाशः अतमेरुर्भूयात् । तमु ग्लानौ । ताम्यतीति तमेरुः औणादिक एरुप्रत्ययः । न तमेरुः अतमेरुः । भस्माछादनेन ग्लानिरहितो भवतु । यजमानस्य प्रजा पुत्रपौत्रादिः अतमेरुः ग्लानिरहिता भूयात् यजमानस्य प्रजायाः कदापि दुःखं मास्त्वित्यर्थः ॥ का° [२.५.२६.] पात्र्यङ्गुलिप्रक्षालनमास्येभ्यो निनयत्यभितप्य प्रत्यगसंस्यन्दमानं त्रिताय त्वेति प्रतिमन्त्रमिति । हे पात्र्यङ्गुलिप्रक्षालनोदक त्रिताय त्रितनाम्ने देवाय त्वां निनयामीति शेषः । तथा द्विताय त्वा निनयामि तथा एकताय त्वा निनयामि । पूर्वं कुतश्चिद्धेतोः भीतोऽग्निरपः प्राविशत्ततो देवास्तं ज्ञात्वा जगृहुस्तदाग्निना वीर्यमप्सु मुक्तं तत आप्त्या उत्पन्नास्त्रितद्वितैकतसंज्ञास्ते देवैः सह चरन्तो यज्ञे पात्रीप्रक्षालनजललक्षणं भागं लेभिरे इति श्रुतिकथानुसंधातव्या [१.२.३.१.] ॥२३॥

D*

IX. a. देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।

b. आददेऽध्वरकृतं देवेभ्यः ।

c. इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा वायुरसि तिग्मतेजा द्विषतो वधः ॥ २४ ॥

का॰ [२. ६. १३.] देवस्य त्वेति स्फ्यमादायेति । देवस्य त्वेति व्याख्यातम् । देवेभ्यो देवोपकारार्थं अध्वरकृतं अध्वरं करोतीति वेदिखननादिद्वारेणेत्यध्वरकृतं स्फ्यमहमाददे गृह्णामि ॥ का॰ [२. ६. १३.] सतृणꣳ सव्ये कृत्वा दक्षिणेनालभ्य जपतीन्द्रस्य बाहुरितीति । हे स्फ्य त्वमिन्द्रस्य दक्षिणो बाहुरसि । तेन बाहुना धृतत्वात्तत्समानवीर्यार्पितत्वाद्वा स्फ्यस्य बाहुरूपत्वोपचारः । किम्भूतः स्फ्यः सहस्रभृष्टिः भृष्टिर्भर्जनं पाको मारणमिति यावत् । सहस्रसंख्याकानां शत्रूणां भृष्टिर्यस्य स सहस्रभृष्टिः । शततेजाः शतं तेजांसि यस्य सः बहुधा दीप्यमानः । किंच वायुरसि न केवलमिन्द्रबाहुसदृशः । किं तु वायुसदृशोऽप्यसि । अत एव तिग्मतेजाः तीक्ष्णतेजाः यथा वायुर्वह्निं प्रदीप्य तीव्रां ज्वालामुत्पादयंस्तीव्रतेजा भवति । एवं स्फ्योऽपि स्तम्बच्छेदरूपं कर्म कुर्वंस्तीव्रतेजा उच्यते । तथा द्विषतो वधः । हन्तीति वधः कर्मद्वेषिणामसुरादीनां हन्तेत्यर्थः ॥ २४ ॥

a. पृथिवि देवयजन्योषध्यास्ते मूलं मा हिꣳसिषम् ।

b. व्रजं गच्छ गोष्ठानम् । c. वर्षतु ते द्यौः ।

d. बधान देव सवितः परमस्यां पृथिव्याꣳ शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् ॥ २५ ॥

का॰ [२. ६. १५. १६.] पृथिवि देवयजनीति तृणेऽन्तर्हिते प्रहरतीति । हे पृथिवि हे देवयजनि देवा इज्यन्ते यस्यां सा देवयजनी तस्याः सम्बोधने हे देवयजनि ते तव ओषध्यास्तृणरूपाया मूलमहं मा हिंसिषम् मा विनाशयामि (64.) ॥ का॰ [२. ६. १७.] व्रजं गच्छेति पुरीषमादत्तऽइति । स्फ्यप्रहारोत्पन्ना मृत् पुरीषमुच्यते । हे पुरीष त्वं व्रजं गच्छ । व्रजन्ति गच्छन्ति स्थातुं गावो यत्र स देशो व्रजस्तं

किम्भूतम् गोष्ठानम् गवां स्थानमिदानीमवस्थितिर्यत्र तम् गोयुक्तं तदीयं स्थानं गच्छेत्यर्थः ॥ का° [२.६.१८.] वर्षतु त इति वेदिं प्रेन्नतऽइति । हे वेदे ते तुभ्यं त्वदर्थं द्यौर्द्युलोकाभिमानी देवो वर्षतु जलसेकं करोतु । वृष सेचने वर्षणेन खननजनितदुःखशान्तिरस्त्वित्यर्थः ॥ का° [२.६.१९.] बधानेत्युत्करे करोतीति । स्फ्योत्खातां मृदमुत्करे त्यजेत् । हे देव सवितः योऽस्मान्द्वेष्टि द्वेषं करोति वयं च यं शत्रुं द्विष्मस्तमुभयविधं शत्रुं परमस्यां पृथिव्यां बधान । परमा अन्तिमा पृथिवी । छान्दसः स्याडागमः । उत्करे क्षिप्तायां धूल्यां निगूढस्य शत्रोस्तत्र बन्धनं कुरु यत्र भूमिरन्तिमप्रदेशेऽन्धतामिस्रो नरकोऽस्ति । तथा च श्रुतिः [१.२.४.१६.] अन्धे तमसि बधानेति यदाह परमस्यां पृथिव्यामिति । कैर्बन्धनं कर्तव्यं तदाह शतेन पाशैः शतसंख्याकाभिर्बन्धनरज्जुभिः । किं च अस्मादन्धतामिस्रान्नरकात्तं मा मौक् कदाचिदपि मा मुञ्च ॥२५॥

a. अपाररुं पृथिव्यै देवयजनाद्बध्यासम् ।

b. c. d. व्रजं - मौक् ।

e. अररो दिवं मा पप्तः । f. द्रप्सस्ते द्यां मा स्कन् ।

g. h. i. व्रजं - मौक् ॥२६॥

का° [२.६.२१.] अपाररुमिति द्वितीयं प्रहरतीति (65.) । पृथिव्यै देवयजनात्पृथिव्याः सम्बन्धिनो देवयजनाख्याद्वेदिस्थानात् अररुमररुनामानमसुरमप बध्यासम् । अपनीय यथा हतो भवति तथा करवाणि । अनेन मन्त्रेण द्वितीयवारं पूर्ववत्प्रहरेत् व्रजम् वर्षतु बधानेति मन्त्रत्रयस्य प्रयोगो व्याख्या च पूर्ववत् ॥ का° [२.६.२२.] अभिन्यस्यत्यग्नीदुत्करमररो दिवमितीति । हे अररो असुर दिवं द्युलोकं यागफलरूपं त्वं मा पप्तः मा गमः । स्वर्गे त्वया न गन्तव्यम् पत्लृ गतौ पतः पुमिति [पा° ७.४.१९.] लुङि पुमागमे रूपम् ॥ का° [२.६.२३.] द्रप्सस्तऽइति तृतीयमिति । हे वेदिदेवते ते तव पृथिवीरूपाया यो द्रप्स उपजीव्यो रसः स द्यां द्युलोकं मा स्कन् मा स्कन्दतु मा गच्छतु स्कन्दिर्गतिशोषणयोः । व्रजं गच्छेत्यादिमन्त्रत्रयस्य प्रयोगो व्याख्या च पूर्ववत् ॥२६॥

a. गायत्रेण त्वा छन्दसा परि गृह्णामि ।

b. त्रैष्टुभेन त्वा छन्दसा परि गृह्णामि ।

c. जागतेन त्वा छन्दसा परि गृह्णामि ।

d. सुक्ष्मा चासि शिवा चासि ।

e. स्योना चासि सुषदा चासि ।

f. ऊर्जस्वती चासि पयस्वती च ॥ २७ ॥

का॰ [२. ६. २५.] पूर्वं परिग्रहं परिगृह्णाति दक्षिणतः पश्चादुत्तरतश्च स्फ्येन गायत्रेणेति प्रतिमन्त्रमिति । यस्मात्प्रदेशादररुर्निष्काशितस्तत्र वेदेरियत्तां निश्चेतुं दक्षिणादिदिक्त्रये स्फ्येन रेखात्रयकरणं पूर्वः परिग्रहः । विष्णुर्देवता मन्त्रत्रयस्य । ते प्राञ्चं विष्णुं निपाद्य (66.) छन्दोभिरभितः पर्यगृह्णन्निति श्रुतेः [१. २. ५. ६.] । हे विष्णो त्वा त्वां गायत्रेण छन्दसा गायत्र्यादिछन्दस्त्रयरूपतया भावितेन स्फ्येन दिक्त्रये परि गृह्णामि । एवं त्रैष्टुभेन जागतेनेत्युत्तरमन्त्रयोः । ततः छन्दोदेवता दिक्त्रयेऽसुरेभ्यस्त्वां पालयिष्यन्ति । पूर्वस्यामाहवनीयः पालकोऽस्तीति भावः । प्रजापतिपुत्रा देवा असुराश्च पूर्वं स्पर्धां चक्रुस्तदा देवान्पराजयं प्राप्तान्मत्वा भूमिमसुरा विभेजुस्तदा देवा वामनरूपं विष्णुमग्रे कृत्वाऽसुरानागत्यास्मभ्यमपि भूम्यंशो दातव्य इति तानयाचिषुः । ततोऽसुरा असूयन्तोऽयं विष्णुर्यावति भूभागे शेते तावान्भवदीयोऽस्त्वित्यूचुस्ततो देवा बह्वेतदस्माकमित्युक्त्वा ते प्राञ्चं विष्णुं निपात्य (67.) गायत्रेणेत्यादिमन्त्रैर्यज्ञभूमिं जगृहुः । यज्ञो विष्णुः स यत्र तिष्ठति सैव यज्ञभूमिरिति तैर्विदितत्वाद्वेदिरिति तद्भूमेर्नामेति [१. २. ५. १ - ७.] श्रुतिकथामनुसंधाय वेदिग्रहणं विधेयम् ॥ का॰ [२. ६. ३१.] उत्तरं परिग्रहं परिगृह्णाति सुक्ष्मा स्योनोर्जस्वतीति । वेदिखननात्पूर्वं क्रियमाणः पूर्वः परिग्रहः पश्चात्क्रियमाण उत्तरपरिग्रहः । तत्रापि पूर्ववद्दिक्त्रये स्फ्येन रेखात्रयं कार्यम् । हे वेदे त्वं सुक्ष्मासि शिवा शान्ता (68.) चासि । क्ष्मा भूमिः शोभना क्ष्मा सुक्ष्मा खननेनाश्मादिदोषनिवर्तनं भूमेः शोभनत्वम् । उग्रस्यासुरस्य निःकाशनेन शान्तत्वम् । गुणद्वयस्यान्योन्यसमुच्चयार्थौ चकारौ एकोऽयं मन्त्रः ॥ स्योना सुखरूपासि । स्योनमिति

सुखनाम [निघ° ३. ६.]। सुषदा सुष्ठु सीदन्ति देवा यस्यां सा सुषदा। सम्यगुपवेशनयोग्या चासि। चकारौ पूर्ववत्। द्वितीयोऽयं मन्त्रः॥ ऊर्जस्वती पयस्वती चासि। ऊर्जःशब्दोऽन्नवाची। पयःशब्दस्तद्विकारदध्यादिवाची। तदुभयवती। चौ पूर्ववत्। तृतीयो मन्त्रः॥२७॥

a. पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीवदानुम्।
यामैरयंश्चन्द्रमसि स्वधाभिस्तामु धीरासोऽअनुदिश्य यजन्ते॥
b. प्रोक्षणीरासादय। c. द्विषतो वधोऽसि॥२८॥

का° [२. ६. ३२.] पुरा क्रूरस्येत्यनुमार्ष्टीति। अत्रेयमाख्यायिका मन्त्रेऽभिप्रेता। कदाचिद्देवानामसुरैः सह संग्राम उपस्थितस्तदा देवैर्मिथो मन्त्रितं यदस्या भूमेरुत्कृष्टं देवयजनस्थलं तच्चन्द्रे संस्थाप्य युद्धं कुर्मस्तत्र यद्यस्माकं पराजयः स्यात्तदा देवयजने यागं विधाय पुनर्दैत्यपराजयं करिष्याम इति संमन्त्र्य भूमेः सारभागं देवयजनं चन्द्रे स्थापयामासुस्तत्कृष्णवर्णमिदानीमपि (69.) दृश्यतऽइत्याख्यानमयं मन्त्रो ब्रूते [१. २. ५. १८.]॥ पुरा क्रूरस्येति त्रिष्टुप् चन्द्रदेवत्या। विरप्शीति महन्नाम [निघ° ३. ३.] विविधं रपति (70.) वेदत्रयरूपेण शब्दं करोतीति विरप्शी। यज्ञो (71.) वेदिर्वा (72.) प्राप्तो विष्णुः सम्बोध्यते। हे विरप्शिन् विष्णो परमेश्वर त्वं शृणु अनुगृहाणेति शेषः। क्रूरशब्दोऽत्र संग्रामवाची। संग्रामो वै क्रूरमिति श्रुतेः [१. २. ५. १९.]। विविधं सर्पन्ति योधा यस्मिन्निति विसृप्। तस्येति क्रूरविशेषणं पञ्चम्यर्थे षष्ठ्यौ। विसृपो नानायोधयुतात्क्रूरात् युद्धात् पुरार्थाद्देवाः जीवदानुं जीवं ददातीति जीवदानुस्तां जीवस्य धात्रीं सारभूतां यां पृथिवीमुदादाय ऊर्ध्वं गृहीत्वा स्वधाभिः वेदैः सह चन्द्रमसि इन्दौ ऐरयन् प्राक्षिपन् स्थापयामासुः धीरासः धीरा मेधाविनः तामु उ एवार्थे तामेव चन्द्रस्थां पृथिवीमनुदिश्य दर्शनेन संपाद्य सैव भूमिरस्यां वेद्यां विद्यतऽइति भावयित्वा यजन्ते यागं कुर्वन्ति। स्वधाशब्दो यद्यप्यन्नवाची तथाप्यत्रान्नहेतुभूता वेदत्रयी कथ्यते। यां चन्द्रमसि ब्रह्मणा दधुरिति श्रुतेः [१. २. ५. १९.] ब्रह्मणा वेदेन सहेत्यर्थः। अनेन मन्त्रेण खातायां वेद्यां लोष्टकृतवैषम्यनिवृत्तये समीकरणरूपं मार्जनं कुर्यात्॥

प्रोक्षणीरासादयेति अग्नीधं प्रति प्रैषः । प्रोक्ष्यन्तेऽआभिरिति प्रोक्षण्य आपस्ता आसादय वेद्यां स्थापय ॥ का° [२.६.४२.] द्विषतो बध इति स्फ्यमुदञ्चं प्रहरतीति । हे स्फ्य त्वं द्विषतः शत्रोर्बधोऽसि हिंसकोऽसि ॥२८॥

X. a. प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः ।

b. निष्टप्तꣳ रक्षो निष्टप्ता अरातयः ।

c. अनिशितोऽसि सपत्नक्षिद्वाजिनं त्वा वाजेध्यायै संमार्ज्मि ।

d. e. = a. b.

f. अनिशितासि सपत्नक्षिद्वाजिनीं त्वा वाजेध्यायै संमार्ज्मि ॥२९॥

का° [२.६.४६.] स्रुवं प्रतप्य पूर्ववदिति । यथा शूर्पाग्निहोत्रहवण्योः प्रत्युष्टमिति प्रतपनं कृतं तथा स्रुवस्यापि कार्यमित्यर्थः । मन्त्रो व्याख्यातः ॥ का° [२.६.४६.] वेदाग्रैरन्तरतः प्राक्संमार्ष्ट्यनिशित इतीति । हे स्रुव त्वमनिशितोऽसि शो तनूकरणे । नितरां शितस्तीक्ष्णीकृतो निशितस्तथा न भवतीत्यनिशितः । अस्मद्विषये तीक्ष्ण उपद्रवकारी न भवसीत्यर्थः । यतः सपत्नक्षित् क्षिणु हिंसायाम् सपत्नानस्मच्छत्रून् क्षिणोति हिनस्तीति सपत्नक्षित् । अत एव त्वां संमार्ज्मि सम्यक् शोधयामि । मृजू (73.) शुद्धौ । किंभूतं त्वां वाजिनं वाजोऽन्नमस्यास्तीति वाजिनं यज्ञद्वारा अन्नहेतुत्वादन्नवन्तम् । यद्वा वाजो यज्ञस्तद्वन्तम् यज्ञो हि देवानामन्नमिति श्रुतिः [५.१.१.२.] । वाजं यज्ञाख्यमन्नमर्हतीति वाजिनम् । अर्हार्थे इन्प्रत्ययः । किमर्थं संमार्ज्मि । वाजेध्यायै ञिइन्धी दीप्तौ । इन्धनं इध्या दीप्तिः । वाजस्येध्या वाजेध्या तस्यै वाजेध्यायै यज्ञस्य दीप्त्यै प्रकाशनार्थम् । शोधितेन स्रुवेणाज्ये गृहीते हुते च सति अग्निर्दीप्यते । तद्दीप्त्याहुतिफलभूतमन्नं प्रकाशितं भवतीत्यर्थः ॥ का° [२.६.४७.४८.] प्रतप्य प्रतप्य प्रयच्छत्यनिशितेति स्रुच इति । अनिशितेति मन्त्रेण स्रुचस्तिस्रो जुहूपभृद्ध्रुवाः संमृज्य प्रत्येकं प्रत्युष्टमिति मन्त्रेण प्रतप्य प्रतप्य वेद्यां स्थापनार्थमध्वर्यवे प्रयच्छतीति सूत्रार्थः । प्रत्युष्टमिति व्याख्यातम् । अनिशितेत्यपि व्याख्यातम् । स्रुवस्य पुंस्त्वादादौ स्रुवसंमार्जनम् । स्रुचां स्त्रीत्वात्पश्चात् । योषा वै स्रुग्वृषा स्रुव इत्यादिश्रुतेः [१.३.१.९.] । जुह्वादीनां स्रु-

चां स्त्रीलिङ्गत्वात्तद्विशेषणयोरनिशिता वाजिनीमित्यनयोः स्त्रीत्वं विशेषः ॥२१॥

a. अदित्यै रास्नासि । b. विष्णोर्वेष्योऽसि । c. ऊर्जे त्वा ।

d. अदब्धेन त्वा चक्षुषावपश्यामि ।

अग्नेर्जिह्वासि सुहूर्देवेभ्यो धाम्नेधाम्ने मे भव यजुषेयजुषे ॥३०॥

का° [२.७.१.] पत्नीं संनह्यति प्रत्यग्दक्षिणात उपविष्टां गार्हपत्यस्य मुञ्जयोक्त्रेण त्रिवृता परिहरत्यधीवासोऽदित्यै रास्नासीतीति । हे योक्त्र अदित्यै अदित्या भूम्यास्त्वं रास्नासि रशना भवसि ॥ का° [२.७.२.३.] दक्षिणं पाशमुत्तरे प्रतिमुच्योर्ध्वमुद्गूहति विष्णोर्वेष्य इति न ग्रन्थिं करोतीति । हे दक्षिण पाश त्वं विष्णोः यज्ञस्य वेष्योऽसि व्यापकोऽसि । विष्लृ व्याप्तौ ॥ का° [२.७.४.] ऊर्जे त्वेत्याज्यमुद्वास्येति । हे आज्य त्वामुद्वासयामीति शेषः । किमर्थम् । ऊर्जे उत्तमरसलाभाय । विलापितं घृतं सुस्वादु भवति ॥ का° [२.७.४.] पत्नीमवेक्षयत्यदब्धेनेतीति । दभ्नोतिर्हिंसार्थः । हे आज्य अदब्धेन अनुपहिंसितेन चक्षुषा त्वामवपश्यामि । अवाचीनं यथा तथाधोमुखी सती पश्यामि । किं च हे आज्य त्वमग्नेर्जिह्वासि । यदाज्यमग्नौ हूयते तदा जिह्वेव ज्वालोत्पद्यतेऽतस्त्वमग्नेर्जिह्वा । किम्भूतं देवेभ्योऽर्थाय सुहूः सुष्ठु हूयते इति सुहूः पुंस्त्वं छान्दसम् । यद्वा जिह्वाविशेषणं सुष्ठु हूयन्ते देवा आहूयन्तेऽनया सा सुहूर्जिह्वा । ज्वालां दृष्ट्वा आयन्तीत्यर्थः । अतो मे मम धाम्नेधाम्ने भव तथा यजुषेयजुषे च भव । धाम स्थानम् । फलेन युज्यत इति यजुःशब्दो यागवाची । धाम्नेधाम्ने तत्तद्यागफलोपभोगस्थानसिद्ध्यर्थं भव । यजुषेयजुषे तत्तद्यागसिद्धये योग्यं भवेत्यर्थः ॥३०॥

a. सवितुस्त्वा प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।

b. सवितुर्वः प्रसवऽ - रश्मिभिः ।

c. तेजोऽसि शुक्रमस्यमृतमसि ।

d. धाम नामासि प्रियं देवानामनाधृष्टं देवयजनमसि ॥३१॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां प्रथमोऽध्यायः ॥

का° [२. ७. ७.] सवितुस्त्वेत्याज्यमुत्पुनातीति । सवितुर्देवस्य प्रसवे आज्ञायां वर्तमानः सन्त्वामुत्पुनामि शोधयामि । व्याख्यातमन्यत् ॥ का° [२. ७. ८.] प्रोक्षणीश्च पूर्ववदिति । सवितुर्वः । वो युष्मानुत्पुनामीति व्याख्यातम् ॥ का° [२. ७. ९.] आज्यमवेक्षते तेजोऽसीतीति । हे आज्य त्वं तेजोऽसि । शरीरकान्तिहेतुत्वात्तेजस्त्वम् । शुक्रमसि दीप्तिमदसि । स्निग्धरूपत्वाद्दीप्तिमत्त्वम् । अमृतमसि विनाशरहितमसि । बहुदिवसावस्थानेऽप्योदनादिवत्पर्युषितत्वादिदोषाभावादविनाशित्वम् ॥ का° [२. ७. ११. १२.] स्रुवेणाज्यग्रहणं चतुर्जुह्वां धाम नामेति सकृन्मन्त्र इति । हे आज्य त्वं धाम स्थानमसि धीयते स्थाप्यते चित्तवृत्तिर्देवैरत्रेति धाम । तथा नाम नामयति आत्मानं प्रति सर्वाणि भूतानीति नाम । आज्यं दृष्ट्वा सर्वेऽप्यत्तुं नमन्ति । तथा देवानां प्रियमिष्टम् अनभिभूतम् । गतसारत्वदोषेणातिरस्कृतं चरुपुरोडाशादीनि चिरस्थित्या गतसाराणि स्युरिदं न तथा । देवयजनं देवा इज्यन्तेऽनेनेति यागसाधनम् ईदृशं त्वमस्यतस्त्वां गृह्णामीति वाक्यशेषः ॥ ३१ ॥

श्रीमन्महीधरकृते मन्त्रदीपे मनोहरे ।

शाखाव्याज्यग्रहान्तोऽयमध्यायः प्रथमोऽगमत् ॥ १ ॥

अथ काण्वशाखायां पाठविशेषः ॥ श्रीयाज्ञवल्क्याय नमः ॥

I. ॥ १ a. b. c. d - - कर्मणे ॥ १ ॥ आप्यायध्व° - - °घशꣳसः ॥ २ ॥ ध्रुवा - - बह्वीः १ e. २ a. ॥ ३ ॥ ॥

II. ॥ २ b. c - - धाम्ना ॥ १ ॥ दृꣳहस्व - - ह्वार्षीत् ३ a ॥ २ ॥ ३ b. c ॥ ३ ॥ ४ [°नक्मि] ॥ ४ ॥ ७ ॥

III. ॥ ५ ॥ १ ॥ ६ ॥ २ ॥ ७ ॥ ३ ॥ ८ a ॥ ४ ॥ ८ b [असि सम्नितमं वह्नितमं प°] ॥ ५ ॥ ९ c. d. e. f. १० a ॥ ६ ॥ १० b. c. ११ a. b ॥ ७ ॥ ११ c. d. e [रंक्षस्व] ॥ ८ ॥ १५ ॥

IV. ॥ १२ a. b ॥ १ ॥ १२ c [यज्ञं नयत सुधातुं यज्ञपतिं यज्ञपतिं] - देवायुवम् ॥ २ ॥ १३ c. d. e. f ॥ ३ ॥ १३ g [- यद्वोऽशुद्धः पराजघानैतदिदं -] ॥ ४ ॥ १९ ॥

V. ॥ १४ a. b. c ॥१॥ १४ d. e ॥२॥ १५ a ॥३॥ १५ b [बृहन्ग्रावासि]. c [- हव्यं७ श°] - - °ष हविष्कृदेहि ॥४॥ १६ a [- आवद वयं७ संघाति-संघाति जेष्म] ॥५॥ १६ b. c. d [प्रतिपूता अरातयः] ॥६॥ १६ e. f. g [- सविता प्रतिगृह्णातु हिरण्यपाणिरछिं° -] ॥७॥२६॥

VI. ॥ १७ a. b. c ॥१॥ १७ d ॥२॥ १८ a. b. c ॥३॥ १८ d [°धामि द्विषतो वधाय]. e. f ॥४॥३०॥

VII. ॥ १९ a. b. c ॥१॥ १९ d. e [°म्भन्यसि]. f ॥२॥ २० a °वान्धिनुहि यज्ञं धिनुहि यज्ञपतिम् ॥ धिनुहि मां यज्ञन्यम् ॥३॥ २० b-g ॥४॥ वेदोऽसि वेद येन त्वं देव वेद देवेभ्यो वेदोऽभवः ॥ तेन मह्यं वेदो भव ॥५॥३५॥

VIII. ॥ २१ [- जगतीभिः सं मधुम° -] ॥१॥ २२ a-f ॥२॥ २२ g °सीदन्तरितं७ रक्षोऽन्तरिता अरातयो. h ॥३॥ २३ ॥४॥३१॥

IX. ॥ २४ ॥१॥ पृथिव्यै वर्मासि २४ a ॥२॥ २५ b. c. d ॥३॥ २६ [°रुं बध्यासं पृथिव्यै देवयजनाद्व°] ॥४॥ २७ ॥५॥ २८ a [°स्त्वां धीरा°]. c ॥६॥४५॥

X. ॥ २९ [°मार्ग्मि] ॥१॥ ३० a °स्नासीन्द्राण्यै संनहनं b. c. d - श्यामि ॥२॥ अग्नेर्जिह्वासि सुभूर्देवेभ्यो धाम्नेधाम्ने भव यजुषेयजुषे ॥३॥ ३१ - जनम् ॥४॥ यस्ते प्राणः पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे ॥ आत्मन्वांत्सोम घृतवान्हि भूत्वाग्निं गछ स्वर्यजमानाय विन्द ॥५॥५०॥

दशानुवाकेषु पञ्चाशत् ॥ ॥

इति काण्वशाखायां संहितापाठे प्रथमोऽध्यायः ॥ ॥

I. a. कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टं प्रोक्षामि ।

b. वेदिरसि बर्हिषे त्वा जुष्टां प्रोक्षामि ।

c. बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि ॥ १ ॥

का° [२. ७. ११.] इध्मं प्रोक्षति विस्रस्य वेदिं च बर्हिः प्रतिगृह्य वेद्यां कृत्वा पुरस्ताद्ग्रन्थि कृष्णोऽसीति प्रतिमन्त्रमिति ॥ इध्मं विस्रंस्य प्रोक्षेत् । वेदिं च प्रोक्षेत् । बर्हिरादाय वेद्यां पूर्वग्रन्थि कृत्वा प्रोक्षेत्क्रमान्मन्त्रत्रयेणेति सूत्रार्थः ॥ कृष्णोऽसि ॥ हे इध्म त्वं कृष्णोऽसि कृष्णमृगरूपो यज्ञोऽसि । इध्मपूलकस्य (1.) यज्ञसाधनत्वाद्यज्ञत्वोपचारः । किम्भूतः ॥ आखरेष्ठः ॥ आ समन्तात्खरे कठिने वृक्षे तिष्ठतीति आखरेष्ठः । यद्वा खं स्वर्गं राति ददातीति खरः आहवनीयस्तत्रा समन्तात्तिष्ठतीत्याखरेष्ठः । अन्तोदात्तः कृष्णशब्दो वर्णवाची अयं तु कृष्णशब्द आद्युदात्तत्वान्मृगवाची ॥ यज्ञः कदाचिद्देवेभ्योऽपक्रान्तः स्वगोपनाय कृष्णमृगो भूत्वा वने यज्ञियतरुमध्ये प्रविश्य कुत्रचित्कठिने वृक्षे तस्थौ । तदेतदभिप्रेत्य कृष्ण आखरेष्ठ इति द्वयमुच्यते । यज्ञो ह देवेभ्योऽपचक्राम स कृष्णो भूत्वा चचारेत्यादिश्रुतेः [१. १. ४. १.] । स्थे च भाषायामिति स्थे परपदे [पा° ६. ३. २०.] भाषायां सप्तम्या अलुग्निषेधाद्देरेऽलुक् । पूर्वपदादिति [पा° ८. ३. १०६.] षत्वम् । अतोऽग्नये जुष्टं प्रियं त्वां प्रोक्षामि शुद्ध्यर्थं जलेनेति शेषः । वेदिरसीति वेदिं प्रोक्षति । त्वं वेदिरसि । विद्यते लभ्यत इति वेदिः । विद्लृ लाभे । देवैरसुरेभ्यो लब्धत्वाद्वेदिः । अतो बर्हिर्जुष्टां बर्हिषो धारणोपयोगितया प्रियां त्वां प्रोक्षामि । पृथ्वीरूपाया वेदेः प्रजारूपस्य बर्हिषो धारकत्वं युक्तम् ॥ बर्हिरसीति बर्हिःप्रोक्षणम् । हे दर्भ त्वं बर्हिरसि प्रभूतत्वाद्वेदिबृंहणसमर्थमसि । अतः स्रुग्भ्यो जुष्टं स्रुचां धारणात्प्रियं त्वां प्रोक्षामि ॥ १ ॥

a. अदित्यै व्युन्दनमसि । b. विष्णो स्तुपोऽसि ।

c. ऊर्णम्रदसं त्वा स्तृणामि स्वासस्थां देवेभ्यः ।

d. भुवपतये स्वाहा । e. भुवनपतये स्वाहा ।

f. भूतानां पतये स्वाहा ॥ २ ॥

का° [२.७.२०.] शेषं मूलेषूपसिंचत्यदित्यै व्युन्दनमितीति ॥ हे प्रोक्षणशेषोदक त्वमदित्यै अदित्या भूम्याः व्युन्दनमसि विशेषेण क्लेदनमसि ॥ का° [२.७.२१.] बर्हिर्विस्रंस्य पुरस्तात्प्रस्तरग्रहणं विष्णोरितीति । हे प्रस्तर दर्भमुष्टिरूप त्वं विष्णोर्यज्ञस्य स्तुपोऽसि । ष्टै स्त्यै शब्दसंघातयोः । औणादिको डुपप्रत्ययः । दर्भसंघातरूपत्वात्केशसंघातरूपा शिखेव भवसि ॥ का° [२.७.२२.] वेदिं स्तृणात्यूर्णम्रदसमितीति । हे वेदे त्वां स्तृणामि बर्हिषा छादयामि । किम्भूतां त्वाम् । ऊर्णम्रदसमूर्णामिव मृदुतरामतिशयेन मृदुर्म्रदीयसी ईयसलोपश्छान्दसः (2.) । यथा प्रभोरुपवेष्टुं भूमिः कम्बलादिनाछाद्यते काठिन्याभावाय तथा दर्भैराछादिता वेदिर्मृदुः स्यात् । पुनः किंभूतां त्वां देवेभ्यः स्वासस्थां देवोपकाराय सुखेनासितुं स्थानभूतां । सुखेन आसिनासनेन स्थीयते यस्यां सा स्वासस्था ताम् । का° (2 a.) स्कन्नमभिमृशति भुवपतये स्वाहेति ॥ एतन्मन्त्रत्रयस्यात्रोत्कर्षः । भुवपत्यादयस्त्रयोऽग्नेर्भ्रातरः । स्वाहाशब्दो निपातो देवान्प्रतिदानवाची स्वाहाकारं च वषट्कारं च देवा उपजीवन्तीति श्रुतेः । हविर्ग्रहणकाले परिधिभ्यो बहिर्यद्धविः स्कन्नं तद्भुवपत्यादिभ्योऽग्नेर्भ्रातृभ्यो दत्तमिति मन्त्रार्थः । पुराग्नेर्भ्रातरो वषट्कारभयाद्भूमिं प्राविशंस्तद्दुःखेनाग्निरपि पलाय्योदके प्राविशत्ततो देवैरानीय स्वाधिकारे स्थाप्यमान एवमवदद्यदेतैर्मद्भ्रातृभिर्मां परिधत्तेषां च यज्ञभागः कल्पतामिति । ततस्तेऽग्नेर्भ्रातरः परिधयो जातास्तेषां च स्कन्नं हविर्भागः कृत इति कथा (3.) [१.३.३.१३-१६.] ॥२॥

a. ग॒न्ध॒र्वस्त्वा॑ वि॒श्वाव॑सुः॒ परि॑दधातु॒ विश्व॒स्यारि॑ष्ट्यै॒ यज॑मानस्य परि॒धिर॑स्य॒ग्निरि॒ड ईडि॒तः ।

b. इन्द्र॑स्य बा॒हुर॑सि॒ दक्षि॑णो॒ वि° - - °डि॒तः ।

c. मि॒त्रावरु॑णौ त्वोत्तर॒तः परि॑धत्तां ध्रु॒वेण॒ धर्म॑णा॒ विश्व॒स्यारि॑ष्ट्यै॒ यज॑मानस्य परि॒धिर॑स्य॒ग्निरि॒ड ई॑डि॒तः ॥३॥

का° [२.८.१.] परिधीन्परिदधाति मध्यमदक्षिणोत्तरान्गन्धर्व इति प्रतिमन्त्रमिति ॥ आदौ पश्चात् । हे परिधे विश्वावसुनामा गन्धर्वः त्वां परिदधातु आहवनी-

यस्य पश्चात्सर्वतः स्थापयतु । विश्वस्मिन्सर्वस्मिन्प्रदेशे वसतीति विश्वावसुः । द्युलोकस्थं सोमं रक्षितुं तत्पार्श्वे सर्वत्र गन्धर्वोऽवसदिति श्रुत्यन्तरकथा । किमर्थं स्थापयतु । विश्वस्यारिष्ट्यै । रिष हिंसायां रेषणं रिष्टिः न रिष्टिः अरिष्टिस्तस्यै । आहवनीयस्थानरूपस्य (4.) विश्वस्य हिंसापरिहाराय । परिध्यभावेऽसुराः प्रविश्य हिंसन्ति । किं च त्वं यजमानस्य परिधिरसि । न केवलमग्नेः परिधिः यजमानमप्यसुरेभ्यो रक्षितुं पश्चिमदिशि स्थापितोऽसि । किं च अग्निरिडः ईडितश्चासि । आहवनीयस्य प्रथमो भ्राता भुवपतिनामाग्निरूपस्त्वमसि । ईड्यते स्तूयते इतीड स्तुतियोग्यः । अत एव ईडितः स्तुतो होत्रादिभिः । ईड स्तुतौ ॥ दक्षिणं परिधिं परिदधाति । इन्द्रस्य बाहुरसि । हे द्वितीय परिधे त्वमिन्द्रस्य दक्षिणो बाहुरसि । रक्षणसमर्थत्वादिन्द्रबाहुत्वोपचारः (5.) । विश्वस्येत्यादि व्याख्यातम् । अत्राग्निशब्देन भुवनपतिनामा द्वितीयो भ्राता ॥ तृतीयमुत्तरं परिधिं परिदधाति ॥ मित्रावरुणौ ॥ हे तृतीय परिधे मित्रावरुणौ वाय्वादित्यौ ध्रुवेण स्थिरेण धर्मणा धारणेन उत्तरस्यां दिशि त्वां परिधत्तां परितः स्थापयताम् । विश्वस्येत्यादि पूर्ववत् । अत्राग्निर्भूतानां पतिस्तृतीयो भ्राता ॥ ३ ॥

वीतिहो॑त्रं त्वा कवे द्युमन्त॒ꣳ समि॑धीमहि ।
अग्ने॑ बृहन्त॑मध्व॒रे ॥ ४ ॥

का° [२.८.२.] प्रथमं परिधिꣳ समिधोपस्पृश्य वीतिहोत्रमित्यादधातीति । इयमृक् अग्निदेवत्या गायत्रीछन्दस्का । हे कवे क्रान्तदर्शिन् हे अग्नेऽध्वरे यागे निमित्ते त्वां वयं समिधीमहि अनेनेध्मकाष्ठेन दीपयामः । अतीतानागतदूरेवर्तिपदार्थानां यस्य युगपज्ज्ञानं स कविः । किम्भूतं त्वाम् । वीतिहोत्रम् । इण् गतौ । इतिर्गतिः व्याप्तिः पुत्रपौत्रपशुधनादिभिः समृद्धिरित्यर्थः । वीतये समृद्ध्यै होत्रं होमो यस्य स वीतिहोत्रस्तं यत्र होमे कृते समृद्धिप्राप्तिः स्यादित्यर्थः । यद्वा वीतिरभिलाषो होत्रे होतृकर्मणि यस्य तं । तथा द्युमन्तं । द्यौः कान्तिरस्यास्तीति द्युमान् तं स्वत एव द्युत्युपेतम् । तथा बृहन्तं महान्तम् ॥ ४ ॥

a. स॒मिद॑सि । b. सूर्य॑स्त्वा पु॒रस्ता॑त्पातु कस्या॑श्चिद॒भिश॑स्त्यै ।

c. स॒वि॒तुर्बा॒हू स्थः । d. ऊर्णम्रदसं त्वा स्तृणामि स्वास॒स्थं दे॒वेभ्यः ।

e. आ त्वा॒ वस॑वो रु॒द्रा आ॑दि॒त्याः स॑दन्तु ॥५॥

का॰ [२.८.३.] अनुपस्पृश्य द्वितीयं समिदसीतीति ॥ हे इध्मकाष्ठ त्वं समिदसि अग्नेः समिन्धनं दीपनमसि ॥ का॰ [२.८.४.] सूर्यस्त्वेति जपत्याहवनीयमीक्षमाण इति ॥ हे आहवनीय सूर्यः पुरस्तात्पूर्वस्यां दिशि कस्याश्चिदभिशस्त्यै सर्वस्या अभिशस्तेर्हिंसायाः सकाशात्त्वा त्वां पातु रक्षतु । चतुर्थी पञ्चम्यर्थे । या काचिद्धिंसा प्रसक्ता तां सर्वां परिहरत्वित्यर्थः । इतरदिक्त्रये परिधित्रयं रक्षकं पूर्वस्यां तदभावात्सूर्यः । तथा च श्रुतिः [१.३.४.८.] । गुप्त्यै वा अभितः परिधयो भवन्त्यथैतत्सूर्यमेव पुरस्ताद्गोप्तारं करोतीति । का॰ [२.८.५.] (6.) बर्हिषस्तृणे तिरश्ची निदधाति सवितुरितीति । तृणद्वयं प्रस्तरस्थापनार्थं तिर्यग्निदध्यात् । हे तृणे युवामुभे सवितुर्देवस्य बाहू स्थः । प्रस्तरधारणेन सूर्यस्य बाहू इव भवथः ॥ का॰ [२.८.१०.] तयोः प्रस्तरᳪ स्तृणात्यूर्णम्रदसमितीति । ऊर्णामिव मृदुं देवेभ्यो देवानां स्वासस्थं सुखेनासनेन स्थीयते यत्र तादृशं त्वां स्तृणामि ॥ का॰ [२.८.११.] अभिविदधात्या त्वा वसव इतीति ॥ प्रस्तरं प्रति पाणी निदधाति । वसवो रुद्रा आदित्याः सवनत्रयाभिमानिनस्त्रयो देवाः त्वामासदन्तु आसादयन्तु सर्वतः प्रसारयन्तु ॥५॥

a. घृ॒ताच्य॑सि जु॒हूर्नाम्ना॒ सेदं॑ प्रि॒येण॒ धाम्ना॑ प्रि॒यᳪ सद॒ आसी॑द ।

b. घृ॒ताच्य॑स्युप॒भृन्नाम्ना॒ - सीद ।

c. घृ॒ताच्य॑सि ध्रु॒वा नाम्ना॒ - सीद ।

d. प्रि॒येण॒ धाम्ना॑ प्रि॒यᳪ सद॒ आसी॑द ।

e. ध्रु॒वा अ॑सदन्नृ॒तस्य॒ योनौ॒ ता वि॑ष्णो पाहि । पा॒हि य॒ज्ञं । पा॒हि य॒ज्ञप॑तिम् ।

f. पा॒हि मां य॑ज्ञ॒न्य॑म् ॥६॥

का॰ [२.८.१२.१३.] सव्याभून्ये जुहूं प्रतिगृह्य निदधाति घृताचीत्येवमितरे

उत्तराभ्यां प्रतिमन्त्रमिति । हे जुहु त्वं घृताची असि । घृतमंचति प्राप्नोतीति घृताची घृतपूर्णा भवसि नाम्ना च जुहूः । हूयतेऽनयेति जुहूः । क्विपि द्युतिगमिजुहोतीनां द्वे च जुहोतेर्दीर्घश्चेति [पा° क° ३. २. १७८. प° २. ३.] द्वित्वं दीर्घश्च । सा त्वं प्रियेण धाम्ना देववल्लभेनाज्येन सह इदं प्रियं सदः प्रस्तरलक्षणमासीद अधितिष्ठ । एतद्वै देवानां प्रियतमं धाम यदाज्यमिति श्रुतेः [१. ३. २. १७.] प्रियधामशब्देनाज्यम् । उपभृतं सादयति । उप समीपे स्थित्वा बिभर्ति आज्यं धारयतीत्युपभृत् । व्याख्यातमन्यत् । ध्रुवां सादयति । ध्रुव स्थैर्ये । यथा होमार्थं जुहूपभृतोश्चलनं तद्वदस्याश्चलनाभावेन स्थिरत्वान्नाम्ना ध्रुवा । अन्यद्व्याख्यातम् ॥ का° [२. ८. १९.] प्रियेण धाम्नेति हवीꣳषि वेद्यां कृत्वेति (7.) । हे हविः प्रियेण धाम्नाऽऽज्येन सह प्रियं सद आसीदेत्येकैकं हविः सम्बोध्य वचनम् । का° [२. ८. १९.] ध्रुवा असदन्निति सर्वाण्यालभतऽइति ऋतस्यावश्यम्भाविफलोपेतत्वेन सत्यस्य यज्ञस्य योनौ स्थाने ध्रुवाणि यानि (8.) हवींषि असदन्नतिष्ठन् । हे विष्णो व्यापक यज्ञपुरुष ता तानि हवींषि पाहि रक्ष यज्ञं च पाहि यज्ञपतिं च पाहि । का° [२. ८. २०.] पाहि मामित्यात्मानमिति । यज्ञं नयतीति यज्ञनीः तं यज्ञन्यमध्वर्युं मां पाहि ॥ ६॥

II. a. अग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजजितꣳ सम्मार्ज्मि ।

b. नमो देवेभ्यः । c. स्वधा पितृभ्यः । d. सुयमे मे भूयास्तम् ॥ ७॥

का° [३. १. १३.] इध्मसंनहनैरनुपरिधि सम्मार्ष्ट्यग्ने वाजजिदिति त्रिस्त्रिः परिक्राममिति (9.) । वाजमन्नं जयतीति वाजजित् । तत्सम्बुद्धौ हे वाजजित् हे अग्ने त्वामहं सम्मार्ज्मि शोधयामि । किम्भूतं त्वाम् । वाजं सरिष्यन्तमन्नमुद्दिश्य गमिष्यन्तमन्नसम्पादनोपयुक्तम् । तथा वाजजितमन्नमुद्दिश्य जयोपेतमन्नप्रतिबन्धनिवारकमित्यर्थः ॥ का° [३. १. १५.] अपरमाहवनीयादंजलिं करोति नमो देवेभ्य इतीति । ये देवा अनुष्ठानमनुगृह्णन्ति तेभ्यो नमस्करोति । का° [३. १. १५.] स्वधा पितृभ्य इति दक्षिणात उत्तानमिति । प्राङ्मुखेनादौ देवनत्यर्थमञ्जलिः कृतः इदानीं पितृनत्यर्थं दक्षिणामुख उत्तानमञ्जलिं कुर्यात् । ये पितरः पालकाः सन्ति तेभ्यः

स्वधाऽस्तु । स्वधाशब्दो निपातः पितॄनुद्दिश्य देयद्रव्यस्य दाने वर्तते । अतो यद्देयं तद्दास्याम इत्यर्थः । अनेन मन्त्रद्वयेन देवाः पितरश्चोपचर्यन्ते । का° [३. १. १६.] सुयमे म इति जुहूपभृतावादायेति । हे जुहूपभृतौ मे मदर्थं सुयमे सुष्ठु नियते युवां भूयास्तं भवतम् । यथा युवयोः स्थितमाज्यं न स्कन्दति तथा धारयतमित्यर्थः ॥७॥

अस्कन्नमद्य देवेभ्य आज्यꣳ सम्भ्रियासम् ।

e. अङ्घ्रिणा विष्णो मा त्वावक्रमिषम् ।

f. वसुमतीमग्ने ते छायामुपस्थेषं विष्णो स्थानमसि ।

g. इत इन्द्रो वीर्यमकृणोदूर्ध्वोऽध्वर आस्थात् ॥८॥

तथा सति अद्यास्मिन्ननुष्ठानदिने देवेभ्यो देवोपकारायाज्यं युवयोः स्थितं घृतमस्कन्नं भूमौ यथा न स्कन्दति तथा सम्भ्रियासं सम्यक्पोषणं करोमि धारणं वा । आशीर्लिङि उत्तमे रूपम् । का° [३. १. १६.] दक्षिणातिक्रामत्यङ्घ्रिणा विष्णवितीति (10.) । हे विष्णो व्यापक यज्ञपुरुष अङ्घ्रिणा पादेन त्वा त्वामहं मा अवक्रमिषमवक्रमणं मा कार्षं पादेनातिक्रमणदोषो मे मा भूदित्यर्थः । का° [३. १. १९.] वसुमतीमित्यवस्थायेति । हे अग्ने ते तव छायां छायावत्समीपवर्तिनीं वसुमतीं भूमिमहमुपस्थेषमुपतिष्ठेयं सेवेय । उपपूर्वस्तिष्ठतिः सेवार्थः । स एव सेवाप्रकारः कथ्यते । हे वसुमति त्वं विष्णोर्यज्ञस्य स्थानमसि । अत्र स्थित्वा यागः कर्तुं शक्यते इत्यर्थः । आहवनीयसमीपवर्तित्वादस्या भूमेर्यज्ञस्थानत्वम् । यद्वायमर्थः । हे अग्ने ते तव वसुमतीं धनवतीं धनप्राप्तिकरीं छायामाश्रयमुपस्थेषं सेवेय । छायाशब्द आश्रयवाचकः । युष्मत्पादच्छायायां वसामीतियावत् । यतस्त्वं विष्णोर्यज्ञस्य स्थानमसि ॥ का° [३. २. १.] इत इन्द्र इति जुहोतीति । पूर्वमन्त्रे यज्ञसम्बन्धि यत्स्थानमुक्तं तदेव देवानां विजयहेतुत्वादितःशब्देन परामृश्यते । देवयजनव्यतिरिक्तभूमेरसुराधीनत्वेन तत्र देवानां पराजयेऽपि यज्ञप्रदेशः पराजयरहितः । तदेवोच्यते मन्त्रेण ॥ इत इन्द्रः ॥ इन्द्र इतोऽस्माद्देवयजनस्थानात् उद्युक्तः (11.) सन्निति शेषः । वीर्यमकृणोत् वीरस्य कर्म वीर्यं शत्रुबधरूपमकरोत् अत एवाधरो यज्ञ

ऊर्ध्वमास्थात् । उन्नतः स्थितः । इन्द्रेण वीर्ये कृते शत्रुकृतविघ्नाभावादधरस्यौन्नत्यम् ॥ ८॥

अग्ने॒ वेर्हो॒त्रं वेर्दू॒त्य॑म् । अव॑तां॒ त्वां द्यावा॑पृथि॒वी । अव॒ त्वं द्यावा॑पृथि॒वी स्वि॑ष्टकृद्दे॒वेभ्य॒ इन्द्र॒ आज्ये॑न ह॒विषा॑ भूत्स्वाहा॑ ।

h. सं ज्योति॑षा॒ ज्योतिः॑ ॥ ९॥

तस्मात् हे अग्ने त्वं होत्रं वेः । होतुः कर्म विद्धि । लङि अडभावे रूपम् । दूत्यं दूतकर्म च वेः विद्धि । होतृत्वं दूतत्वं चाग्नेः कर्म । तथा च श्रुतिः [१.४.५.४.] उभयं वा एतदग्निर्देवानाꣳ होता च दूतश्चेति । ईदृशं त्वां द्यावापृथिवी अवतां पालयताम् । हे अग्ने त्वमपि द्यावापृथिवी लोकद्वयदेवते अव पालय इत्यन्योन्यपालने सति इन्द्रः आज्येन हविषास्माभिर्दत्तेन देवेभ्यो देवार्थं स्विष्टकृत् भूत् । सुष्ठु इष्टं करोतीति स्विष्टकृत् तादृशो भवतु । अडभावश्छान्दसः । यद्यदस्माभिरिज्यते तत्तदिष्टं सर्वं वैकल्यरहितं करोत्वित्यर्थः । स्वाहा सुहुतमस्तु । इन्द्रं देवमुद्दिश्य इदमाज्यं दत्तमित्यर्थः । स्वाहेतिनिपातो देवोद्देशेन दाने वर्तते ॥ का° [३.२.२.] जुह्वा ध्रुवाꣳ समनक्ति सं ज्योतिषेति । गच्छतामित्यध्याहारः । ज्योतिषा ध्रुवास्थिताज्यरूपज्योतिषा सह ज्योतिर्जुह्वासिच्यमानरूपं ज्योतिः संगच्छताम् ॥ ९॥

III. a. मयी॒दमिन्द्र॑ इन्द्रि॒यं द॑धात्व॒स्मान्रायो॑ म॒घवा॑नः सचन्ताम् । अ॒स्माक॑ꣳ स॒न्त्वा॒शिषः॑ स॒त्या नः॑ सन्त्वा॒शिषः॑ ।

b. उप॑हूता पृथि॒वी मा॒तोप॒ मां पृ॑थि॒वी मा॒ता ह्व॑यताम् । अ॒ग्निराग्नी॑ध्रा॒त्स्वाहा॑ ॥ १०॥

का° [३.४.२१.] आशासाने मयीदमिति यजमानो जपतीति ॥ प्रधानयागानन्तरं पुरोडाशशेषप्राशनसमये होतरि आशिषं प्रयुञ्जाने सति यजमानो जपति । इन्द्रः परमेश्वर इदमिन्द्रियं मयि दधातु । इदं अस्मदपेक्षितं इन्द्रियं वीर्यं मयि यजमाने स्थापयतु । किं च रायो धनानि दैवमानुषभेदेन द्विविधानि मघवानः

धनवन्तश्चास्मान्यजमानान्सचन्तां (12.) सेवन्ताम् । सच सेवने । किं च अस्माकं यजमानानामाशिषोऽभीष्टार्थस्याशंसनानि सन्तु विद्यन्ताम् । किं च नोऽस्माकमाशिषः पूर्वोक्ताः सत्याः अवितथाः सन्तु । मघमिति धननाम [निघ॰ २. १०.] तद्विद्यते येषां ते मघवानः । अस्त्यर्थे वन्प्रत्ययः [पा॰ ५. २. १०९ n.] का॰ [३. ४. १८. १९. २०.] एकैकमाहरति द्यावापृथिव्योरुपह्वानेऽग्नीधे षडवत्तं । प्राश्नात्युपहूता पृथिवीतीति ॥ यदा होता द्यावापृथिव्योरुपह्वानं करोति तदोभयोः पुरोडाशयोरेकैकमंशं (13.) षडवत्ते षडवत्ते (14.) कृत्वाग्नीधे ददाति स चोपहूतेति मन्त्रेण तत्प्राश्नातीति सूत्रार्थः ॥ उपहूता येयं पृथिवी दृश्यते सा जगतो माता निर्मात्री मयोपहूता अभ्यनुज्ञाता सा च पृथिवी माता मातृवनास्माभिर्भाविता सती मामुपह्वयतामनुजानातु हविःशेषभक्षणायाज्ञां ददातु । अहं चाग्नीध्रात् । अग्नीध इदं कर्माग्नीध्रं तस्माद्धितोऽग्निः सन् तं भागं प्राश्नामीति शेषः । स्वाहा सुहुतमस्तु जाठरेऽग्नौ ॥१०॥

a. उप॑हूतो॒ द्यौष्पि॒तोप॒ मां द्यौष्पि॒ता ह्व॑यताम॒ग्निरा॒ग्नीध्रा॒त्स्वाहा॑ ।

b. दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम् ।

c. प्रति॑गृह्णामि । d. अ॒ग्नेष्ट्वा॒स्ये॒न प्राश्ना॑मि ॥११॥

द्वितीयं प्राश्नाति । एवं द्यौः पिता जगत्पालक उपह्वयतामित्यादि समानार्थम् । देवस्य त्वा । इतः प्रभृति ओं प्रतिष्ठेत्यन्तं [ख॰ १३.] ब्रह्मत्वम् । तस्याङ्गिरसो बृहस्पतिर्ऋषिः ॥ का॰ [२. २. १६.] देवस्य त्वेति प्रतिगृह्णातीति ॥ ब्रह्मा देवस्य त्वेति प्राशित्रं गृह्णाति । मन्त्रो व्याख्यातः । प्रतिगृह्णामि स्वीकरोमीति शेषः । का॰ [२. २. १८.] अग्नेष्ट्वेति प्राश्नाति दन्तैरनुपस्पृशन्निति । हे प्राशित्र अग्नेः आस्येन वह्निदेवताया मुखेन त्वा त्वां प्राश्नामि भक्षयामि ॥११॥

ए॒तं ते॑ देव सवित॒र्य॒ज्ञं प्रा॒हुर्बृह॒स्पत॑ये ब्र॒ह्मणे॑ ॥
तेन॑ य॒ज्ञम॑व॒ तेन॑ य॒ज्ञप॑तिं॒ तेन॒ माम॑व ॥१२॥

का॰ [२. २. २१.] एतं तऽइति समिदामन्त्रितः प्रसौतीति । समिधमाधातुमनुज्ञा-

प्रदानाय बोधितो ब्रह्मा मन्त्रेणानुजानीयात् । एतं त इत्यादिः ओम्प्रतिष्ठेत्यन्तो मन्त्रः । हे देव दातादिगुणयुक्त हे सवितः प्रसवितः । एतं यज्ञमिदानीं क्रियमाणमिमं मखं ते तुभ्यं त्वदर्थं प्राहुर्यजमानाः कथयन्ति । अनुज्ञापयन्तीत्यर्थः । किं च त्वया प्रेरितो देवानां यज्ञे यो ब्रह्मा तस्मै ब्रह्मणे बृहस्पतये च प्राहुः । बृहस्पतिर्वै देवानां ब्रह्म । तदधिष्ठित एवायं मानुषो ब्रह्मत्वं करोति । किं च । तेन हेतुना त्वदीयत्वेन यज्ञमव रक्ष । तथा तेनैव हेतुना यज्ञपतिं यजमानं चाव रक्ष । तथा तेनैव हेतुना माम्ब्रह्माणमव पालय ॥ १२॥

मनो॑ जू॒तिर्जु॑षता॒माज्य॑स्य॒ बृह॒स्पति॑र्य॒ज्ञमि॒मं त॑नोतु ।
अरि॑ष्टं य॒ज्ञꣳस॒मि॒मं द॑धातु॒ विश्वे॑ दे॒वास॑ इ॒ह मा॑दयन्ता॒मो३म्प्रति॑ष्ठ ॥ १३॥

किं च । मनो आज्यस्य जुषताम् । कर्मणि षष्ठी । मनः घृतं सेवताम् । हे सवितस्त्वदीयं चित्तं यज्ञसम्बन्धिन्याज्ये स्थापयेत्यर्थः । किम्भूतं मनः । जूतिः । जवतेगर्तिकर्मणो जूतिरिति क्तिन्प्रत्ययान्तो निपातः । स्त्रीत्वं छान्दसम् । अतीतानागतवर्तमानकालगतपदार्थेषु गमनशीलं हि मनः । जवति शीघ्रं गच्छतीति जूतिः । किं च बृहस्पतिरिमं यज्ञं तनोतु विस्तारयतु । ब्रह्मत्वात् । तत इमं यज्ञमरिष्टं हिंसारहितं कृत्वा संदधातु । इडाभक्षणेन हि मध्ये यज्ञो विछिन्न इत्येवमुच्यते । किं च विश्वे देवासः सर्वे देवा इह यज्ञकर्मणि मादयन्ताम् । मद तृप्तौ चुरादिः । तृप्यन्ताम् । एवं प्रार्थितः सविता देवः ओम्प्रतिष्ठेत्यनुज्ञां प्रयच्छतु । ओमित्यङ्गीकारार्थः । तथास्तु । प्रतिष्ठ प्रयाणं कुरु । समिदाधानकाले यजमानस्याभिप्रेतं प्रयाणमवगम्य सविता देवोऽङ्गीकृत्य प्रयाणे प्रेरयतीत्यर्थः ॥ १३॥

a. ए॒षा ते॑ऽअग्ने स॒मित्तया॒ वर्ध॑स्व॒ चा च॑ प्यायस्व ॥ व॒र्धि॒षी॒महि॑ च व॒यमा च॑ प्यासिषीमहि ॥

b. अग्ने॑ वाजजि॒द्वाजं॑ त्वा ससृ॒वाꣳसं॑ वाज॒जित॒ꣳ सम्मा॑र्ज्मि ॥ १४॥

का° [३.५.२] एषा त इति होतानुमन्त्रयतऽइति । ब्रह्मत्वं समाप्तम् । अतः प्राकृतमार्षम् (15.) । इयमनुष्टुबग्निदेवत्या । हे अग्ने एषा ते तव समित् समि-

न्धनहेतुः काष्ठविशेषः । तया समिधा त्वं वर्धस्व वृद्धिं गच्छ । आ प्यायस्व च । अस्मानपि सर्वतो वृद्धिं प्रापय । तथा च सति त्वत्प्रसादाद्वयं वर्धिषीमहि वृद्धिं प्राप्नुयाम प्यासिषीमहि च । अस्मदीयपुत्रपश्वादीन्सर्वतो वृद्धान्करवाम ॥ का° [३. ५. ४.] सम्मार्ष्टि पूर्ववदपरिक्रामᳪ सकृत्सकृत्ससृवाᳪसमितीति । पूर्वमग्ने वाजजिदिति [ख° ७.] मन्त्रेण यथेध्मसंनहनैरग्नेः सम्मार्गः कृतस्तथात्रापि सम्मार्ष्टि । तत्र परिक्रम्य त्रिस्त्रिः कृतः । अत्र तु परिक्रमणं विनैकैकवारमिति विशेष इति सूत्रार्थः । मन्त्रो व्याख्यातः । इयान्विशेषः । हे अग्ने त्वां सम्मार्ज्मि । किम्भूतं त्वां वाजं ससृवांसमन्नमुद्दिश्य गतवन्तमन्नं सम्पादितवन्तमित्यर्थः । अन्यत्पूर्ववत् ॥ १४॥

IV. a. अग्नीषोमयोरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि ॥

b. अग्नीषोमौ तमपनुदतां योऽस्मान्द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामि ॥

c. इन्द्राग्न्योरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि ॥

d. इन्द्राग्नी तमपनु° - - °पोहामि ॥ १५॥

का° [३. ५. १७. १८.] जुहूपभृतौ व्यूहत्यग्नीषोमयोरितीति । तत्र जुहूं प्राचीं प्रेरयति यजमानः । व्यूहनं परस्परविपरीतविनापनोदनम् । अग्नीषोमयोर्द्वितीयपुरोडाशदेवतयोरुज्जितिमनु अविघ्नेन हविःस्वीकाररूपमुत्कृष्टं जयमनुसृत्याहमुज्जेषमुत्कृष्टं जयं प्राप्तवानस्मि । वाजस्यान्नस्य पुरोडाशादेः प्रसवेनाभ्यनुज्ञया मां प्रोहामि मां यजमानं जुहूरूपधारिणं प्रोत्साहयामि । यद्यपूहतिधातुर्वितर्कार्थस्तथाप्युपसर्गवशादुत्साहार्थः ॥ उपभृतं प्रतीचीं प्रेरयति । यः शत्रुरसुरादिरस्मान्द्वेष्टि अस्मदीययज्ञविनाशाय द्वेषं करोति (16.) । यं च वयं द्विष्मः । यमालस्यादिरूपमस्मदीयानुष्ठानविरोधिनं शत्रुं द्विष्मः विनाशायोद्योगं कुर्मः । तमुभयविधं शत्रुमग्नीषोमौ देवावपनुदतां निराकुरुताम् । किं च । अहमप्येनं द्विविधं शत्रुमुपभृद्रूपं वाजस्य प्रसवेन पुरोडाशदेवताया अभ्यनुज्ञयापोहामि निराकरोमि । उत्तरौ मन्त्रौ दर्शदेवताविषयौ समानार्थौ ॥ १५॥

a. वसुभ्यस्त्वा । b. रुद्रेभ्यस्त्वा । c. आदित्येभ्यस्त्वा ।

d. संजानाथां द्यावापृथिवी । मित्रावरुणौ त्वा वृष्ट्यावताम् ।

e. व्यन्तु वयोऽक्तꣳ रिहाणाः ।

f. मरुतां पृषतीर्गच्छ वशा पृश्निर्भूत्वा दिवं गच्छ ततो नो वृष्टिमावह । चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहि ॥१६॥

का° [३.५.२४.] जुह्वा परिधीननक्ति यथापूर्वं वसुभ्य इति प्रतिमन्त्रमिति । हे मध्यमपरिधे वसुभ्यः वसुदेवताप्रीत्यर्थं त्वा त्वामनज्मीति शेषः । एवं दक्षिणोत्तरपरिधिमन्त्रौ व्याख्येयौ । परिधित्रयाञ्जनेन सवनत्रयदेवताः प्रीयन्ते इति भावः ॥ का° [३.६.३.] संजानाथामिति प्रस्तरादानमिति । हे द्यावापृथिवी द्युलोकभूलोकदेव्यौ युवां संजानाथां गृह्यमाणं प्रस्तरं सम्यगवगच्छतम् । किं च हे प्रस्तर मित्रावरुणौ प्राणापानवायू वृष्ट्या जलवर्षणेन त्वा त्वामवतां रक्षताम् । वायुर्वै वर्षस्येष्टे [१.८.३.१२.] इत्युक्तत्वाद्वर्षाधीशो वायुः स चाध्यात्मगतः प्राणोदानरूपो मित्रावरुणशब्दाभ्यामुच्यते । स च प्रस्तररूपं यजमानं वृष्ट्यावतु । यजमानो वै प्रस्तर इति श्रुतेः [१.८.१.४४.] ॥ का° [३.६.४-७.] अनक्त्येनं व्यन्तु वय इत्यग्रं जुह्वामुपभृति मध्यं मूलमितरस्यामिति । इतरस्यां ध्रुवायाम् ॥ वयः पक्षिणः व्यन्तु । वी गतिप्रजननकान्त्यसनखादनेषु । पक्षिरूपापन्नानि गायत्र्यादीनि छन्दांसि गच्छन्तु । प्रस्तरमादायेति शेषः । किम्भूताः वयः । अक्तं रिहाणाः । अक्तं घृतलिप्तं प्रस्तरं लिहानाः आस्वादयन्तः । रलयोरैक्यम् ॥ का° [३.६.८.] मरुतामिति नीचैर्हृत्वा तृणमादायानुप्रहरतीति । एकं तृणं प्रस्तरात्पृथक्कृत्य प्रस्तरं नीचैर्हृत्वाग्नौ प्रक्षिपेदिति सूत्रार्थः । मरुतामिति प्रस्तरदेवत्या बृहती कपिदृष्टा चतुर्थः पाद आग्नेयः । हे प्रस्तर त्वं मरुतां पृषतीर्गच्छ मरुन्नामकानां देवानां सम्बन्धिनीः पृषतीर्वाहनरूपा अश्वाश्चित्रवर्णा गच्छ प्राप्नुहि । वायुवाहनवद्वेगेन गच्छेत्यर्थः । अन्तरिक्षं गच्छेत्यर्थः । वशा पृश्निर्भूत्वा । वशा स्वाधीना पृश्निरल्पतनुर्गौर्भूत्वा दिवं गच्छ । कामधेनुवत्तृप्तिकरी भूत्वा स्वर्गं गच्छेत्यर्थः । ततः स्वर्गप्राप्तेरनन्तरं नोऽस्मदर्थं वृष्टिमावह भूलोके वृष्टिमानय । यद्वा । इयं वै वशा पृश्निर्यदिदमस्याम्मूलि

चामूलं चान्नाद्यं प्रतिष्ठितं तेनेयं वशा पृश्निरिति श्रुतेर्वशापृश्निशब्देन भूमिरुच्यते [१. ८. ३. १५.] । वशा पृश्निर्भूत्वा पृथिवी भूत्वा दिवं गच्छ पृथिवीसम्बन्धिभागानादाय द्युलोकं तर्पयेत्यर्थः । हे प्रस्तर त्वमन्तरिक्षं गत्वा तत्रस्थान्मरुतः सवाहनान्संतर्प्य स्वर्गं गत्वा देवांश्च संतर्प्य पृथिव्यां वृष्टिं कुर्वित्याहुतिपरिणामः सूचित इति भावः ॥ का° [३. ६. १५.] चक्षुष्पा इत्यात्मानमालभत इति । हे अग्ने त्वं यतश्चक्षुष्पा असि । चक्षुः पातीति चक्षुष्पाः । ज्वलयान्धकारं निवर्त्य चक्षुःपालकोऽसि । अतो मे मम चक्षुः पाहि पालय प्रस्तरप्रहरणप्रसक्तं चक्षुष उपद्रवं परिहरेत्यर्थः ॥ १६ ॥

a. यं परिधिं पर्यधत्था अग्ने देव पणिभिर्गुह्यमानः ।
तं तऽएतमनु जोषम्भराम्येष नेत्त्वदपचेतयाता ॥
b. अग्नेः प्रियं पाथोऽपीतम् ॥ १७ ॥

का° [३. ६. १७.] परिधीननुप्रहरति यं परिधिमिति प्रथममिति ॥ एकादशिनस्त्रयोऽष्टकश्च विराड्रूपः । प्रथमोऽष्टकः । यं परिधिम् । त्रिष्टुब्विराड्रूपा आग्नेयी (17.) यजुरन्ता । अग्नेः प्रियमिति यजुः । देवलदृष्टा ॥ हे अग्ने देव आहवनीय । पणिभिरसुरैः गुह्यमानः । गुहू संवरणे संव्रियमाणः संरुध्यमानः सन् त्वं यं परिधिं पश्चिमदिशि पर्यधत्थाः । असुरोपद्रवनिवारणाय परिहितवानसि स्थापितवानसि । ते तव जोषं प्रियं तमेतं परिधिमनु भरामि वह्नौ प्रक्षिपामि । अनुर्भिन्नक्रमः । हृतेर्हस्य भः । एष परिधिः त्वत् त्वत्तः सकाशात् न । इत् एवार्थे नैव अपचेतयाता । मा अपचेतयतु । त्वत्तोऽपगन्तुं मा जानात्वित्यर्थः । त्वय्येव तिष्ठतु । चिती संज्ञाने णिजन्ताल्लेट् । तस्यात्मनेपदे प्रथमैकवचनं तात्तम् (18.) । टित आत्मनेपदानामिति [पा° ३. ४. ७९.] तस्यैकारः । वैतोऽन्यत्रेति [पा° ३. ४. ९६.] लेडैकारस्य पाक्षिक ऐ । लेटोऽडाटावित्याडागमः [पा° ३. ४. ९४.] । गुणायादेशौ (19.) । अपपूर्वः अपचेतयातै । अपचेतयतु । एष परिधिस्त्वत्तोऽपगतचित्तो मास्त्वित्यर्थः । का° [३. ६. १७.] इतरौ च युगपदग्नेः प्रियमितीति । दक्षिणोत्तरौ परिधी युगपत्प्रक्षिपेत् । हे परिधी अग्नेः प्रियं पाथः युवामपीतमपिगच्छतम् ।

पाथ इत्यन्ननाम (19 a.) आहवनीयस्याभिप्रेतमन्नमपिगच्छतम् । अग्नेरन्नत्वं भवद्भ्यां प्राप्यतामित्यर्थः ॥ १७ ॥

a. सᳲस्रवभागा स्थेषा बृहन्तः प्रस्तरेष्ठाः परिधेयाश्च देवाः ।

इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन्बर्हिषि मादयध्वम् ॥

b. स्वाहा वाट् ॥ १८ ॥

का॰ [३. ६. १८.] सᳲस्रवभागा इति सᳲस्रवान्जुहोतीति । वैश्वदेवी त्रिष्टुब्यजुरन्ता । स्वाहा वाडिति यजुः । सोमशुष्म ऋषिः । हे विश्वे देवा यूयं संस्रवभागाः स्थ । विलीनमाज्यं संस्रवः । स एवभागो येषां ते संस्रवभागाः । तथाविधा भवथ । तथा इषा संस्रवलक्षणेनान्नेन बृहन्तो महान्तः स्थ । किं च ये प्रस्तरेष्ठाः प्रस्तरे तिष्ठन्तीति प्रस्तरेष्ठाः प्रस्तरस्थायिनः । ये च परिधेयाः परिधिभवाः सन्ति । ते विश्वे देवा इमां मदीयां वाचमभि गृणन्तः सर्वत्र वर्णयन्तः । अयं यजमानः सम्यक् यजतीत्येवं सर्वेषां देवानां मध्ये कथयन्तो यूयमस्मिन्बर्हिषि यज्ञᳲआसद्योपविश्य मादयध्वं तृप्यध्वं मोदध्वं वा । स्वाहेति वाडिति च शब्दौ हविर्दानार्थौ । सर्वथा दत्तमित्यादरं दर्शयितुं शब्दद्वयप्रयोगः । यद्यपि स्वाहाकारेण वा वषट्कारेण वेति श्रुतेर्वषट्कारो दानार्थः । तथापि देवानां परोक्षप्रियत्वात्प्रत्यक्षत्वपरिहाराय वाडितिशब्दः प्रयुक्तः ॥ १८ ॥

a. घृताची स्थो धुर्यौ पातᳲ सुम्ने स्थः सुम्ने मा धत्तम् ।

b. यज्ञ नमश्च तᳲउप च यज्ञस्य शिवे संतिष्ठस्व स्विष्टे मे संतिष्ठस्व ॥ १९ ॥

का॰ [३. ६. १९.] घृताची इति धुरि निदधातीति । जुहूपभृतौ शकटधुरि निदध्यात् । हे जुहूपभृतौ युवां घृताची स्थः । घृतमंचतः प्राप्नुतः इति घृताच्यौ । पूर्वसवर्णदीर्घः । तथाविधे युवां धुर्यावनड्वाहौ पातं रक्षतं धुरं वहतस्तौ धुर्यौ । किं च युवां सुम्ने सुखरूपे स्थः भवथः तस्मात्सुम्ने सुखे मा मां धत्तं स्थापयतम् ॥ का॰ [३. ६. २१.] यज्ञ नमश्च तᳲइति वेदिमालभत इति । अस्य मन्त्रस्य शूर्पं यवमान् कृषिरुद्दालवान् धानान्तर्वानिति पञ्च ऋषयः । यज्ञो देवता । हे यज्ञ ते

तुभ्यं नमः अस्तु उप उपचयो वृद्धिश्च तेऽस्तु । चकारावन्योन्यसमुच्चयार्थौ । नम-उपशब्दाभ्यां यज्ञस्य यदतिरिक्तं यच्च न्यूनं जातं तत्पूर्णं जायते । तथा च श्रुतिः । स यदतिरेचयति तन्नमस्कारेण शमयति अथ यदूनं करोत्युप चेति तेन तदन्यूनं भवतीति । किं च । यज्ञस्य शिवे संतिष्ठस्व अन्यूनातिरिक्तं यज्ञं कुर्वित्यर्थः । यद्वै यज्ञस्यान्यूनातिरिक्तं तद्धिवं तेन तदुभयं शमयतीति श्रुतेः । मे मम स्विष्टे संतिष्ठस्व । साधु इष्टं स्विष्टं । शोभने यागे तिष्ठसि प्राप्तिं कुर्वित्यर्थः ॥ १९ ॥

V. a. अग्नेऽदब्धायोऽशीतम पाहि मा दिद्योः । पाहि प्रसित्यै । पाहि दुरिष्ट्यै । पाहि दुरद्मन्याऽअविषं नः पितुं कृणु । सुषदा योनौ स्वाहा वाट् ।

b. अग्नये संवेशपतये स्वाहा ।

c. सरस्वत्यै यशोभगिन्यै स्वाहा ॥ २० ॥

का° [३. ७. १७.] स्रुक्स्रुवं प्रगृह्यात्यग्नेऽदब्धायविति । दभ्नोतिः हिंसाकर्मा [निघ° २. १९.] । आयुरिति मनुष्यनाम [निघ° २. ३.] । अदब्धोऽनुपहिंसित आयुर्मनुष्यो यजमानो यस्य सोऽदब्धायुः । अश भोजने । अश्नाति भुङ्क्ते इत्यशी । यद्वा अशू व्याप्तौ अश्नुते व्याप्नोतीत्यशी । अतिशयेनाशी अशितमः । दीर्घश्छान्दसः । हे अदब्धायो अहिंसितयजमान हे अशितम भोक्तृतम यद्वा व्यापकतम । हे अग्ने गार्हपत्य मा मां दिद्योः वज्रात्पाहि । शत्रुप्रयुक्ताद्वज्रसमादायुधान्माम्पाहि । दिद्युरिति वज्रनाम (19 b.) । प्रसित्यै प्रसितेर्बन्धनहेतुभूताज्जालान्मा पाहि । प्रसितिः प्रसयनात्तन्तुर्वा जालं वेति यास्कः [निरु° ६. १२.] । दुष्टा इष्टिर्दुरिष्टिः अशास्त्रीयो यागः । तस्मान्मां पाहि । दुरद्मनी । अदनमद्मनी । दुष्टा अद्मनी दुरद्मनी दुर्भोजनं ततो माम्पाहि । चतुर्थ्यः पञ्चम्यर्थे । भीत्रार्थानामिति [पा° १. ४. २५.] पञ्चमी । किं च नोऽस्माकं पितुमन्नमविषं कृणु हविर्विषरहितं कुरु । योनिरिति गृहनाम [निघ° ३. ४.] । सुष्ठु सद्यते स्थीयते यस्यां सा सुषदा । तस्यां सुषदा विभक्तेराकारः । सम्यगवस्थानयोग्ये गृहे मां स्थापयेति शेषः । यद्वा गृहे स्थितानां नोऽस्माकं पितुमविषं कुरु । स्वाहा वाडिति पदे व्याख्याते ॥ का° [३. ७. १८.]

दक्षिणाग्नौ जुहोत्यग्नय इति सरस्वत्या इति चेति । स्त्रीपुंसयोरभिलाषपूर्वकमेकत्रशयनं संवेशः । तस्य पतिर्योऽग्निस्तस्मै स्वाहा हविर्दत्तम् । जीवतः पुरुषस्य प्रशंसा यशः तस्य यशसो भगिनी वाग्रूपा सरस्वती तस्यै हविर्दत्तम् ॥ २० ॥

a. वेदोऽसि येन त्वं देव वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो भूयाः ।
b. देवा गातुविदो गातुं वित्त्वा गातुमित । मनसस्पत इमं देव यज्ञ७ स्वाहा वाते धाः ॥ २१ ॥

का° [३.८.१.] पत्नी वेदं प्रमुञ्चति वेदोऽसीति ॥ हे कुशमुष्टिनिर्मित पदार्थ त्वं वेदोऽसि । ऋगाद्यात्मकोऽसि । यद्वा वेत्तीति वेदः ज्ञातासि । हे देव द्योतनात्मक वेद हे वेद येन कारणेन त्वं देवेभ्यः । षष्ठ्यर्थे चतुर्थी । देवानां वेदोऽभवः ज्ञापकोऽभूः तेन कारणेन मह्यम्मम वेदो भूयाः ज्ञापको भव ॥ का° [३.८.४.] समिष्टयजुर्जुहोति देवा गातुविद इतीति । इयं विराट्छन्दस्का वातदेवत्या मनसस्पतिदृष्टा ऋक् । अस्याः पूर्वार्धेन देवता विसृजति (20.) । गै शब्दे । गीयते नानाविधैर्वैदिकशब्दैः प्रतिपाद्यते इति गातुर्यज्ञः तं विदन्ति जानन्तीति गातुविदः । हे गातुविदः यज्ञवेत्तारो देवाः गातुं वित्त्वा विदित्वा । विद ज्ञाने । अस्मदीयो यज्ञः प्रवृत्त इति ज्ञात्वा । गातुमित यज्ञं प्रत्यागच्छत । यद्वा गातुर्गन्तव्यो मार्गः तं गच्छत । अस्मदीययज्ञेन तुष्टाः सन्तः स्वमार्गं गच्छत । एवं देवान्विसृज्य चन्द्रं प्रत्याह । हे मनसस्पते । मनोऽधिपश्चन्द्रः । यद्वा देवान्यष्टुं मनसः प्रवर्तकः परमेश्वरः । तं प्रत्युच्यते । हे मनसस्पते परमेश्वर हे देव इममनुष्ठितं यज्ञं स्वाहा त्वद्धस्ते ददामि । त्वं च तं यज्ञं वाते वायुरूपे देवे धाः स्थापय । वाते हि यज्ञोऽवतिष्ठते । तदुक्तं श्रुत्या । वायुरेवाग्निस्तस्माद्यदेवाध्वर्युरुत्तमं कर्म करोत्यथैतमेवाप्येतीति ॥ २१ ॥

सम्बर्हिरङ्क्ता७ हविषा घृतेन समादित्यैर्वसुभिः सम्मरुद्भिः ।
समिन्द्रो विश्वदेवेभिरङ्क्तां दिव्यं नभो गच्छतु यत्स्वाहा ॥ २२ ॥

का° [३.८.५.] बर्हिः सम्बर्हिरितीति । बर्हिर्जुहोति । इयमृक् त्रिष्टुप् विरा-

इन्द्ररूपा बर्हिर्देवत्या । इन्द्रो हविषा हविःसंस्कारयुक्तेन घृतेन बर्हिः दर्भं समक्ताम् । सम्यगञ्जनोपेतं करोतु स चेन्द्रः केवलो न । किं तु आदित्यैर्वसुभिर्मरुद्भिः विश्वदेवेभिर्विश्वनामकैश्च गणदेवैः सहितः समक्ताम् । समित्यस्योपसर्गस्यावृत्त्या अक्तामित्यस्य क्रियापदस्याप्यावृत्तिर्बोद्धव्या । वस्वादिसहितेनेन्द्रेण समक्तं तद्बर्हिर्यद्दिव्यं नभो आदित्यलक्षणं ज्योतिः तद्गच्छतु आदित्यं प्राप्नोतु । स्वाहा इदं बर्हिर्देवोद्देशेन दत्तम् । नभ इत्यादित्यनामसु [निघ° १. ४.] पठितं दिवि भवं दिव्यम् ॥ २२ ॥

a. कस्त्वा विमुञ्चति स त्वा विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति । पोषाय ॥

b. रक्षसाम्भागोऽसि ॥ २३ ॥

का° [३. ८. ६.] वेद्यां प्रणीता निनयति परीत्य कस्त्वेति । व्याख्यातो [अध्या° १. ६.] मन्त्रः प्रजापतिदेवतः तत्र यज्ञयोगे (21.) नियुक्तः अत्र तु यज्ञविमोके । पोषाय यजमानं पुत्रादिभिः पोषयितुं त्वां निनयामीति शेषः । यज्ञं प्रयुज्याविमोके यजमानस्याप्रतिष्ठापत्तेर्विमोकः कार्यः । यो वै यज्ञं प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवतीति श्रुत्यन्तरवचनात् । का° [३. ८. ७.] पुरोडाशकपालेन कणानपास्यत्यधः कृष्णाजिनꣳ रक्षसामितीति । हे कणसमूह त्वं रक्षसां भागोऽसि तेषां नीचजातित्वान्निकृष्टकणरूपो भागो युक्तः ॥ २३ ॥

VI. सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सꣳ शिवेन ।
त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् ॥ २४ ॥

त्वष्टृदेवत्या त्रिष्टुप् । इतः परं याजमानम् । का° [३. ८. ८-१०.] पूर्णपात्रं निनयति परीत्य संततं यजमानोऽञ्जलिना प्रतिगृह्णाति सं वर्चसेति मुखं विमृष्ट इति ॥ समित्युपसर्गो (22.) ऽगन्महीत्यनेन सम्बद्धः (23.) प्रत्येकम् । वर्चसा ब्रह्मवर्चसेन वयं समगन्महि संगता भवामः । पयसा क्षीरादिरसेन समगन्महि । तनूभिरनुष्ठानक्षमैः शरीरावयवैः यद्वा तनूभिर्भार्यापुत्रादिभिः समगन्महि । शिवेन शा-

G*

तेन कर्मश्रद्धायुक्तेन मनसा समगन्महि । यज्ञमुपगच्छतो नरस्य वर्चसाग्न्यैपैति तदनेन पुनराप्याययति । किं च सुदत्रः शोभनदानः त्वष्टा रायो धनानि विदधातु करोतु । तन्वः शरीरस्य मदीयस्य यत् विलिष्टं विशेषेण न्यूनमङ्गं तदनुमार्ष्टु । न्यूनत्वपरिहारेणानुकूलं कृत्वा शोधयतु । धनस्य शरीरस्य पुष्टिं करोत्वित्यर्थः । सुष्ठु ददातीति सुदत्रः । सुपूर्वाद्ददातेः ष्ट्रन् । सर्वधातुभ्य इति [उ॰ ४. १६०.] ष्ट्रन् । बाहुलकत्वाद्ध्रस्वः ॥ २४ ॥

a. दिवि विष्णुर्व्यक्रꣳस्त जागतेन छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ।

b. अन्तरिक्षे विष्णुर्व्यक्रꣳस्त त्रैष्टुभेन छ॰ - - ॰ष्मः ।

c. पृथिव्यां विष्णुर्व्यक्रꣳस्त गायत्रेण छ॰ - - ॰ष्मः ।

d. अस्मादन्नात् । e. अस्यै प्रतिष्ठायै ।

f. अगन्म स्वः । g. सं ज्योतिषाभूम ॥ २५ ॥

का॰ [३. ८. ११.] विष्णुक्रमान्क्रमते दिवि विष्णुरिति प्रतिमन्त्रमिति । विष्णुपादबुद्ध्या स्वपादस्य भूमौ प्रक्षेपा विष्णुक्रमाः । विष्णुर्यज्ञपुरुषः । जागतेन छन्दसा जगतीछन्दोरूपेण स्वकीयपादेन दिवि द्युलोके व्यक्रंस्त विशेषेण क्रमणं कृतवान् । तथा सति ततो द्युलोकात् निर्भक्तो भागरहितः कृत्वा निःसारितः । कः । योऽस्मान्द्वेष्टि यं च वयं द्विष्मः । योऽस्मान्दृष्ट्वा न प्रीयते यं च दृष्ट्वा वयं न प्रीयामहे स द्विविधोऽपि शत्रुर्दिवो निःसारितः । एवमुत्तरावपि विष्णुक्रममन्त्रौ व्याख्येयौ ॥ का॰ [३. ८. १३.] अस्मादन्नदिति भागमवेक्षत इति । योऽयम्भागोऽवेक्ष्यते अस्मादन्नाद्यजमानभागान्निर्भक्त इति वाक्यशेषोऽनुवर्तनीयः ॥ का॰ [३. ८. १४.] अस्यै प्रतिष्ठाया इति भूमिमिति ॥ अवेक्षत इति चतुर्षु मन्त्रविनियोगेष्वनुवर्तते । अस्यै अस्याः पुरतो दृश्यमानायाः प्रतिष्ठाहेतोर्यज्ञियभूमेः निर्भक्त इत्यादि पूर्ववत् ॥ का॰ [३. ८. १५.] अगन्म स्वरिति प्रागिति । पूर्वस्यां दिशि स्थितं स्वः स्वर्गं सूर्यं वा वयमगन्म प्राप्ताः । यज्ञानुष्ठानेन ॥ का॰ [३. ८. १६.] सं ज्योतिषेत्याहवनीयमिति । ज्योतिषाहवनीयलक्षणेन वयं समभूम संगता अभूम ॥ २५ ॥

a. स्वयम्भूरसि श्रेष्ठो रश्मिर्वर्चोदा असि वर्चो मे देहि ।

b. सूर्यस्यावृतमन्वावर्ते ॥२६॥

का° [३. ८. १७.] स्वयम्भूरिति सूर्यमिति । हे सूर्य त्वं स्वयम्भूरकृतकः स्वयंसिद्धोऽसि । श्रेष्ठो प्रशस्यतमो रश्मिः मण्डलशरीराभिमानी हिरण्यगर्भाख्योऽसि । सूर्यस्य सप्त रश्मयः सन्ति । चतुर्दिक्षु चत्वारः । एक उपर्येकोऽधस्तात् सप्तमो मण्डलाभिमानी हिरण्यगर्भः पुरुषः स श्रेष्ठः स त्वमसि । यतस्त्वं वर्चोदा असि तेजसो दातासि अतो मे वर्चः ब्रह्मवर्चसं देहि ॥ का° [३. ८. १९.] सूर्यस्येत्यावर्तते प्रदक्षिणामिति । आवर्तनमावृत् । सूर्यस्य सम्बन्धिनीमावृतमावर्तनमनुसृत्याहमपि आवर्ते प्रादक्षिण्येनावर्तनं करोमि ॥२६॥

a. अग्ने गृहपते सुगृहपतिस्त्वयाग्नेऽहं गृहपतिना भूयासꣳ सुगृहपतिस्त्वं मयाग्ने गृहपतिना भूयाः । अस्थूरि णौ गार्हपत्यानि सन्तु शतꣳ हिमाः ।

b. सूर्यस्यावृतमन्वावर्ते ॥२७॥

का° [३. ८. २१.] गार्हपत्यमुपतिष्ठतेऽग्ने गृहपतऽइति । हे गृहपतेऽस्मदीयगृहस्य पालक हे अग्ने त्वया गृहपतिना गृहपालकेन कृत्वा त्वत्प्रसादेनेत्यर्थः । अहं सुगृहपतिः शोभनो गृहपतिः भूयासं भवेयम् । तथा हे अग्ने त्वमपि मया गृहपतिना मदीयसेवयेत्यर्थः । सुगृहपतिः शोभनो गृहपालको भूयाः भव । अग्नेपदस्यावृत्तिरादरार्था । एवं सति नौ आवयोर्गार्हपत्यानि गृहपतिभ्यां स्त्रीपुरुषाभ्यां निष्पाद्यानि कर्माणि शतं हिमाः वर्षाणि शतवर्षपर्यन्तमस्थूरीव सन्तु । निरन्तरमव्यवहितानि प्रवर्तन्ताम् । एकपार्श्वे बलीवर्दयुक्तं शकटं स्थूरि न स्थूरि अस्थूरि । लुप्तोपमानम् । बलीवर्दद्वययुक्तं शकटं यथा निरन्तरं अव्यवहितं प्रसरति । तथास्माकं गार्हपत्यामि सन्तु । गृहपतिना सम्युक्ते ञ्य [पा° ४. ४. ९०.] इति ञ्यप्रत्ययः ॥ का° [३. ८. २३.] सूर्यस्येत्यावर्तते प्रदक्षिणामिति । व्याख्यातम् ॥२७॥

a. अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि ।

b. इदमहं य एवास्मि सोऽस्मि ॥ २८ ॥

का० [३. ८. २१.] व्रतं विसृजते येनोपेयादिति । व्रतग्रहणे मन्त्रद्वयमुक्तं तयोर्मध्ये येन व्रतादानं कृतं प्रथमेन द्वितीयेन वा । अत्रापि तदनुसारेण व्रतं विसृजेत् । हे अग्ने हे व्रतपते कर्मपालक अहं व्रतमचारिषं कर्मानुष्ठितवानस्मि तदशकं शकितवान् । त्वत्प्रसादात्तत्कर्मशक्तोऽभूवम् । त्वया च तन्मे मदीयं कर्म अराधि साधितम् । द्वितीयो मन्त्रः । हे अग्ने इदं कर्म समाप्य योऽहं कर्मणः पुरा अस्मि स एव मनुष्योऽस्मि ॥ २८ ॥

इति दर्शपूर्णमासेष्टिमन्त्राः समाप्ताः ॥

अतः परं पिण्डपितृयज्ञमन्त्रास्तेषां प्रजापतिर्ऋषिः ॥

VII. a. अग्नये कव्यवाहनाय स्वाहा ।

b. सोमाय पितृमते स्वाहा ।

c. अपहता असुरा रक्षांसि वेदिषदः ॥ २९ ॥

का० [४. १. ७.] सारतण्डुलमपूर्णं अपयित्वाभिघार्योद्वास्य मेक्षणेन जुहोत्यग्नय इति सोमायेति च ॥ कवयः क्रान्तदर्शिनः पितरस्तेषां सम्बन्धि कव्यं हविः । तद्वोढुमधिकारो यस्यास्ति स कव्यवाहनः । तस्मै अग्नये स्वाहा हविर्दत्तं । पितृमान्पितृसम्युक्तः तस्मै सोमनामकाय देवाय स्वाहा हविर्दत्तं । स्वाहाकारेण वषट्कारेण वा देवेभ्योऽन्नदानश्रुतेर्दैवाविमौ मन्त्रौ । का० [४. १. ८.] दक्षिणेनोल्लिखत्यपहता इतीति । वेद्यां सीदन्ति वेदिषदः तादृशा असुराः अपहता वेदिसकाशादपगताः । तथा रक्षांसि वेद्या अपकृतानि । असुरत्वं रक्षस्त्वं चेति जातिविशिष्टौ देवविरोधिनौ ॥ २९ ॥

ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति ।

परापुरो निपुरो ये भरन्त्यग्निष्टाल्लोकात्प्रणुदात्यस्मात् ॥ ३० ॥

का० [४. १. ९.] उल्मुकं परस्तात्करोति ये रूपाणीति । इयं त्रिष्टुप् कव्यवाह-

नाग्निर्देवत्या । स्वधया पैतृकान्नेन निमित्तेन पितृणामन्नमस्माभिर्भक्षणीयमिति हेतोः स्वीयरूपाणि प्रतिमुञ्चमानाः पितृसमानरूपाणि स्वीकुर्वन्तः सन्तो ये असुरा देवविरोधिनश्चरन्ति पितृयज्ञस्थाने प्रसरन्ति । तथा ये असुराः परापुरः निपुरश्च भरन्ति । पराक्रान्ताः पुरः परापुरः स्थूलदेहान् । निकृष्टाः पुरः निपुरः सूक्ष्मदेहान्ये धारयन्ति । स्वमसुरत्वं प्रच्छादयितुं ये स्थूलसूक्ष्मशरीराणि बिभ्रति । अग्निरुल्मुकरूपः । अस्माल्लोकात्पितृयज्ञस्थानात्तानसुरान्प्रणुदाति प्रणुदतु प्रेरयतु प्रकर्षेणापसारयत्वित्यर्थः ॥३०॥

a. अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् ।

b. अमीमदन्त पितरो यथाभागमावृषायिषत ॥३१॥

का° [४.१.१३.१४.] अत्र पितर इत्युक्त्वोदङ्ङास्तऽआ तमनादावृत्यामीमदन्तेति जपतीति । आ तमनात् श्वासनिरोधेन ग्लानिपर्यन्तमुदङ्मुख आस्तऽइति सूत्रार्थः । हे पितरो यूयमत्रास्मिन्बर्हिषि मादयध्वं हृष्टा भवत । ततो हविषि यथाभागं स्वं स्वं भागमनतिक्रम्य आवृषायध्वं समन्ताद्वृषवदाचरत । यथा वृषः स्वाभीष्टं घासं प्राप्य तृप्तिपर्यन्तं स्वीकरोति तद्वत्स्वीकुरुत । आङ्पूर्वाद्वृषशब्दात्कर्तुः क्यङ् सलोपश्चेति [पा° ३.१.११.] क्यङ् ततो लोट् । पितरः अमीमदन्त । यान्पितॄन्प्रति मादयध्वमित्युक्तं ते पितरोऽमीमदन्त हृष्टाः यथाभागमावृषायिषत स्वं भागमनतिक्रम्य वृषवत्स्वीचक्रुः । लुङि रूपम् । यथाभागमाशिषुरित्येवैतदाहेति श्रुतिः [२.४.२.२२.] । भागं स्वं जक्षुरित्यर्थः ॥३१॥

a. नमो वः पितरो रसाय । b. नमो वः पितरः शोषाय ।

c. नमो वः पितरो जीवाय । d. नमो वः पितरः स्वधायै ।

e. नमो वः पितरो घोराय ।

f. नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वः ।

g. गृहान्नः पितरो दत्त सतो वः पितरो देष्म ।

h. एतद्वः पितरो वास आधत्त ॥३२॥

का° [४.१.१५.] नमो व इत्यञ्जलिं करोतीति । षट्कृत्वो नमस्करोति । षड्वा ऋतवः पितर इति श्रुते रसादिशब्देन वसन्तादिषडृतव उच्यन्ते । ते च पितृणां स्वरूपभूता अतस्तेभ्यो नमस्करोति । हे पितरो वो युष्माकं रसाय रसभूताय वसन्ताय नमः । यतो मध्वादयो रसा वृक्षेषु जायन्तेऽतो रसशब्देन वसन्तः । युष्मद्रूपाय वसन्ताय नम इत्यर्थः । एवमग्रेतना मन्त्रा व्याख्येयाः ॥ शोषाय ॥ शुष्यन्त्योषधयो यत्रेति शोषो ग्रीष्मः ॥ जीवाय ॥ जीवनहेतुभूताय जलाय वर्षर्तवे ॥ स्वधायै ॥ शरदे । स्वधा वै शरत्स्वधा वै पितृणामन्नमिति श्रुतेः । शरदि हि प्रायशोऽन्नानि भवन्ति ॥ घोराय ॥ विषमाय हेमन्ताय । हेमन्तः शीतप्रचुरत्वेन दुःखदत्वात् घोरः ॥ मन्यवे ॥ मन्युः क्रोधः । तद्रूपाय शिशिराय । शिशिरस्तु इवौषधीर्दहति । हे पितर एवंविधऋतुरूपेभ्यो वो युष्मभ्यं नमः हे पितरो वो नम इत्यभ्यास आदरातिशयार्थः । हे पितरो नोऽस्मभ्यं गृहान्दत्त । भार्यापुत्रपौत्रादयो गृहाः । हे पितरो वो युष्मभ्यं सतः विद्यमानात् देष्म ददामः । सतो धनाद्युष्मभ्यमस्माभिर्दातव्यम् । ददतामस्माकं कदाचिद्द्रव्यक्षयो मास्त्वित्यर्थः । का° [४.७.१६-१८.] एतद्व इत्युपास्यति सूत्राणि प्रतिपिण्डमूर्णा दशा वा वयस्युत्तरे यजमानलोमानि वेति । हे पितरः वो युष्मभ्यमेतद्वासः सूत्रमेव परिधानमस्तु ॥३२॥.

आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् ।
यथेह पुरुषोऽसत् ॥३३॥

का° [४.१.२२.] आधत्तेति मध्यमं पिण्डं पत्नी प्राश्नाति पुत्रकामेति ॥ हे पितरो यथा इहास्मिन्नेव ऋतौ पुरुषः असत् येन प्रकारेणेह पुरुषः देवपितृमनुष्याणामपेक्षितार्थस्य पूरयिता भूयात् तथा कुमारं गर्भं पुत्ररूपं गर्भं यूयमाधत्त सम्पादयत । किम्भूतं कुमारं पुष्करस्रजं पुष्कराणां पद्मानां स्रक् माला ययोस्तौ पुष्करस्रजौ । अश्विनौ । अश्विनीकुमारौ पुष्करस्रजौ पद्ममालिनौ देवानां भिषजौ । यत्तुल्यः कुमारः पुष्करस्रक् तम् । अश्विसाम्यकथनेन रोगहीनं सुन्दरं च पुत्रमाधत्तेति सूचितम् ॥३३॥

ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् ।
स्वधा स्थ तर्पयत मे पितॄन् ॥ ३४ ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां द्वितीयोऽध्यायः ॥ २ ॥

का॰ [४. १. १९.] ऊर्जमित्यपो निषिञ्चतीति । अब्देवत्या विराट् । हे आपः यूयं स्वधा स्थ पित्र्यहविःस्वरूपा भवथ अतो मे पितॄंस्तर्पयत । कथम्भूता आपः । परिस्रुतं वहन्तीः । पुष्पेभ्यो निःसृतं सारं वहन्त्यः । तच्च सारं त्रिविधम् ऊर्जशब्देन घृतशब्देन पयःशब्देन चाभिधेयम् । तत्रोर्जशब्दोऽन्नगतं स्वादुत्वमभिधत्ते । घृतपयसी प्रसिद्धे । तच्च त्रिविधमपि कीदृशममृतं सर्वरोगविनाशकं मृत्युनाशकं च । नास्ति मृतं यस्मात्तत् । पुनः कीदृशं कीलालम् कील बन्धने । कीलनं कीलो बन्धः । तमलति वारयतीति कीलालम् । अलञ् वारणपर्याप्त्योरिति धातुः [धा॰ १५. ८.] सर्वबन्धनिवर्तकम् । ईदृशस्य त्रिविधस्य सारस्य वहनादपां पितृतर्पकत्वमुपपन्नम् ॥ ३४ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
इध्मप्रोक्षादिपित्र्यान्तो द्वितीयोऽध्याय ईरितः ॥ २ ॥

अथ काण्वशाखायां पाठविशेषः ॥

I. ॥ १ ॥ १ ॥ २ a. b. c ॥ २ ॥ २ d [भूपत॰]. e. f. ३ a - ॰रिंष्यै ॥ ३ ॥ ३ a य- ज्ञमानस्य - ॰रिल ईलितः ३ b. c ॥ ४ ॥ ४ ॥ ५ ॥ ५ a. b. c ॥ ६ ॥ ५ d. e ॥ ७ ॥ ६ a. b. c. d [- नाम - प्रिये सदसि सीद -] ॥ ८ ॥ ६ e. f ॥ ९ ॥

II. ॥ ७ ॥ १ ॥ ८ d [॰मग्न्याज्यं देवेभ्यः सम्भ्रि॰]. e ॥ २ ॥ ८ f. g ॥ ३ ॥ ९ अग्ने - त्वा - त्वं द्यावापृथिवी ॥ ४ ॥ ९ स्विष्टकृ॰ - ज्योतिः ॥ ५ ॥ अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् । अमीमदन्त पितरो यथाभागमावृषायिषत ॥ ६ ॥ १० b ॥ ७ ॥ ११ a ॥ ८ ॥ १० a. १४ b ॥ ९ ॥ १८ ॥

III. ॥ देव सवितरेतं त्वा वृणते बृहस्पतिं ब्रह्माणम् ॥ तदहं मनसे प्रब्र-

वीमि ॥१॥ मनो गायत्र्यै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभे ॥ अनुष्टुप्प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यः ॥२॥ बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणाम् ॥ भूर्भुवःस्वर्निरस्तः पाप्मेदमहं बृहस्पतेः सदसि सीदामि ॥३॥ मित्रस्य त्वा चक्षुषा प्रतीक्षे ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥ प्रतिगृह्णामि पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थे ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥४॥ आददेऽग्नेष्ट्वास्येन प्राश्नामि बृहस्पतेर्मुखेन ॥ या अप्स्वन्तर्देवतास्ता इदꣳ शमयन्तु ॥५॥ स्वाहाकृतं जठरमिन्द्रस्य गच्छ ॥ घसिना मे मा संपृक्था ऊर्ध्वं मे नाभेः सीद ॥६॥ इन्द्रस्य त्वा जठरे सादयामि ॥ प्रजापतेर्भागोऽस्यूर्जस्वान्पयस्वान् ॥७॥ प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाहि ॥ ऊर्गस्यूर्जं मयि धेह्यक्षितिरसि मा मे क्षेष्ठा अमुत्रामुष्मिंल्लोकऽइह च ॥८॥ १४ a ॥९॥ १२ ॥१०॥ १३ [मनो ज्योतिर्जु° - मोम् -] ॥११॥२१॥

IV. ॥ १५ ॥१॥ १६ a. b. c. d ॥२॥ १६ e [° वयो रिप्तो रि°]. f [° षतीं ग°] - आवह ॥३॥ चक्षुष्पा असि चक्षुर्मे पाहि । १७ a - क्षमानः ॥४॥ १७ a तं तꣳ - यंति । b. ॥५॥ १८ [°रिधयश्च दे°]. १९ a ॥६॥३५॥

V. ॥ २० a ॥१॥ २० b. c । उलूखले मुसले यश्च शूर्पेऽआशिश्लेष दृषदि यत्कपाले ॥२॥ उत्पृषो (उत्प्रुषो?) विप्रुषः संजुहोमि सत्याः सन्तु यजमानस्य कामाः स्वाहा । आप्यायतां ध्रुवा हविषा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः । सूर्याया ऊधोऽअदित्या उपस्थऽउरुधारा पृथिवी यज्ञेऽअस्मिन् ॥३॥ २१ b [- गातुमित्वा गा°] ॥४॥ २२ ॥५॥ २३ ॥६॥ वेषोऽस्युपवेषो द्विषतो ग्रीवा उप वेविड्ढि । वेशांऽअग्ने सुभग धारयेह ॥७॥ श्रद्धाः कर्म-

एधा अनपायिनो यथासन् । जुहोमि त्वा सुभग सौभगाय पुत्रतमं पुरुकृत अवस्यन् ॥ ८ ॥ ४३ ॥

VI. ॥ २४ ॥ १ ॥ यज्ञ शं च तऽउप च । शिवे मे संतिष्ठस्वारिष्टे मे संतिष्ठस्व स्विष्टे मे संतिष्ठस्व ॥ २ ॥ २५ a. b. c ॥ ३ ॥ २५ d-g ॥ ४ ॥ २६ ॥ ५ ॥ अग्ने गृहपते सुगृहपतिरहं त्वया गृहपत्या भूयासम् । सुगृहपतिस्त्वं मया गृहपत्या भूयाः ॥ ६ ॥ अस्थूरि (अस्थुरि जटापाठे) णो गार्हपत्यानि सन्तु शतᳪ हिमास्तिग्मेन नस्तेजसा सᳪशिशाधि सूर्यस्यावृतमन्वावर्ते ॥ ७ ॥ उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर [= ५. ३८.] ॥ ८ ॥ ततोऽसि तन्तुरस्यनु मा तनुहि । अस्मिन्यज्ञेऽस्याᳪ साधुकृत्यायामस्मिन्नन्नेऽस्मिंल्लोके ॥ ९ ॥ इदं मे कर्मेदं वीर्यं पुत्रोऽनुसंतनोतु । २८ [° एवास्मि स एवास्मि] ॥ १० ॥ ५३ ॥

VII. ॥ २९ ॥ १ ॥ ३० ॥ २ ॥ ३१ ॥ ३ ॥ नमो वः पितरः शुष्माय - °रस्तपसे - °रो यज्जीवं तस्मै - °रो रसाय - रो घोराय मन्यवे स्वधायै वः पितरो नमः । एतद्वः पितरो वासो गृहान्नः पितरो दत्त ॥ ४ ॥ उदायुषा स्वायुषोत्पर्जन्यस्य धामभिः । उदस्याममृताँऽअनु ॥ ५ ॥ ३३ ॥ ६ ॥ ३४ ॥ ७ ॥ ६० ॥ सप्तानुवाकेषु षष्टिः ॥ ॥

इति काण्वशाखायां संहितापाठे द्वितीयोऽध्यायः ॥ ॥

I. समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् ।
आस्मिन्हव्या जुहोतन ॥ १ ॥

अध्यायद्वये दर्शपौर्णमासेष्टिविषया मन्त्रा उक्ताः । अथाधानमन्त्रा उच्यन्ते प्रागग्निर्ज्योतिरित्यन्तेभ्यः [ख° ९.] । देवानां प्रजापतेरग्नेर्गन्धर्वाणां वार्षं । आग्नेय्यश्चतस्रो गायत्र्यः । तत्र कात्यायनः [४. ७. १.] अमावास्यायामग्न्याधेयमित्यादिना काल-

विशेषादीनि ब्रह्मौदनपाकपर्यन्तानि कार्याण्युक्त्वा पश्चादिदमाह । [४. ८. ४. ५.] त चातुष्प्राश्यं पचत्युद्वास्यासेचनं मध्ये कृत्वा सर्पिरासिच्याश्वत्थीस्तिस्रः समिधो घृताक्ता आदधाति समिधाग्निमिति प्रत्यृचमिति ॥ अस्यार्थः । चतुर्भिर्ऋत्विग्भिः प्राशितुं योग्यमोदनं पक्त्वा बहिरुद्वास्य तस्यौदनस्य मध्ये घृतासिचनाय निम्नं स्थानं कृत्वा तत्सर्पिषापूर्य तिस्रः समिधस्तास्मिंत्सर्पिष्यभ्यज्य तिसृभिर्ऋग्भिरग्नावभ्यादधातीति ॥ समिधाग्निम् । हे ऋत्विजः यूयं समिधा कृत्वा अग्निं दुवस्यत परिचरत । दुवस्यतिः परिचरणार्थः । सम्यगिध्यते दीप्यते वह्निर्यया काष्ठरूपया सा समित्तया । घृतैः होष्यमाणैः पूर्णाहुतिसम्बन्धिभिरतिथिमातिथ्यकर्मणा पूजनीयमग्निं बोधयत प्रज्वलयत अस्मिन्प्रज्वलितेऽग्नौ हव्या नानाविधानि हवींषि आ जुहोतन सर्वतो जुहुत । तप्तनप्तनथनाश्चेति [पा° ७. १. ४५.] तनबादेशः ॥ १ ॥

सुसमिद्धाय शोचिषे घृतं तीव्रं जुहोतन ।

अग्नये जातवेदसे ॥ २ ॥

हे ऋत्विजः अग्नये यूयं घृतेन जुहोतन जुहुत । जुहोतेः परस्य लोट् मध्यमबहुवचनस्य तस्य तप्तनप्तनथनाश्चेति [पा° ७. १. ४५.] तनबादेशे गुणे जुहोतनेति रूपम् । किम्भूतायाग्नये । सुसमिद्धाय शोभनतया सम्यग्दीप्ताय । अत एव शोचिषे शोचिष्मते दीप्तिमते ज्वलिताय । जातं वेत्ति वेदयति वा जातवेदास्तस्मै । जातप्रज्ञानाय वा । किम्भूतं घृतं तीव्रं स्वादुतमं समग्रं वा पटुतरं वा । ग्रहणोद्वासनाधिश्रयणावेक्षणादिभिः संस्कृतमित्यर्थः ॥ २ ॥

तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि ।

बृहच्छोचा यविष्ठ्य ॥ ३ ॥

हे अङ्गिरः अङ्गतिर्गत्यर्थः । अङ्गिर्गतिरस्यास्तीति अङ्गिराः । रसप्रत्ययो मत्वर्थीयः । तत्तद्यागेषु गमनवन्नग्ने । अङ्गिरा उ ह्यग्निरिति श्रुतेः [१. ४. १. २५.] । तं य उक्तगुणस्तथाविधं त्वा त्वां समिद्भिर्यज्ञसम्बन्धिकाष्ठैर्घृतेन संस्कृताज्येन च वर्धयामसि वर्धयामः । प्रवृद्धं कुर्मः । इदन्तो मसीति [पा° ७. १. ४६.] इकारश्छान्दसः । हे यविष्ठ्य युवतम कदाचिदपि स्थविरत्वरहित इत्यर्थः तथाविधाग्ने बृहत् महत्

प्रवृद्धं यथा तथा शोचा दीप्यस्व । द्व्यचोऽतस्तिङ इति [पा° ६.३.१३५.] संहितायां दीर्घः । अतिशयेन युवा यविष्ठ । इष्ठनि परे स्थूलदूरयुवेत्यादिना [पा° ६.४.१५६.] वादिलोपे गुणे च रूपम् । यविष्ठ एव यविष्ठ्यः । स्वार्थे तद्धितयकारः ॥३॥

उप॑ त्वाग्ने ह॒विष्म॑तीर्घृ॒ताची॑र्यन्तु हर्यत ।

जु॒षस्व॑ स॒मिधो॒ मम॑ ॥४॥

का° [४.८.६.] उप त्वेति जपतीति । हे अग्ने हविष्मतीर्हविष्मत्यः हविर्युक्ता घृताचीः घृताच्यो घृताक्ता एताः समिधस्त्वा त्वामुपयन्तु । प्रत्युपगच्छन्तु । हे हर्यत प्रेप्सावन् (1.) । हर्यतः आचक इति कान्तिकर्मसु पठितत्वात् [निघ° २.६. (1a.)] । तथाविध हे अग्ने मम मदीयाः समिधः त्वं जुषस्व सेवस्व त्वामुपयतीरङ्गीकुर्वित्यर्थः । छन्दसि परेऽपि व्यवहिताश्चेति [पा° १.४.८१.८२.] उपयन्तु इत्युपसर्गक्रियापदयोर्व्यवहितत्वम् । हविष्मतीरित्यादौ वा छन्दसीति [पा° ६.१.१०६.] पूर्वसवर्णदीर्घत्वम् ॥४॥

II. a. भूर्भुवः॒ स्वः॑ ।

b. द्यौरि॑व भू॒म्ना पृ॑थि॒वीव॑ वरि॒म्णा ॥ तस्या॑स्ते पृथिवि देवयजनि पृ॒ष्ठेऽ॒ग्निम॑न्ना॒दम॒न्नाद्या॒याद॑धे ॥५॥

का° [४.९.१.] दारुभिर्ज्वलन्तमादधाति भूर्भुव इति सम्भारेष्विति । [४.९.१६.] भूर्भुवः स्वरिति पूर्ववदिति चेति । अस्यार्थः । आपो हिरण्यमूषाखूत्करः शर्करेति पञ्च सम्भारान्सम्पाद्य स्फ्येनोल्लिखितायां शुद्धायां भूमौ तान्सम्भारानवस्थाप्य तेषु शुष्ककाष्ठैर्ज्वलन्तमग्निं भूर्भुव इत्यक्षरत्रयमुच्चारयन्नादध्यात् । इदमाहवनीयाधानम् । एवमष्टाक्षरत्वादग्नेर्गायत्रत्वं श्रुत्योक्तम् । गायत्रीसहितस्याग्नेः प्रजापतिमुखादुत्पन्नत्वात् ॥ अथ मन्त्रार्थः । एतेष्वाधानमन्त्रेषु भूरिति प्रथमा व्याहृतिः । भुव इति द्वितीया । सुवरिति तृतीया । एतास्तिस्रो व्याहृतयः पृथिव्यादिलोकत्रयनामानि । एतदुच्चारणपूर्वकं प्रजापतिना लोकत्रयस्य सृष्टत्वात् । अत एवाभिः स्था-

पयन् लोकत्रयमनेन स्मरेत् । एतासां व्याहृतीनां महिमा भूयादिति । भूर्भुवः-स्वःशब्देन ब्रह्मक्षत्रविशो वा आत्मप्रजापशवो वा । सर्वे मद्वशगा भूयासुरिति प्रार्थयन्नग्नीनादध्यादित्यर्थः ॥ का° [४.९.१७.] इध्मपूर्वार्धं गृहीत्वा द्यौरिव भूम्नेत्या-हेति । देवा इज्यन्ते यस्यां पृथिव्यां सा देवयजनी तथाविधे हे पृथिवि तस्यास्ते तव पृष्ठे देवयजनयोग्यायास्तवोपरि । अन्नादमन्नस्य हुतस्यात्तारमग्निं गार्हपत्या-दिरूपमादधे स्थापयामि । किमर्थमन्नाद्याय । अन्नं च तदाद्यं च तस्मै आद्यस्यान्न-स्यात्तुं योग्यस्यान्नस्य सिद्ध्यर्थम् । आहिताग्न्यादित्वात्परनिपातः [पा° २.२.३७.] । यद्वान्नस्याद्याय भक्षणाय । यस्याः पृष्ठेऽग्निमाधाय भूम्ना द्यौरिव भूयासमिति शेषः । बहोर्भावो भूमा तेन । यथा द्यौर्नक्षत्रबहुत्वेन बह्वी । एवं पुत्रपश्वादिभिर्बहुर्भू-यासम् । वरिम्णा पृथिवीव भूयासम् । उरोर्भावो वरिमा तेन । यथा पृथिवी उरुत्वेन सर्वप्राणिनामाश्रयभूता भूयासम् । यद्वा पूर्वार्धस्यायमर्थः । किम्भूतमग्निं भूम्ना द्यौरिव वर्तमानम् । यथा द्यौर्नक्षत्रादिबहुत्वेन युक्ता तथा ज्वालाबहुत्वेन युक्तं । किं च । वरिम्णा पृथिवीव स्थितम् । यथा पृथिवी सर्वप्राण्याश्रयत्वरूपेण श्रेष्ठत्वेनोपेता । तथा सर्ववस्तुशोधकत्वरूपेण श्रेष्ठत्वेनोपेतम् । अत एव क्वाचि-द्विधिवाक्ये अग्नये पावकायेत्याम्नातम् ॥५॥

आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः ।
पितरं च प्रयन्त्स्वः ॥६॥

का° [४.९.१८.१९.] आयं गौरिति चोपतिष्ठते सार्पराज्ञीभिर्दक्षिणाग्निमादधाती-ति । आयं गौरित्यादीनां तिसृणामृचां सार्पराज्ञीति नामधेयम् । सर्पराज्ञी कद्रूः पृथिव्यभिमानिनी । तया दृष्टत्वात् ताभिर्ऋग्भिराहवनीयमुपतिष्ठते ततो दक्षिणा-ग्निमादध्यादिति सूत्रार्थः । गायत्रस्तृचः । अग्निः परावररूपेण स्तूयते । अयं दृश्य-मानोऽग्निः आ अक्रमीत् सर्वत आहवनीयगार्हपत्यदक्षिणाग्निस्थानेषु सर्वतः क्र-मणं पादविक्षेपं कृतवान् । किम्भूतोऽग्निः । गच्छतीति गौः । यज्ञनिष्पत्तये तत्त-द्यजमानगृहेषु गन्ता । गमेर्डोप्रत्ययः [उ° २.६६.] । तथा पृश्निः चित्रवर्णः । लो-हितशुक्लादिबहुविधज्वालोपेतः । आक्रमणमेवाह । पुरः प्राच्यां दिशि मातरं

पृथिवीमसदत् आसीदत् । आहवनीयरूपेण प्राप्तवान् । तथा स्वः प्रयन् आदित्यरूपेण स्वर्गे संचरन् पितरं च द्युलोकमपि असदत्प्राप्तवात् । स्वःशब्देन सूर्यः [निघ° १.४.] । द्युलोकभूलोकयोर्मातापितृत्वमन्यत्रापि श्रूयते । द्यौः पिता पृथिवी मातेति ॥ ६॥

अन्तश्चरति रोचनास्य प्राणादपानती ।
व्यख्यन्महिषो दिवम् ॥७॥

एवमादित्यरूपेणाग्निं स्तुत्वा वायुरूपेण स्तौति । अस्याग्नेः रोचना रुच दीप्तौ दीप्तिः काचिच्छक्तिः वाय्वाख्या अन्तश्चरति द्यावापृथिव्योर्मध्ये शरीरमध्ये चरति । अन्तरिक्षेऽयं तिर्यङ्वायुः पवत इति श्रुतिः । किं कुर्वती । प्राणादपानती सर्वशरीरेषु प्राणव्यापारादनन्तरमपानव्यापारं कुर्वती । अपानादनन्तरं प्राणतीत्यप्यर्थो लभ्यते सामर्थ्यात् प्राणापानयोर्वायुविशेषयोः प्रेरिकेत्यर्थः । सति हि जठराग्नौ जीवनहेतोरौष्ण्यस्य शरीरे सद्भावात्प्राणापानौ प्रवर्तेते । तस्मादग्निः प्राणापानरूप इत्यर्थः । एवं वाय्वादित्याभ्यां स्वशक्तिभूताभ्यामिदं जगदनुगृह्य य एनमुपतिष्ठते तस्य किं करोतीत्याह । व्यख्यदिति । महिषोऽग्निः दिवं व्यख्यत् । द्युलोकं भोगस्थानमनुष्ठातृभ्यो विशेषेण प्रकाशितवान्प्रकाशयति च । महि माहात्म्यं यागकर्तृस्वरूपं सनोति ददाति स महिषः । अग्निर्वै महिषः स इदं जातो महानिति श्रुतेः । व्यख्यत् विपूर्वस्य ख्या प्रकथन इत्यस्यास्यतिवक्तिख्यातिभ्योऽङिति [पा° ३.१.५२.] च्लेरङ् । आलोपः । छन्दसि लुङ्लिट इति [पा° ३.४.६.] सर्वकालेषु लङ् । अपान इवाचरतीत्यपानती क्विबन्तादपानशब्दाच्छतृप्रत्ययः । उगितश्चेति [पा° ४.१.६.] ङीप् ॥७॥

त्रिंशद्धाम विराजति वाक्पतङ्गाय धीयते ।
प्रति वस्तोरह द्युभिः ॥८॥

सुपां सुलुगित्यादिना [पा° ७.१.३९.] त्रिंशच्छब्दाद्धामशब्दाच्च सुपो लुक् । धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति [निरु° ९.२८.२९.] । अत्र धामशब्देन स्थानमुच्यते । अहोरात्रस्य त्रिंशन्मुहूर्ता धामशब्देनाभिप्रेताः । त्रिंश-

त्सु धामसु मुहूर्ताख्येषु स्थानेषु या वाक् विराजति शोभयते स्तूयमाना सा वाक् पतङ्गाय धीयते अग्न्यर्थमुच्चार्यते । पतन् गच्छति पतङ्गः । अग्निः । स ह्यरण्योः पतन् गार्हपत्यभावं गच्छति गार्हपत्यात्पतन्नाहवनीयतामित्यादि । सर्वदेवसम्बन्धिनीभिः स्तुतिभिरग्निरेव सर्वात्मत्वात्स्तूयते इत्यर्थः । न केवलं त्रिंशत्सु धामसु या वाग्विराजति सैव पतङ्गाय धीयते किं तर्हि प्रति वस्तोः प्रत्यहं या स्तुतिलक्षणा वाक् या च द्युभिः अहोभिः यागपारायणाद्युत्सवभूतैः स्तुतिलक्षणा वाग्विराजति सा पतङ्गायैव धीयते । नान्यस्यै देवतायै । वस्तोः द्युः भानुरित्यहर्नामसु पठितम् [निघ॰ १.९.] । अहेति निपातो विनिग्रहे । सर्वकालं सर्वा स्तुतिवागग्न्यर्थैवेत्यर्थः ॥ यद्वास्या ऋचोऽयमर्थः । धाम स्थानं तच्चत्रिंशत् त्रिंशत्संख्याकं मासगतदिनभेदेन । तद्विराजति विशेषेण दीप्यते । आलस्यरहितानां यजमानानामनुष्ठानेनाहवनीयाद्यग्नीनां स्थानं मासगतेषु त्रिंशत्संख्याकेषु दिनेषु विशेषेण शोभत इत्यर्थः । वाक् स्तुतिरूपा पतङ्गायाग्नये धीयते उच्चार्यते । पतङ्गः पक्षी । तत्सदृशत्वादग्निः पतङ्गः । यथा कश्चित्पक्षी एकस्मात्स्थानात्स्थानान्तरं गच्छति तद्वदग्निरपि गार्हपत्यस्थानादाहवनीयस्थानं गच्छतीत्यग्नेः पक्षिसादृश्यम् । अहेति निपातः पूर्वोक्तनिषेधार्थः ॥ अस्या ऋचः पूर्वार्धेऽग्निमाहात्म्यज्ञापकं वाक्यद्वयेनार्थद्वयं यदुक्तं तावदेव न भवति किंत्वन्यदप्युच्यत इत्यर्थः । वस्तोरित्यहर्नामसु पठितम् । प्रति वस्तोः प्रत्यहं द्युभिः द्योतनैरयमग्निः स्तूयत इत्यध्याहारः । द्युर्द्योतनं दीप्यतेः प्रयोगः ॥ ८ ॥

इत्यग्न्याधेयमन्त्राः ।

III. a. अ॒ग्निर्ज्योति॒र्ज्योति॑र॒ग्निः स्वाहा॑ ।

b. सूर्यो॒ ज्योति॒र्ज्योति॑ः सूर्य॒ः स्वाहा॑ ।

c. अ॒ग्निर्वर्चो॒ ज्योति॒र्वर्च॒ः स्वाहा॑ ।

d. सूर्यो॒ वर्चो॒ ज्योति॒र्वर्च॒ः स्वाहा॑ ।

e. ज्योति॒ः सूर्य॒ः सूर्यो॒ ज्योति॒ः स्वाहा॑ ॥ १ ॥

अथाग्निहोत्रहोममन्त्राः । अग्निर्ज्योतिरित्यारभ्य उपप्रयन्त [ख॰ ११.] इत्यतः

प्राक् । तन्मन्त्राणां प्रजापतिर्ऋषिः सामान्यतः । यत्र ऋषिविशेषोऽभिधीयतेऽनुक्रमणीकारैस्तत्र द्वावप्यृषी ॥ यथाग्निर्वर्चो द्वे तज्जापश्यत्परां जीवलश्चैलकिरिति [अनु॰ १.११.] । सप्त लिङ्गोक्तदेवता गायत्र्यः आद्याः पञ्चैकपदाः । अग्निर्ज्योतिः सूर्यो ज्योतिः एते द्वे एकपदे गायत्र्यौ तज्जा मुनिरपश्यत् । परां ज्योतिः सूर्यः इमां चेलकस्य पुत्रो जीवल ऋषिरपश्यदित्यर्थः ॥ अथ का॰ [४.१४.१४.] प्रदीप्तामभि जुहोत्यग्निर्ज्योतिरितीति । या समित्प्रदीप्ता तामभिलक्ष्य जुहुयात् । अग्निज्योतिषमिति [अध्या॰ ३.२.१.] काण्वशाखोक्तमन्त्रेण समित्प्रक्षेपः ॥ मन्त्रार्थस्तु । योऽयमग्निर्देवः स एव ज्योतिर्दृश्यमानज्योतिःस्वरूपम् । यच्चेदं दृश्यमानं ज्योतिः तदेवाग्निर्देवः । देवस्य ज्योतिषश्च कदाचिदप्यवियोगादेकत्वेन प्रतिपादनम् । स्वाहा ज्योतीरूपायाग्नये हविः प्रदत्तम् । अयं सायंकालीनोऽग्निहोत्रहोममन्त्रः ॥ सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातर्होममन्त्रः सायंहोममन्त्रवद्याख्येयः । सूर्यसम्बन्धि तेजो रात्रावग्निं प्रविशतीति सायमग्निर्ज्योतिरिति मन्त्रो युक्तः । उदयकालेष्वग्निसम्बन्धि ज्योतिः सूर्यं प्रविशति । तस्मात्प्रातः सूर्यो ज्योतिरिति मन्त्रः । अग्निमादित्यः सायं प्रविशति तस्मादग्निर्दूरान्नक्तं ददृशे । उभे हि तेजसी सम्पद्येते उद्यन्तं वादित्यमग्निरनु समारोहति । तस्माद्धूम एवाग्निर्दिवा ददृश इति तित्तिरिश्रुतेः ॥ का॰ [४.१४.१५.] अग्निर्वर्च इति ब्रह्मवर्चसकामस्येति । ब्रह्मवर्चसकामस्तु अग्निर्वर्चः सूर्यो वर्च इति सायं प्रातश्च जुहुयात् । योऽग्निर्वर्चोऽनन्यभूतः । यस्य तज्ज्योतिर्वर्चोऽनन्यभूतम् । तस्मै सुहुतमस्तु । एवं सूर्यो वर्च इति ॥ का॰ [४.१५.११.] ज्योतिः सूर्य इति वा प्रातरिति । प्रातर्होममन्त्रः ज्योतिः सूर्य इति । यत् ज्योतिः स सूर्य एव । यः सूर्यः स ज्योतिरेव । तस्मै स्वाहा ॥ ९ ॥

a. स॒जूर्दे॒वेन॑ सवि॒त्रा स॒जू रात्र्येन्द्र॑वत्या । जु॒षा॒णोऽअ॒ग्निर्वे॑तु॒ स्वाहा॑ ॥

b. स॒जूर्दे॒वेन॑ सवि॒त्रा स॒जूरु॒षसेन्द्र॑वत्या । जु॒षा॒णः सूर्यो॑ वे॑तु॒ स्वाहा॑ ॥१०॥

का॰ [४.१४.९.] सजूरिति वेति । जुहोतीत्यनुवर्तते । पूर्वोक्तमन्त्रैः सह सजूरित्यादिमन्त्रद्वयं विकल्पितम् । सजूर्देवेन । अग्निर्वेतु । अस्मदीयं कर्म प्राप्नोतु । यद्वा वेतु आहुतिम्भक्षयतु । वी प्रजननकान्त्यसनखादनेष्विति धातोः [धा॰ २४.

३१.] प्रयोगः । किम्भूतोऽग्निः सवित्रा देवेन प्रेरकेण परमेश्वरेण सह सजूः । जुषी प्रीतिसेवनयोः । जोषणं जूः समाना जूः प्रीतिर्यस्यासौ सजूः । तथा इन्द्रवत्या रात्र्या इन्द्रेण देवेनोपेतया रात्रिदेवतया सजूः समानप्रीतिः । तथा जुषाणोऽस्मासु प्रीतियुक्तः । य उक्तगुणवानग्निर्देवस्तस्मै स्वाहा हूयमानमिदं द्रव्यं दत्तम् । प्रातः सूर्य उच्यते । अग्निमन्त्रवदयं सूर्यमन्त्रो व्याख्येयः । पूर्वार्धे रात्रिदेवतायाः स्थाने उषोदेवता योजनीया ॥ १० ॥

IV. उपप्रयन्तोऽअध्वरं मन्त्रं वोचेमाग्नये ।

आरेऽअस्मे च शृण्वते ॥ ११ ॥

का० [४. १२. १ - ३.] सायमाहुत्याᳮ हुतायां यजमानोऽग्नी उपतिष्ठते वात्सप्रेण न वा तिसृस्त्रिरुपप्रयन्तो [११.] ऽस्य प्रत्नां [१६.] परि ते [३६.] चित्रावसविति [१८ b.] चेति । आहवनीयगार्हपत्यावग्नी उपप्रयन्तो अध्वरमित्यारभ्य सुपोषः पोषैरित्यन्तं [३७ a.] बृहदुपस्थानं देवदृष्टं । तत्राद्ये द्वे आग्नेय्यौ गायत्र्यौ क्रमेण गोतमविरूपाभ्यामपि दृष्टे ॥ आहवनीयोपस्थानमन्त्रा आदौ । वयमनुष्ठातारोऽग्नयेऽन्यर्थं मन्त्रं मननेन त्राणकरं शब्दसमूहं वोचेम । उच्याम । किम्भूता वयम् । अध्वरं यज्ञमुपप्रयन्तः उपगच्छन्तः । किम्भूतायाग्नये आरे दूरे अस्मे अस्माकं समीपे इति शेषः शृण्वते दूरे समीपे चास्मदीयं वाक्यं श्रोतुमुद्युक्ताय ॥ वोचेमेति वक्तेराशीर्लिङि परस्मैपदोत्तमबहुवचने परे लिङ्याशिष्यङिति [पा° ३. १. ८६.] अङ् । यासुट् अतो येयः [पा° ७. २. ८०.] वच उम् [पा° ७. ४. २०.] छन्दस्युभयथेति [पा° ३. ४. ११७.] सार्वधातुकत्वाल्लिङः सलोपोऽनन्त्यस्येति [पा° ७. २. ७९.] सलोपः । यलोपः । वोचेम ॥ अस्मे सुपां सुलुगिति [पा° ७. १. ३९.] शेआदेश आमः ॥ ११ ॥

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् ।

अपाᳮ रेताᳮसि जिन्वति ॥ १२ ॥

अयमग्निः अपां रेतांसि जिन्वति द्युलोकाद्वृष्टिरूपेण पतन्तीनामपां रेतांसि साराणि व्रीहियवादिरूपेण परिणतानि जिन्वति । जिन्वतिः प्रीतिकर्मा प्रीणय-

ति वर्धयतीत्यर्थः । यद्वा अपां रेतांसि कारणानि जिन्वति पुष्णाति । आहुतिपरिणामिन वृष्टिं जनयतीत्यर्थः । ते वा एते आहुती उत्क्रामत इत्यादिश्रुतेः । किम्भूतोऽग्निः । दिवो मूर्धा द्युलोकस्य शिरःसमानः । यथा शिरः शरीरस्योपरि वर्तते तथायमग्निरह्नि स्वतेजसा आदित्ये प्रविष्टत्वादादित्यरूपेण द्युलोकस्योपरि वर्तते । तथा ककुत् । ककुच्छब्दो गोपृष्ठोन्नतावयववाची तद्वदादित्यरूपेण सर्वोपरिस्थित्वात्ककुत्सदृशः । यद्वा ककुदमिति महन्नाम [निघ° ३.३ (2.)] तस्यात्तलोप आर्षः । महत् जगत्कारणमित्यर्थः । तथा पृथिव्याः पतिः पालकः । दाहपाकप्रकाशैर्भूलोकस्थानामुपकारकत्वात् ॥ १२ ॥

उभा वामिन्द्राग्नीऽआहुवध्याऽउभा राधसः सह मादयध्यै ।

उभा दातारविषाᳪ रयीणामुभा वाजस्य सातये हुवे वाम् ॥ १३ ॥

भरद्वाजदृष्टा ऐन्द्राग्नीत्रिष्टुप् ऊना । इन्द्रशब्देनात्राहवनीयः । तस्य यज्ञसाधकत्वरूपैश्वर्ययुक्तत्वात् । अग्निशब्देन गार्हपत्यः । अग्रे नीयत इत्यग्निरिति यास्कव्युत्पत्तेः । स हि प्रथममाधीयते । हे इन्द्राग्नी वां युवामुभा आहुवध्यै आह्वातुमिच्छामीति शेषः । ह्वयतेस्तुमर्थे कध्यैप्रत्ययः । किं च राधसः धनाद्धविर्लक्षणात् सह मादयध्यै युगपदेककर्मणि उभौ युवां मादयितुं हर्षयितुं वा इच्छामीति शेषः । मदी हर्षे मद तृप्ताविति धातोर्वा णिजन्तात्तुमर्थे शध्यैप्रत्ययः । गुणः । यत उभौ युवामिषामन्नानां रयीणां धनानां दातारौ अत उभौ वां युवां वाजस्यान्नस्य सातये दानाय हुवे आह्वयामि ॥ उभा उभशब्दस्य विभक्तेराकारः ॥ सातये षणु दाने अस्य धातोरूतियूतीति [पा° ३.३.९७.] क्तिन्नन्तो (3.) निपातः ॥ हुवे बहुलं छन्दसीति [पा° ६.१.३४.] ह्वयतेः शपि सम्प्रसारणे उवङ् ॥ १३ ॥

अयं ते योनिर्ऋत्वियो यतो जातोऽअरोचथाः ।

तं जानन्नग्नऽआरोहाथा नो वर्धया रयिम् ॥ १४ ॥

तिस्र आग्नेय्यः । आद्यानुष्टुप् देवश्रवोदेववातदृष्टा । हे अग्ने आहवनीय ते तवायं गार्हपत्यो योनिः उत्पत्तिस्थानम् । किम्भूतः ऋत्वियः । उत्पादनयोग्यः काल ऋतुरुच्यते । ऋतुः प्राप्तोऽस्येति ऋत्वियः । छन्दसि घसिति [पा° ५.१.१०६.]

ऋतुशब्दात्तदस्य प्राप्तमित्यर्थे घस् । तस्य इयादेशः । सायंप्रातःकाले उत्पादनयोग्यो योनिः । यतो यस्मादृतुकालोपेताद्गार्हपत्याज्जात उत्पन्नस्त्वमरोचथाः कर्मकाले दीप्तोऽभूः । हे अग्ने तं गार्हपत्यं जानन् स्वजनकमवगच्छन् आरोह । पुनरुद्धरणाय कर्मार्थे प्रविश । अथानन्तरं नोऽस्मदर्थं रयिं धनं वर्धया पुनर्योगाय समृद्धं कुरु । अन्येषामपि दृश्यत इति [पा° ६. ३. १३७.] संहितायां वर्धयेति दीर्घः ॥ १४ ॥

अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठोऽअध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे ॥ १५ ॥

जगती वामदेवदृष्टा । द्वादशाक्षराश्चत्वारः पादा जगत्याः । द्वितीयोऽत्र व्यूहेनैकादशः चतुर्थो व्यूहेन द्वादशकस्तेनैकोना जगती । अयमाहवनीय इह कर्मानुष्ठानस्थाने प्रथमो मुख्यः सन् धातृभिर्धायि । अधायि आधानकर्तृभिराहितोऽभूत् । बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः [पा° ६. ४. ७५.] । दक्षिणाग्न्यपेक्षं प्राथम्यम् । किम्भूतः । होता देवानामाह्वाता । यजिष्ठः अतिशयेन यष्टा । अतिशायने तमबिष्ठनावितीष्ठनि परे [पा° ५. ३. ५५.] तुरिष्ठेमेयःस्विति [पा° ६. ४. १५४.] तृचो लोपः । तथा अध्वरेषु सोमयागादिषु ईड्यः ऋत्विग्भिः स्तुत्यः । अप्नवानो भृगवो विशेविशे यमाहवनीयं वनेषु विरुरुचुः । अन्तर्भूतो णिच् रोचयामासुः दीपितवन्तः । अप्नशब्दोऽपत्यनामसु पठितः [निघ° २. २.] अप्नवानः पुत्रवन्तो भृगुवंशोत्पन्ना मुनयः । यद्वा अप्नवानृषिः अप्नवानस्तत्प्रभृतयो (4.) भृगवश्च मुनयः । विशेविशे विडिति मनुष्यनाम [निघ° २. ३.] यजमानरूपाय तस्मै तस्मै मनुष्याय तदुपकाराय । वनेषु ग्रामाद्बहिर्यज्ञनाख्येष्वरण्यप्रदेशेषु (5.) यमग्निं विरुरुचुः दीपयन्ति स्म । किम्भूतं यम् । चित्रं विविधकर्मोपयोगित्वेन आश्चर्यकारिणम् । अत एव विभ्वं विभुं विभूत्वशक्तियुतं यणादेशः ॥ १५ ॥

अस्य प्रत्नामनु द्युतꣳ शुक्रं दुदुह्रेऽअह्रयः ।
पयः सहस्रसामृषिम् ॥ १६ ॥

गायत्र्यवत्सारदृष्टा गोऽग्निपयोदेवत्या । अस्याग्नेः प्रत्नां चिरंतनकालभवां

घृतमनु दीप्तिमनुसृत्य । अह्रयः नास्ति ह्रीर्येषामीदृशा लज्जारहिता दोग्धारः ऋषिं गां शुक्रं शुद्धं पयो दुदुह्रे दुदुहिरे । दुहेर्लिटि इरयो रे इति [पा° ६. ४. ७६.] रेआदेशे रूपम् । ऋष गतौ । अर्षति दोहनस्थाने गच्छतीति ऋषिर्गौः । तां होमार्थं दुग्धवन्तः । सायंदोहनकालेऽग्निप्रकाशाभावे दुह्यमानं पयो भूमौ पतिष्यतीति शंकया दोग्धृणां लज्जा भवति । सत्यामग्निदीप्तौ स्कन्दशंकानुदयाल्लज्जाभावादह्रयो दोग्धारः । किम्भूतामृषिं सहस्रसाम् । षोऽन्तकर्मणि । सहस्रसंख्यानि कर्माणि स्यति समापयति क्षीरदध्याज्यहविःप्रदानैरिति सहस्रसा ताम् । स्यतेः क्विप् ॥ यद्वास्या ऋचोऽर्थान्तरम् । गाम्प्रकृत्याग्निहोत्रब्राह्मणे श्रूयते [२. २. ४. १५.] । तामु हाग्निरभिदध्यौ मिथुन्येऽनया स्यामिति ताᳫं सम्बभूव तस्याᳫं रेतः प्रासिञ्चत्तत्पयोऽभवदित्यादि । तदभिप्रायमेषा ऋग्वदति । अह्रयः गावः नास्ति ह्रीर्लज्जा यासां ता अह्रयः अलज्जा उज्ज्वलाः प्रशस्या इत्यर्थः । मलिनो हि लज्जते । अह्रयो गावोऽस्याग्नेः प्रत्नां चिरंतनीमात्मानुषक्तां घृतं दीप्तिं शुक्रं शुक्ररूपापन्नां घृतमेव पयो दुग्धं दुदुह्रे दुहन्ति क्षरन्ति । अग्निना शुक्ररूपेण सिक्तां स्वकान्तिमेव गावो दुग्धरूपेण क्षरन्तीत्यर्थः । सहस्रसामृषिं इति विशेषणद्वयं पयसः । सहस्रं सनोति सहस्रसास्तम् । चातुमार्स्यपशुसोमानां सम्भक्तारम् । पुंस्त्वमार्षम् । जनसनखनक्रमगमो विडिति [पा° ३. २. ६७.] विट्प्रत्यये विड्वनोरनुनासिकस्यादित्याकारे [पा° ६. ४. ४१.] वेर्लोपे [पा° ६. १. ३७.] सहस्रसा इति रूपम् । तथा ऋषिं द्रष्टारम् । गवि वर्तमानं द्रष्टृत्वं पयस्युपचर्यते । सा हैनानुदीक्ष्य हिंचकारेत्युपक्रम्य ते देवा विदांचक्रुरेष साम्नो हिंकार इत्यादिना ग्रन्थेन गोभिर्हिंकारो दृष्ट इति प्रत्यपादि । यद्वा सहस्रसामृषिमिति विभक्तिलिङ्गवचनव्यत्ययेन अह्रय इत्यस्य विशेषणद्वयम् । किम्भूता अह्रयः सहस्रसाः ऋषयः । पूर्ववदर्थो वा ॥१६॥

a. तनूपा अग्नेऽसि तन्वं मे पाहि ।

b. आयुर्दा अग्नेऽस्यायुर्मे देहि ।

c. वर्चोदा अग्नेऽसि वर्चो मे देहि ।

d. अग्ने यन्मे तन्वा ऊनं तन्मऽआपृण ॥ १७ ॥

अथ यजूंषि चत्वार्यग्निदेवत्यानि । हे अग्ने त्वं स्वभावत एव तनूपा असि । अग्निहोत्रिशरीराणां पालकोऽसि । तनूं पाति पालयतीति तनूपाः । उदराग्नौ सत्यन्ने (6.) जीर्णे शरीरपालनमतो मे मम तन्वं शरीरं पाहि पालय । तन्वम् वा छन्दसीत्यमि [पा° ६. १. १०६. १०७.] पूर्वरूपाभावे यणादेश इत्युक्तम् ॥ हे अग्ने त्वमायुर्दा असि आयुषो दाता भवसि । अतो मे ममायुर्देहि । अपमृत्युपरिहारेण । यावत्कालं वपुष्युदराग्नेरौष्ण्यमुपलभ्यते तावन्न म्रियत इति प्रसिद्धम् ॥ हे अग्ने त्वं वर्चोदा असि वर्चसो दातासि । अतो मे वर्चो देहि । वैदिकानुष्ठानप्रयुक्तं तेजो वर्चः । यद्दर्शनादेव महानयं ब्राह्मणो विद्वांस्तपसाग्निरिव ज्वलतीति बुद्धिर्नृणाम्भवति ॥ किं च हे अग्ने मे मम तन्वा मदीयशरीरस्य यदङ्गं चक्षुरादिरूपमूनं दृष्टिपाटवादिरहितं तदङ्गं मे आपृण सर्वतः पूरय ॥ १७ ॥

a. इन्धानास्त्वा शतꣳ हिमा द्युमन्तꣳ समिधीमहि । वयस्वन्तो वयस्कृतꣳ सहस्वन्तः सहस्कृतम् । अग्ने सपत्नदम्भनमदब्धासोऽअदाभ्यम् ।

b. चित्रावसो स्वस्ति ते पारमशीय ॥ १८ ॥

अग्निदेवत्या महापङ्क्तिः । यस्याः षट् पादा अष्टाक्षरा सा महापङ्क्तिः । अत्र षष्ठः सप्ताक्षरः ॥ हे अग्ने शतं हिमाः शतं वर्षाणि अस्मदायुषि वर्तमानान्शतं संवत्सरान्त्वां समिधीमहि नैरन्तर्येण वयं दीपयामः । किम्भूता वयम् । इन्धानाः त्वदनुग्रहेण दीप्यमानाः तथा वयस्वन्तः । वय इति अन्ननाम [निघ° २. ७.] अन्नवन्तः । सहस्वन्तः बलवन्तः । सह इति बलनाम [निघ° २. ९.] । अदब्धासः अदब्धाः अनुपहिंसिताः केनापि । दभ्नोतिर्हिंसाकर्मा । आज्जसेरसुगिति [पा° ७. १. ५०.] असुक् । किम्भूतं त्वां द्युमन्तं दीप्तिमन्तं । वयस्कृतं वयोऽन्नं करोतीति वयस्कृत् तम् । सहस्कृतं सहो बलं करोतीति सहस्कृत् तम् । सपत्नदम्भनं सपत्नानां शत्रूणां हिंसितारम् । अदाभ्यम् केनापि हिंसितुमयोग्यम् ॥ चित्रावसो । रात्रिदेवत्यं यजुर्ऋषिदृष्टम् । रात्रिर्वै चित्रावसुः सा हीयꣳ संगृह्येव चित्राणि वसतीति [२. ३. ४. २२.] श्रुतेश्चित्रावसुशब्देन रात्रिः । चित्राणि विविधानि चन्द्रनक्ष-

त्रान्धकाररूपाणि वसन्ति यस्यां रात्रौ सा चित्रावसुः। हे चित्रावसो रात्रि स्वस्ति क्षेमं यथा तथा ते तव पारं समाप्तिमशीय व्याप्नवानि। अश्नुतेर्बहुलं छन्दसीति [पा° २.४.७३.] शपो लुकि लिङ्युत्तमैकवचने रूपम्। यथा लोके मनुष्येषु सुप्तेषु चौरा गृहे प्रविशन्ति तद्वदत्र देवयजने रक्षांसि प्रविशन्तीति शङ्कया तन्निवारणाय रात्रिप्रार्थनम्॥१८॥

सं त्वमग्ने सूर्यस्य वर्चसागथाः समृषीणां स्तुतेन।
सं प्रियेण धाम्ना समहमायुषा सं वर्चसा सं प्रजया सं रायस्पोषेण ग्मिषीय॥१९॥

का° [४.१२.४.] सं त्वमित्युपविश्येति॥ उपप्रयन्त इत्यादिभिश्चित्रावसो इत्यन्तैर्मन्त्रैरुत्थायोपस्थानमत्र उपविश्येति विशेषः। हे अग्ने त्वं सूर्यस्य वर्चसा तेजसा समगथाः रात्रौ संगतोऽसि। तद्यदस्तंयन्नादित्य आहवनीयं प्रविशति तेनैतदाहेति श्रुतेः [२.३.४.२४.]। ऋषीणां मन्त्राणां स्तुतेन स्तोत्रेण समगथाः। बहवो मन्त्रा अग्निं स्तुवन्ति। तद्यदुपतिष्ठते तेनैतदाहेति [२.३.४.२४.] श्रुतेः। प्रियेण धाम्ना प्रियाभिराहुतिभिः समगथाः। आहुतयो वा अस्य प्रियं धामेति श्रुतेः [२.३.४.२४.]। यथा त्वमेतैस्त्रिभिः संगतः। एवमहमपि त्वत्प्रसादादायुषा अपमृत्युदोषरहितेन संग्मिषीय संगतो भूयासम्। तथा वर्चसा विद्यैश्वर्यादिप्रयुक्ततेजसा संग्मिषीय। तथा प्रजया पुत्रादिकया संग्मिषीय। तथा रायस्पोषेण धनस्य पुष्ट्या संग्मिषीय। आयुरादीनि मम सन्त्वित्यर्थः। समगथाः गमेः समो गम्यृच्छीत्यादिना [पा° १.३.२९.] तङ्मध्यमैकवचने लुङि सिचि गमश्चेति [पा° १.२.१३.] सिचः कित्वेऽनुदात्तोपदेशेत्यादिना [पा° ६.४.३७.] मलोपे ह्रस्वादङ्गादिति [पा° ८.२.२७.] सिचो लोपे रूपम्॥ ग्मिषीय। गमेराशीर्लिङि उत्तमैकवचने इटोऽदित्यकारे [पा° ३.४.१०६.] परे सीयुटि कृते छान्दसे इडागमे गमहनेत्युपधालोपे [पा° ६.४.९८.] रूपम्॥१९॥

अन्ध स्थान्धो वो भक्षीय मह स्थ महो वो भक्षीयोर्ज स्थोर्जं वो भक्षीय रायस्पोष स्थ रायस्पोषं वो भक्षीय॥२०॥

का° [४. १२. ५.] गां गच्छत्यन्ध स्थेति । अन्ध स्थ रेवती रमधमिति यजुर्द्वयेन गां गच्छति । गौर्देवता । हे गावो यूयमन्ध स्थ अन्नरूपाः स्थ । क्षीराज्यादिरूपस्यान्नस्य जनकत्वादन्नत्वोपचारः । अतो भवत्प्रसादाद्वो युष्मत्सम्बन्धि अन्धः क्षीराज्यादिरूपमन्नमहं भक्षीय । सेवेय । भज सेवायामित्यस्याशीर्लिङ्युत्तमैकवचने रूपम् ॥ तथा यूयं महः स्थ पूज्यरूपाः स्थ । मह पूजायाम् । अतो वो युष्माकं पूज्यानां प्रसादाद्हमपि महो भक्षीय । पूज्यत्वं सेवेय । गौर्न पदा स्प्रष्टव्येत्यादिस्मृतेर्गवां पूज्यत्वप्रसिद्धिः । यद्वा महःशब्देन दश वीर्याण्युच्यन्ते तानि । यथा गौर्वै प्रतिधुक् तस्यै शृतं तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनमिति श्रुत्युक्तानि । प्रतिधुक् तत्कालदुग्धम् । शृतमुष्णं तत् । शरो दुग्धमंडः । मस्तु दधिरसः । आतञ्चनं दधिपिण्डः । आमिक्षा स्फुटितं दुग्धम् । वाजिनमामिक्षाजलमिति (7.) श्रुत्यर्थः ॥ एतद्दशवीर्यरूपा यूयं स्थ । अतो वो महो वीर्यमहं सेवेयेत्यर्थः ॥ तथा यूयमूर्ज स्थ बलरूपाः स्थ गोक्षीरादेर्बलहेतुत्वात् बलरूपत्वोपचारः । ऊर्ज बलप्राणनयोः । वो युष्माकं प्रसादादूर्जं भक्षीय बलं सेवेय ॥ तथा रायस्पोष स्थ धनपुष्टिरूपाः स्थ । वैश्या हि क्षीराज्यादिविक्रयेण धनं पुष्णन्ति । अतो धनपुष्टित्वोपचारः । वो युष्माकं प्रसादाद्रायस्पोषं धनपुष्टिं भक्षीय सेवेय । अन्ध स्थेत्यादौ खर्परे शरीति [पा° क° ८. ३. ३६. वा° १.] विसर्गलोपः ॥ २० ॥

रेवती रमध्वमस्मिन्योनावस्मिन्गोष्ठेऽस्मिँल्लोकेऽस्मिन्क्षये ॥ इहैव स्त मापंगात ॥ २१ ॥

हे रेवतीः रेवत्यः धनवत्यो गावः । धनहेतुत्वेन धनवत्त्वं गवाम् । रयिर्विद्यते यासां ता रेवत्यः । रयिशब्दात् मतुप् । रयेर्मतौ बहुलमिति [पा° क° ६. १. ३७. वा° ४.] रयेर्मतौ परे संप्रसारणम् । संप्रसारणाच्चेति [पा° ६. १. १०८.] पररूपमाद्गुणः [पा° ६. १. ८७.] । पशवो वै रेवत्य इति श्रुतेः [२. ३. ४. २६.] । हे रेवत्यः (8.) अस्मिन्योनौ दृश्यमानेऽग्निहोत्रहविर्दोहनस्थाने यूयं रमध्वं क्रीडत दोहनदूर्ध्वमस्मिन्गोष्ठे यजमानसम्बन्धिगोवाटे (9.) रमध्वम् । गोष्ठशब्देन गृहाद्वहि-

विश्रम्भेण (10.) संचारप्रदेशः । सर्वदास्मिंल्लोके । लोक दर्शने । यजमानदृष्टिविषये रमध्वम् । रात्रौ अस्मिन्क्षये यजमानगृहे रमध्वम् । क्षयो निवास [पा° ६.१.२०१.] ऽइत्याद्युदात्तः क्षयशब्दो निवासवाची । किं च । इहैव स्त यजमानगृहे एव भवत । मा अपगात अन्यत्र मा गच्छत । इणो गा लुङीति [पा° २.४.४५.] एतेर्लुङि गादेशे रूपम् ॥२१॥

a. सᳩहितासि विश्वरूप्यूर्जा माविश गौपत्येन ।

b. उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसि ॥२२॥

का° [४.१२.६.] सᳩहितेत्यालभनऽइति । गामित्यनुवर्तते । हे गौः त्वं संहितासि क्षीराज्यरूपहविर्दानाय यज्ञकर्मभिः संयुक्तासि । किम्भूता विश्वरूपी विश्वं रूपं यस्याः सा । शुक्लकृष्णादिबहुरूपैर्युता । सा त्वमूर्जा क्षीरादिरसेन गौपत्येन गोस्वामित्वेन मा मामाविश सर्वतः प्रविश । त्वत्प्रसादान्मम बहुविधो रसो बहुविधं गोस्वामित्वं च सम्पद्यतामित्यर्थः ॥ का° [४.१२.७.] गार्हपत्यं गत्वोपतिष्ठतऽउप त्वेतीति ॥ उप त्वा ॥ तिस्रो गायत्र्य आग्नेय्यो मधुच्छन्दोदृष्टाः । हे दोषावस्तः हे अग्ने दोषा रात्रिस्तस्यामपि वसति अजस्रं धार्यमाणत्वान्नोपशाम्यतीति दोषावस्ता । यद्वा अग्नौ ह देवा इत्युपक्रम्य तैः संगृह्य रात्रिं प्रविवेशेतीतिहासेन अग्ने रात्रौ प्रविश उक्तस्तमयं मन्त्र आह । हे दोषावस्तः रात्रौ वसनशील गार्हपत्य दिवेदिवे प्रतिदिनं वयं यजमानाः त्वा त्वामुप एमसि त्वां प्रत्यागच्छामः । इदन्तो मसि । किम्भूता वयम् । धिया श्रद्धायुतया बुद्ध्या नमो भरन्तः नमस्कारं संपादयन्तः । यद्वा नम इत्यन्ननाम [निघ° २.७.] अन्नं हविर्बिभ्रतः ॥२२॥

राजन्तमध्वराणां गोपामृतस्य दीदिविम् ।
वर्धमानᳩ स्वे दमे ॥२३॥

क्रियापदमनुवर्तते । वयमीदृशमग्निमुपैमः । कीदृशं राजन्तं दीप्यमानमध्वराणां गोपां गोपायतीति गोपास्तम् । यज्ञानां गोप्तारम् । ऋतस्य सत्यवचनलक्षणस्य व्रतस्य दीदिविं दीपयितारम् । अग्निसमीपे व्रतं गृहीत्वा सत्यं वदतीत्याशयः । स्वे दमे अस्मदीये गृहे वर्धमानं चातुर्मास्यसोमपश्वादिभिरभिवृद्धिं गच्छन्तम् । दा-

म्यन्ति गृहस्था यत्रेति दमो गृहम् ॥ दिवेः किप्रत्ययो बाहुलकात् । लिड्वद्भावा-द्द्वित्वम् । तुजादीनां दीर्घोऽभ्यासस्येति [पा॰ ६.१.७.] अभ्यासदीर्घः । देवयतीति दीदिविः ॥२३॥

स नः पितेव सूनवेऽग्ने सूपायनो भव ।
सचस्वा नः स्वस्तये ॥२४॥

हे अग्ने गार्हपत्य स पूर्वोक्तगुणयुक्तस्त्वं नोऽस्माकं सूपायनो भव । सुखेनो-पैतुं शक्यः सूपायनः । सुष्ठूपप्राप्तुं (11.) शक्यो भव । तत्र दृष्टान्तः । सूनवे पितेव यथा पुत्राय पिता भयं विना सुखेन प्राप्तुं शक्यः । किं च नोऽस्माकं स्वस्तये क्षेमाय सचस्वानेन कर्मणा समवेतो भव । षच समवाये इति धातुः [धा॰ ११.६ः २३.२८.] यद्वा सचस्व सेवस्व । षच सेवने [धा॰ ६.२.] ॥२४॥

a. अग्ने त्वं नोऽअन्तम उत त्राता शिवो भवा वरूथ्यः ।
b. वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमꣳ रयिं दाः ॥२५॥

चतस्रो द्विपदा विराज आग्नेय्यः । दशार्णपादा विराट् (12.) । बन्धादिदृष्टाः । हे अग्ने गार्हपत्य त्वं नोऽस्माकमन्तमः अन्तिकतमः सर्वदा समीपवर्ती भव । अम् गतौ भजने शब्दे अमति समीपं प्राप्नोतीत्यम् क्विप् अतिशयितोऽम् अंतमः अम्-शब्दात्तमप् । यद्वान्तिकशब्दात्तमपि पृषोदरादित्वेन [पा॰ ६.३.१०९.] साधुः । उता-पि च त्राता पालयिता । शिवः शान्तः । वरूथ्यः वरूथाय हितो वरूथ्यः तादृ-शश्च भव । पुत्रादिसमूहो वरूथः । यद्वा वरूथं गृहम् [निघ॰ ३.४.] । तस्मै हितो भव । किम्भूतः त्वं वसुः वासयतीति वसुः । जनानां वासयिता । तथा अग्निः । अङ्गतीत्यग्निः । अगि गतौ । आहवनीयादिरूपेण गमनशीलः । तथा वसुश्रवाः वसुना धनेन श्रवः कीर्तिर्यस्यासौ वसुश्रवाः । धनप्रदोऽयमिति यस्य कीर्तिरि-त्यर्थः । किं च हे अग्ने त्वमच्छा नक्षि । अभिव्याप्नुहि अस्मान् । अच्छाभेराप्तुमिति शाकपूणिः [निरु॰ ५.२८.] । नशिराप्नोतिकर्मा । यद्वा हेऽच्छ निर्मलस्वभाव अग्ने नक्षि अस्मद्धोमस्थानं गच्छ । नक्ष गतौ । यदा यदा वयं जुहुयामस्तदा समागच्छे-

त्यर्थः । किं च द्युमत्तमं रयिं दाः अतिदीप्तियुक्तं रयिं धनं देहि । ददातेर्लुङि रूपम् । बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः [पा॰ ६.४.७५.] ॥ २५॥

a. तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ।

b. स नो बोधि श्रुधी हवमुरुष्या णोऽअघायतः समस्मात् ॥ २६॥

हे शोचिष्ठ दीप्तिमत्तम हे दीदिवः सर्वस्य दीपयितः तं पूर्वोक्तगुणयुक्तं त्वा त्वां सखिभ्योऽर्थाय सुम्नाय द्वितीयार्थे चतुर्थी सुम्नं सुखं नूनं निश्चयेन ईमहे याचामहे । यद्वा सुम्नाय सुखार्थं सखिभ्योऽस्मत्सखीनामुपकाराय च त्वामीमहे । स त्वं नोऽस्मान्भवत्सेवकान्बोधि बुध्यस्व हवमस्मदीयमाह्वानं श्रुधी शृणु । समस्मात्सर्वस्मात् अघायतः शत्रोर्नोऽस्मानुरुष्य रक्ष । समशब्दः सर्वपर्यायः ॥ शोचिरिति ज्वालानाम [निघ॰ १.१७.] शोचिरस्यास्तीति शोचिष्मान् मतुप् । अतिशयेन शोचिष्मान्शोचिष्ठः । अतिशायने तमबिष्ठनौ [पा॰ ५.३.५५.] विन्मतोर्लुगितीष्ठनि [पा॰ ५.३.६५.] मतुपो लुक् ॥ दीदिवः दिवेर्ज्वलनार्थस्य लिडादेशक्वसन्तस्य रूपम् । मतुवसो रुः सम्बुद्धौ छन्दसीति [पा॰ ८.३.१.] रुत्वम् ॥ बोधि ॥ बुध ज्ञाने लोण्मध्यमैकवचने सेर्ह्यपिच्चेति [पा॰ ३.४.८७.] हिः । बहुलं छन्दसीति शपो लुक् । [पा॰ २.४.७३.] झलभ्यो हेर्धिः [पा॰ ६.४.१०१.] । संहितायामन्येषामपि दृश्यतऽइति दीर्घः [पा॰ ६.३.१३७.] ॥ उरुष्य ॥ उरुष्यती रक्षणाकर्मा । ऋचि तुनुघेत्यादिना [पा॰ ६.३.१३३.] दीर्घः । नश्च धातुस्थोरुषुभ्य इति [पा॰ ८.४.२७.] न इत्यस्य णत्वम् ॥ अघायतः । अघं परस्येच्छति अघायति । सुप आत्मनः क्यजित्यत्र [पा॰ ३.१.८.] छन्दसि परेच्छायामपि वक्तव्यमिति क्यच् । अश्वाघस्यादित्याकारः [पा॰ ७.४.३७.] अघायतीत्यघायन् । तस्मात् । अघायतः शतृप्रत्यये रूपम् ॥ २६॥

a. इडऽएह्यदितऽएहि ॥

b. काम्या एत । मयि वः कामधरणं भूयात् ॥ २७॥

का॰ [४.१२.८.] गां गच्छतीडऽएहीति । द्वे यजुषी गव्ये । हे इडे एहि । हे अदिते एहि आगच्छ होमस्थानम् । इडा मनोर्दुहिता । अदितिर्देवमाता । इडा मनुमिवास्मानेहि । अदितिरादित्यानिवास्मानेहि । तस्मिंस्तच्छब्दस्तद्ददतिदे-

K*

शार्थः (13.) ॥ का° [४. १२. १.] काम्या एतेत्यालभतऽइति । गामालभते । मनुष्याणां ह्येतासु कामाः प्रविष्टा इति काम्याः । हे काम्याः सर्वैः कामयितव्याः यूयमेत आ इत आगच्छत । वो युष्माकं कामधरणं कामानां धरणं अपेक्षितफलधारकत्वं यदस्ति तत् मयि अनुष्ठातरि भूयात् युष्मत्प्रसादादहमभीष्टफलस्य धारयिता भूयासमित्यर्थः । अहं वः प्रियो भूयासमिति श्रुतिर्व्याचष्टे [२. ३. ४. ३४.] ॥२७॥

सोमानᳬ स्वरणं कृणुहि ब्रह्मणस्पते
कक्षीवन्तं य औशिजः ॥२८॥

का° [४. १२. १०.] सोमानमित्यनुद्रकं व्रतोपायनवत् । व्रतेत्यपरेणाहवनीयं प्राङ्तिष्ठन्नवर्चं जपतीति सूत्रार्थः ॥ सोमानं स्वरणं तृचो गायत्री ब्रह्मणस्पतिदेवत्यस्तेनैव दृष्टः । अग्निमीक्षमाणस्य यजमानस्य जपे विनियुक्तः । हे ब्रह्मणस्पते वेदस्य पालक सोमानं सोमानामभिषोतारं । स्वरणं स्वृ शब्दोपतापयोः शब्दयितारम् । कृणुहि कुरु । मामिति शेषः । सुनोतीति सोमा तम् । अन्येभ्योऽपि दृश्यतऽइति [पा° ३. २. ७५.] मनिन् (14.) । स्वरतीति स्वरणः नन्द्यादित्वात् [पा° ३. १. १३४.] ल्युः । सोमयागकर्तारं स्तुतिरूपशब्दयुक्तं च धनप्रदानैर्मां कुर्वित्यर्थः तत्रोपमानमुच्यते । कक्षीवन्तं कक्षीवन्नामकमृषिं दीर्घतमःपुत्रं यथा सोमयागयुक्तं स्तुतियुक्तं च कृतवानसि तथा मां कुरु । उपमानद्योतक इवशब्दोऽत्र लुप्तो द्रष्टव्यः । कोऽसौ कक्षीवान् । य औशिजः उशिजः पुत्रः उशिक् कक्षीवतो माता ॥२८॥

यो रेवान्योऽअमीवहा वसुवित्पुष्टिवर्धनः ।
स नः सिषक्तु यस्तुरः ॥२९॥

यो ब्रह्मणस्पतिः रेवान् धनवान् । यश्चामीवहा अमीवस्य रोगस्य हन्ता । अम रोगे । अमेरीवः । वसुवित् वसु धनं वेत्तीति यश्च पुष्टिवर्धनः पोषणस्य वर्धयिता यश्च तुरः तुर वेगे इगुपधेति [पा° ३. १. १३५.] कः वेगवान् अविलम्बेन (15.) कारी । स ब्रह्मणस्पतिर्नोऽस्मान्सिषक्तु सेवताम् सिषक्ति सचत (16.)

ऽइति सेवमानस्य [निरु॰ ३.२१.]। यद्वानयर्चा पुत्रः प्रार्थ्यते। यः पुत्रो रेवान्धनवान् यश्च व्याधेर्हन्ता जपादिना यो धनस्य लब्धा पुष्टेश्च वर्धयिता यः तुरः शीघ्रकारी तादृशः पुत्रोऽग्नेः प्रसादान्नोऽस्मान्सिषक्तु सेवताम् ॥२९॥

मा नः शꣳसोऽअररुषो धूर्तिः प्रणङ्मर्त्यस्य

रक्षा णो ब्रह्मणस्पते ॥३०॥

रा दाने इति धातोः क्वसुनन्तस्य षष्ठ्येकवचने ररुष इति रूपम्। ररौ इति ररिवांस्तस्य ररुषः। दानं कृतवत इत्यर्थः। तस्य निषेधादररुष इति। कदाचिदपि हविर्दानमकृतवत इत्यर्थः। तादृशस्य मर्त्यस्य मनुष्यस्य शंसो धूर्तिश्च नोऽस्मान्मा प्रणक् प्रकर्षेण व्याप्नोतु। नशिर्व्याप्त्यर्थः। यद्वा नश अदर्शने। मा प्रणक् प्रकर्षेण मा नाशयतु। शंसनं शंसोऽनिष्टचिन्तनम्। धूर्तिर्हिंसा। ध्वरति धूर्वतीति बधकर्मसु पठितत्वात् [निघ॰ २.१९.]। शत्रुकृतमनिष्टचिन्तनं शत्रुकृता हिंसा चास्मान्मा व्याप्नोत्वित्यर्थः। किं च हे ब्रह्मणस्पते वेदस्य पालकाग्ने नोऽस्मान्रक्ष। द्व्यचोऽतस्तिङ इति [पा॰ ६.३.१३५.] संहितायां दीर्घः। णत्वं पूर्ववत् ॥३०॥

महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः।

दुराधर्षं वरुणस्य ॥३१॥

सत्यधृतिदृष्ट आदित्यदेवत्यस्तृचो गायत्रो जपे विनियुक्तः पथि जप्त उपद्रवनाशकश्च। मित्रस्यार्यम्णो वरुणस्येति त्रीणां त्रयाणां देवानां सम्बन्धि अवः पालनमस्तु। किम्भूतमवः। महि महत् तथा द्युक्षं द्युमन्ति सुवर्णादिद्रव्याणि क्षियन्ति निवसन्ति यस्मिन्पालने तथाविधम्। दुराधर्षं तिरस्कर्तुमशक्यम्। त्रीणां त्रिशब्दस्यामि छन्दसि त्रयादेशो वेति [पा॰ ७.१.५३.] वाच्यम् ॥३१॥

नहि तेषाममा चन नाध्वसु वारणेषु।

ईशे रिपुरघशꣳसः ॥३२॥

अमाशब्दो गृहनामसु पठितः [निघ॰ ३.४.]। चनशब्दोऽप्यर्थे। अमा चन गृ-

ह्येऽपि वर्तमानानां तेषां तथा वारणेषु चोरव्याघ्रादयो यत्र स्थिता निवारयन्ति पथिकान्ति वारणास्तेषु चोरव्याघ्रभयाढ्येषु अध्वसु मार्गेषु वा वर्तमानानां तेषां मित्रार्यमवरुणैस्त्रिभिर्देवैः पालितानां यजमानानाम् उपद्रवायेति शेषः । अघशंसः सर्वदा पापस्य प्रशंसको रिपुः शत्रुः नहि ईशे । समर्थो न भवति । लोपस्त आत्मनेपदेष्विति [पा° ७.१.४१.] तलोपः । अधीगर्थदयेशां कर्मणीति [पा° २.३.५२.] इति तेषामिति षष्ठी । मित्रादिभिः पालितानामस्माकं गृहेऽरण्ये वा नास्ति शत्रुबाध इत्यर्थः ॥३२॥

ते हि पु॒त्रासो॒ऽअदि॑तेः॒ प्र जी॒वसे॒ मर्त्या॑य ।
ज्योति॒र्यच्छ॒न्त्यज॑स्रम् ॥३३॥

कथं तद्रक्षितानां शत्रुभयाभावस्तदाह । हि यतस्ते अदितेः अखण्डितशक्तेर्देवमातुः पुत्रासः पुत्राः पूर्वोक्ता मित्रार्यमवरुणा मर्त्याय मनुष्याय यजमानायाजस्रं निरन्तरमनुपक्षीणं ज्योतिः तेजः प्रयच्छन्ति किमर्थं जीवसे जीवितुं यथा चिरं जीवनं भवति तथा तदुपायज्ञानं प्रयच्छन्तीत्यर्थः ॥३३॥

क॒दा च॒न स्त॒रीर॑सि॒ नेन्द्र॑ सश्चसि दा॒शुषे॑ ।
उपो॒पेन्नु म॑घव॒न्भूय॒ इन्नु ते॒ दानं॑ दे॒वस्य॑ पृच्यते ॥३४॥

ऐन्द्री पथ्या बृहती मधुच्छन्दोदृष्टा जपे विनियुक्ता । यस्यास्तृतीयः पादो द्वादशार्णोऽन्ये त्रयोऽष्टाक्षराः सा पथ्या बृहती । हे इन्द्र परमैश्वर्ययुक्त कदा चन कदापि त्वं स्तरीर्नासि । स्तृञ् हिंसायाम् स्तृणातीति स्तरीः हिंसको नासि किं तर्हि दाशुषे सश्चसि । द्वितीयार्थे चतुर्थी । दाश्वांसं हविर्दत्तवन्तं यजमानं सेवसे । सश्चतिः सेवनकर्मा । किं च । हे मघवन्धनवन् देवस्य प्रकाशमानस्य ते तव भूय इत् बहुतरमेव दानं नु इत् क्षिप्रमेव दाश्वांसमुपपृच्यते । पृची सम्पर्के यजमानेन सह सम्पर्कं प्राप्नोति । प्रसमुपोदः पादपूरण [पा° ८.१.६.] ऽइत्येक उपशब्दः पादपूरणे । इत्शब्दविवार्थे । नु क्षिप्रार्थः । न कदाचिद्यजमानं प्रति क्रुध्यसि सेवसे च तं (17.) त्वदीयं भूयो धनं (18.) दाश्वांसमुपपृच्यतऽइति भावः ॥३४॥

तत्स॑वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि ।
धियो॒ यो नः॑ प्रचो॒दया॑त् ॥ ३५ ॥

विश्वामित्रदृष्टा सावित्री गायत्री जपे वि° (19.)। तदिति पद्यर्थे तस्य देवस्य द्योतनात्मकस्य सवितुः प्रेरकस्यान्तर्यामिणो विज्ञानानन्दस्वभावस्य हिरण्यगर्भोपाध्यवच्छिन्नस्य वा आदित्यान्तरपुरुषस्य वा ब्रह्मणो वरेण्यं वरणीयं सर्वैः प्रार्थनीयं भर्गो सर्वपापानां सर्वसंसारस्य च भर्जनसमर्थं तेजः सत्यज्ञानादिवेदान्तप्रतिपाद्यं वयं धीमहि ध्यायामः । छान्दसं संप्रसारणम् । यद्वा मण्डलं पुरुषो रश्मय इति त्रयं भर्गःशब्दवाच्यम् । भर्गो वीर्यं वा । वरुणाद्ध वा अभिषिषिचानाद्भर्गोऽपचक्राम वीर्यं वै भर्ग इति श्रुतेः [५. ४. ५. १.] । तस्य कस्य । यः सविता नोऽस्माकं धियः बुद्धीः कर्माणि वा प्रचोदयात्प्रकर्षेण चोदयति प्रेरयति सत्कर्मानुष्ठानाय ॥ यद्वा वाक्यभेदेन योजना । सवितुर्देवस्य तत् वरेण्यं भर्गो ध्यायामः । यश्च नो बुद्धीः प्रेरयति तं च ध्यायामः । स च सवितैव । लिङ्गव्यत्ययेन वा योजना । सवितुर्देवस्य तत् भर्गो धीमहि यो यत् भर्गो नो बुद्धीः प्रेरयति ॥ ३५ ॥

परि॑ ते दू॒डभो॒ रथो॒ऽस्माँ२॥ऽअ॑श्नोतु वि॒श्वतः॑ ।
येन॒ रक्ष॑सि दा॒शुषः॑ ॥ ३६ ॥

आग्नेयी गायत्री वामदेवदृष्टा जपे वि° । हे अग्ने ते तव रथोऽस्मान्यजमानान्विश्वतः सर्वासु दिक्षु पर्यश्नोतु परितो व्याप्नोतु अस्मद्रक्षणाय सर्वतस्तिष्ठतु । किम्भूतो रथः दूडभः दभ्नोतिर्बधकर्मा । दुःखेन दभ्यते दुर्दभः । केनापि सहसा हिंसितुमशक्यः । उकारं दुर्देऽइति प्रातिशाख्यसूत्रेण [प्रा° का° ३. ३. ४.] दुरो रेफस्य उकारः अग्रिमदस्य डः [पा° क° ६. ३. १०९. वा° ६.] । येन रथेन त्वं दाशुषो यजमानान् रक्षसि । पालयसि । यजमाना वै दाश्वांस इति श्रुतेः [२. ३. ४. ३८.] ॥ बृहदुपस्थानं समाप्तम् ॥ ३६ ॥

V. a. भूर्भुवः॒ स्वः॒ सुप्र॒जाः प्र॒जाभि॑ स्याꣳ सु॒वीरो॑ वी॒रैः सु॒पोषः॒ पोषैः॑ ।
b. नर्य॑ प्र॒जां मे॑ पाहि । c. शꣳस्य॑ प॒शून्मे॑ पाहि ।

d. अर्थर्य पितुं मे पाहि ॥३७॥

अथ त्तुल्लकोपस्थानमासुरिदृष्टम् ॥ का° [४.१२.१२.] भूर्भुवः स्वरिति वोभाविति । वाशब्दो विकल्पार्थः । पूर्वोक्तेनोपप्रयन्त इत्यादिना वक्ष्यमाणेन भूर्भुवः स्वरित्यादिना वोभावग्नी उपतिष्ठेतोभयोपस्थानं कुर्यादिति सूत्रार्थः । हे अग्ने भूर्भुवः स्वः त्वं व्याहृत्यादित्रयात्मकः (20.) तदर्थभूतलोकत्रयात्मको वा । अतस्त्वत्प्रसादादहं प्रजाभिः बन्धुभृत्यादिरूपाभिः कृत्वा सुप्रजाः स्यामनुकूलत्वेन शोभनाः प्रजा यस्य तादृशो भवेयम् तथा वीरैः पुत्रैः सुवीरः स्यां शास्त्रीयमार्गवर्तिशोभनपुत्रयुक्तो भवेयम् तथा पोषैः हिरण्यादिपोषणैः सुपोषः स्यां बहुमूल्यार्हहिरण्यादियुक्तो भवेयम् ॥ ॥

प्रवत्स्यदुपस्थानमागतोपस्थानं चादित्यदृष्टम् ॥

का° [४.१२.१३.] प्रवत्स्यन्त्सर्वान्नर्येति प्रतिमन्त्रमिति । यदा यजमानो ग्रामान्तरं गन्तुमिच्छति तदानीं सर्वानग्नीन्नर्येत्यादिमन्त्रैरुपतिष्ठेत । अथ मन्त्रार्थः । नर्य नरेभ्यो हित गार्हपत्य मे प्रजां पाहि ॥ आहवनीयमुपतिष्ठते । हे शंस्य अनुष्ठातृभिः शंसितुं योग्याहवनीय मे मम प्रजां पाहि रक्ष ॥ दक्षिणाग्निमुपतिष्ठते । हे अथर्य दक्षिणाग्ने मे पितुमन्नं पाहि । अतनवानथर्यः । अत सातत्यगमने । सततं गार्हपत्यात्स्वस्थानं दक्षिणाग्निर्गच्छति (21.) । तेनाथर्यः । निपातोऽयम् ॥३७॥

आर्गन्म विश्ववेदसमस्मभ्यं वसुवित्तमम् ।
अग्ने सम्राडभि द्युम्नमभि सह आयच्छस्व ॥३८॥

का° [४.१२.१८.] समित्पाणिरनुपेत्य कंचिदुपतिष्ठतऽआहवनीयगार्हपत्यदक्षिणाग्नीनागन्मेति प्रतिमन्त्रमिति । समिधं हस्ते आदाय कंचिदपि जनमगत्वैव प्रथममेवाग्न्यागारं प्राप्यागन्मेत्यादिमन्त्रत्रयेणाहवनीयादीनुपतिष्ठतऽइति सूत्रार्थः । अनुष्टुबाहवनीयदेवत्या । हे अग्ने सम्राट् । सम्यक् राजते दीप्यते सम्राट् तथाविधाग्ने आहवनीय वयं त्वामागन्म त्वामुद्दिश्य ग्रामान्तरात्प्रत्यागताः । किम्भूतं त्वाम् । विश्ववेदसं विश्वं वेत्ति वेदयतीति वा विश्ववेदास्तम् विश्वं वेदो धनं यस्येति वा । सर्वज्ञं सर्वधनं वा । पुनः किम्भूतम् । अस्मभ्यं वसुवित्तममस्मदर्थम-

तिशयेन वसुनो धनस्य वेदितारं लब्धारम् । किं च । हे अग्ने द्युम्नं सहश्च अस्मभ्यमभि आयच्छस्व । दाण् दाने । पाघ्रेत्यादिना [पा° ७.३.७८.] यच्छादेशः । यशो बलं चास्मभ्यं देहि । द्युम्नं द्योततेर्यशो वान्नं वा [निरु° ५.५.] । सह इति बलनाम [निघ° २.९.] । यच्छस्वेति यमे रूपं वा । आयच्छस्व आगमय । यच्छतिः स्थापनार्थो वा । अस्मासु यशो बलं च स्थापय ॥३८॥

अयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः ।
अग्ने गृहपतेऽभि द्युम्नमभि सह आयच्छस्व ॥३९॥

गार्हपत्यमुपतिष्ठते । न्यङ्कुसारिणी बृहती । यस्या द्वितीयः पादो द्वादशाक्षरोऽन्ये त्रयोऽष्टाक्षराः सा न्यङ्कुसारिणी । अत्र तृतीयो नवार्णस्तेनैकाधिका । अयं पुरोऽवस्थितो गार्हपत्य एतन्नामकोऽग्निर्गृहस्य पतिः पालकः । प्रजायाः पुत्रपौत्रादिकायाः अनुग्रहार्थं वसुवित्तमः अतिशयेन धनस्य लब्धा । हे अग्ने स त्वं द्युम्नं सहश्चाभ्यायच्छस्व देहि ॥३९॥

अयमग्निः पुरीष्यो रयिमान्पुष्टिवर्धनः ।
अग्ने पुरीष्याभि द्युम्नमभि सह आयच्छस्व ॥४०॥

दक्षिणाग्निमुपतिष्ठते । अनुष्टुप् । योऽयमग्निः पुरीष्यः पशव्यः । पशवो वै पुरीषमिति श्रुतेः । रयिमान्धनवान्पुष्टिवर्धनः पोषस्य वर्धयिता । तं याचे । हे अग्ने पुरीष्य पशुहित द्युम्नं सहश्चाभ्यायच्छस्व देहि ॥४०॥

VI. गृहा मा बिभीत मा वेपध्वमूर्जं बिभ्रत एमसि ।
ऊर्जं बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः ॥४१॥

का° [४.१२.२२.] गृहा मा बिभीतेति गृहानुपैतीति । ग्रामान्तरादागतो गृहा मेत्यादिमन्त्रत्रयेण गृहं प्राप्नुयात् । तिस्रोऽपि वास्तुदेवत्याः शम्युदृष्टाः (22.) । त्रिष्टुब्विराड्रूपा । यस्या एकादशार्णास्त्रयः पादा एकोऽष्टार्णः सा विराड्रूपा । अत्र प्रथमो दशार्णस्तेनैकोना । हे गृहा यूयं मा बिभीत । पालको यजमानो गत इति भयं मा कुरुत । मा च वेपध्वम् । कोऽपि शत्रुरागत्य विनाशयिष्यती-

ति बुद्ध्या कम्पं मा कार्ष्ट । यतो वयमूर्जं बिभ्रतो धारयमाणानक्षीणान्नानिव युष्मानिमसि । आ इमः आगताः स्मः । यथा यूयमूर्जं बिभ्रतः तथाहमपि ऊर्जं बिभ्रत् धारयन् सुमनाः शोभनमनस्कः सुमेधाः शोभनधारणाप्रज्ञोपेतः मनसा दुःखरहितेन मोदमानः हृष्यन् वो युष्मान्गृहानैमि आगच्छामि । एमः ऐमीत्यात्मनि विकल्पेन बहुवचनमस्मदो द्वयोश्चेत्युक्तेः [पा° १.२.५९.] ॥४१॥

येषामध्येति प्रवसन्येषु सौमनसो बहुः ।
गृहानुपह्वयामहे ते नो जानन्तु जानतः ॥४२॥

अनुष्टुप् । प्रवसन्देशान्तरं गच्छन्यजमानो येषामध्येति । इक् स्मरणे । यान्गृहान्स्मरति । अधीगर्थदयेशां कर्मणीति [पा° २.३.५२.] षष्ठी । गृहविषयं क्षेमं सदा चिन्तयतीत्यर्थः । तथा येषु गृहेषु यजमानस्य बहुः सौमनसो सुमनसो भावः प्रीत्यतिशयः । वयं तान्गृहानुपह्वयामहे आह्वयामः । गृहाभिमानी देवोऽस्मत्समीपमागच्छत्वित्यर्थः । तेन गृहदेवा आहूताः सन्तः जानतः उपकाराभिज्ञान्नोऽस्माञ्जानन्तु । एते कृतघ्ना न भवन्तीत्यवगच्छन्तु ॥४२॥

उपहूता इह गाव उपहूता अजावयः ।
अथोऽअन्नस्य कीलाल उपहूतो गृहेषु नः ।
क्षेमाय वः शान्त्यै प्रपद्ये शिवꣳ शग्मꣳ शंयोः शंयोः ॥४३॥

त्र्यवसाना महापङ्क्तिः । यस्या अष्टार्णाः षट् पादाः सा महापङ्क्तिः । पञ्चमो नवार्णस्तेनैकाधिका । इह गृहेषु गाव उपहूताः धेनवो बलीवर्दाश्च सुखेन तिष्ठन्त्वित्येवमनुज्ञाताः । तथा इह गृहेषु अजावयः उपहूताः । अजावावित्यजातिद्वययुक्ताः पशवः उपहूताः सुखेन वर्तन्तामित्यस्माभिरनुज्ञाताः । अथो अपि च अन्नस्य कीलालः अन्नसम्बन्धी (23.) रसविशेषो नोऽस्मदीयेषु गृहेषु उपहूतः समृद्धो भवत्वित्येवमस्माभिरनुज्ञातः ॥ का° [४.१२.२३.] क्षेमाय व इति प्रविशतीति । हे गृहा वो युष्मान्प्रपद्ये प्राप्नोमि । किमर्थम् । क्षेमाय विद्यमानस्य वसुनो रक्षणं क्षेमस्तदर्थम् । शान्त्यै मम सर्वानिष्टशमनाय । शंयोः शमिति सुखनाम [निघ° ३.६.] तत्कामयते इति शंयुः । इदंयुरिदं कामयमान इति [निरु°

६.३१.] यास्कोक्तत्वात् तादृशस्य मम शिवं शग्ममिति द्वे सुखनामनी [निघ° ३.६.]। तत्राद्यमैहिकं द्वितीयमामुष्मिकम्। उभयविधं सुखं भूयादिति शेषः। शम्यो-रित्यभ्यासोऽत्यादरार्थः ॥ ॥

इत्युपस्थानमन्त्राः समाप्ताः ॥ ॥४३॥

VII. प्रघासिनो हवामहे मरुतश्च रिशादसः।

करम्भेण सजोषसः ॥४४॥

अथ चातुर्मास्यमन्त्राः। प्रजापतिदृष्टाः। चातुर्मास्याख्यो यागः। स पर्वचतुष्टयात्मकः। वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाख्यानि चत्वारि पर्वाणि। तत्र वरुणप्रघासाख्ये द्वितीये पर्वणि दक्षिणोत्तरयोर्द्वयोर्वेद्योर्हविःधासादितेषु प्रतिप्रस्थाता पत्नीमुदानयंस्तदीयं जारं पृच्छेत् केन चरसीति। सापि तं ब्रूयात् ॥ का° [५.५.१०.] आख्याति प्रघासिन इत्येनां वाचयति नयन्निति। पत्न्या जारे कथिते सति एनां पत्नीं नयन्प्रतिप्रस्थाता प्रघासिन इति मन्त्रं वाचयति ॥ मारुती गायत्री। वयं मरुतो हवामहे। चकारेण तदीयपरिचारकाः समुच्चीयन्ते। किम्भूतान्मरुतः प्रघासिनः। घस्लृ अदने प्रकर्षेण घस्यते भक्ष्यते इति प्रघासो हविर्विशेषः। स एषामस्तीति तान्प्रघासिनः। एतन्नामकान्। शुक्रज्योतिरित्यादयः सप्त सप्तका मारुता गणाः। तत्र स्वतवांश्च प्रघासी चेति पठ्यते [अध्या° १७.८५.]। प्रघास्युपलक्षितान्मरुतः आह्वयामः। पुनः किम्भूतान्। रिशादसः रिशतिर्हिंसार्थः। रिशां वैरिकृतां हिंसां दस्यन्ति उपक्षयन्तीति रिशादसः। दसु उपक्षये क्विप्। यद्वा रिशन्ति हिंसन्तीति रिशाः इगुपधेति कः [पा° ३.१.१३५.]। रिशान्हिंसकान्दस्यन्तीति रिशादसः। यद्वा रिशन्ति रिशन्तः शतरि दीर्घश्छान्दसः। रिशतोऽस्यन्ति क्षिपन्ति ते रिशादसः। अस्यतेर्विच्। तथा करम्भेण सजोषसः यवमयो हविर्विशेषः करम्भः। तेन सजोषसः समानप्रीतयस्तान्। तथाविधान्मरुतो हवामहे ॥४४॥

यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये।

यदेनश्चकृमा वयमिदं तदवयजामहे स्वाहा ॥४५॥

L*

मारुत्यनुष्टुप् । का॰ [५. ५. ११.] करम्भपात्राणि जुहोति शूर्पेण मूर्धनि कृत्वा दक्षिणेऽग्नौ प्रत्यङ्मुखी जायापती वा दक्षिणेनाहृत्य तीर्थेन पूर्वेण वेदिमपरेण वा यद्ग्रामऽइतीति । यवपिष्टेन निर्मितानि संतानपरिमितान्येकाधिकानि वर्तुलादिरूपाणि (24.) करम्भपात्राणि । तानि शूर्पेण पत्नी दक्षिणाग्नौ जुहुयादित्येकः पक्षः दम्पती द्वौ वा जुहुयातामित्यपरः पक्षः । तौ च दक्षिणेन मार्गेण तानि पात्राण्याहृत्य वेदेः पूर्वदिशि पश्चिमदिशि वा स्थित्वा जुहुयाताम् । अथ मन्त्रार्थः । ग्रामे वसन्तो वयं यदेनः पापं ग्रामोपद्रवरूपं चकृम कृतवन्तः । तथारण्ये वसन्तो यदेनो मृगोपद्रवरूपं चकृम । तथा सभायां स्थिता यदेनो महाजनतिरस्कारादिकं चकृम । तथेन्द्रिये जिह्वोपस्थरूपे प्रीतिमन्तो वयं यदेनः कलञ्जभक्षणपरस्त्रीगमनादिकं चकृम । तथान्यत्रापि भृत्यस्वाम्यादौ यदेनः ताडनावज्ञादिकं चकृम तदिदं सर्वं पापमवयजामहे विनाशयामः । अवपूर्वो यजिर्नाशनार्थः । स्वाहा एतद्धविर्देवतायै पापविनाशिन्यै दत्तम् ॥४५॥

मो षू ण॑ इन्द्रात्र॑ पृत्सु दे॒वैरस्ति॒ हि ष्मा॑ ते शुष्मिन्नव॒याः ।
म॒हश्चि॒द्यस्य॑ मी॒ढुषो॑ य॒व्या ह॒विष्म॑तो म॒रुतो॒ वन्द॑ते॒ गीः ॥४६॥

ऐन्द्रमरुद्देवत्या विराट् । यस्या दशाक्षराश्चत्वारः पादाः सा विराट् । चतुर्थ एकाधिकोऽत्र (25.) । का॰ [५. ५. १२.] मो षू ण इति यजमानो जपतीति । पृत्स्विति संग्रामनाम [निघ॰ २. १७.] हे इन्द्र अत्र पृत्सु एषु संग्रामेषु वर्तमानः देवैस्त्वया सह सख्यं प्राप्तैर्मरुन्नामकैर्देवैः सहितस्त्वं नोऽस्मान्मो विनाशयेति शेषः । मोशब्दो निषेधार्थः सुशब्दो विनाशाभावस्य सौष्ठवं ब्रूते । तथा सति विनाशलेशो मा भूदित्यर्थः संपद्यते । क उपकार इति चेत् । शुष्मेति बलनाम [२. ९. (26.)] । हे शुष्मिन् बलवन्निन्द्र ते तव अवयाः अवयुतो यागः पृथग्भागोऽस्ति हि स्म विद्यतऽएव खलु । अवपूर्वस्य यजतेरेतद्रूपम् । मिह सेचने धातुः । मीढुषो वृष्टिप्रदत्वेन सेक्तुः । हविष्मतो हविर्योग्यस्य तव यव्या यवमयैः करम्भपात्रैर्निष्पन्ना होमक्रिया महश्चित्पूजा खलु । तस्य यथोक्तपूजोपेतस्य तवास्मासु कृपालुत्वं युक्तमिति भावः । किं च गीरस्मदीया स्तुतिरूपा वाक् मरुतो

भवतः सखीन्वन्दते नमस्करोति । नमो मरुद्भ्य इत्येवमाकारायाः स्तुतेर्नमस्कार-रूपत्वात् । मरुद्विषयनमस्कारेणापि तुष्टस्य तव कृपैव युक्तेत्यर्थः । मो षु न अत्र सुञ इति [पा° ८.३.१०७.] षत्वम् । अन्येषामपि दृश्यतऽइति [पा° ६.३.१३७.] दीर्घः । नश्च धातुस्थोरुषुभ्य इति [पा° ८.४.२७.] न इत्यस्य णः । स्म इत्यस्यापि पूर्वपदादिति [पा° ८.३.१०६.] षत्वम् । अवयाः श्वेतवाः पुरोडाश्चेति [पा° ८.२.६७.] विजन्तो (27.) निपातः । मीढुषः । दाश्वान्साह्वान्मीढ्वांश्चेति [पा° ६.१.१२.] क्वसन्तो निपातः ॥४६॥

अक्र॒न्कर्म॑ कर्म॒कृतः॑ स॒ह वा॒चा म॑यो॒भुवा॑ ।
दे॒वेभ्यः॒ कर्म॑ कृ॒त्वास्तं॒ प्रेत॑ सचाभुवः ॥४७॥

अग्निर्न्यनुष्टुप् । का° [५.५.१३.] अक्रन्कर्मेत्येनां वाचयतीति । कर्मकृतः वरुणप्रघासाख्यकर्मकारिण ऋत्विजः वाचा स्तुतिरूपया सह कर्म वरुणप्रघासानुष्ठानरूपमक्रन् कृतवन्तः । कथम्भूतया वाचा । मयोभुवा मय इति सुखनाम [निघ° ३.६.] मयो भवति यया सा मयोभूः तया मन्त्ररूपस्तुत्येत्यर्थः । हे सचाभुवः सचेति सहार्थेऽव्ययं सहभवनशीलाः परस्परं यजमानेन पत्न्या वास्मिन्कर्मणि सहावस्थिता हे ऋत्विजः देवेभ्यो देवार्थं कर्म कृत्वा वरुणप्रघासनामकं कर्मानुष्ठायास्तं प्रेत गृहान्गच्छत । अस्तमिति गृहनाम [निघ° ३.४.] ॥४७॥

अव॑भृथ निचुम्पुण नि॒चेरु॑रसि निचु॒म्पुणः॑ ।
अव॑ दे॒वैर्दे॒वकृ॑त॒मेनो॑ऽयासिष॒मव॑ म॒र्त्यै॑र्मर्त्य॑कृतं ।
पु॒रु॒राव्णो॑ देव रि॒षस्पा॑हि ॥४८॥

यज्ञदेवतं यजुः । का° [५.५.३०.] मज्जयत्यवभृथेति । अत्र विनियोगश्चिन्त्य इति (28.) । वरुणप्रघासस्य कर्मणोऽन्ते तदङ्गभूतं यदवभृथाख्यं कर्म जलसमीपे क्रियतेऽत्रानेन मन्त्रेण दम्पतीभ्यां जले स्नानं कर्तव्यम् । हे अवभृथ अवाचीनानि पात्राणि जलमध्ये ध्रियन्ते यस्मिन्यज्ञविशेषे सोऽयमवभृथः । तत्सम्बोधनम् हे अवभृथ यज्ञ हे निचुम्पुण चुप मन्दायां गतौ [धा° ११.१.] नितरां चोपति

मन्दं गच्छति निचुम्पुणः । उणप्रत्ययो मुमागमश्च । यद्वा नीचैरस्मिन्क्वणन्ति नीचशब्देन कर्म कुर्वन्त्यवभृथो निचुम्पुणः । वीणास्थूणाव्रणभ्रूणेत्यादिना (29.) नीचैःशब्दोपपदात्क्वणतेः णक्प्रत्ययान्तो निपातः धातोः पुम्भाव उपपदस्य निचुंभावश्च निपातितः । तथाविधावभृथ यद्यपि त्वं निचेरुरसि नितरां चरतीति निचेरुः । नितरां गमनशीलोऽसि तथाप्यत्र निचुम्पुणो भव मन्दगमनो भव । किम्प्रयोजनमिति चेत् उच्यते । देवैर्द्योतनात्मकैरस्मदीयैरिन्द्रियैर्देवकृतं हविःस्वामिषु देवेषु कृतमेनः पापं यदस्ति तदवायासिषमस्मिन्जलेऽहमवनीतवानस्मि । तथा मर्त्यैः मनुष्यैरस्मत्सहायभूतैर्ऋत्विग्भिर्मर्त्यकृतं मर्त्येषु यज्ञदर्शनार्थमागतेषु कृतमवज्ञारूपं यदेनोऽस्ति तदप्यहमवायासिषमित्यनुवर्तते । इदमस्मत्त्यक्तं (30.) पापं यथा त्वां न व्याप्नोति तथा मन्दं गच्छेति भावः । किं च हे देवावभृथाख्य यज्ञ रिषो बधात्पाहि पालय । रिषतेर्हिंसार्थस्य क्विबन्तस्य पञ्चम्यां रूपम् । किम्भूताद्रिषः । पुरुराव्णः । रा दाने । पुरु बहु विरुद्धं फलं ददातीति पुरुरावा तस्मात् । आतो मनिन्नित्यादिना [पा॰ ३. २. ७४.] वनिप् । विरुद्धफलदायी बधस्त्वत्प्रसादादस्माकं मा भूदित्यर्थः ॥ ४८ ॥

VIII. पूर्णा दर्वि परा पत सुपूर्णा पुनरापत ।
वस्नेव विक्रीणावहा इषमूर्जꣳ शतक्रतो ॥ ४९ ॥

द्वे ऐन्द्यावनुष्टुभौ । साकमेधगतं कर्म किंचिदुच्यते ॥ का॰ [५. ६. ३४.] स्थाल्या दर्व्यादत्ते पूर्णा दर्वीति । दर्व्या स्थालीत ओदनग्रहणं करोति प्रथमया द्वितीयया तं जुहोति । हे दर्वि अन्नप्रदानसाधनभूते काष्ठादिनिर्मिते त्वं पूर्णा स्थाल्याः सकाशादन्नं गृहीत्वा पूर्णा भूत्वा परा पूर्णत्वादेवोत्कृष्टा सती पत इन्द्रं प्रति गच्छ । सुपूर्णा कर्मफलेन सुष्ठु पूर्णा सती पुनरापत भूयोऽस्मान्प्रत्यागच्छ । एवं दर्वीमुक्त्वा इन्द्रमाह । हे शतक्रतो बहुकर्मन् इन्द्र त्वं चाहं चोभौ वस्नेव वस्नशब्देन मूल्यं तृतीयायाः पूर्वसवर्णः मूल्येनेव । इषमभीष्टं हविःस्वरूपमन्नमूर्जं हविर्दानफलरूपं रसविशेषं च विक्रीणावहै परस्परं द्रव्यविनिमयरूपं विक्रयं करवावहै । अहं तुभ्यं हविर्ददामि त्वं मह्यं फलं देहीत्यर्थः ॥ ४९ ॥

देहि मे ददामि ते नि मे धेहि नि ते दधे ।
निहारं च हरासि मे निहारं निहराणि ते स्वाहा ॥५०॥

का° [५. ६. ३८.] देहि मऽइति जुहोतीति । इन्द्रो वदति । हे यजमान त्वं मे मह्यमिन्द्राय देहि । हविः प्रथमं प्रयच्छ । ते तुभ्यं यजमानाय ददामि । अपेक्षितं पश्चात्प्रयच्छामि । एवं प्रथमपादोक्त एवार्थो द्वितीयपादेनादरार्थं पुनरुच्यते । मे मह्यमिन्द्राय निधेहि प्रथमं त्वं हविर्नितरां संपादय ते तुभ्यं यजमानाय निदधे अपेक्षितं फलं नितरां संपादयामि । एवमिन्द्रवाक्यं श्रुत्वोत्तरार्धेन यजमान आह । नितरां (31.) ह्रियत इति निहारो मूल्येन क्रेतव्यं पदार्थं ब्रूते । निहारं मूल्येन क्रेतव्यवस्तुरूपं फलं मे मह्यं यजमानाय हरासि प्रयच्छ । लेटोऽडाटावित्याडागमः [पा° ३. ४. ९४.] । उत्तरो निहारो मूल्यवाची । निहारं मूल्यभूतं हविः ते तुभ्यमिन्द्राय निहराणि नितरां समर्पयामि । स्वाहाशब्दो हविर्दानार्थः । पूर्वार्धे पाददृयेनादरेणेन्द्रेण द्विवारं प्रोक्तमर्थमुत्तरार्धेन यजमानः सम्यगङ्गीकरोतीत्यर्थः ॥५०॥

IX. अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥५१॥

ऐन्द्रीभ्यां पङ्क्तिभ्यां साकमेधगतपितृयज्ञाख्यकर्मणि आहवनीयोपस्थानम् । यस्या अष्टाक्षराः पञ्च पादाः सा पङ्क्तिः । का° [५. ९. २१.] यज्ञोपवीतिनः सर्वे निष्क्रम्योदञ्चोऽक्षन्नमीमदन्तेत्याहवनीयमुपतिष्ठन्ते द्वाभ्यामिति । पितृयज्ञाख्ये कर्मणि ये पितरः सन्ति तेऽस्माभिर्दत्तं हविःस्वन्नरूपमन्नमक्षन् भक्षितवन्तः । कथमेतदवगम्यते । हि यस्मादमीमदन्त हर्षं प्राप्ताः अस्मदीयां भक्तिमवगम्य प्रियाः प्रीतियुक्ताः सन्तः अधूषत स्वकीयं शिरः कम्पितवन्तः । यद्वा प्रियास्तनूरवाधूषत । किं च स्वभानवः स्वयं दीप्तियुक्ताः विप्राः मेधाविनः सन्तः नविष्ठया नवतमया मती मत्या बुद्ध्या युक्ताः अस्तोषत स्तुतिं कृतवन्तः । अहो स्वाद्वन्नं बहु दत्तमहो भक्तिरित्याद्यभिधानं स्तुतिः अतो हे इन्द्र नु क्षिप्रं ते तव हरी एतन्नामकौ हरितवर्णावश्वौ योज गमनाय रथे योजय । तवाभीष्टायाः पितृतृप्तेः संपन्नत्वात्पितृभिः सह त्वया गन्तव्यमित्यर्थः । अक्षन् । अदेर्लुङि लुङ्सनोर्घस्लृ इति [पा° २.

४.३७.] घस्लादेशः (32.)। मन्त्रे घसेत्यादिना [पा° २.४.८०.] लेर्लुक्। गमहने-त्युपधालोपः [पा° ६.४.९८.]। खरि चेति [पा° ८.४.५५.] चर्त्वम्। शासि वसीति [पा° ८.३.६०.] षत्वम्। अडागमः॥ अमीमदन्त मद तृप्तियोगे चुरादिरात्मनेपदी लुङि णिलोपादौ रूपम्॥ अधूषत धूञ् कम्पने लुङि सिचि व्यत्ययेन गुणाभावः॥ मती सुपां सुलुगिति [पा° ७.१.३९.] तृतीयायाः पूर्वसवर्णदीर्घः॥ योज युजिर् योगे एयन्ताल्लोटि छन्दस्युभयथेति [पा° ३.४.११७.] शप आर्धधातुकत्वाणिर-निटीति [पा° ६.४.५१.] णिलोपः। द्व्यचोऽतस्तिङ इति [पा° ६.३.१३५.] संहितायां दीर्घः॥५१॥

सुसंदृशं त्वा वयं मघवन्वन्दिषीमहि।

प्र नूनं पूर्णबन्धुर स्तुतो यासि वशाँ२॥ऽअनु योजा न्विन्द्र ते हरी॥५२॥

हे मघवन्वयं त्वा त्वां वन्दिषीमहि (33.) स्तुतिकर्तारो भूयास्मेत्याशास्यते (34.)। किम्भूतं त्वाम्। सुसंदृशं सुष्ठु सम्यक्पश्यति सुसंदृक् तं शोभनदर्शनम्। अनुग्रहदृष्ट्या सर्वस्य द्रष्टारम्। इत्थमस्माभिः स्तुतः त्वं वशान्कामयमानान्यजमानाननु लक्षीकृत्य नूनं प्रयासि अवश्यं गच्छसि किम्भूतः पूर्णबन्धुरः बन्धुरशब्दो रथनीडवाची। स्तोतृभ्यो देयैर्धनैः सम्पूर्णरथनीडोपेतो भूत्वा गच्छसि। हे इन्द्र स त्वं ते हरी योजेति पूर्ववत्॥५२॥

मनो न्वाह्वामहे नाराशꣳसेन स्तोमेन।

पितृणां च मन्मभिः॥५३॥

तिस्र ऋचो मनोदेवत्या गायत्र्यो बन्धुदृष्टाः। का° [५.१.२२.] मनो न्वाह्वामहऽइति गार्हपत्यं तिसृभिरिति। उपतिष्ठन्तऽइत्यनुवर्तते॥ नु क्षिप्रं मन आह्वामहे पितृयज्ञानुष्ठानेन चित्तं पितृलोकं गतमिवासीत् अत आह्वयते। यद्वा मनः मनोऽभिमानि दैवतमाह्वामहे आह्वयामः। केन साधनेन स्तोमेन स्तोत्रेण कथम्भूतेन नाराशंसेन। शंसः प्रशंसनं नराणां मनुष्याणां योग्यः शंसो नराशंसः तत्सम्बन्धी नाराशंसस्तेन। स्तोत्रं द्विविधं दैवं मानुषं च यत्र देवाः स्तूयन्ते तद्दैवं यत्र च मनुष्याः प्रशस्यन्ते तन्मानुषं तथाविधेन स्तोत्रेणेत्युक्तं भवति। किं च पि-

तृणां च मन्मभिः पितरो यैः स्तोत्रैर्मन्यन्ते ते मन्मानस्तैः तादृशैः स्तोत्रैराह्वयामः ॥५३॥

आ न॑ एतु मन॒ः पुन॒ः क्रत्वे॒ दक्षा॑य जीवसे॑ ।
ज्योक्च॒ सूर्यं॑ दृशे ॥५४॥

नोऽस्माकं मनः पूर्वोक्तं चित्तं पुनर्भूयः आ एतु आगच्छतु किमर्थं क्रत्वे क्रतवे संकल्पाय यज्ञं संकल्पयितुं दक्षाय कर्मण्युत्साहाय । तथा च श्रुतिः । यदेव मनसा कामयतऽइदं मे स्यादिदं कुर्वीयेति स एवक्रतुरथ यदस्मै तत्समृध्यते स दक्ष इति । ज्योगिति निपातश्चिरवचनः । ज्योग्जीवसे चिरं जीवितुं सूर्यं दृशे च चिरकालं सूर्यमवलोकयितुं च । एतेषां संकल्पादीनां सिद्ध्यै मनः पुनरागच्छतु ॥ क्रत्वे । गुणाभावाद्यणादेशः ॥ जीवसे तुमर्थे असेप्रत्ययः ॥ दृशे । दृशे विख्ये चेति [पा० ३.४.११.] साधुः ॥५४॥

पुन॑र्नः पितरो॒ मनो॒ दद॑ातु॒ दैव्यो॒ जन॑ः ।
जी॒वं व्रात॑ᳬ सचेमहि ॥५५॥

हे पितरो भवदनुज्ञया दैव्यो जनो देवसम्बन्धी पुरुषः नोऽस्मभ्यं मनः पूर्वोक्तं चित्तं पुनर्भूयो ददातु प्रयच्छतु प्रेरयत्वित्यर्थः । तथा सत्यनुष्ठानं कृत्वा भवत्प्रसादाज्जीवं जीवनवन्तं व्रातं पुत्रपश्वादिकं गणं वयं सचेमहि सेवेमहि । सचतिः सेवनार्थः ॥५५॥

व॒यᳬ सो॑म व्र॒ते तव॒ मन॑स्त॒नूषु॒ बिभ्र॑तः ।
प्र॒जाव॑न्तः सचेमहि ॥५६॥

सोमदेवत्या गायत्री जपे विनियुक्ता । अत्र पितृयज्ञे सोमनामको देवोऽस्ति । सोमाय पितृमते इत्येवं हविषो विहितत्वात् । हे सोम वयं यजमानाः तव व्रते कर्मणि वर्तमानाः तनूषु भवच्छरीरेषु मनो बिभ्रतः अस्मदीयं चित्तं धारयन्तः त्वत्कारुण्यात्प्रजावन्तः पुत्रपौत्रादिसम्पन्नाः सन्तः सचेमहि सेवेमहि सेवितव्यानि वस्तूनीति शेषः । यद्वा षच् सम्बन्धे सर्वदा त्वत्सम्बद्धा भवेम ॥५६॥

X. a. एष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व स्वाहा ।

b. एष ते रुद्र भाग आखुस्ते पशुः ॥५७॥

द्वे रौद्रे यजुषी विंशत्यक्षरद्वादशाक्षरे ॥ ॥ साकमेधगतत्र्यम्बकहविर्विषया मन्त्रा उच्यन्ते । प्रथमस्य यजुषोऽवदानहोमे विनियोगः । तथा च का° [५. १०. १२.] एष तऽइति जुहोतीति । रोदयति विरोधिनां शतमिति रुद्रः । हे रुद्र ते तव स्वस्रा भगिन्या अम्बिकया अम्बिकानाम्न्या सह एषोऽस्माभिर्दीयमानः पुरोडाशः भागः भजनीयः स्वीकर्तुं योग्यः । तं तथाविधं पुरोडाशं त्वं जुषस्व सेवस्व स्वाहा इदं हविर्दत्तं सुहुतमस्तु । अम्बिकाया रुद्रभगिनीत्वं श्रुत्योक्तम् [२. ६. २. ९.] । अम्बिका ह वै नामास्य स्वसा तयास्यैष सह भाग इति । योऽयं रुद्राख्यः क्रूरो देवस्तस्य विरोधिनं हन्तुमिच्छा भवति तदानया भगिन्या क्रूरदेवतया साधनभूतया तं हिनस्ति । सा चाम्बिका शरद्रूपं प्राप्य ज्वरादिकमुत्पाद्य तं विरोधिनं हन्ति । रुद्राम्बिकयोस्तयोरुग्रत्वमनेन हविषा शान्तं भवति । तथा च तित्तिरिः । एष ते रुद्र भागः सह स्वस्राम्बिकयेत्याह शरद्वाऽअस्याम्बिका सा भियाऽएषा (?) (35.) हिनस्ति यं हिनस्ति (36.) तयैवैनं सह शमयतीमि ॥ का° [५. १०. १३.] अतिरिक्तमाखूत्करऽउपकिरत्येष तऽइतीति (37.) । यजमानस्य यावन्तः पुत्रभृत्यादयः पुरुषाः सन्ति तान्गणयित्वा प्रतिपुरुषमेकैकः पुरोडाश इत्येतावतः पुरोडाशान्निरुप्य ततोऽप्यधिकमेकं पुरोडाशं निर्वपेत् सोऽयमतिरिक्त उच्यते । त्रैयम्बकान्निर्वपति रौद्रानेककपालान्यावन्तो यजमानगृह्या एकाधिकानिति कात्यायनोक्तेः [५. १०. १. २.] । तत्र योऽयमतिरिक्तस्तं न जुहुयात्किंतु मूषकोत्खाते एष तऽइति मन्त्रेणोपकिरेत् । अथ मन्त्रार्थः । हे रुद्र एषोऽस्माभिरुपकीर्यमाणोऽतिरिक्तः पुरोडाशः ते भागः त्वया भजनीयः तथा ते तवाखुः पशुः मूषकः पशुत्वेन समर्पितः । आखुदानेन तुष्टो रुद्रस्तयाम्बिकया यजमानपशून्न मारयतीत्यर्थः ॥५७॥

अव रुद्रमदीमह्यव देवं त्र्यम्बकम् ।

यथा नो वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात् ॥५८॥

द्वे रौद्यौ पङ्क्तिककुभौ । यस्या द्वितीयः पादः द्वादशाक्षरः प्रथमतृतीयावष्टाक्षरौ सा ककुप् । द्वयोर्ऽपि विनियोगः । तथा का° [५.१०.१४.] आगम्याव रुद्रमदीमहीति जपतीति । रुद्रमव । असौ रुद्र इति मनसा तमवगत्यादीमहि त्वदनुग्रहादन्नं भक्षयेम । तथा त्र्यम्बकं त्रीण्यम्बकानि नेत्राणि यस्य तादृशं देवमव त्रिनेत्रोऽयं देव इति मनसावगत्यादीमहीत्यनुवर्तते । यद्वा अदीमहीत्यत्र णिचो लोपश्छान्दसः । अवधुत्यान्यदेवताभ्यः पृथक्कृत्य रुद्रमदीमहि आदयामो भोजयामः । अवगम्य ज्ञात्वा त्र्यम्बकमादयाम इति । यथा येन प्रकारेण नोऽस्मान्वस्यसः करत् वस्तृतरान्वसनशीलानसौ कुर्यात् । यथा च नोऽस्मान्श्रेयसः करत् ज्ञातिषु प्रशस्यतरान्कुर्यात् । यथा चास्मान्व्यवसाययात् सर्वेषु कार्येषु निश्चययुक्तान्कुर्यात् । तथैनं जपाम (38.) इत्यर्थः । आशीरियम् ॥ अदीमहि छन्दस्युभयथेत्यार्धधातुकत्वाल्लिङि णिचो लोपः [पा° ३.४.११७.] ॥ वस्यसः वसतीति वस्ता तृन् अतिशयेन वस्ता वसीयान् । तुश्छन्दसीति [पा° ५.३.५९.] ईयसुनि कृते तुरिष्ठेमेयःस्विति [पा° ६.४.१५४.] तृनो लोपः । वसीयस इति प्राप्ते ईलोपश्छान्दसः ॥ करत् छन्दसि लुङ्लङ्लिट इति [पा° ३.४.६.] लङ् विकरणव्यत्ययेन शपि गुणः । बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः [पा° ६.४.७५.] ॥ व्यवसाययात् लेटि आडागमे इतश्च लोपः परस्मैपदेष्विति [पा° ३.४.९७.] इलोपे रूपं विपूर्वस्य ण्यन्तस्य स्यतेः ॥५८॥

भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजम् ।
सुखं मेषाय मेष्यै ॥५९॥

हे रुद्र त्वं भेषजमसि औषधवत्सर्वोपद्रवनिवारकोऽसि । अतोऽस्मदीयेभ्यो गवे अश्वाय पुरुषाय च भेषजं सर्वव्याधिनिवारकमौषधं देहि । मेषाय मेष्यै च सुखं देहि । सुहितं खेभ्यः प्राणेभ्य इति सुखम् । अनेन मन्त्रेण गृहपशूनां क्षेमप्राप्तिर्भवति ॥५९॥

a. त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥

M*

b. त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् ।
उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः ॥ ६० ॥

द्वे अनुष्टुभौ । का॰ [५.१०.१५.१६.] अग्निं त्रिः परियन्ति पितृवत्सव्योरूनाघ्नानास्त्र्यम्बकमिति देववच्चैतेनैव दक्षिणानाघ्नाना इति । यथा पितृमेधे पुत्रादयः पुरुषाः स्वकीयान्वामोरूंस्ताडयन्तस्त्रिवारमप्रदक्षिणं परियन्ति । यथा च देवतासेवायां दक्षिणोरूंस्ताडयन्तस्त्रिः प्रदक्षिणं परियन्ति । एवमत्र पुरुषाः प्रथमेनैव त्र्यम्बकमन्त्रेणाग्निमप्रदक्षिणत्रयेण प्रदक्षिणत्रयेण च परियन्तीति सूत्रार्थः ॥ मन्त्रार्थस्तु ॥ सुगन्धिं दिव्यगन्धोपेतं मर्त्यधर्महीनं पुष्टिवर्धनं धनधान्यादिपुष्टेर्वर्धयितारं त्र्यम्बकं नेत्रत्रयोपेतं रुद्रं यजामहे पूजयामः । ततो रुद्रप्रसादान्मृत्योर्मुक्षीय अपमृत्योः संसारमृत्योश्च मुक्तो भूयासम् अमृतान्मा मुक्षीय स्वर्गरूपान्मुक्तिरूपाच्चामृतान्मा मुक्षीय मुक्तो मा भूयासम् । एकवचनं बह्वर्थे । मुक्ता मा भूयास्मेत्यर्थः । अभ्युदयनिःश्रेयसरूपात्फलद्वयान्मम भ्रंशो मा भूदित्यर्थः । मृत्योर्मोचने दृष्टान्तः । उर्वारुकमिव बन्धनादिति यथोर्वारुकं कर्कन्धादिः (39.) फलमत्यन्तपक्वं सत् बन्धनात्स्वस्य वृन्तात्प्रमुच्यते तद्वत् ॥ का॰ [५.१०.१७.] कुमार्यश्चोत्तरेणेति । यजमानसम्बन्धिन्यः कुमार्योऽपि पूर्वोक्तपुरुषवदुत्तरेण त्र्यम्बकमन्त्रेणाग्निं त्रिः परियन्ति । त्र्यम्बकं यजामहे कीदृशं पतिवेदनं पतिं वेदयतीति तं भर्तुर्लम्भयितारं वि ला-भे । अन्यत्पूर्ववत् । इतो मुक्षीय इतो मातृपितृभ्रातृवर्गान्मुक्षीय मुक्ता भूयासममुतो मा मुक्षीय विवाहादूर्ध्वं भविष्यतः पत्युर्मुक्ता मा भूयासं जनकस्य गोत्रं गृहं च परित्यज्य पत्युर्गोत्रे गृहे च सर्वदा त्र्यम्बकप्रसादाद्वसामीत्यर्थः । सा यदित इत्याह ज्ञातिभ्यस्तदाह मामुत इति पतिभ्यस्तदाहेति [२.६.२.१४.] श्रुतेरितोऽमुतःशब्दाभ्यां पितृपतिवर्गौ ग्राह्यौ ॥ ६० ॥

एतत्ते रुद्रावसं तेन परो मूजवतोऽतीहि ।
अवततधन्वा पिनाकावसः कृत्तिवासा अहिंसन्नः शिवोऽतीहि ॥ ६१ ॥

रौद्र्यास्तारपङ्क्तिः । यस्या अन्त्यौ द्वादशाक्षरावाद्यावष्टाक्षरौ पादौ सास्तारपङ्क्तिः ॥ का॰ [५.१०.२१.] मूतयोः कृत्वा वेणुयष्ट्यां वा (40.) कुपे वासज्योभयतः

स्थाणुवृक्षवंशवल्मीकानामन्यतमस्मिन्नुत्क्षेपणावदासज्यन्त्येतत्त इतीति । व्रीह्यादीन्बद्धा वहनार्थं (41.) तृणवंशादिनिर्मितः पात्रविशेषो मूतमित्युच्यते । तयोरुभयोर्मूतयोस्त्र्यम्बकान्हविःशेषान्प्रक्षिप्य स्वकीयेनांसेन वोढुं शक्यायां वंशयष्ट्यामग्रद्वये तन्मूतद्वयमवासज्योन्नते (42.) स्थाणौ वृक्षे वंशे वल्मीके वा मूतद्वययुतां वंशयष्टिं संसृजति । ततो गोभिराघ्रातुमशक्यत्वाद्गावो रोगं न प्राप्नुवन्तीत्यर्थः ॥ अथ मन्त्रार्थः । मूजवान्नाम कश्चित्पर्वतो रुद्रस्य वासस्थानम् । अवसशब्देन देशान्तरं गच्छतो मार्गमध्ये तटाकादिसमीपे भोक्तव्य ओदनविशेष उच्यते । हे रुद्र एतत्ते तव अवसं हविःशेषाख्यं भोज्यम् तेन सहितस्त्वं मूजवतः पर्वतात्परः परभागवर्ती सन्नतीहि अतिक्रम्य गच्छ । कीदृशस्त्वम् । अवततधन्वा अवरोपितधनुष्कः । अस्मद्विरोधिनां त्वया निवारितत्वादित ऊर्ध्वं धनुषि ज्यासमारोपणस्य प्रयोजनाभावादवरोपणमेवेदानीं युक्तम् । तथा पिनाकावसः पिनाकाख्यं त्वदीयं धनुरावस्ते सर्वत आच्छादयतीति पिनाकावसः । यथा धनुर्दृष्ट्वा प्राणिनो न बिभ्यति तथा त्वदीयं धनुर्वस्त्रादिना प्रच्छाद्य गच्छेत्यर्थः ॥ का० [५. १०. २२. २३.] कृत्तिवासा इत्यनवेक्षमेत्योपस्पृशत्यप (43.) इति । उन्नते वृक्षादौ मूतद्वयेऽवसज्य प्रत्यावर्तमाना मूतद्वयस्यावेक्षणमकृत्वा वेदिसमीपे समागत्योदकं स्पृशेयुरिति सूत्रार्थः । मन्त्रार्थस्तु हे रुद्र त्वं कृत्तिवासाः चर्माम्बरो नोऽस्मानहिंसन्हिंसामकुर्वन्शिवोऽस्मदीयपूजया संतुष्टः कोपरहितो भूत्वा अतीहि पर्वतमतिक्रम्य गच्छ ॥ ६१॥

त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् ।
यद्देवेषु त्र्यायुषं तन्नोऽअस्तु त्र्यायुषम् ॥ ६२॥

आशीर्दैवतोष्णिक् । यस्याश्चत्वारः पादाः सप्ताक्षराः सोष्णिक् । का० [५. २. १६.] त्र्यायुषमिति यजमानो जपतीति । सोऽयं जपो वपनकालीनः । जमदग्नेः मुनेर्यत्त्र्यायुषं त्रयाणां बाल्ययौवनस्थाविराणामायुषां समाहारस्त्र्यायुषं तथा कश्यपस्यैतन्नामकस्य प्रजापतेः सम्बन्धि यत्त्र्यायुषं तथा देवेषु इन्द्रादिषु यत्त्र्यायुषमस्ति तत्सर्वं त्र्यायुषं नोऽस्माकं यजमानानामस्तु । जमदग्न्यादीनां बाल्यादिषु यादृशं चरितं तादृशं नो भूयादित्यर्थः ॥ ६२॥

a. शिवो नामासि स्वधितिस्ते पिता नमस्तेऽअस्तु मा मा हिꣳसीः ।

b. निवर्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥ ६३ ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां तृतीयोऽध्यायः ॥ ३ ॥

क्षुरदेवतं यजुः । का° [५.२.१७.] शिवो नामेति लोहक्षुरमादायेति । हे क्षुर त्वं नाम नाम्ना शिवः शान्तोऽसि स्वधितिः वज्रं ते तव पिता । ते तुभ्यं नमोऽस्तु मां मा हिंसीः । का° [५.२.१७.] निवर्तयामीति वपतीति । यजमानदेवतं यजुः । निपूर्वो वृतिर्मुण्डनार्थः । हे यजमान त्वां निवर्तयामि मुण्डयामि किमर्थमायुषे जीवनाय अन्नाद्यायान्नभक्षणाय प्रजननाय संतानाय रायो धनस्य पोषाय पुष्ट्यै सुप्रजास्त्वाय शोभनापत्यतायै सुवीर्याय शोभनसामर्थ्याय ॥ ६३ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
अग्न्याधानादिपित्र्यान्तस्तृतीयोऽध्याय ईरितः ॥ ३ ॥

अथ काण्वशाखायां पाठविशेषः ॥ ॥

I. ॥ १ ॥१॥ २ ॥२॥ ३ ॥३॥ ४ ॥४॥ ५ [-भूम्ना भूमिरिव वरिम्णा-] ॥५॥ ६ ॥६॥ ७ ॥७॥ ८ ॥८॥

II. ॥ अग्निर्ज्योतिषं त्वा वायुमतीं प्राणवतीम् ॥ स्वर्ग्याꣳ स्वर्गायोपदधामि भास्वतीम् ॥ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा ॥१॥ सूर्यज्योतिषं त्वा वायुमतीं प्राणवतीम् ॥ स्वर्ग्याꣳ स्वर्गायोपदधामि भास्वतीम् ॥ सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ॥२॥ १० a ॥३॥ १० b ॥४॥ इह पुष्टिं पुष्टिपतिर्दधात्विह प्रजाꣳ रमयतु प्रजापतिः ॥ अग्नये गृहपतये रयिमते पुष्टिपतये स्वाहा ॥ अग्नयेऽन्नादायान्नपतये स्वाहा ॥५॥ अनमित्रं मेऽअधरागनमित्रमुदक्कृधि ॥ इन्द्रानमित्रं पश्चान्मेऽनमित्रं पुरस्कृधि ॥६॥ इन्द्रः पश्चादिन्द्रः पुरस्तादिन्द्रोऽअस्माँऽअभि यातु विश्वतः ॥ इन्द्रो विघाꣳसतां मनाꣳसि

विषूचीना व्यस्यतात् ॥७॥ समिदसि समिद्धो मेऽग्ने दीदिहि ॥ समेद्धा तेऽग्ने दीद्यासम् ॥८॥१६॥

III. ॥ ११ ॥१॥ १२ ॥२॥ १३ [- दातारांऽइषा० -] ॥३॥ १४ ॥४॥ १५ ॥५॥ १६ ॥६॥ १७ a. b. c ॥७॥ १७ d. १८ a - °धीमहि ॥८॥ १८ a वयस्वन्तो - - अदाभ्यम् ॥९॥ १८ b. १९ - स्तुतेन ॥१०॥ १९ सं प्रियेण - - ग्मिषीय । २० - - महो वो भक्षीय ॥११॥ २० ऊर्ज स्थो° - - °षं वो भक्षीय । रेवती रमध्वमस्मिन्योनावस्मिन्गोष्ठेऽस्मिन्क्षयेऽस्मिंल्लोके ॥१२॥ इहैव स्तेतो मापगात । २२ a ॥१३॥ २२ b ॥१४॥ २३ ॥१५॥ २४ ॥१६॥ २५ ॥१७॥ २६ ॥१८॥ इल्लऽएह्यदितऽएहि । मयि वः कामधरणं भूयात् ॥१९॥ २८ ॥२०॥ २९ ॥२१॥ ३० ॥२२॥ ३१ ॥२३॥ ३२ ॥२४॥ ३३ ॥२५॥ ३४ ॥२६॥ ३५ ॥२७॥ ३६ [- दूलभो रयोऽस्मांऽअग्नो°] । समिद्धो मा समर्धय प्रजया च धनेन च ॥२८॥४४॥

IV. ॥ ३७ a [°जाः प्रजया भूयास० सु°] ॥१॥ ३७ b. c. ३८ - °वित्तमम् ॥२॥ ३८ अग्ने सम्राल्लभि - - °स्व । ३९ - °त्यः प्रजावान्वसुवित्तमः ॥३॥ ३९ अग्ने - - °स्व । ४१ - एमसि ॥४॥ ४१ ऊर्ज - मानः । ४२ - बक्रुः ॥५॥ ४२ गृहानु - °न्तः । ४३ - °जावयः ॥६॥ ४३ अथो - शम्योः ॥७॥५१॥

V. ॥ ४४ ॥१॥ ४५ ॥२॥ ४६ [- मील्कुषी -] ॥३॥ ४७ ॥४॥ ४८ ॥५॥५६॥

VI. ॥ ४९ ॥१॥ ५० [- दधी । निहारं निर्हरामि ते निहारं निर्हरासि मे स्वाहा] ॥२॥५८॥

VII. ॥ ५१ ॥१॥ ५२ ॥२॥ ५३ [- न्वाहुवामहे -] ॥३॥ ५४ ॥४॥ ५५ ॥५॥ ५६ ॥६॥ ६४॥

VIII. ॥ ५७ ॥१॥ ५८ ॥२॥ ५९ [-सुगं मेषाय -] ॥३॥ ६० a ॥४॥ ६० b

॥५॥ ६१ [एतेन रुद्रावसेन परो मू॰ - शिवः शान्तोऽतीहि] ॥ ६ ॥ ७० ॥

IX. ॥ वाजिनां वाजोऽवतु भक्षोऽअस्मान्रेतः सिक्तममृतं बलाय । विश्वे देवा अभि यत्सम्बभूवुस्तन्मा धिनोतु प्रजया धनेन ॥१॥ वाज्यहं वाजिनस्योपहूत उपहूतस्य भक्षयामि । वाजी वाजी भूयासम् ॥२॥ सवित्रा प्रसूता दैव्य आप उदन्तु [उन्दन्तु?] ते तन्वम् [तनूम् .जटापाठे] ॥ दीर्घायुत्वाय वर्चसे ॥३॥ कश्यपस्य त्र्यायुषं त्र्यायुषं जमदग्नेः । यद्देवानां त्र्यायुषं तन्मेऽअस्तु त्र्यायुषम् ॥४॥ येन धाता बृहस्पतेरिन्द्रस्य चायुषेऽवपत् । तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय ॥५॥ दीर्घायुत्वाय बलाय वर्चसे । सुप्रजास्त्वाय चासा [च । असौ जटापाठे]ऽअथो जीव शरदः शतम् ॥ ६ ॥ ७६॥ नवानुवाकेषु षट्सप्ततिः ॥ ॥

इति काण्वशाखायां संहितापाठे तृतीयोऽध्यायः ॥ ॥

I. a. इदमगन्म देवयजनं पृथिव्या यत्र देवासोऽअजुषन्त विश्वे ।

b. ऋक्सामाभ्याᳪं संतरन्तो यजुर्भी रायस्पोषेण समिषा मदेम ।

c. इमा आपः शमु मे सन्तु देवीः ।

d. ओषधे त्रायस्व । e. स्वधिते मैनᳪं हिᳪंसीः ॥१॥

लक्ष्मीं नरहरिं वन्दे नीलकण्ठं त्रिलोचनम् ।
यो वेदार्थं स्मृतौ भक्तं वेदयेत्करुणाकरः ॥ (1.) ॥

आधानाग्निहोत्राग्न्युपस्थानचातुर्मास्यमन्त्रास्तृतीयाध्याये [क॰ १-८. ९-१०. ११-४३. ४४-६३] प्रोक्ताः । चतुर्थाध्यायमारभ्याष्टमस्य द्वात्रिंशत्कण्डिकापर्यन्तमग्निष्टोममन्त्रा उच्यन्ते । तेषां प्रजापतिर्ऋषिः । तत्र चतुर्थे यजमानसंस्कारपूर्वकं सोमक्रयमन्त्राः प्राधान्येनोच्यन्ते तत्रादौ यजमानः षोडशर्त्विजो वृत्वारण्योरग्नी समारोप्य शालां गच्छेत् ॥ तथा च का॰ [७. १. ३६.] समारोह्याग्नी शालास्तम्भं पूर्वार्द्धं गृहीत्वारणिपाणिराहेदमगन्मेति । द्वे अत्यष्टी त्र्यवसाने । तयोः कण्डिकयोः सप्त

मन्त्राः । आद्यावर्धर्चौ देवयजनदेवत्यौ ॥ आ इदमगन्मेति पदानि । व्यवहिताश्चेति [पा° १. ४. ८२.] उपसर्गक्रियापदयोर्व्यवधानम् । इदमिति हस्तेन प्रदर्श्यते । वयमिदं पृथिव्याः सम्बन्धि देवयजनं देवा इज्यन्ते यस्मिंस्तद्देवयजनं स्थानमा अगन्म आगताः स्मः । गच्छतेर्लङुत्तमबहुवचने व्यत्ययेन शपो लुकि मो नो धातोरिति [पा° ८. २. ६४.] मस्य नः । अडागमश्च । इदं किम् । यत्र देवयजने विश्वे देवासः सर्वे देवाः अजुषन्ताप्रीयन्त प्रीत्या स्थिता इत्यर्थः । किं च । वयं रायो धनस्य पोषेण पुष्ट्या इषा इष्यमाणेनान्नेन च संमदेम मदी हर्षे । व्यत्ययेन शप् । हृष्टा भवेम । धनैरन्नैश्च तृप्येम किं कुर्वन्तः । ऋक्सामाभ्यामृक्क साम च ऋक्सामे अचतुरेति [पा° ५. ४. ७७.] सूत्रेणाजन्तो निपातः । ताभ्यां यजुर्भिश्च वेदत्रयगतमन्त्रैः संतरन्तः समुद्रवद्गम्भीरं सोमयागं समापयन्त इत्यर्थः ॥ का° [७. २. ९.] दक्षिणं गोदानं वितार्योनत्तीमा आप इति । इमा आपः । आपो देवताः । इमा आपः शिरश्छेदाय सिच्यमाना एता आपो मे मम यजमानस्य शमु । उ एवार्थे । शं सुखार्थमव्ययम् । शं सुखकारिण्य एव सन्तु भवन्तु । किम्भूता आपः । देवीः देव्यः दीव्यन्ति ताः देव्यः । द्योतना निर्मला इत्यर्थः ॥ का° [७. २. १०. ११.] यूपवत्कुशतरुणं क्षुरेण चाभिनिधाय छिन्त्वेति । यथा पश्वर्थयूपस्य छेदे मन्त्रः एवमत्रापि तृणान्तर्धानं क्षुरस्थापनं च मन्त्रद्वयेन कर्तव्यमिति सूत्रार्थः । ओषधे । कुशतरुणं देवता । हे ओषधे कुशतरुण त्वं यजमानं त्रायस्व क्षुराद्रक्ष । स्वधिते । क्षुरो देवता हे स्वधिते क्षुर एनं यजमानं मा हिंसीः ॥ १ ॥

a. आपो॑ऽअस्मान्मा॒तरः॑ शुन्धयन्तु घृ॒तेन॑ नो घृत॒प्वः॑ पुनन्तु ।
विश्व॑ꣳ हि रि॒प्रं प्र॒वह॑न्ति दे॒वीः ।

b. उदिदा॑भ्यः शुचि॒रा पू॒त ए॑मि ।

c. दी॒क्षा॒त॒पसो॑स्त॒नूर॑सि॒ तां त्वा॑ शि॒वाꣳ श॒ग्मां परि॑दधे भ॒द्रं वर्णं॒ पुष्य॑न्
॥ २ ॥

का° [७. २. १५.] आपोऽअस्मानिति स्नात्वेति । मातरः मिमते ता मातरो जगन्निर्मात्र्यो मातृवत्पालयित्र्यो वा आपः अस्मान् कृतक्षौरान्यजमानान् शुन्धयन्तु

शुन्ध शुद्धौ शोधयन्तु क्षौरकर्मनिर्मितामपहतिं निवारयन्त्वित्यर्थः । किं च घृतप्वः घृ क्षरणे जिघर्ति क्षरति घृतं तेन क्षरितजलेन पुनन्तीति घृतप्वः जलदेवतास्ताश्च घृतेन क्षरितजलेन नोऽस्मान्पुनन्तु शुद्धान्कुर्वन्तु । किं च । देवीः द्योतमाना आपो विश्वं हि हि एवार्थः सर्वमेव रिप्रं पापं प्रवहन्ति प्रकर्षेणापनयन्तु । रपो रिप्रमिति पापनामनी भवत इति यास्कः [निरु॰ ४.२१.] ॥ का॰ [७.२.१५.] उदिदाभ्य इत्युत्क्रामत्युत्तरपूर्वार्धमिति । अहमाभ्योऽद्भ्यः उदेमि इत् इदेवार्थे उद्गच्छाम्येव । जलान्निर्गच्छामीत्यर्थः । किम्भूतोऽहं शुचिः शुद्धः स्नानेन । तथा आपूतः (1a.) समन्ताद्भाविनान्तरपि शुद्ध आचमनेन । शुचिरापूत इति शब्दाभ्यां स्नानाचमनाभ्यां बहिरन्तश्च शुद्धिरुक्ता ॥ का॰ [७.२.१६-१९.] क्षौमं वस्ते निष्पेष्टवै ब्रूयादहतं चेदद्भिरभ्युक्ष्य स्नातवस्त्रं वाऽमौत्रधौतं विचितकेशं (2.) प्रसारितदशं दीक्षातपसोरिति ॥ दीक्षातपसोः । वासो देवता । हे क्षौम वस्त्र त्वं दीक्षातपसोस्तनूरसि दीक्षा दीक्षणीयेष्टिः तप उपसदिष्टिः । दीक्षाभिमानिदेवतायास्तपोऽभिमानिदेवतायाश्च त्वं शरीरवत्प्रियमसि । तां दीक्षातपसोस्तनूं तद्देवताद्वयशरीरभूतां त्वामहं परिदधे धारयामि । किम्भूतां त्वां शिवां शग्मां द्वयोरपि शब्दयोः सुखवाचकत्वादत्यन्तसुखरूपां कोमलत्वात् । किम्भूतोऽहम् । भद्रं वर्णं पुष्यन् त्वत्परिधानेन कल्याणीं कान्तिं पुष्यन् ॥ २ ॥

II. a. म॒ही॒नां॒ पयो॑ऽसि वर्चो॒दा अ॑सि॒ वर्चो॑ मे देहि ।

b. वृ॒त्रस्या॑सि क॒नीन॑कश्चक्षु॒र्दा अ॑सि॒ चक्षु॑र्मे देहि ॥ ३ ॥

का॰ [७.२.३३.] शालां पूर्वेण तिष्ठन्नभ्यङ्क्ते कुशेषु नवनीतेन शीर्ष्णोऽध्यनुलोमं सपादको महीनां पयोऽसीति । प्राचीनशालापूर्वभागेषु कुशेषु स्थित्वा नवनीतं गृहीत्वा शिरस आरभ्य पादान्तं शरीराभ्यङ्गं कुर्यादिति सूत्रार्थः । महीनां पयः । नवनीतमुच्यते हे नवनीत त्वं महीनां गवां पयोऽसि । महीति गोनामसु पठितम् [निघ॰ २.११.] । नवनीतस्य क्षीरजन्यत्वात्पयस्त्वोपचारः । वर्चोदा असि । वर्चो ददातीति वर्चोदाः । अतिस्निग्धत्वेन कान्तिप्रदमसि पुंस्त्वमार्षमतो मे मह्यं यजमानाय वर्चो देहि कान्तिं प्रयच्छ ॥ का॰ [७.२.३४.] वृत्रस्येत्यक्ष्यावनक्ति

त्रिककुदाञ्जनेनाभावेऽन्यदिति । त्रिककुत्पर्वताउत्पन्नाञ्जनं लभ्यते चेत्तेनाञ्जिद्वयमञ्ज्यात्तदभावेऽन्यदप्यञ्जनं ग्राह्यमिति सूत्रार्थः । वृत्रस्य । ग्रञ्जनं देवता । हे ग्रञ्जन त्वं वृत्रस्यासुरस्य कनीनकोऽसि नेत्रमध्यगतकृष्णमण्डलरूपोऽसि । यत्र वाऽइन्द्रो वृत्रमहंस्तस्य यदक्ष्यासीदित्यादिश्रुतिः [३. १. ३. १२.] । तथा च तित्तिरिः । इन्द्रो वृत्रमहन् (3.) तस्य कनीनिका परापतत्तदेवाञ्जनमभवदिति । चक्षुर्दा ग्रसि कनीनिकारूपत्वात्त्वं दृष्टिप्रदोऽसि ग्रतो मे मह्यं चक्षुर्देहि सम्यग्दृष्टिपाटवं प्रयच्छ ॥३॥

a. चित्पतिर्मा पुनातु । b. वाक्पतिर्मा पुनातु ।

c. देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।

तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥४॥

का° [७. ३. १.] कुशपवित्रैः चित्पतिर्मेति पावयति सप्तभिः सप्तभिः प्रतिमन्त्रमच्छिद्रेणेति सर्वत्रेति । ग्रच्छिद्रेणेति शेषस्त्रिष्वपि मन्त्रेष्वनुषज्यते । चित्पतिर्मा । चित्तां ज्ञानानां पतिश्चित्पतिर्मनोऽभिमानी देवो मा मां यजमानं पुनातु शोधयतु मनो वै चित्पतिरिति तित्तिरिवाक्यात् । यद्वा चित्पतिः प्रजापतिः प्रजापतिर्वै चित्पतिरिति श्रुतेः [३. १. ३. २२.] । किं चाच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः किरणैः । वायुरच्छिद्रं पवित्रं शुद्धिहेतुत्वात् छिद्ररहितत्वाच्च यद्वादित्यमण्डलमच्छिद्रं पवित्रम् । ग्रसौ वाऽग्रादित्योऽच्छिद्रं पवित्रमिति श्रुतेः । हे पवित्रपते पवित्रान्शुद्धान्पाति पवित्रपतिस्तत्सम्बुद्धौ हे पवित्रपते शुद्धपालक ते पवित्रपूतस्य तव पवित्रेण पूर्वोक्तेन शुद्धस्य तस्य यजमानस्याभीष्टं भूयादिति शेषः । तदेव स्पष्टयति । यत्कामोऽहं पुने तत् शकेयम् यः कामो यस्य यत्कामः यद्वा यस्मिन्कामो यस्य स यत्कामः सोमयागानुष्ठाने कामवानहं पुने ग्रात्मानं शोधयामि तत्सोमयागानुष्ठानं शक्तो भूयासम् । यज्ञानुष्ठानसामर्थ्यं मेऽस्त्वित्यर्थः ॥ वाक्पतिः वाचां पतिर्बृहस्पतिर्मा मां पुनातु ॥ सविता देवोऽन्तर्यामी मा मां पुनातु । एतन्मन्त्रद्वयं पूर्ववद्योज्यम् ॥४॥

ग्रा वो देवास ईमहे वामं प्रयत्यध्वरे ।

ग्रा वो देवास ग्राशिषो यज्ञियासो हवामहे ॥५॥

N*

का॰ [७.३.६.] आ वो देवास इति वाचयतीति । अध्वर्युर्यजमानं वाचयति । दैवी अनुष्टुप् आशीः । हे देवासः देवाः वयं वो युष्मान्वामं वननीयं यज्ञफलमा ईमहे साकल्येन याचामहे । वन्यते भज्यतऽइति वामम् । वन सम्भक्तौ । मप्रत्ययः । ईमहे याचतिकर्मसु पठितः द्विकर्मकः [निघ॰ ३.१९.] । क्व सति अध्वरे अस्मदीये यज्ञे प्रयति प्रवर्तमाने सति प्रैतीति प्रयन् तस्मिन् प्रपूर्वादिणः शतरि रूपम् । किं च हे देवासो देवा वो युष्मान्वयं हवामहे आह्वयामः । किं कर्तुं यज्ञियासः । यज्ञस्येमा यज्ञिया यज्ञसम्बन्धिनीराशिषः फलानि आ आनितुं समानितुमित्यर्थः । उपसर्गेण धातुरध्याहर्तव्यः । यज्ञफलं प्राप्तुं युष्मानाह्वयाम इत्यर्थः ॥५॥

a. स्वाहा य॒ज्ञं मन॑सः । b. स्वाहो॒रोर॒न्तरि॑क्षात् ।
c. स्वाहा॒ द्यावा॑पृथि॒वीभ्या॑म् । d. स्वाहा॒ वाता॒दार॑भे॒ स्वाहा॑ ॥ ६ ॥

का॰ [७.३.७-१०.] स्वाहा यज्ञमित्यङ्गुलीऽअचति नानाहस्तयोरेवं७ शेषं प्रतिमन्त्रं मुष्टी कृत्वा स्वाहेत्युक्त्वा वाग्यतोऽङ्गुष्ठौ तत्सहिते चोत्सृजतीति ॥ आद्यमन्त्रेण हस्तद्वयकनिष्ठिकाद्वयं संकोचयति एवमन्यत्रयेणान्याः । स्वाहा वातादारभऽइत्युत्तमेन मुष्टिद्वयं कुर्यादिति सूत्रार्थः ॥ स्वाहा यज्ञम् । चतुर्णां यजुषां यज्ञो देवता । स्वाहाशब्दस्य निपातत्वेनानेकार्थत्वादुचिता अर्था ब्राह्मणानुसारेण ग्राह्याः । तथा हि । स्वाहा यज्ञं मनसः । मनस इति पञ्चमी तृतीयार्थे मनसा यज्ञं स्वाहा चित्तेन यज्ञमभिगच्छामि अत्र स्वाहाशब्दोऽभिगमनार्थः ॥ स्वाहोरोरन्तरिक्षात् । पञ्चमी सप्तम्यर्थे उरौ विस्तीर्णेऽन्तरिक्षे स्वाहा यज्ञ आश्रितः । स्वाहाशब्दो यज्ञार्थोऽतः प्रभृति ॥ स्वाहा द्यावापृथिवीभ्याम् । द्यावापृथिव्योः स्वाहा यज्ञः श्रितः (4.) । लोकत्रयव्यापी यज्ञ इत्यर्थः ॥ स्वाहा वातादारभे । वाताद्वायुप्रसादात्स्वाहा यज्ञमारभे प्रवर्तयामि । वायोः सर्वकर्मप्रवर्तकत्वात् ॥ स्वाहा यज्ञ एवं सिद्ध इति शेषः ॥ ६ ॥

III. a. आकू॑त्यै प्र॒युजे॒ऽग्नये॒ स्वाहा॑ । b. मे॒धायै॒ मन॑से॒ऽग्नये॒ स्वाहा॑ ।
c. दी॒क्षायै॒ तप॑से॒ऽग्नये॒ स्वाहा॑ । d. सर॑स्वत्यै पू॒ष्णेऽग्नये॒ स्वाहा॑ ।
e. आपो॑ दे॒वीर्बृ॑हतीर्विश्वशम्भुवो॒ द्यावा॑पृथि॒वी॒ उरो॑ऽअ॒न्तरि॑क्ष ।

बृहस्पतये हविषा विधेम स्वाहा ॥७॥

अतः परं षडौद्ग्रभणहोममन्त्राः । चतुर्णामग्निर्देवता । का° [७.३.१६.] औद्ग्रभणानि जुहोति स्थाल्याः स्रुवेणाकूत्याऽइति प्रतिमन्त्रमिति ॥ आकूत्यै प्रयुजेऽग्नये स्वाहा । अग्नये वह्निदेवाय स्वाहा सुहुतमिदमस्तु । किम्भूतायाग्नये आकूत्यै प्रयुजे । यज्ञं करिष्यामीत्येवंविधो मानसः संकल्प आकूतिः तस्यै तत्संपूर्त्यै प्रयुजे प्रयुङ्क्तेऽसौ प्रयुक् तस्मै । संकल्पसिद्धौ निर्विघ्नं प्रेरयते इत्यर्थः । इति प्रथमो मन्त्रः ॥ मेधायै मनसेऽग्नये स्वाहा । श्रुतयोर्मन्त्रतन्त्रयोर्धारणाशक्तिर्मेधा तत्सिद्ध्यर्थं मनसे मदीयमनोऽभिमानिनेऽग्नये स्वाहा सुहुतमस्तु । विद्याधारणाशक्तिर्हि मनसः स्वास्थ्ये सत्येव भवति । इति द्वितीयः ॥ जपति । दीक्षायै तपसेऽग्नये स्वाहा । व्रतनियमो दीक्षा तत्सिद्ध्यर्थं मदीयशारीरतपोऽभिमानिनेऽग्नये स्वाहा । नियमसंरक्षणं तपसैव भवति । ततस्तपोदात्रे इत्यर्थः । इति तृतीयः ॥ सरस्वत्यै पूष्णेऽग्नये स्वाहा । मन्त्रोच्चारणशक्तिः सरस्वती तत्सिद्ध्यर्थं पूष्णे पुष्णातीति पूषा तस्मै वागिन्द्रियपोषकायाग्नये हुतमस्तु । इति चतुर्थः ॥ आपो देवीः । लिङ्गोक्तदेवता विराट् यस्या एकादशाक्षरास्त्रयः पादाः सा विराट् । दशकास्त्रयो विराडेकादशका वेत्युक्तेः । अत्र प्रथमो द्वादशार्णस्त्वेनैकाधिका । हे आपः हे द्यावापृथिवी द्यावापृथिव्यौ हे उरो विस्तीर्ण अन्तरिक्ष युष्मभ्यं बृहस्पतये च हविषा विधेम हविर्दद्मः । द्वितीयार्थे तृतीया । विधतिर्दानकर्मा । स्वाहा सुहुतमस्तु । किम्भूता आपः । देवीः देव्यो द्योतमानाः बृहतीः बृहत्यः प्रभूताः उभयत्र पूर्वसवर्णः । विश्वशम्भुवः विश्वस्य जगतः शं सुखं भावयन्ति जनयन्ति वा विश्वशम्भुवः । इति पञ्चमो मन्त्रः ॥७॥

विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् ।
विश्वो रायऽइषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहा ॥८॥

अथ षष्ठः । सवितृदेवत्यानुष्टुप् स्वस्त्यात्रेयदृषा । विश्वो मर्तः सर्वो मनुष्यो नेतुः फलप्रापकस्य देवस्य दानादिगुणयुक्तस्य सवितुः सख्यं सखिभावं वुरीत वृणुते प्रार्थयते । वृञ् वरणेऽस्माल्लिङि तङि प्रथमैकवचने (5.) व्यत्ययेन शपो

लुकि उदोऽनुपूर्वस्येति [पा° ७.१.१०२.] अत उदादेशः । किं च विश्वः सर्वो जनो राये धनाय इषुध्यति सवितारं प्रार्थयते । इषुध्यतिर्याञ्चाकर्मसु पठितः [निघ° ३.१९.] किं च द्युम्नं द्योततेर्यशो वान्नं वा तच्च वृणीत प्रार्थयते । किमर्थं पुष्यसे पोषाय स्वप्रजापालनाय । पुषेस्तुमर्थे असेप्रत्ययः । यः इत्थम्भूतः सविता तस्मै स्वाहा । इति षष्ठ औद्ग्रभणमन्त्रः । समाप्तास्ते ॥ ८ ॥

IV. a. ऋक्सामयोः शिल्पे स्थस्ते वामारभे ते मा पातमास्य यज्ञस्योदृचः ।

b. शर्मासि शर्म मे यच्छ नमस्तेऽअस्तु मा मा हिꣳसीः ॥ ९ ॥

का° [७.३.२३.] कृष्णाजिनयोः संधिमालभत (6.) ऽऋक्सामयोरितीति ॥ कृष्णाजिने देवते । हे कृष्णाजिनगते शुक्लकृष्णरेखे युवामृक्सामयोः शिल्पे स्थः ऋगभिमानिसामाभिमानिदेवतयोः सम्बन्धिनी शिल्पे चातुर्ये तद्रूपे भवतः । यद्वै प्रतिरूपं तच्छिल्पमिति श्रुतेः [३.२.१.५.] । ते वां तथाविधे युवामारभे अहं स्पृशामि ते मा पातं तथाविधे युवां मा मां पालयतम् । कियन्तं कालमिति चेत्तदाह । अस्य यज्ञस्य आ उदृचः उत्तमा चरमा ऋगुदृक् तस्या उदृचः आ तत्पर्यन्तं पञ्चम्यपाङ्परिभिः [पा° २.३.१०.] पञ्चमी । एतद्यज्ञसमाप्तिपर्यन्तमित्यर्थः । ऋक्सामाभिमानिन्यौ देवते देवानां यज्ञार्थं स्थिते सत्यौ केनापि निमित्तेन कृष्णमृगरूपं कृत्वा देवेभ्यः पलाय्य दूरे कुत्राप्यतिष्ठतां तन्मृगचर्मणि यच्छुक्लं तदृचो रूपं यत्कृष्णं तत्साम्नो रूपम् । तदुक्तं तित्तिरिणा [६.१.३.] । ऋक्सामे वै देवेभ्यो यज्ञार्थं तिष्ठमाने (6a.) कृष्णमृगरूपं कृत्वापक्रम्यातिष्ठतामेष वाऽऋचो वर्णो यच्छुक्लं कृष्णाजिनमस्यै साम्नो यत्कृष्णमिति ॥ का° [७.३.२४.] दक्षिणजान्वनुनारोहति शर्मासीति । हे कृष्णाजिन त्वं शर्म शरणमसि । अतो मे मह्यं शर्म शरणं यच्छ देहि । स्वकीयत्वेन स्वीकुर्वित्यर्थः । ते तुभ्यं कृष्णाजिनाय नमोऽस्तु मा मां यजमानं मा हिंसीः मा जहि ॥ ९ ॥

a. ऊर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मयि धेहि ।

b. सोमस्य नीविरसि । c. विष्णोः शर्मासि शर्म यजमानस्य ।

d. इन्द्रस्य योनिरसि । e. सुसस्याः कृषीस्कृधि ।

f. उच्छ्रयस्व वनस्पतऽऊर्ध्वो मा पाह्यꣳहस आस्य यज्ञस्योदृचः ॥ १० ॥

का° [७. ३. २६.] मेखलां बध्नीते वेणिं त्रिवृतꣳ शणमुञ्जमिश्रामन्तरां वासस ऊर्गसीति ॥ अङ्गिरोभिर्दृष्टं मेखलं (7.) यजुः । हे मेखले त्वमाङ्गिरसी अङ्गिरोनामकानामृषीणां सम्बन्धिनी ऊर्क् अन्नरसरूपासि किम्भूता ऊर्णम्रदाः ऊर्णेव म्रदीयसी (8.) कम्बलवन्मृदुरसि । तथाविधा त्वमूर्जमन्नरसं मयि धेहि स्थापय । अङ्गिरसः स्वर्गं लोकं गच्छन्तोऽन्नरसं व्यभजन्त विभज्यमानेऽवशिष्टोऽन्नरसो भूमौ पतितः शणमुञ्जनामकतृणरूपेणाविर्भूतस्तस्माच्छणमुञ्जमयी मेखला अत एव मेखलाया आङ्गिरसत्वमिति तित्तिरिणा प्रत्यपादि ॥ का° [७. ३. २७.] नीविं कुरुते सोमस्य नीविरिति । हे मेखले त्वं सोमस्य नीविरसि सोमदेवतायाः प्रियभूता ग्रन्थिरसि । मूलाग्रयोरेकीकरणेन ग्रन्थिविशेषो नीविरुच्यते । अदीक्षितस्य पितृदेवत्या नीविरुक्ता दीक्षितस्य तु सोमयागाय (9.) नीविः सोमेन व्यपदिश्यते । का° [७. ३. २८.] शिरः प्रोर्णुते विष्णोः शर्मेति । हे वस्त्र त्वं विष्णोः व्यापकस्य यज्ञस्य शर्मासि सुखहेतुर्भवसि अतो यजमानस्य शर्म सुखं कुर्विति शेषः ॥ का° [७. ३. २९ - ३१.] कृष्णविषाणां त्रिवलिं पञ्चवलिं (10.) वोत्तानां दशायां बध्नीते तया कण्डूयनमुपस्पृशत्येनया दक्षिणस्या भ्रुव उपरीन्द्रस्य योनिरितीति । हे कृष्णविषाणे त्वं यथा पूर्वमिन्द्रस्य योनिरसि तथेदानीं यजमानस्य स्थानं भवेति शेषः । पुरा कदाचिद्यज्ञपुरुषो दक्षिणां देवीं समभवत्तस्मात्सम्भावनादिन्द्रोऽजायत तदानीमत्रान्यस्योत्पत्तिर्मा भूदिति विचार्येन्द्रः स्वां योनिं दक्षिणाया आच्छिद्य मृगेषु न्यदधात् निहिता सा योनिः कृष्णविषाणाभूदिति तित्तिरिश्रुतौ यज्ञो दक्षिणामभ्यधादित्याख्याने कथा तस्मात्कृष्णविषाणाया इन्द्रयोनित्वम् ॥ का° [७. ३. ३२.] भूमौ चोल्लिखति सुसस्या इतीति । हे कृष्णविषाणे त्वं कृषीः सुसस्याः कृधि । कुरु करोतेः शपि लुप्ते श्रुशृणुपृकृवृभ्यश्छन्दसीत्यादिना [पा° ६.४.१०२.] हेर्धिः । शोभनं सस्यं यासु ताः सुसस्याः सस्यं व्रीहियवादि । तदर्थो भूम्युल्लेखः कृषिः यजमानानां कृषयः सन्ति ताः सर्वाः शोभनधान्याः कर्वित्यर्थः ॥ का° [७. ४. १. २.] मुखसंमितमौदुम्बरं दण्डं प्रयच्छत्युच्छ्रयस्वेत्येनमुच्छ्रयतीति । दण्डो देवता । हे वनस्पते वृक्षावयव दण्ड उच्छ्रयस्व उन्नतो भव । ऊर्ध्वो भूत्वा अंहसः पापात् मा मां पाहि रक्ष तत्र कालावधिरुच्यते । अस्यानुष्ठीयमानस्य यज्ञस्य उदृचः उत्तमायाः समाप्तिगतायाः ऋचः आ तदृक्पर्यन्तमित्यर्थः॥१०॥

V. a. व्रतं कृणुताग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञियः ।

b. दैवीं धियं मनामहे सुमृडीकामभिष्टये

वर्चोधां यज्ञवाहसꣳ सुतीर्था नोऽअसद्वशे ।

c. ये देवा मनोजाता मनोयुजो दक्षक्रतवस्ते नोऽवन्तु ते नः पान्तु तेभ्यः

स्वाहा ॥११॥

का° [७.४.१५.] व्रतं कृणुतेति वाग्विसर्जनं त्रिरुक्त्वेति । मौनोपस्थितस्य (11.) यजमानस्यैतन्मन्त्रोच्चारणं वाग्विसर्जनसाधनम् । हे परिचारका व्रतं कृणुत दोहनादिना क्षीरं संपादयत । दीक्षितस्य भोजनाय यन्नियतं पयस्तद्व्रतमित्युच्यते । वाक्यावृत्तिरादरार्था ॥ का° [७.४.१५.] अग्निर्ब्रह्मेति च सकृदिति । एतमपि मन्त्रं सकृत्पठेत् । अग्निर्ब्रह्म ब्रह्मशब्देन वेदत्रयमभिधीयते तस्य वेदत्रयस्याग्नित्वमुपचर्यते । आधानेन निष्पन्नस्य वैदिकस्याग्नेर्वेदव्यतिरेकेणासम्भवात् । तस्मादयं श्रौतोऽग्निर्ब्रह्मैव वेदरूप एव ॥ अयमग्निर्यज्ञः तस्य अग्नेर्यज्ञसाधनत्वाद्यज्ञत्वमुपचर्यते ऽग्निर्यज्ञ एवेति ॥ वनस्पतिः । यज्ञियः यज्ञयोग्यो यो वनस्पतिः खादिरादिः सोऽपि यज्ञ इत्यनुवर्तते वनस्पतेर्यज्ञसाधनत्वाद्यज्ञत्वम् । तथा च श्रुतिः [३.२.२.१.] । न हि मनुष्या यज्ञेरन्यद्वनस्पतयो न स्युरिति ॥ का° [७.४.३२.] दैवीं धियमिति व्रतायोपस्पर्शनꣳ स्वासनऽइति । शक्वरी अतिशक्वरी वा । पूर्वार्धेनाचमनम् । वयं धियं मनामहे यज्ञानुष्ठानविषयां बुद्धिं याचामहे । मनामहऽइति याञ्चाकर्मसु पठितः [निघ° ३.१९.] । किमर्थमभिष्टये अभि समन्ताद्यजनमभिष्टिः । अभिपूर्वस्य यजतेः क्तिनि आदिलोपः । अभिमुखत्वेन प्राप्तस्य यज्ञस्य सिद्ध्यर्थम् । किम्भूतां धियं दैवीं देवसम्बन्धिनीं देवतोद्देशेन प्रवृत्तामित्यर्थः । तथा सुमृडीकाम् सुष्ठु मृडयति सुमृडीका ताम् शोभनसुखहेतुम् । तथा वर्चोधां वर्चो दधाति वर्चोधास्तां तेजसो धारयित्रीम् । तथा यज्ञवाहसम् यज्ञं वहति यज्ञवाहास्तां यज्ञनिर्वाहकर्त्रीम् । तथाविधा धीः सुतीर्था सुखेन तरीतुं प्राप्तुं शक्या सुतीर्था यद्वा सुष्ठु तीर्थमवतरणमार्गो यस्यां सा । एवंविधा सती नो वशे असत् अस्माकमधीनत्वे भवतु ॥ का° [७.४.३३.] ये देवा इति व्रतयत्यमृन्मयऽइति । ये देवा ईदृशाः दीव्यन्ति

द्योतन्ते तऽइति देवाश्चक्षुरादीन्द्रियरूपाः प्राणाः । वागेवाग्निः प्राणोदानौ मित्रावरुणौ चक्षुरादित्यः श्रोत्रं विश्वे देवा इति [३.२.२.१३.] श्रुत्युक्ताः । किम्भूताः मनोजाताः दर्शनश्रवणादीच्छारूपान्मनस उत्पन्नाः इच्छोत्पत्तौ तेषां प्रवर्तमानत्वात् । तथा मनोयुजः रूपादिदर्शनकालेऽपि मनसा युक्ता एव वर्तन्ते । अन्यमनस्कस्य रूपादिप्रतिभासाभावात् । यद्वा स्वप्नावस्थायां मनसा युज्यन्ते ते मनोयुजः । तथा दक्षक्रतवः दक्षाः कुशलाः क्रतवः संकल्पाः येषां ते संकल्पितार्थकारिण इत्यर्थः । ते देवा नोऽस्मानवन्तु यज्ञानुष्ठानविघ्नपरिहारेण पालयन्तु तेभ्यः प्राणरूपेभ्यः देवेभ्यः स्वाहा इदं क्षीरं हुतमस्तु ॥११॥

श्वात्राः पीता भवत यूयमापोऽअस्माकमन्तरुदरे सुशेवाः ।

ता अस्मभ्यमयक्ष्मा अनमीवा अनागसः स्वदन्तु देवीरमृता ऋतावृधः ॥१२॥

का° [७.४.३५.] श्वात्राः पीता इति नाभिमालभतऽइति । अब्देवत्या जगती । हे आपः क्षीररूपा यूयं मया पीताः सत्यः श्वात्राः क्षिप्रपरिणामाः शीघ्रं जीर्णा भवत । श्वात्रमिति क्षिप्रनामाशु अतनं भवतीति यास्कः [निरु° ५.३.] । किं च अस्माकं पीतवतामन्तरुदरे जलपाकस्थाने सुशेवाः शोभनसुखाः भवतेत्यनुवर्तते । सुष्ठु शेवं याभ्यस्ताः । शेवमिति सुखनाम [निघ° ३.६.] । किं च । तास्तथाविधा आप अस्मभ्यमस्मदुपकारार्थं स्वदन्तु स्वादुत्वयुक्ता भवन्तु किम्भूतास्ताः । अयक्ष्माः प्रबलरोगराजरहिताः । अनमीवाः सामान्यरोगनिवर्तिकाः । नास्त्यमीवा याभ्यः । अनागसः नास्त्यागो याभ्यः अपराधहारिण्यः । ऋतावृधः ऋतं वर्धयन्ति ऋतवृधः संहितायां ऋतस्य दीर्घः । यज्ञवृद्धिहेतवः । देवीः देव्यो द्योतमानाः । अमृताः नास्ति मृतं याभ्यः मरणनिवर्तिकाः ॥ यद्वायमर्थः । ता इति द्वितीयाबहुवचनं । अमृताः अमरणधर्मिणो देवाः पूर्वोक्ताः प्राणा वागादयस्ता अपः स्वदन्तु आस्वादयन्तु । कीदृशीः अस्मभ्यमयक्ष्माः अस्मदर्थमस्माकं वा यक्ष्मनाशिनीः । शेषं पूर्ववत् ॥१२॥

a. इयं ते यज्ञिया तनूः ।

b. अपो मुञ्चामि न प्रजाम् । अꣳहोमुचः स्वाहाकृताः पृथिवीमाविशत ।

c. पृथिव्या सम्भव ॥ १३ ॥

का° [७. ४. ३६.] मेहयन्कृष्णविषाणया लोष्टं किंचिद्दादत्तऽइयं तऽइति । मूत्रं करिष्यन्शृङ्गेण लोष्टं किंचित्तृणादिकं वा गृह्णातीति सूत्रार्थः । हे यज्ञपुरुष इयं पृथिवी ते तव यज्ञिया तनूः यज्ञयोग्यो देशः । अतोऽस्या मूत्रोपहतिपरिहाराय व्यवधानं कर्तुं लोष्टं तृणं वा स्वीकरोमीति भावः । यद्वा पृथिवीं प्रत्युच्यते । हे पृथिवि इयं लोष्टरूपा ते तव यज्ञार्हा तनूस्तामाददऽइति शेषः ॥ का° [७. ४. ३७.] अपो मुञ्चामीति मेहतीति । अपो मूत्ररूपा अहं मुञ्चामि न प्रजां प्रजोत्पत्तिनिमित्तं रेतो न मुञ्चामि । अतो हे आपो मूत्राख्या यूयं पृथिवीमाविशत प्रविशत । किम्भूताः । अंहोमुचः अंहसः पापान्मुञ्चन्ति पुरुषं पृथक्कुर्वन्तीत्यर्थः । तथा स्वाहाकृताः पूर्वं क्षीरपानकाले स्वाहेति मन्त्रेण स्वीकृताः । यद्वा स्वाहाकृताः सत्यो (12.) भूमिमाविशत । का° [७. ४. ३८.] पृथिव्या सम्भवेत्यात्तं निदधातीति । गृहीतलोष्टादिकं मूत्रस्थाने क्षिपेत् । हे लोष्टादिक पृथिव्या सह त्वं सम्भव एकीभव ॥ १३ ॥

अग्ने॒ त्व७ सु जा॑गृहि व॒य७ सु म॑न्दिषीमहि ।
रक्षा॑ णो॒ऽअप्र॑युच्छन्प्र॒बुधे॑ नः॒ पुन॑स्कृधि ॥ १४ ॥

का° [७. ४. ३९.] अग्ने त्वमित्युक्त्वा स्वपित्यधः प्राङ्दक्षिणत इति । अनुष्टुबाग्नेयी । हे अग्ने त्वं सु जागृहि सुष्ठु निद्रारहितो भव । वयं यजमानाः सु मन्दिषीमहि साधु स्वप्स्यामः । मदि मोदस्तुतिस्वप्नकान्तिगतिषु (13.) [धा° २. १२.] अत्र स्वप्नार्थः । आशीर्लिङुत्तमबहुवचने रूपम् । किं च । नोऽस्मान्रक्ष किं कुर्वन्नप्रयुच्छन् । युछ प्रमादे । अप्रमाद्यन् । द्व्यचोऽतस्तिङ इति [पा° ६. ३. १३५.] संहितायां दीर्घः । नश्च धातुस्थोरुषुभ्य इति [पा° ८. ४. २७.] नं इत्यस्य णत्वम् । नो अप्रयुछन्नित्यत्र एङः पदान्तादतीति [पा° ६. १. १०९.] पूर्वरूपे प्राप्ते प्रकृत्यान्तःपादमव्यपरऽइति [पा° ६. १. ११५.] प्रकृतिभावः । किं च अग्ने नोऽस्मान्पुनः प्रबुधे प्रबोधाय कृधि कुरु प्रबोधनं प्रभुक्तस्येे प्रबुधे संपदादित्वाद्भावे क्विप् । स्वपतोऽग्नेः प्रार्थनं रक्षसां नाशाय । तदुक्तं तित्तिरिणा । अग्निमिवाधिपं कृत्वा स्वपिति रक्षसामपहत्याऽइति ॥ १४ ॥

पुनर्मनः पुनरायुर्मऽआगन्पुनःप्राणः पुनरात्मा मऽआगन्पुनश्चक्षुः पुनः श्रोत्रं मऽआगन् ।

वैश्वानरोऽअदब्धस्तनूपा अग्निर्नः पातु दुरितादवद्यात् ॥ १५॥

का° [७.४.४०.] विबुद्धमस्वप्स्यन्तं पुनर्मन इति वाचयतीति । मे मम यजमानस्य मनः पुनरागन् सुप्तिकाले विलीय पुनरिदानीं शरीरे समागतम् । गमेर्लङि शपि लुप्ते हल्ङ्याब्भ्य इति [पा° ६.१.६८.] प्रत्ययलोपे मकारस्य नकारे प्रथमैकवचने आगन्निति रूपम् । किं च स्वापकाले मे मदीयमायुर्नष्टप्रायं भूत्वा पुनरागन् इदानीं पुनरुत्पन्नमिवासीत् तथा मे प्राणो वायुः पुनरागन् तथा मे आत्मा जीवः पुनरागन्तथा मे चक्षुः पुनरागन्तथा मे श्रोत्रं श्रवणेन्द्रियं पुनरागन् । सर्वे ह वाऽएते स्वपतोऽपक्रामन्तीति श्रुतेः [३.२.२.२३.] स्वापकाले मनआदीनामपक्रमो भवति । तेषां पुनर्यथास्थानमागमनं प्रार्थ्यते । एवं सर्वेन्द्रियेषु समागतेषु अयमग्निः अवद्यात् वदितुमयोग्यात् (14.) निन्दितात् दुरितात्पापात् नोऽस्मान्पातु पालयतु । यद्वा अवद्यात् दुर्यशसो दुरितात्पापाच्च पातु । किम्भूतोऽग्निः । वैश्वानरः विश्वेभ्यो नरेभ्यो हितः । सर्वपुरुषोपकारकः । नरे संज्ञायामिति [पा° ६.३.१२९.] पूर्वपददीर्घः । अदब्धः केनाप्यहिंसितः तनूपाः तनूं पातीति अस्मदीयशरीरपालकः ॥ १५॥

a. त्वमग्ने व्रतपा असि देवऽआ मर्त्येष्वा त्वं यज्ञेष्वीड्यः ।

b. रास्वेयत्सोमा भूयो भर देवो नः सविता वसोर्दाता वस्वदात् ॥ १६॥

का° [७.५.१.२.] त्वमग्नऽइत्याह क्रुद्धाव्रत्यं वा व्याहृत्येति । दीक्षितो यदा क्रुध्यति व्रतविरुद्धं वा ब्रूते तदा त्वमग्नऽइत्यृचं जपेत् । गायत्र्याग्नेयी वत्सदृष्टा । व्यूहेनाक्षरपूरणम् । हे अग्ने देवो द्योतनात्मकः त्वमा मर्त्येषु मनुष्यपर्यन्तेषु सर्वप्राणिषु व्रतपा असि व्रतस्य कर्मणः पालको भवसि । तथा आ समन्ताद्यज्ञेषु त्वमीड्योऽसि । ईडिरध्येषणाकर्मा पूजाकर्मा चेति यास्कः (15.) । याचितव्यः पूजयितव्यो वा भवसि । अतः पाहीति शेषः । यद्वा आकारद्वयं समुच्चयार्थं देवे इति सप्तम्यन्तं पदं हे अग्ने त्वं देवे आ देवेषु च मर्त्येषु आ मनुष्येषु च व्र-

तया असीति शेषं पूर्ववत् ॥ का° [७.५.१६.] लब्धमालम्भ्य वाचयति रास्वेयदिति । क्रतौ प्राप्तं धनं स्पृष्ट्वा मन्त्रं पठेत् । रास्व । सोमदेवत्यं यजुः । हे सोम इयद्रास्व एतावद्धनं देहि भूयः पुनरपि आभर धनं आहर । हृग्रहोरिति [पा° ८.२.३२. वा° १.] भकारः । यतो वसोर्धनस्य दाता सविता देवो नोऽस्मभ्यं वसु अदात् पूर्वमपि धनं दत्तवान् ॥१६॥

VI. a. एषा ते॑ शुक्र त॒नूरे॒तद्वर्च॒स्तया॑ सम्भ॑व॒ भ्राज॑ं गच्छ ।

b. जूर॑सि धृ॒ता मन॑सा॒ जुष्टा॒ विष्ण॑वे ॥१७॥

का° [७.६.७.८.] शाल्द्वाराण्यपिधाय ध्रौवं जुह्वां चतुर्विगृह्णाति बर्हिस्तृणेन हिरण्यं बद्ध्वावदधात्येषा तऽइतीति । ध्रुवास्थमाज्यं जुह्वां चतुर्गृहीत्वा तत्राज्ये दर्भतृणबद्धं स्वर्णं क्षिपेदिति सूत्रार्थः ॥ एषा ते । हिरण्याज्यदेवतम् । हे शुक्र शुक्ल दीप्यमानाग्ने ते तव एषा तनूः दृश्यमानमाज्यं शरीरम् । एतत् आज्ये प्रक्षिप्यमाणं हिरण्यं ते वर्चः त्वदीयं तेजः । तया सम्भव आज्यरूपया तन्वा एकीभव । ततो भ्राजं गच्छ भ्राज दीप्तौ हिरण्यगतां दीप्तिं प्राप्नुहि । एतन्मन्त्रपाठेनाग्निः सतेजस्त्वं सतनूत्वं च संपद्यते । तदुक्तं तित्तिरिणा । सतेजसमेवैनं सतनुं करोतीति । यद्वायमर्थः । हे शुक्र आज्य एषा हिरण्यलक्षणा ते तनूः एतत्ते वर्चश्च । समानजन्म वै पयश्च हिरण्यं चोभयं ह्यग्निरेतसमिति श्रुतेः [३.२.४.८.] । तया हिरण्यलक्षणया तन्वा सम्भव एकीभूय भ्राजं सोमं गच्छ । भ्राजतेऽसौ भ्राट् तम् । सोमो वै भ्राडिति [३.२.४.१.] श्रुतेः । का° [७.६.१.] जूरसीति जुहोतीति । वाग्देवतम् । हे वाक् त्वं जूरसि वेगयुक्तासि । यद्वा जीव प्राणधारणे । जीवयतीति जूः । टूप्रत्ययः । किम्भूता त्वं मनसा धृता नियमिता । तथा विष्णवे जुष्टा यज्ञो वै विष्णुः । यज्ञार्थं प्रीतियुक्ता । यद्वा षष्ठ्यर्थे चतुर्थी । यज्ञस्य रुचिता ॥१७॥

तस्या॑स्ते स॒त्यस॑वसः प्रस॒वे त॒न्वो॑ य॒न्त्रम॑शीय स्वाहा॑ ।

c. शुक्रम॑सि च॒न्द्रम॑स्य॒मृत॑मसि वैश्वदे॒वम॑सि ॥१८॥

सत्यं सवो यस्याः सा सत्यसवाः तस्याः सत्यसवसोऽवितथाभ्यनुज्ञायास्तस्यास्ते तथाविधायास्तव वाचः प्रसवेऽनुज्ञायां वर्तमानोऽहं तन्वः शरीरस्य यन्त्रं

नियमनं दार्ढ्यमशीय प्राप्नुयाम् । स्वाहा इदमाज्यं हुतमस्तु ॥ का० [७.६.१०.] शुक्रमसीति हिरण्यमुद्धृत्य वेद्यां तृणं निदधातीति । शुक्लां बद्धा स्थापितं हिरण्यमुद्धरेत । शुक्रमसि । हिरण्यं देवता । हे हिरण्य त्वं शुक्रमसि शोचते शुक्रम् । शुच दीप्तौ । दीप्यमानमसि । तथा चन्द्रमाह्लादकमसि । चदि आह्लादने । चन्दतीति चन्द्रम् । अमृतं विनाशरहितमसि । अग्निसंयोगेऽपि हिरण्यस्य विनाशाभावः प्रसिद्धः । अग्नौ सुवर्णमक्षीणमिति याज्ञवल्क्योक्तेः । वैश्वदेवमसि । विश्वेषां देवानामिदं वैश्वदेवम् सर्वदेवसम्बन्धि । सर्वोऽपि देवो हिरण्यदानेन तुष्येत् ॥१८॥

चिदसि मनासि धीरसि दक्षिणासि क्षत्रियासि यज्ञियास्यदितिरस्युभयतःशीर्ष्णी । सा नः सुप्राची सुप्रतीच्येधि मित्रस्त्वा पदि बध्नीताम्पूषाध्वनस्पात्विन्द्रायाध्यक्षाय ॥१९॥

का० [७.६.१५.] चिदसीत्येनामभिमन्त्रयतऽइति । कण्डिकाद्वयेन एनां सोमक्रयणीमित्यर्थः । वाग्रूपाध्यारोपकल्पनया सोमक्रयणी गौः स्तूयते । हे वाग्देवतारूपे सोमक्रयणि त्वं चिदसि मनासि धीरसि । अन्तःकरणस्य चित्तमनोबुद्धय इति तिस्रो वृत्तयः । तल्लक्षणानि । अचेतनदेहादिसंघातस्य चेतनत्वं संपादयन्ती बाह्यवस्तुषु वा निर्विकल्पकरूपं सामान्यज्ञानं जनयन्ती वृत्तिश्चित्तं तदेवात्र चिदित्युच्यते । लोके कंचित्पदार्थं दृष्ट्वा एवं भवति न वेति संकल्पविकल्पौ कुर्वाणा वृत्तिर्मनः तदेवात्र मनेत्युच्यते । इदमित्थं भवत्येवेति निश्चयरूपा वृत्तिर्बुद्धिः सैवात्र धीशब्देनोच्यते । वागात्मिका सोमक्रयणी चिन्मनोधीरूपत्वेन प्रशस्यते । चिदादिरूपत्वमारोप्य स्तुतिः कृता । दक्षिणादिरूपत्वं तु विद्यमानमेव स्तूयते । हे गौः त्वं दक्षिणासि । गवां देयद्रव्यत्वेन कर्मसु दक्षिणात्वं प्रसिद्धम् । यद्वा वाग्दानस्य (16.) प्रशस्तत्वाद्दक्षिणासि । भूमिदानात्परं नास्ति विद्यादानं ततोऽधिकमिति स्मृतेः । तथा क्षत्रियासि । सोमक्रयसाधनत्वेन । तथा हि । देवेषु क्षत्रजात्यभिमानी सोमः । तदुक्तं बृहदारण्यके [माध्य० १.२.१३. काण्व० १.४.११.] यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्र इति । तेन सोमेन क्षत्रेणाभिम-

त्तव्यस्य सोमलताद्रव्यस्य क्रयहेतुत्वेन त्वं क्षत्रियासि । तद्रूपं चास्याः क्रयद्वारा तत्सम्बन्धित्वादुपचर्यते । अत एव यज्ञसम्बन्धित्वाद्यज्ञिया यज्ञार्हासि । अदितिः अखण्डिता अदीना देवमातृरूपासि । नास्ति दितिर्यस्याः सा । अदितिरदीना देवमातेति यास्कः [निरु° ४. २२.] । तथा उभयतःशीर्ष्णी । उभयतः शीर्षे यस्याः सा । ज्योतिष्टोमस्याद्यन्तयोः प्रायणीयोदयनीययोः शीर्षत्वम् । द्वे शीर्षे प्रायणीयोदयनीये ऽइति यास्कोक्तेः [निरु° १३. ७.] । यद्वोभयतःशीर्ष्णी सर्वतोमुखी वाग्रूपत्वात् । स यदेनया समानं सद्विपर्यासं वदतीति [३. २. ४. १६.] श्रुतेः । सा पूर्वोक्ता चिदादिरूपा त्वं नोऽस्मदर्थे सुप्राची सुप्रतीची च एधि भव । सुष्ठु प्राङ्चति सुप्राची । सुष्ठु प्रत्यङ्ङ्चति सुप्रतीची । प्रथमं सोमस्य क्रेतारं प्रति सुष्ठु प्राङ्मुखी भूत्वा पश्चात्सोमेन सहास्मान्प्रत्यागन्तुं सुष्ठु प्रत्यङ्मुखी भवेत्यर्थः । तथा च श्रुतिः [३. २. ४. १७.] । सुप्राची न एधि सोमं नोऽच्छेहीत्येवैतदाह सुप्रतीची न एधि सोमेन नः सह पुनरेहीत्येवैतदाहेति । किंच मित्रः सूर्यः पदि दक्षिणपादे त्वा त्वां बध्नीतां बन्धनं करोतु अप्रणाशाय । तथा पूषा पोषको देवः सूर्य एवाध्वनो मार्गात्पातु (17.) त्वां रक्षतु । यद्वा पूषेत्याबन्तं स्त्रीलिङ्गं पदम् पूषा पृथिवी त्वां मार्गात्पातु (18.) इयं वै पृथिवी पूषेति [३. २. ४. १९.] श्रुतेः । किमर्थमिन्द्राय इन्द्रप्रीत्यर्थं किम्भूतायेन्द्राय अध्यक्षाय अधि उपरि अक्षिणी यस्य सोऽध्यक्षस्तस्मै । द्रष्ट्रे यज्ञस्वामिने इत्यर्थः ॥ १९ ॥

अनु॑ त्वा मा॒ता मन्य॑ताम॒नु॑ पि॒तानु॒ भ्राता॒ सग॒र्भ्योऽनु॒ सखा॒ सयू॑थ्यः ॥
सा दे॑वि दे॒वमच्छे॒हीन्द्रा॑य॒ सोम॑ꣳ रु॒द्रस्त्वाव॑र्तयतु स्व॒स्ति सोम॑सखा॒ पुन॒रे॑हि ॥ २० ॥

किं च । सोमाहरणे प्रवृत्तां त्वां माता त्वदीया जननी अनुमन्यतामनुज्ञां ददातु । पितानुमन्यताम् । उपसर्गावृत्त्या क्रियापदावृत्तिः । सगर्भ्यः समाने गर्भे भवः सहोदरो भ्रातानुमन्यताम् । समानस्य छन्दस्यमूर्धप्रभृत्युदर्केष्विति [पा° ६. ३. ८४.] समानपदस्य सादेशः । सयूथ्यः समाने एकस्मिन्यूथे गोसमूहे भवः सयूथ्यः सखा वत्सोऽनुमन्यताम् ॥ हे देवि सोमक्रयणि सा त्वमिन्द्राय इन्द्रार्थं सोमं देवमच्छेहि प्राप्तुं गच्छ । अच्छाभेराप्तुमिति शाकपूणिः [निरु° ५. २८.] । किं च रुद्रः

त्वा त्वां वर्तयतु (18 a.) सोमं गृहीत्वा स्थितां त्वां रुद्रो देवोऽस्मात्प्रति निवर्तयतु। यद्वा रुद्रः त्वां प्रवर्तयतु। यतो रुद्राज्ञां नातिक्रामन्ति पशवः। सोमो देवः सखा यस्याः सा सोमसखा। ईदृशी सोमसहिता सती स्वस्ति क्षेमेण पुनरेहि भूयोऽप्यागच्छ ॥२०॥

VII. वस्व्यस्यदितिरस्यादित्यासि रुद्रासि चन्द्रासि।
बृहस्पतिष्ट्वा सुम्ने रम्णातु रुद्रो वसुभिराचके ॥२१॥

का० [७. ६. १६.] उदीचीं नीयमानामनुगच्छतो वस्व्यसीतीति ॥ अनुष्टुब्बृहती वा। सोमक्रयण्याः स्तुतिः। सोमक्रयणी गौर्वस्वदित्यादित्यरुद्रचन्द्ररूपेण स्तूयते वस्वीत्यादिपञ्चविशेषणैः। हे गौः त्वं वस्वी वसुरूपासि। अदितिर्देवमातासि। द्वादशादित्यरूपासि। रुद्रा एकादशरुद्ररूपासि। चन्द्ररूपा चासि। किं च बृहस्पतिः सुम्ने त्वां रम्णातु रमयतु। रमतेर्व्यत्ययेन श्नाप्रत्ययः। यद्वा रम्णातु संयमयतु। रम्णातिः संयमनकर्मा विसर्जनकर्मा वेति यास्कः [निरु० १०. ६.]। रुद्रो वसुभिः अष्टदेवैः सहितः त्वामाचके रक्षितुं कामयताम्। आचकऽइति चकमान इति कान्तिकर्मसु पठितः [निघ० २. ६.] ॥२१॥

a. अदित्यास्त्वा मूर्धन्नाजिघर्मि देवयजने पृथिव्या इडायास्पदमसि घृतवत्स्वाहा। b. अस्मे रमस्व। c. अस्मे ते बन्धुः। d. त्वे रायः। e. मे रायः। f. मा वयꣳ रायस्पोषेण वियौष्म। g. तोतो रायः ॥२२॥

का० [७. ६. १७. १८.] षट्पदान्यतीत्य सप्तमं पर्युपविशन्ति हिरण्यमस्मिन्निधायाभिजुहोत्यदित्यास्त्वेतीति। आज्यदेवतं यजुः। अदित्याः अखण्डितायाः पृथिव्याः भुवो मूर्धन्मूर्धनि शिरोरूपे देवयजने देवानां यागयोग्यस्थाने हे आज्य त्वा त्वामाजिघर्मि आक्षारयामि। घृ क्षरणदीप्त्योः। पृथिव्या ह्येष मूर्धा यद्देवयजनमिति तित्तिरिश्रुतेर्देवयजनस्य पृथिवीमूर्धत्वम्। किं च हे स्थानविशेष त्वमिडायाः गोः पदमसि गोपदेनाङ्कितत्वात्तद्रूपमसि तच्च पदं घृतवत् घृतयुक्तं कर्तुं स्वाहा जुहोमि ॥ का० [७. ६. १९.] स्फ्येन पदं त्रिः परिलिखत्यस्मे रमस्वेति। हे गोः

पद त्वमस्मे अस्मासु रमस्व क्रीडां कुरु ॥ का° [७.६.२०.] समुद्धृत्य पदᳪ स्थाल्यामावपत्यस्मे ते बन्धुरिति । हे सोमक्रयणीपद ते तव अस्मे बन्धुः वयं बन्धुभूताः स्मः । सुपां सुलुगिति [पा° ७.१.३९.] जसः शेआदेशे अस्मे इति रूपम् ॥ का° [७.६.२१.] यजमानाय पदं प्रयच्छति त्वे राय इति । हे यजमान त्वे त्वयि रायो धनानि एतत्पदरूपेण तिष्ठन्त्विति शेषः । यद्वात्र रायः पशवः । पशवो वै राय इति श्रुतेः [३.३.१.८.] । त्वयि पशवः सन्तु ॥ का° [७.६.२२.] मे राय इति यजमानः प्रतिगृह्णातीति । मे मयि यजमाने रायो धनानि पदरूपेण तिष्ठन्तु । पशवो मयि सन्तु । ङेः शेआदेशे मे इति रूपम् । का° [७.६.२३.] मा वयमित्यध्वर्युरात्मानᳪ सᳪस्पृशतीति । वयमध्वर्युप्रभृतयो रायस्पोषेण धनस्य पुष्ट्या मा वियौष्म वियुक्ता मा भवाम । यौतेर्माङि लुङिति [पा° ३.३.१७५.] लुङि उत्तमबहुवचने वियौष्मेति रूपम् ॥ का° [७.६.२४.२५.] हुत्वा पत्न्यै पदं प्रयच्छति नेष्टा तोत इत्येनां वाचयतीति । तोतःशब्दः कलत्रवाची अव्ययम् । तोतः कलत्रे रायो धनानि पशवो वा पदरूपेण तिष्ठन्तु । यद्वाव्ययानामनेकार्थत्वात्तोतःशब्दो युष्मत्पर्यायः । तोतः त्वयि रायः सन्तु ॥ २२ ॥

समख्ये देव्या धिया सं दक्षिणयोरुचक्षसा ।
मा मऽआयुः प्रमोषीर्मोऽअहं तवं । वीरं विदेय तवं देवि संदृशिं ॥ २३ ॥

का° [७.६.२६.] सोमक्रयण्या च समीक्ष्यमाणाᳪ समख्यऽइतीति । एनां वाचयतीत्यनुवर्तते । आस्तारपङ्क्तिः पत्न्याशीः । यस्या आद्यावष्टाक्षरौ पादावन्त्यौ द्वादशाक्षरौ सास्तारपङ्क्तिः । अन्त्यौ चेदास्तारपङ्क्तिरिति वचनात् ॥ सोमक्रयणीतः पत्न्याशिषमाशास्ते । हे सोमक्रयणि देव्या द्योतमानया त्वया धिया बुद्ध्या सह बुद्धिपूर्वकमहं समख्ये अद्राक्षि दृष्टेत्यर्थः । ख्या प्रकथने इत्यस्य धातोः संपूर्वस्य लुङि तङि अस्यतिवक्तिख्यातिभ्योऽङिति [पा° ३.१.५२.] च्लेरङि उत्तमैकवचने कर्मणि समख्येऽइति रूपम् । एकं संपदं पादपूरणाय । किम्भूतया त्वया दक्षिणया दक्षिणात्वयोग्यया । तथा उरुचक्षसा उरु चष्टे सोरुचक्षास्तया विस्तीर्णदर्शनया । एवंविधा त्वं मे मम पत्न्या आयुः मा प्रमोषीः मा खण्डय । मुष स्तेये

लुङि रूपम् ॥ मो अहं तव । तव सोमक्रयण्या आयुरहं पत्नी मा उ मैव प्रमोषिषमित्यध्याहारः । मार्थे मोऽइत्यव्ययं वा । अहं तवायुर्न नाशयामीत्यर्थः । किं च । वीरं विदेय तव देवि संदृशि हे देवि गौः तव संदृशि संदर्शने सति वीरं पुत्रं विदेय लभेय । संदर्शनं संदृक् भावे क्विप् । विद्लृ लाभे इत्यस्य व्यत्ययेन तुदादिभ्यः श इति [पा° ३.१.७७.] शप्रत्यये लिङि रूपम् ॥२३॥

VIII. a. एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग - - ऽदेष ते जागतो भा° - - ब्रूताच्छन्दोनामानाᳮ साम्राज्यं गच्छेति मे सोमाय ब्रूतात् ॥

b. आस्माकोऽसि शुक्रस्ते ग्रह्यो विचितस्त्वा विचिन्वन्तु ॥२४॥

का° [७.७.८.] एष तऽइति वाचयतीति । मन्त्रचतुष्टयं यजमानः पठेत् । हे अध्वर्यो सोमाय सोमाभिमानिने देवाय मे इति वचो ब्रूयात्त्वं ब्रूहि कथय । इति किम् । हे सोम ते तव एष पुरो दृश्यमानो भागो गायत्रो गायत्रीसम्बन्धी । गायत्रीछन्दोऽर्थं तव क्रयो न तु बधार्थमिति यजमानाभिप्रायः । तं ममाभिप्रायं सोमाय कथयेत्यर्थः ॥ ते तव एष त्रैष्टुभः त्रिष्टुप्छन्दसः सम्बन्धी भाग इति मेऽभिप्रायमध्वर्यो सोमाय त्वं ब्रूहि । एवमग्रे ऽपि ॥ जागतो जगतीछन्दसः सम्बन्धी । अन्यत्पूर्ववत् ॥ छन्दोनामानाम् छन्द इति नाम येषामन्येषामप्युष्णिगादीनां ताः छन्दोनामानः । तेषां साम्राज्यं गच्छ सर्वेषां छन्दसामाधिपत्यं प्राप्नुहि । इति मे वचः सोमाय ब्रूतात्कथय । यः सोमाय छन्दसामाधिपत्यं दत्त्वा क्रीणाति तं स स्वानामाधिपत्यं प्राप्नोति । तदुक्तं तित्तिरिणा । यो वै सोमᳮ राजानᳮ साम्राज्यलोकं गमयित्वा क्रीणाति गच्छति स्वानाᳮ साम्राज्यमिति । अत एतैर्मन्त्रैः सोमस्य राज्याप्तिः सूचिता । गायत्र्यादिछन्दोदेवता यत्र तिष्ठन्ति स छन्दोलोकस्तदाधिपत्यं प्रापय्य (19.) सोमं क्रीणानः स्वाधिपत्यभाग्भवतीत्यभिप्रायः ॥ का° [७.७.९.] प्राङुपविश्यास्माकोऽसीति सोममालभतऽइति । हे सोम त्वं क्रयपथमागतः सन्नास्माकोऽसि । शुक्रः शुक्लसंज्ञः ते तव ग्रह्यः । ग्रह एव ग्रह्यः । शुक्रपदमैन्द्रवायवादिग्रहाणामुपलक्षणम् । शुक्रादयः सर्वे तव ग्रहा इत्यर्थः ॥ विचितः । वि-

चिन्वन्तीति विचितः विवेकेन चयनस्य कर्तारः त्वां विचिन्वन्तु विविक्तं कुर्वन्तु सारासारविवेकं कृत्वा सारभूतं समूहयन्त्वित्यर्थः ॥२४॥

a. अभि त्यं देवꣳ सवितारमोण्योः कविक्रतुमर्चामि सत्यसवꣳ रत्नधामभि प्रियं मतिं कविम् ॥

ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः ॥

b. प्रजाभ्यस्त्वा ॥ c. प्रजास्त्वानुप्राणन्तु प्रजास्त्वमनुप्राणिहि ॥२५॥

का° [७.७.१२.१३.] सोमोपनहनं द्विगुणं चतुर्गुणं वा स्तृणाति प्राग्दशमुदग्वा तस्मिन्त्सोमं मिमीते दशकृत्वोऽभि त्यमितीति । सावित्र्यष्टिः । त्यं तं सवितारं देवमभ्यर्चामि सर्वतः पूजयामि । किम्भूतं देवम् । ओण्योः द्यावापृथिव्योरन्तरा वर्तमानमिति शेषः । ओण्योरिति द्यावापृथिवीनामसु [निघ° ३.३०. (20.)] पठितम् । तथा कविक्रतुं कविः क्रतुः यस्य तं मेधाविकर्माणम् । सत्यसवं सत्यः सवो यस्य अवितथप्रेरणम् । तथा रत्नधाम् रत्नानि दधातीति रत्नधास्तं रत्नानां धारकं पोषकं दातारं वा । अभिप्रियं (21.) सर्वतः प्रीतिविषयम् । मतिं मन्यत ऽइति मतिस्तं मननयोग्यम् । कविं क्रान्तदर्शनम् (22.) । किं च यस्य सवितुर्भा दीप्तिः अमतिः केनापि मातुमशक्या सती ऊर्ध्वा गगनाभिमुखी सवीमन्यदिद्युतत् सवः प्रसवः प्रवृत्तिर्नक्षत्रादीनां यस्मिन्स सवीमा तस्मिन्गगनप्रदेशे सर्वाणि वस्तूनि द्योतयन्ति (23.) ॥ यद्वायमर्थः । यस्यामतिरात्ममयी भा ऊर्ध्वा गगने सर्वमदिद्युतत् । अमाशब्द आत्मवचनः आत्ममयी ततिर्मतिर्वा अमतिः । तन्यत ऽइति ततिः दीप्तिः । मतिरपि प्रकाशरूपत्वाद्दीप्तिः । अमाततिशब्दस्य वा अमतिभावः (24.) । सवितृभाविशेषणम् । आत्मप्रकाशमयी ततिर्मतिर्वा यस्य भाः अदिद्युतत् । किंनिमित्तम् । सवीमनि अनुज्ञानिमित्तं सर्वान्कर्मण्यनुज्ञातुमित्यर्थः । षु प्रसवैश्वर्ययोः [धा° २२.४३.] । वृस्तृस्तुभ्य ईमनिजिति (25.) ईमनिच् । गुणाबादेशौ । सवीमा (26.) प्रसवोऽनुज्ञेत्यभिधानम् ॥ स स्वरादित्यः । कृपा कल्पनं कृप् तया कृपा कल्पनया अमिमीत सोममिति शेषः । एतावान्सोम इति तदीयं

परिमाणं निश्चितवानित्यर्थः । किम्भूतः स्वः हिरण्यपाणिः हिरण्यं पाणौ यस्य सौवर्णाभरणयुक्तहस्तः । सुक्रतुः साधुसंकल्पः ॥ का° [७. ७. २०.] अन्तात्संगृह्योष्णीषेण बध्नाति प्रजाभ्यस्त्वेतीति । हे सोम प्रजाभ्यः प्रजानामुपकाराय त्वा त्वां बध्नामीति शेषः ॥ का° [७. ७. २१.] अङ्गुल्या मध्ये विवृणोति प्रजास्त्वानुप्राणन्त्विति । उष्णीषेण बद्धस्य सोमदेवस्य श्वासरोधो मा भूदिति विवरं कुर्यादिति सूत्रार्थः । हे सोम प्रजास्त्वामनुप्राणन्तु श्वासं कुर्वन्तं त्वामनुसृत्य सर्वाः प्रजाः श्वासं कुर्वन्तु जीवन्तु । तथा हे सोम प्रजा अनुश्वासं कुर्वतीः प्रजा अनुसृत्य प्राणिहि श्वासं कुरु । प्रजानां तव च कदाचित् श्वासरोधो मा भूत् परस्परमनुसृत्य जीवनं भवत्वित्यभिप्रायेण विवरकरणमित्यर्थः ॥ २५ ॥

IX. a. शुक्रं त्वा शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन ।

b. सग्मे ते गोः । c. अस्मे ते चन्द्राणि ।

d. तपसस्तनूरसि प्रजापतेर्वर्णः परमेण पशुना क्रीयसे सहस्रपोषं पुषेयम्

॥ २६ ॥

का° [७. ८. १६.] शुक्रं त्वेति हिरण्यमालभ्य वाचयतीति । हे सोम शुक्रं दीप्यमानं त्वा त्वां शुक्रेण दीप्यमानेन हिरण्येन क्रीणामि क्रीतं करोमि । किम्भूतं त्वां चन्द्रं चदि आह्लादने फलहेतुत्वेनाह्लादकरम् । तथा अमृतं स्वादुत्वेनामृतसमानम् । किम्भूतेन शुक्रेण चन्द्रेणाह्लादकरेण तथामृतेनाग्निसंयोगादिनापि विनाशरहितेन ॥ का° [७. ८. १७.] सग्मे तऽइति सोमविक्रयिणा हिरण्येनाभिकम्पयतीति । यो हिरण्यमादाय सोमं विक्रीणीते तं हिरण्येनाभिकम्पयेत् । तद्धस्ते हिरण्यं दत्त्वा दत्त्वा स्वीकुर्वस्तं निराशं कुर्यादिति (27.) सूत्रार्थः ॥ षष्ठी प्रथमार्थे । हे सोमविक्रयिन् गोः गौः सोममूल्यत्वेन तुभ्यं दत्ता सा त्वदीया गौः पुनः प्रत्यावृत्य सग्मे यजमाने तिष्ठतु । हिरण्यमेव तवास्तु गौर्मा भूदित्यर्थः ॥ यद्वा ते गौः सग्मे वर्तते । गौर्ग्मा क्ष्मा (28.) ज्मेत्युक्तेः [निघ° १. १. (29.)] ग्मा गौः तया सह वर्तमानः सग्मस्तस्मिन् सग्मे ते गोरिति यजमाने ते गौरिति श्रुतेः [३. ३. ३. ७.] सग्मो यजमानः ॥ का° [७. ८. १८.] अस्मे तऽइति यजमानसहितं (30.) निद-

धातीति । यजमाने प्रत्यर्पितं यद्गोद्रव्यं तत्पुनर्यजमानसहितं सोमविक्रयिणः पुरतो निदध्यादिति सूत्रार्थः । हे सोमविक्रयिन् ते चन्द्राणि तुभ्यं दत्तानि यानि हिरण्यानि तान्यस्मे अस्मासु प्रत्यावृत्य तिष्ठन्तु तव गौरेव सोममूल्यमस्तु हिरण्यानि मा भुवन्नित्यर्थः ॥ का° [७. ८. २०.] अजां प्रत्यङ्मुखीमालभ्य वाचयति तपसस्तनूरितीति । अर्धे अजा देवतास्य यजुषोऽर्धे सोमः । हे अजे त्वं तपसः पुण्यस्य तनूरसि देहोऽसि । दिवि स्थितस्य यज्ञियस्यानयनायाजां गृहीत्वा गायत्री जगामेति तित्तिरिणा सोमाहरणोपाख्याने उक्तत्वादजायाः पुण्यशरीरत्वम् । किं च हे अजे त्वं प्रजापतेर्वर्णोऽसि वर्णो देहः । यथा प्रजापतिः सर्वदेवताप्रिय एवमजापि । तदुक्तं तित्तिरिणा । सा वा एषा सर्वदेवत्या यदजेति । एवमजामुक्त्वा सोमं प्रत्याह । हे सोम परमेण पशुना उत्तमेनाजालक्षणेनानेन पशुना त्वं क्रीयसे । तपसस्तनूत्वादजाया उत्तमत्वम् । अतस्तव प्रसादात्सहस्रपोषं पुत्रपश्वादिसहस्राणां पोषो यथा भवति तथा पुषेयं पुष्टो भूयासम् ॥ यद्वायमर्थः । हे अजे त्वं प्रजापतेस्तपसस्तनूरसि प्रजापतितपोरूपासि तत उत्पन्नत्वात् । तदुक्तं श्रुत्या [३. ३. ३. ८.] । तपसो ह वा एषा प्रजापतेः सम्भूता यदजेति । किं च प्रजापतेर्वर्णो रूपं त्वमसि । त्रिगुणत्वात्प्रजापतेस्त्रिरूपत्वम् । अजापि प्रतिसंवत्सरं त्रिवारं प्रसूते तस्मात्प्रजापतेर्वर्णत्वम् (31.) । तदुक्तं श्रुत्या [३. ३. ३. ८.] । सा यत्त्रिः संवत्सरस्य जायते तेन प्रजापतेर्वर्ण (32.) इति । एवमजां स्तुत्वा सोममाह । परमेणोत्कृष्टेन पशुनाजया त्वं क्रीयसे ततोऽहं सहस्रपोषं सहस्रं प्राणिनां पुष्णातीति सहस्रपोषं धनं पुषेयं पुष्णीयां वर्धयेयमित्यर्थः । पुष्णातेर्व्यत्ययेन श प्रत्यये लिङि पुषेयमिति रूपम् ॥ २६ ॥

a. मित्रो न एहि सुमित्रधः ।

b. इन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तꣳ स्योनः स्योनम् ।

c. स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानो ।

एते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभन् ॥ २७ ॥

का° [७. ८. २१.] सव्येनाजां प्रयच्छन्मित्रो न इति दक्षिणेन सोममादयिति ॥

सौम्यम् । हे सोम त्वं नोऽस्मान्प्रत्येहि आगच्छ । किम्भूतस्त्वं मित्रः सखा प्रीतियुतः यद्वा मित्रः रविरूपः । तथा सुमित्रधः शोभनानि मित्राणि दधाति पुष्यति सुमित्रधः । क्रीत्वा वाससाबद्धस्य सोमस्य वरुणदेवताकत्वेन क्रूरत्वात्तच्छान्त्यर्थो मित्रत्वेन प्रार्थ्यते । तदाह तित्तिरिः । वारुणो वै क्रीतः सोम उपनद्धो मित्रो न एहि सुमित्रध इत्याह शान्त्यै इति ॥ का° [७.८.२३.] दीक्षितोरौ दक्षिणे प्रत्युक्ष्य वासो निदधातीन्द्रस्योरुमितीति । वासः प्रत्युक्ष्य वस्त्रमुपरिस्थाप्य सोमं निदध्यादित्यर्थः ॥ यजमानरूपेण परमैश्वर्येणोपेतत्वादत्रेन्द्रशब्देन यजमानः । तथा च श्रुतिः [३.३.३.१०.] । एष वाऽअत्रेन्द्रो भवति यद्यजमान इति । हे सोम त्वमिन्द्रस्य यजमानस्य दक्षिणमूरुमाविश दक्षिणे ऊरावुपविशेत्यर्थः । किम्भूतस्त्वमुशन् वश कान्तौ वष्टि उशन् शतृप्रत्ययः ऊरुं कामयमानः । तथा स्योनः सुखभूतः । किम्भूतमूरुमुशन्तं सोमं कामयमानं स्योनमुपवेशे सुखकरम् । पुरा देवाः सोमं क्रीतमिन्द्रस्योरावुपविशयन्तस्मादत्रेन्द्रशब्देन यजमानः । तदाह तित्तिरिः देवा वै सोममक्रीणंस्तमिन्द्रस्योरौ दक्षिणऽआसादयन् स खलु वाऽएतर्हीन्द्रो यो यजति तस्मादेवमाहेति । का° [७.८.२४.] स्वान भ्राजेति जपति सोमविक्रयिणमीक्षमाण इति । स्वनति स्वानः । भ्राजते शोभतेऽसौ भ्राजः । अङ्घस्य पापस्यारिरङ्घारिः । बिभर्ति पुष्णाति विश्वमिति बम्भारिः । हसति हस्तः सर्वदा हृष्टरूपः । शोभनौ हस्तौ यस्य सुहस्तः । कृशं दुर्बलमनिति जीवयतीति कृशानुः । स्वानादयः सप्त सोमरक्षका देवविशेषाः । हे स्वानादयः सप्त देवाः वो युष्माकमेते सोमक्रयणाः सोमः क्रीयते यैस्ते सोमं क्रेतुमानीता हिरण्यादिपदार्थाः पुरतः स्थापिताः । तान्पदार्थान्यूयं रक्षधमवत । वो युष्मान्मा दभन्वैरिणो मा हिंसिषत । स्वानादयो धिष्ण्याधिष्ठातारः सोमरक्षकाः । तदाह तित्तिरिः । स्वान भ्राजेत्याह ते चामुष्मिँल्लोके सोमरक्षन्निति ॥ २७॥

परि॑ माग्ने॒ दुश्च॑रिताद्बाध॒स्वा मा॒ सुच॑रिते भज ।
उदायु॑षा स्वायु॒षोद॑स्थाम॒मृताँ२॥ऽअनु॑ ॥ २८॥

का° [७.९.१.] गृहीतसोमं परि माग्नऽइति वाचयतीति । अग्निदेवत्या पुर-

स्ताद्बृहती । यस्या आद्यो द्वादशाक्षरस्त्रयोऽष्टाक्षराः पादाः सा पुरस्ताद्बृहती । आद्यश्चेत्पुरस्ताद्बृहतीत्युक्तेः । हे अग्ने दुश्चरितात्पापान्मा मां परिबाधस्व परितो निवारय । मे पापे प्रवृत्तिर्मा भूदित्यर्थः । सुचरिते शोभने चरित्रे सदाचाररूपे पुण्ये मा मां यजमानमाभज सर्वतो भज स्थापयेत्यर्थः ॥ का° [७.१.३.] उदायुषेत्यु-त्थानमिति । उदायुषा उत्कृष्टेन चिरजीवनलक्षणेनायुषा (32.) निमित्तेन तथा स्वायुषा यागदानादिना शोभनेनायुषा निमित्तभूतेन अमृताननु सोमादिदेवाननु-सृत्य उदस्थामहमुत्थितवानस्मि । तिष्ठतेर्लुङि रूपम् ॥२८॥

प्रति पन्थामपद्महि स्वस्तिगामनेहसम् ।
येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु ॥२९॥

का° [७.१.४.] शीर्ष्णि सोमं कृत्वा पाणिमन्तर्धाय प्रति पन्थामित्यनोऽभ्येतीति । शकटमभिलक्ष्य गच्छेदित्यर्थः । अनुष्टुप्पथिदेवत्या । पन्थानं स्तौति । पन्थां प-न्थानं मार्गं प्रत्यपद्महि वयं प्रत्यपद्यामहि प्रतिपन्नाः प्राप्ता अभूमेत्यर्थः । पद गतावित्यस्य व्यत्ययेन शपि लुप्ते लङि रूपम् । विभक्तेः पूर्वसवर्णे पन्थामिति रूपम् । किम्भूतं पन्थानं स्वस्तिगां स्वस्ति क्षेमेण गम्यते यत्र स स्वस्तिगास्तं क्षेमेण गन्तुं योग्यम् । गमेर्विटि प्रत्यये विड्वनोरनुनासिकस्यादिति [पा° ६.४.४१.] मकारस्याकारे रूपम् । तथा अनेहसम् एहः पापरूपश्चोरादिबाधस्तद्रहितम् । यद्वा एहः इत्यपराधनाम । यत्र गतानामपराधो नास्ति । येन यथा गच्छन्पुरुषो विश्वाः विश्वान्सर्वान्द्विषो द्वेषिणश्चोरादीन्परिवृणक्ति परितो वर्जयति । वृजी वर्जने रु-धादिः । वसु विन्दते धनं च लभते तं पन्थानमिति पूर्वत्रान्वयः । विद्लृ लाभे ॥२९॥

X. a. अदित्यास्त्वगसि । b. अदित्यै सद आसीद ।
c. अस्तभ्नाद्द्यां वृषभोऽअन्तरिक्षममिमीत वरिमाणं पृथिव्याः ।
आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानि ॥३०॥

का° [७.१.१.] कृष्णाजिनमास्मिन्नास्तृणात्यदित्यास्त्वगितीति । अस्मिन्शकटे इ-

त्यर्थः । हे कृष्णाजिन त्वमदित्यास्त्वगसि अखण्डितायाः पृथिव्याः त्वग्रूपं भवसि ॥ का० [७.९.१.] तस्मिन्त्सोमं निदधात्यदित्यै सद इतीति । हे सोम त्वमदित्यै सदः अदितेर्भूमिः सम्बन्धि स्थानमासीद सर्वतः प्राप्नुहि तत्रोपविशेत्यर्थः ॥ का० [७.९.८.] अस्तभ्नाद्द्यामिति सोममालभ्य वाचयतीति । द्वे वरुणदेवते त्रिष्टुभौ । क्रीतसोमस्य वरुणदेवतत्वाद्वरुणो ब्रह्मरूपेण स्तूयते । वृषभः श्रेष्ठो वरुणो द्यामस्तभ्नात् द्युलोको यथा न पतति तथा स्वकीययाज्ञया स्तम्भितवान् । तथान्तरिक्षमप्यस्तभ्नात् । तथा पृथिव्या वरिमाणं भूमेरुरुत्वममिमीत मिमीते । उरोर्भावो वरिमा तम् (33.) । एतावती भूरिति परिमाणं जानातीत्यर्थः । तथा सम्राट् सम्यग्राजमानो वरुणो विश्वा विश्वानि सर्वाणि भुवनानि आसीदत् लोकान्व्याप्नोति । विश्वा विश्वानि सर्वाणि इत् एवार्थे सर्वाण्येव वरुणस्य व्रतानि कर्माणि । यद्वा इदित्यव्ययमित्थमर्थे । इदित्थं तानि द्युलोकस्तम्भनादीनि वरुणस्य व्रतानि व्रतवन्नियतानि । सर्वदा तानि करोतीत्यर्थः ॥३०॥

वनेषु व्यन्तरिक्षं ततान् वाजमर्वत्सु पयं उस्रियासु ।
हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात्सोममद्रौ ॥३१॥

का० [७.९.९.] वनेषु व्यन्तरिक्षमिति सोमपर्याणहनेन परितत्येति । बन्धनहेतुना वस्त्रेण परितो वेष्टयित्वेत्यर्थः । वि उपसर्गस्तततानेत्यनेन सम्बध्यते । वरुणो वनेषु वनगतवृक्षाग्रेषु अन्तरिक्षमाकाशं विततान । यद्यपि सर्वगतमन्तरिक्षं तथापि तत्र मूर्तद्रव्याभावादत्यन्तं विस्तारितवान् । तथार्वत्सु अश्वेषु वाजं बलं विततानेत्यनुवर्तते । यद्वार्वत्सु पुरुषेषु वाजं वीर्यं विततान । वीर्यं वै वाजः पुमाꣳसो ऽर्वन्त इति श्रुतेः [३.३.४.७.] । तथा उस्रियासु पयः क्षीरं विततान उस्रियाशब्दो गोनामसु पठितः [निघ० २.११.] । हृत्सु हृदयेषु क्रतु संकल्पं तद्युक्तं मनो विततान । विक्षु प्रजासु अग्निं जठराग्निम् । दिवि द्युलोके सूर्यं विततान । अद्रौ पर्वते सोमं वल्लीरूपमदधात्स्थापितवान् । पर्वतपाषाणसंधिषु सोमवल्ल्या उत्पद्यमानत्वादद्रौ सोमस्थापनमुक्तम् । तदाह तित्तिरिः । सोममद्रावित्याह ग्रावाणो वा ऽअद्रयस्तेषु वा ऽएष सोमं निदधातीति । य एवं मन्त्र-

द्योतक्युलोकस्तम्भनादिसामर्थ्यवान्परब्रह्मलक्षणो वरुणस्तं वयं स्तुम इति शेषः ॥३१॥

सूर्यस्य चक्षुरारोहाग्नेरक्ष्णः कनीनकम् ।
यत्रैतशेभिरीयसे भ्राजमानो विपश्चिता ॥३२॥

का° [७. १. १.] कृष्णाजिनं पुरस्तादासजति सूर्यस्य चक्षुरितीति । कृष्णाजिनदेवत्यानुष्टुप् । हे कृष्णाजिन त्वं सूर्यस्य चक्षुर्नेत्रं त्वमारोह (34.) । तथा अग्नेर्वह्नेरक्ष्णः नेत्रस्य कनीनकं (35.) तारकां चारोह तयोश्चैक्षस्ताराम्भव यथैताभ्यां दृश्यसऽइत्यर्थः । यत्र यस्मिन्नेतयोर्दर्शने विपश्चिता विदुषा सर्वज्ञेन सूर्येणाग्निना च भ्राजमानः दीप्यमानः सन्नेतशेभिरेतशैरश्वैस्त्वमीयसे गच्छसि । एतश इत्यश्वनामसु [निघ° १. १४.] पठितम् । यत्र त्वमश्वैर्गच्छसि । ई गतौ दिवादिरात्मनेपदी । एतशैरिति करणतृतीया । यद्वा कर्मणि रूपमेतशैरिति कर्तरि तृतीया । यत्राश्वैस्त्वं नीयसे इत्यर्थः । कृष्णाजिनस्य पुंस्त्वमार्षम् । सूर्याग्निदृष्टिविषयत्वे सति मार्गो रक्षोबाधरहितो भवति । तदुक्तं तित्तिरिणा । एष वास्य खलु रक्षोहणः पन्था योऽग्नेश्च सूर्यस्य चेति ॥३२॥

उस्रावेतं धूर्षाहौ युज्येथामनश्रू अवीरहणौ ब्रह्मचोदनौ ।
स्वस्ति यजमानस्य गृहान्गच्छतम् ॥३३॥

का° [७. १. ११.] अनड्वाहौ युनक्त्युस्रावेतमितीति । आनडुही ऊर्ध्वबृहती । यस्यास्त्रयः पादा द्वादशाक्षराः सोर्ध्वबृहती । त्रिजागतोर्ध्वबृहतीत्युक्तेः । अत्राद्यो दशार्णः द्वितीयस्त्रयोदशार्णस्तेनैकोना । हे उस्रौ अनड्वाहौ युवामितमागतमेत्य च स्वयमेव युज्येथां रथे युक्तौ भवतम् । किम्भूतौ युवाम् धूर्षाहौ धुरं सहेते तौ धूर्षाहौ शकटधुरं वोढुं समर्थौ । तथा अनश्रू नेत्रयोरश्रुरहितौ सोत्साहावित्यर्थः । अवीरहणौ न वीरान्हतस्तौ । शृङ्गादिभिर्वीराणां शिशूनां हननमकुर्वाणौ । ब्रह्मचोदनौ ब्रह्मणो विप्रान्चोदयतस्तौ ब्राह्मणानां यज्ञं प्रति प्रेरकौ । एवं सम्बोध्य प्रयोजनमाह । तथाविधौ युवां स्वस्ति क्षेमेण यजमानस्य गृहान्प्रति गच्छतम् ॥३३॥

भद्रो मेऽसि प्रच्यवस्व भुवस्पते विश्वान्यभि धामानि ॥
मा त्वा परिपरिणो विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो विदन् ॥
श्येनो भूत्वा परापत यजमानस्य गृहान्गच्छ तन्नौ संस्कृतम् ॥३४॥

का° [७.१.११.] भद्रो मऽइति वाचयतीति । सौम्यं यजुः । हे सोम मे मह्यं यजमानाय मदुपकारार्थं त्वं भद्रोऽसि कल्याणरूपोऽसि । भदि कल्याणे । हे भुवः पते भूशब्देन भूमौ स्थितानि भूतानि यजमानाध्वर्युप्रभृतीन्युच्यन्ते । तेषां भूतानां पालकत्वात्पतिः सोमः । तदाह तित्तिरिः । प्रच्यवस्व भुवस्पतऽइत्याह भूतानांᳯ ह्येष पतिरिति । तथाविध हे सोम विश्वानि सर्वाणि धामान्यभि स्थानानि पत्नीशालाहविर्धानप्रभृतीनि अभिलक्ष्य प्रच्यवस्व । प्रकर्षेण गच्छ । च्युङ्गतौ । प्रच्यवमानं त्वा त्वां परिपरिणो मा विदन् मा जानन्तु । सर्वतः संचरन्तस्तस्करविशेषाः परिपरिण उच्यन्ते । तथा परिपन्थिनो यागस्य प्रतिषेधकाः शत्रवस्त्वां मा विदन् । छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरीति [पा° ५.२.८९.] निपातावेतौ । तथा वृका विकर्तनशीला अरण्यश्वानो दुर्जना वा त्वां मा विदन् । किम्भूता वृकाः । अघायवः परस्याघं कर्तुमिच्छन्ति तऽअघायवः । सुप आत्मनः क्यजिति [पा° ३.१.८.] क्यचि । अश्वाघस्यादित्याकारः [पा° ७.४.३७.] । क्याच्छन्दसीति [पा° ३.२.१७०.] क्यजन्तादुप्रत्ययः । किंच श्येनो भूत्वा श्येनरूपमास्थाय श्येनाख्यपक्षिवच्छीघ्रगामी वा भूत्वा परापत उत्पत । यजमानस्य गृहान्गच्छ । तत्तत्र यजमानगृहेषु नौ आवयोः तव मम च संस्कृतं सर्वोपकरणसंयुक्तं स्थानमस्तीति शेषः ॥३४॥

नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतᳯ सपर्यत ।
दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शᳯसत ॥३५॥

का° [७.१.२१.२२.] शालां पूर्वेण प्रतिप्रस्थाताग्नीषोमीयं पशुमादाय तिष्ठति कृष्णसारङ्गं मेध्यमभावे लोहितसारङ्गं नमो मित्रस्येत्येनमालम्भ्य वाचयतीति । सौरी जगती सूर्यदृष्टा । द्वादशाक्षरचतुःपादा जगती । अत्र मन्त्रे सूर्यरूपेण सोमः स्तूयते । एवंविधाय सूर्याय नमः । किम्भूताय मित्रस्य वरुणस्य चतुर्थ्यर्थे षष्ठौ

मित्राय वरुणाय मित्रवरुणदेवतारूपेण वर्तमानाय । जगतां हितकारिणे । वृणोति वरुणः । स्वरश्मिभिर्जगदावृणवते । चक्षसे चष्टे इति चक्षास्तस्मै । चक्षुष्मते द्रष्ट्रे इत्यर्थः ॥ यद्वायमर्थः । मित्रस्य वरुणस्य चक्षसे सर्वजगतो द्रष्ट्रे मित्रावरुणशब्देन सर्वं जगल्लक्ष्यते । तथा महो महसे तेजोरूपाय सुपां सुलुगिति [पा॰ ७. १. ३९.] विभक्तिलोपः । देवाय द्योतमानाय । तथा दूरेदृशे दूरे वर्तमानः प्राणिभिर्दृश्यतऽइति दूरेदृक् तस्मै । यद्वा दूरे पश्यतीति दूरेदृक् । देवजाताय देवाद्द्योतमानात्परमात्मनो जायतेऽसौ देवजातस्तस्मै । देवानुग्रहाय जातो देवजात इति वा । जाता देवा यस्मात्स देवजात इति वा । वाहिताग्न्यादिष्विति [पा॰ २. २. ३७.] जातशब्दस्य परनिपातः । केतवे प्रज्ञारूपाय विज्ञानघनाय । केतुरिति प्रज्ञानाम [निघ॰ ३. ९.] । दिवः पुत्राय द्युलोकस्य पुत्रवत्प्रियाय । द्युलोकाद्धि सूर्यो जायते । दिवः पुरु त्रायते स इति दिवस्पुत्रः (36.) । दिवः पालकायेति वा । एवंविधाय सूर्याय तदृतं सत्यमवश्यफलप्रदज्योतिष्टोमरूपं कर्म हे ऋत्विजः यूयं सपर्यतानुष्ठानेन सपर्यां कुरुत । सपर्यतिः परिचरणाकर्मा [निघ॰ ३. ५.] । सूर्यार्थं यज्ञं कुरुतेत्यर्थः । यद्वा तदृतं सूर्यरूपं सत्यं ब्रह्म सपर्यत परिचरत । किं च शंसत शंस स्तुतौ सूर्यप्रीत्यर्थं स्तुतिं कुरुत । शस्त्राणि पठतेत्यर्थः । यागानुष्ठाने तस्यावश्यकत्वादित्यर्थः ॥ ३५ ॥

a. वरु॑णस्योत्त॒म्भ॑नमसि । b. वरु॑णस्य स्कम्भ॒सर्ज॑नी स्थः ।
c. वरु॑णस्यऽऋत॒सद॑न्यसि । d. वरु॑णस्यऽऋत॒सद॑नमसि ।
e. वरु॑णस्यऽऋत॒सद॑नमासीद ॥ ३६ ॥

का॰ [७. ९. २५.] समीपेऽन उपस्थाप्योत्तम्भनेनोपस्तभ्नाति वरुणस्योत्तम्भनमितीति । पञ्च यजूंषि वारुणानि । हे काष्ठ त्वं वरुणस्योत्तम्भनमसि वस्त्रबद्धस्य सोमस्योन्नमनं भवसि न तु शकटस्येत्यर्थः । उत्तभ्यते शकटमुखाग्रमुन्नतत्वेन स्थाप्यते यस्मिन्काष्ठे तत्काष्ठमुत्तम्भनम् । का॰ [७. ९. २६.] शम्ये (37.) चोद्वृहति वरुणस्य स्कम्भसर्जनी स्थ इतीति । शकटयुगे बद्धयोर्बलीवर्दयोर्गलबहिर्भागे काष्ठनिर्मिते शम्ये (37.) स्थाप्येते । ताभ्यां वृषयोरितस्ततो गमनं निवार्यते ततस्ते

स्कम्भसर्जनीशब्देनोच्येते । हे शम्ये (37.) युवां वरुणस्य स्कम्भसर्जनी स्थः । स्कम्भ रोधने । सर्ज अर्जने [धा° ७.५०.] । स्कम्भनं स्कम्भो रोधः स सर्ज्यते क्रियते याभ्यां ते स्कम्भसर्जन्यौ । विभक्तेः पूर्वसवर्णः । व्रियते वेष्ट्यते वस्त्रादिनेति वरुणशब्देनात्र वस्त्रबद्धः सोम उच्यते । वरुणदेवतत्वाच्च पञ्चस्वपि मन्त्रेषु ॥ का° [७.१.२७.२८.] औदुम्बरीमासन्दीं नाभिदघ्नामरत्निमात्राङ्गीमुतामाहरन्ति (38.) चत्वारोऽभिमृशन्त्येनां वरुणस्यऽऋतसदन्यसीतीति । हे आसन्दि त्वं वरुणस्य सोमस्य सम्बन्धिनी ऋतसदन्यसि । ऋताय यज्ञाय सद्यते उपविश्यते यस्यां सा ऋतसदनी । करणाधिकरणयोरिति [पा° ३.३.११७.] ल्युप्रत्ययः । ऋतं यज्ञस्तन्निष्पत्त्यर्थमुपवेशनस्थानभूतासीत्यर्थः ॥ का° [७.१.२९.] कृष्णाजिनमस्यामास्तृणाति वरुणस्यऽऋतसदनमसीतीति । हे कृष्णाजिन वरुणस्य बद्धस्य सोमस्य ऋतसदनं यज्ञार्थमुपवेशनस्थानमसि ॥ का° [७.१.३०.] तस्मिन्त्सोमं निदधाति वरुणस्यऽऋतसदनमासीदेतीति । हे सोम त्वं वरुणस्य वस्त्रबद्धस्य तव ऋतसदनं यज्ञार्थमुपवेशनस्थानभूतमासन्दीसंस्थितं कृष्णाजिनमासीद सुखेनोपविश ॥३६॥

या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् ॥
गयस्फानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोम दुर्यान् ॥३७॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां चतुर्थोऽध्यायः ॥ ॥

का° [७.१.३२.] या तऽइति वाचयतीति । सोमदेवत्या त्रिष्टुप् गोतमदृष्टा । हे सोम ते तव या यानि धामानि प्रातःसवनादीनि स्थानानि प्राप्येति शेषः । हविषा त्वदीयरसद्रूपेण यजन्ति ऋत्विजो यागं कुर्वन्ति । यज्ञमभिलक्ष्येति शेषः । ते तव ता तानि विश्वानि सर्वाणि स्थानानि परिभूरस्तु । परितो भवति प्राप्नोति परिभूः । भू प्राप्तौ । भवान्परितः प्राप्तवान्भवतु । ऋत्विजो येषु स्थानेषु यजन्ति तानि त्वं प्राप्नुहीत्यर्थः । यद्वा ऋत्विजो यानि धामानि प्राप्य यजन्ति तानि सर्वाणि ते तव यज्ञं परिभूरस्तु यज्ञं परितो भवितृणि यज्ञव्यापकानि सन्तु । नपुंसकबहुवचनस्थाने पुल्लिङ्गैकवचनमार्षम् । किं च हे सोम त्वं दुर्यान्गृहान्प्रचर प्राप्नुहि । दुर्या इति गृहनाम [निघ° ३.४.] । द्व्यचोऽतस्तिङ इति [पा° ६.३.१३५.]

संहितायां प्रचरेति दीर्घः । किम्भूतस्त्वम् । गयस्फानः गय इति गृहनाम [निघ° ३.४.] । स्फायी वृद्धौ । गयान् स्फाययति (39.) गयस्फानः गृहाभिवर्धकः । प्रतरणः प्रकर्षेण तरन्त्यापदो येन स प्रतरणः । यद्वा प्रतारयति यज्ञपारं प्रापयतीति प्रतरणः । सुवीरः शोभनास्त्वत्प्रसादलब्धा वीरा अस्मत्पुत्रपौत्रा यस्य तव स त्वं सुवीरः । अवीरहा न वीरान्हन्तीति वीराणां परिपालक इत्यर्थः ॥ ३७ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे । शालागमाद्वाचनान्तश्चतुर्थोऽध्याय ईरितः ॥४॥

अथ काण्वशाखायां पाठविशेषः ॥

I. ॥ १ a. b ॥ १ ॥ १ c. d. e. २ a -- पुनन्तु ॥ २ ॥ २ a विश्व७ - देवीः २ b. c ॥ ३ ॥ ॥

II. ॥ ३ a [महिनां (40.)]. वृत्रस्य कनीनकासि चक्षुर्दा - देहि ॥ १ ॥ ४ ॥ २ ॥ ५ ॥ ३ ॥ ६ -- रभे ॥ ४ ॥ ७ ॥ ॥

III. ॥ ७ [- °वीऽउर्वन्तरिक्ष -] ॥ १ ॥ ८ ॥ २ ॥ ९ ॥ ॥

IV. ॥ ९ a ॥ १ ॥ ९ b. १० a - ऊर्जं मे यछ ॥ २ ॥ १० b. c. d. e [सुसस्याः] ॥ ३ ॥ १० f ॥ ४ ॥ १३ ॥ ॥

V. ॥ ११ a [°णुत व्रतं कृणु व्रतं (41.) कृणुत ॥ अग्नि°] ॥ १ ॥ ११ b [- सुमृलीकामभिष्टये वर्चोधां विश्वधायस७ सु°] ॥ २ ॥ ११ c ॥ ३ ॥ १२ ॥ ४ ॥ १३ a [- तनुः (42.)]. b. c ॥ ५ ॥ १४ ॥ ६ ॥ १५ [- °युर्मऽआगात्पुनश्चक्षुः पुनः श्रोत्रं मऽआगात्पुनः प्राणः पुनरात्मा मऽआगात् ॥ वै° -- °ग्निर्मा पातु -] ॥ ७ ॥ १६ a ॥ ८ ॥ १६ b ॥ ९ ॥ २२ ॥ ॥

VI. ॥ १७ ॥ १ ॥ १८ [- तनुयत्त्वमशीय स्वाहा ॥ चन्द्रमसि शुक्रमस्यमृ° -] ॥ २ ॥ १९ - सुप्रतीची भव ॥ ३ ॥ १९ मित्रस्त्वा - °न्नाय. २० - सयूथ्यः ॥ ४ ॥ २० सा देवि - °रेहि ॥ ५ ॥ २७ ॥ ॥

VII. ॥ २१ ॥ १॥ २२ a [- इलायास्य° -] ॥ २॥ २२ b. c. d. e [अस्मे] ॥ ३॥ २२ f. g. २३ [- वीरान्विदेय -] ॥ ४॥ ३१॥ ॥

VIII. ॥ २४ a [- छन्दोमानानाᳪ साम्राज्यं गच्छतादिति मे -] ॥ १॥ २४ b ॥ २॥ २५ a [- अतिद्युतस्स° -] ॥ ३॥ २५ b. c ॥ ४॥ ३५॥ ॥

IX. ॥ २६ a [चन्द्रं त्वा चन्द्रेण क्रीणामि शुक्रᳪ शुक्रेणामृ° -]. b. c ॥ १॥ २६ d ॥ २॥ २७ a. b ॥ ३॥ २७ c [- कृशानो ॥ एते -] ॥ ४॥ २८ ॥ ५॥ २९ ॥ ६॥ ४१॥ ॥

X. ॥ ३० ॥ १॥ ३१ ॥ २॥ ३२ [- कनीनकाम् । य° -] ॥ ३॥ ३३ [उस्राऽएतं धूर्वाह्णौ यु° -] ॥ ४॥ ३४ ॥ ५॥ ३५ ॥ ६॥ ३६ ॥ ७॥ ३७ ॥ ८॥ ४९॥ ॥

दशानुवाकेषु नवचत्वारिंशत् ॥ ॥

इति काण्वशाखायां संहितापाठे चतुर्थोऽध्यायः ॥ ॥

I. अग्नेस्तनूरसि विष्णवे त्वा सोमस्य तनूरसि विष्णवे त्वातिथेरातिथ्यमसि विष्णवे त्वा श्येनाय त्वा सोमभृते विष्णवे त्वाग्नये त्वा रायस्पोषदे विष्णवे त्वा ॥ १॥

चतुर्थेऽध्याये सऽर्विग्यजमानस्य शालाप्रवेशमारभ्य क्रीतसोमस्य शालाप्रवेशपर्यन्ता मन्त्रा उक्ताः ॥ अथ पञ्चमोऽध्यायस्तत्रादौ आतिथ्येष्टौ हविर्ग्रहणादिमन्त्रा उच्यन्ते ॥ ॥ का° [८. १. ४.] निर्वपेदग्नेस्तनूरिति पञ्चकृत्वः प्रतिमन्त्रमिति ॥ पञ्च यजूंषि वैष्णवानि ॥ हे हविः त्वमग्नेस्तनूरसि अग्निसंज्ञो यो देवः सोमस्य राज्ञो भृत्यस्तस्य गायत्रीछन्दोऽधिष्ठातुस्तनूः शरीरं भवसि तृप्तिजनकत्वात् तथाविध हे हविर्विष्णवे बहुयज्ञव्यापिने सोमाय सोमप्रीत्यर्थं त्वा त्वां निर्वपामीति शेषः ॥ सोमस्य तनूरसि । सोमसंज्ञः कश्चित्सोमस्य राज्ञो भृत्यस्त्रिष्टुप्छन्दोऽधिष्ठाता तस्य तृप्तिहेतुत्वात्तनूरसि । अन्यत्पूर्ववत् ॥ अतिथेरातिथ्यमसि । अतिथिसंज्ञः सोमराजानुचरो जगतीछन्दोऽधिष्ठाता । हे हविः त्वमतिथेरतिथिसंज्ञस्य सोमभृत्यस्य आतिथ्यमसि आतिथ्यनामकसंस्काररूपमसि । तिथिविशेषं विनैवातित्नुधया (1.) पो-

ऽतिथौ विप्रेऽतिथौ समागते तत्सत्काराय क्रियमाणः पादक्षालनभोजनसंवाहना-दिसंस्कार आतिथ्यमुच्यते । अतिथेरिदमातिथ्यम् अतिथेर्ञ्य इति [पा° ५.४.२६.] ञ्यप्रत्ययः । विष्णवे त्वां निर्वपामीति पूर्ववत् ॥ श्येनाय त्वा सोमभृते । श्येनो नाम देवः सोमराजानुचरः स्वर्गात्सोमाहर्ता श्येनरूपधारिगायत्र्यधिष्ठाता तस्मै श्येनाय विष्णवे सोमाय च त्वां निर्वपामि । किम्भूताय श्येनाय सोमभृते सोमं हरति आनयतीति सोमहृत्तस्मै । हृग्रहोर्भश्छन्दसीति [पा° क° ८.२.३२. वा° १.] हरतेर्हस्य भः । सोमानयनकर्त्रे । तथा च श्रुतिः [३.४.१.१२.] । सा यद्गायत्री श्येनो भूत्वा दिवः सोममाहरदिति ॥ अग्नये त्वा रायस्पोषदे । रायस्पोषं धनपुष्टिं ददाति रायस्पोषदाः तस्मै । क्विप्प्रत्ययः । राज्ञो धनं क्रयविक्रयादिना बहुधा पोषयित्वा राज्ञेऽर्पयति स रायस्पोषदाः अग्निसंज्ञोऽपरः सोमानुचरोऽस्ति अनुक्तछन्दोऽधिष्ठाता देवः तस्मै धनपुष्टिदायिनेऽग्नये हे हविः त्वां गृह्णामि । विष्णवे त्वेति पूर्ववत् ॥ विष्णुशब्दाभिधेयस्य सोमस्य राज्ञो हविषा तदनुचराणामग्न्यादिदेवानां तद्द्वारा तत्सम्बन्धिनां गायत्र्यादिछन्दसां च तृप्तिर्भवति । तदाह तित्तिरिः । यावद्भिर्वै राजानुचरैरागछति सर्वेभ्यो वै तेभ्य आतिथ्यं क्रियते छन्दांऽसि खलु वै सोमस्य राज्ञोऽनुचराणीति ॥ १ ॥

a. अग्नेर्जनित्रमसि । b. वृषणौ स्थः । c. उर्वश्यसि । d. आयुरसि । e. पुरूरवा असि । f. गायत्रेण त्वा छन्दसा मन्थामि । g. त्रैष्टुभेन त्वा छन्दसा मन्थामि । h. जागतेन त्वा छन्दसा मन्थामि ॥ १ ॥

अथाग्निमन्थनमन्त्राः ॥ का° [५.१.२८.] अग्नेर्जनित्रमिति शकलमादाय वेद्यां करोतीति ॥ शकलदैवतं यजुः । हे शकल त्वमग्नेर्जनित्रं जननाधारभूतमसि । जायतेऽस्मिन्निति जनित्रम् ॥ का° [५.१.२९.] वृषणाविति कुशतरुणौ तस्मिन्निति । तस्मिन् शकले करोतीत्यर्थः । मन्त्रार्थस्तु । हे दर्भौ युवां वृषणौ सेक्तारौ स्थः भवथः । वर्षत इति वृषणौ । कनिन्प्रत्ययः । यथा पुत्रजननाय स्त्रीपुरुषौ वीर्यस्य सेक्तारौ तद्वद्युवामप्यरण्योरग्निजननसामर्थ्यसंपादकावित्यर्थः ॥ का° [५.१.३०.] उर्वश्यसीत्यधरारणिं तयोरिति । शकलस्थापितयोर्दर्भयोरधरारणिं निदध्यादिति

सूत्रार्थः ॥ हे अधरारणे त्वमुर्वशी असि । यथोर्वशी पुरूरवोनृपस्य भोगायाधस्ताद्धेते तद्वत्त्वमधोऽवस्थितासीत्यर्थः ॥ का॰ [५. १. ३१.] आयुरसीत्युत्तरयाज्यस्थालीᳬ सᳬस्पृश्येति । उत्तरारण्याज्यस्थालीं स्पृशेदिति सूत्रार्थः ॥ हे स्थालीगताज्य त्वमायुरसि अरणिद्वयेन जनिष्यमाणस्याग्नेरायुप्रदं (2.) भवसि ॥ का॰ [५. १. ३२.] पुरूरवा इत्यभिनिधानं तयेति । अधरारणेरभिमुखीमुत्तरारणिं निदध्यादिति सूत्रार्थः ॥ हे उत्तरारणे त्वं पुरूरवा असि यथा पुरूरवा नृप उर्वश्या अभिमुख उपरि वर्तते तथा त्वमपीत्यर्थः । उर्वशीत्यादिमन्त्रत्रयं श्रुत्या व्याख्यातम् [३. ४. १. २२.] । उर्वशी वाऽअप्सराः पुरूरवाः पतिरथ यत्तस्मान्मिथुनादजायत तदायुरिति ॥ का॰ [५. २. २.] मन्थति गायत्रेणेति प्रतिमन्त्रं त्रिः प्रदक्षिणमिति । मन्त्रत्रयेणारण्योर्मन्थनं कुर्यात् ॥ हे अग्ने गायत्रेण छन्दसा गायत्रीछन्दोऽभिमानिना देवेनाहं त्वा त्वां मन्थामि अरण्योर्मन्थनेनोत्पादयामि । एवमुत्तरावपि मन्त्रौ योज्यौ ॥ २ ॥

भवतं नः समनसौ सचेतसावरेपसौ ।

मा यज्ञᳬ हिᳬसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः ॥ ३ ॥

का॰ [५. २. ३.] भवतं न इति प्रास्यतीति । मन्थनोत्थमग्निमाहवनीये प्रास्यतीत्यर्थः ॥ पङ्क्तिः । यस्याः अष्टार्णाः पञ्च पादाः सा पङ्क्तिः । अत्र तु तृतीयः षडक्षरः चतुर्थो दशार्णः ॥ निर्मथ्याहवनीयावग्नी देवते । हे जातवेदसावुभावग्नी नोऽस्मदर्थं युवामीदृशौ भवतम् । किम्भूतौ युवाम् । समनसौ मनसा सहितौ । तथा सचेतसौ समानं चेतो ययोस्तौ परस्परं समानचित्तयुक्तौ । अन्यविषयं मनः परिहृत्यास्मदनुग्रहाभिमुखत्वं समनस्त्वम् अनुग्रहे परस्परविप्रतिपत्तिराहित्यं सचेतस्त्वम् । तथा अरेपसौ पापरहितौ प्रमादादस्माभिः कृतेऽपि पापे कोपाभावः पापराहित्यम् । तदेव स्पष्टयति । यज्ञमस्मत्कर्म मा हिᳬसिष्टं मा विनाशयतं यज्ञपतिं यजमानं च मा हिᳬसिष्टम् । तथा अद्यास्मिन्ननुष्ठानदिने नोऽस्मदर्थं शिवौ शान्तौ कल्याणकारिणौ भवतं पूर्वोक्तविधिना ॥ ३ ॥

अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रोऽअभिशस्तिपावा ।

स नः स्योनः सुयजा यजेह देवेभ्यो हव्यᳬ सदमप्रयुच्छन्त्स्वाहा ॥ ४ ॥

28

का° [५. २. ६.] अग्नावग्निरिति जुहोति स्थाल्याः स्रुवेणेति ॥ विराट् । दशाक्षरैश्चतुर्भिः पादैर्विराट् । अत्र द्वितीयतुर्यावेकादशार्णौ (3.) ततो ह्यधिका ॥ अग्निर्मथ्यमानोऽग्नावाहवनीये प्रविष्टः सन् चरति हविर्भक्षयति । चर गतिभक्षणयोः । किम्भूतोऽग्निः ऋषीणां पुत्रः ऋत्विजो वेदविदः ऋषयः तैरुत्पादितत्वात्तेषां पुत्रवत्पुत्रः । तथा अभिशस्तिपावा अभिशस्तिर्वैकल्यनिमित्तोऽभिशापस्तस्मात्पाति रक्षतीत्यभिशस्तिपावा । आतो मनिन्निति [पा° ३. २. ७४.] वनिप्प्रत्ययः । हे अग्ने स तथाविधस्त्वं नोऽस्मदर्थं स्योनः सुखरूपः सन् सुयजा शोभनयागेन इहास्मिन् स्थाने देवेभ्यः इन्द्रादिभ्यः हव्यं सोमादिरूपं यज देहि अस्मद्दत्तं हविर्देवान्प्रापयेत्यर्थः । किं कुर्वन् । सदं सदा अप्रयुछन् अप्रमाद्यन् । युछ प्रमादे । स्वाहा इदमाज्यं तुभ्यं हुतमस्तु । यद्वा सोऽग्निर्नो हविर्देवेभ्यो यज यजतु ददाविति पुरुषव्यत्ययेन वा योजना ॥४॥

11. a. आपतये त्वा परिपतये गृह्णामि तनूनप्त्रे शाक्वराय शक्वनऽओजिष्ठाय ।

b. अनाधृष्टमस्यनाधृष्यं देवानामोजोऽनभिशस्त्यभिशस्तिपा अनभिशस्तेन्यमञ्जसा (4.) सत्यमुपगेषᳪ स्विते मा धाः ॥५॥

का° [८. १. १९. २०.] ध्रौवं व्रतप्रदाने गृह्णात्यापतयऽइति द्विश्च स्थाल्याः स्रुवेणेति । व्रतं प्रदीयते येन पात्रेण तत्र पात्रे ध्रुवास्थमाज्यं गृह्णीयादिति सूत्रार्थः ॥ वायुदेवत्यं यजुः । आ समन्तात्पतति गच्छतीत्यापतिः सततगतिर्वायुस्तस्मै हे आज्य त्वां गृह्णामि ॥ किम्भूताय । परिपतये परितः पततीति परिपतिस्तस्मै सर्वव्यापिने ॥ तथा तनूनप्त्रे । तनोति विस्तारयति विश्वमिति तनूरात्मा तस्य नप्त्रे पौत्राय ॥ शाक्वराय शक्नुवन्ति स्थातुं भूतानि यत्र स शक्वर आकाशस्तस्यापत्यं शाक्वरस्तस्मै । तस्मादेतस्माद्वाऽआत्मन आकाशः सम्भूत आकाशाद्वायुरिति श्रुतेः [तैत्ति° आरण्य° ८. १.] ॥ तथा शक्वने । शक्नोति सर्वं कर्तुमिति शक्वा तस्मै । अन्येभ्योऽपि दृश्यन्तऽइति [पा° ३. २. ७५.] वनिप् ॥ ओजिष्ठाय । ओजो बलमस्यास्तीत्योजस्वी । अस्मायामेधास्रजो विनिरिति [पा° ५. २. १२१.] विनिप्रत्ययः । अतिशयेनौजस्वी ओजिष्ठस्तस्मै । अतिशायने तमबिष्ठनाविति [पा° ५. ३. ५५.]

इष्ठनि प्रत्यये विन्मतोर्लुगिति [पा° ५.३.६५.] विनो लोपे टिलोपः ॥ ॥ यद्वास्य मन्त्रस्यार्थान्तरं तित्तिरिर्व्याख्यातम् । हे आज्य त्वामापतये प्राणदेवताप्रीतये गृह्णाम्यत्र पात्रे स्वीकरोमि । आ समन्तात्पाति देहं रक्षतीत्यापतिः प्राणः । तदाह तित्तिरिः । प्राणो वाऽआपतिः प्राणमेव प्रीणातीति ॥ इष्टप्राप्त्युपायमनिष्टपरिहारोपायं च चिन्तयित्वा परितः पाति पालयति परिपतिर्मनस्तत्प्रीत्यै गृह्णामि । तदाह तित्तिरिः । मनो वै परिपतिर्मन एव प्रीणातीति ॥ तनूनप्त्रे । तनूं शरीरं न पातयति न विनाशयतीति तनूनपा जाठरोऽग्निस्तस्मै जाठराग्निदेवताप्रीत्यै आज्य त्वां गृह्णामि ॥ शाक्वराय । शकनशीलः शक्वरः शक्तिमान्पुरुषस्तस्येदं शाक्वरं शक्तिस्वरूपं तस्मै शक्तिस्वरूपाभिमानिदेवताप्रीत्यै त्वां गृह्णामि ॥ शक्वनऽओजिष्ठाय । शक्वने इति चतुर्थी सप्तम्यर्थे । शक्वनि शक्तिमति पुरुषे यदोजिष्ठं सारं तस्मै । ओजोनामाष्टमो धातुस्तत्सारमोजिष्ठम् तदवष्टम्भेनैव शरीरे शक्तिरवतिष्ठते । ओजःसाराभिमानिदेवताप्रीत्यै त्वां गृह्णामीत्यर्थः ॥ ॥ का° [८.१.२४-२६.] तानूनप्त्रमितद्दक्षिणस्यां वेदिश्रोणौ निधायावमृशन्त्यृत्विजो यजमानश्चानाधृष्टमित्यद्धोहस्तेभ्य इति ॥ आज्यदैवतं यजुः । हे आज्य त्वमीदृशमसि । किम्भूतम् । अनाधृष्टमितः पूर्वं केनाप्यतिरस्कृतम् ॥ अनाधृष्यं न आधर्षितुं शक्यमितः परमप्यतिरस्कार्यम् ॥ देवानामग्न्यादीनामोजः सारभूतम् ॥ अनभिशस्ति नास्ति अभिशस्तिर्निन्दा यस्य तत् अभिपूर्वः शंसतिर्गर्हायां वर्तते ॥ अभिशस्तिपाः अभिशस्तिरृत्विजां परस्परविरोधेन निन्दनं तस्याः पाति रक्षतीत्यभिशस्तिपाः । पुंस्त्वं छान्दसम् ॥ अनभिशस्तेन्यम् अनभिशस्ते अनिन्दिते स्वर्गादौ नयतीत्यनभिशस्तेनीः । द्वितीया प्रथमार्थे । पुंस्त्वं व्यत्ययेन ॥ यतस्त्वमीदृशमसि अतो हे तानूनप्त्राज्याहमृत्विक् अञ्जसा ऋजुमार्गेण मानसकौटिल्यरहितेन सत्यमाज्यस्पर्शरूपं शपथमुपगेषमुपगच्छेयम् । उपपूर्वस्य गायतेर्लेट्युत्तमैकवचने सिब्बहुलं लेटीति [पा° ३.१.३४.] सिपि इडागमे लेटोऽडाटावित्यडागमे [पा° ३.४.९४.] च रूपम् इतश्च लोपः परस्मैपदेष्विति [पा° ३.४.९७.] इलोपः । किं च हे आज्य स्विते शोभनमार्गे यज्ञकर्मणि मा मां त्वं धाः धेहि स्थापय । दधातेर्लुङि मध्यमैकवचनेऽडभावे रूपम् ॥५॥

अग्ने व्रतपास्त्वे व्रतपा या तव तनूरियꣳ सा मयि यो मम तनूरेषा सा त्वयि ।
सह नौ व्रतपते व्रतान्यनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिः ॥ ६॥

का॰ [८. २. ४.] अग्ने व्रतपा इत्याहवनीये समिधमाधायेति ॥ आग्नेयं यजुः । यजमानोऽनेन यजुषाग्निशरीरात्मशरीरयोर्व्यत्ययं करोति । हे व्रतपाः सर्वेषां व्रतानां पालकाग्ने त्वे व्रतपाः (5.) त्वमस्मदीयस्य वर्तमानव्रतस्य पालको भवसीति शेषः । विभक्तेः शे आदेशे त्वे इति रूपम् । तव तथाविधस्य व्रतपालकस्य या तनूः शरीरमस्ति सेयं तनूर्मयि भवत्विति शेषः । यो या उ या च मम तनूः मदीयं शरीरं सैषा तनूस्त्वयि भवतु । तथा सति हे व्रतपते व्रतपालकाग्ने व्रतान्यनुष्ठेयानि कर्माणि नौ अग्नियजमानयोः सह प्रवर्तन्तामिति शेषः । यावान्व्रतेषु ममादरस्तावानेव तवापि भवत्वित्यर्थः । किं च । दीक्षापतिर्दीक्षायाः पालकः सोमो मे मम दीक्षामनुमन्यताम् । तथा तपस्पतिः उपसद्रूपस्य तपसः पालकः सोमः तपः मदीयमुपसद्रूपमनु मन्यतामित्यनुवर्तते ॥ ६॥

अꣳशुरꣳशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविदे ।
आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्व ।
आप्याययास्मान्त्सखीन्त्सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीय ॥
एष्टा रायः प्रेषे भगायऽऋतमृतवादिभ्यो नमो द्यावापृथिवीभ्याम् ॥ ७॥

का॰ [८. २. ६.] यजमानषष्ठाः सोममाप्याययन्त्यꣳशुरꣳशुरिति ॥ प्रकृतिः चतुरवसाना सोमदेवत्या । अन्त्योऽर्धर्चो लिङ्गोक्तदैवतः । चतुरशीत्यक्षरा प्रकृतिः । तत्र मन्त्रद्वयम् ॥ सोमवल्ल्या अवयवोऽꣳशुरुच्यते । वीप्सा सर्वसंग्रहार्था । हे सोम देव ते तवांशुरंशुः सर्वोऽप्यवयव इन्द्राय इन्द्रप्रीत्यर्थमाप्यायतां वर्धताम् चिरावस्थानेन (6.) यः सोमावयवो म्लानः शुष्कश्च तदुभयं मन्त्रेणाप्यायितं भवति । तदाह तित्तिरिः । यदेवास्य शुष्यति यन्म्लायति तदेवास्यैतेनाप्याययतीति ॥ किम्भूतायेन्द्राय । एकधनविदे एकं मुख्यं धनं सोमरूपं विन्दते लभते स एकधनवित् यद्वा सोमकण्डनाय यैर्जलमानीयते ते कुम्भा एकधनाः एकं धनं सोमरूपं यत्रेति

तान्वेत्ति जानातीति सोमकण्डनाय जलकुम्भा आनीता इति जानातीत्यर्थः ॥ किं च हे सोम तुभ्यं त्वत्पानार्थमिन्द्र आप्यायतां वर्धताम् तथा हे सोम त्वमपि इन्द्रायेन्द्रपानायाप्यायस्व सर्वतो वृद्धो भव । अनेनोभयोरपि वृद्धिर्भवति । तदाह तित्तिरिः । उभावेवेन्द्रं च सोमं चाप्याययतीति ॥ किं च हे सोम सखीन् सखिवत्प्रीतिविषयानस्मानृत्विजः सन्या मेधया चाप्यायय प्रवर्धय । सनिर्धनदानं मेधार्थधारणशक्तिः । ऋत्विजो वाऽअस्य सखाय इत्युक्तेः सखिशब्देन ऋत्विजः । किं च हे सोम देव ते तव स्वस्ति क्षेमोऽस्तु तव प्रसादादहं सुत्यां सोमाभिषवक्रियां समाप्तिदिनमशीय प्राप्नुयाम् ॥ ॥ का° [८. २. १.] प्रत्येत्य प्रस्तरे निह्नुवत उत्तानहस्ता दक्षिणोत्ताना वेष्टा राय इति । सर्वेऽपि ऋत्विजः प्रस्तरे निजहस्तानुत्तानान्कृत्वा दक्षिणहस्तं वोत्तानमुपर्यवस्थाप्य निह्नुवते सोमं परिचरन्तीति सूत्रार्थः ॥ रायो धनानि एष्टाः आ समन्तादिष्टा अस्माकमपेक्षिताः । सोम त्वत्प्रसादादस्माकं रायः सन्त्विति भावः ॥ यद्वा रायः दक्षिणालक्षणा एष्टाः आ समन्तादत्ताः यजते नृपम् दक्षिणा दास्यन्त इति भावः । किमर्थम् प्रेषे (7.) भगाय । प्रकर्षेणेष्यतऽइति प्रेट् । तस्मै प्रेष्यमाणाय भगायैश्वर्याय ॥ यद्वा प्रकर्षेण इषे अन्नाय भगाय च ॥ किं च ऋतवादिभ्योऽग्निहोत्रिभ्यः ऋतमवश्यंभाविफलोपेतं कर्म संपादयेति शेषः । ऋतं सत्यं वदन्तीति ऋतवादिनः ॥ यद्वा षष्ठ्यर्थे चतुर्थी ऋतवादिनामस्माकमृतं कर्मफलमस्त्विति शेषः ॥ द्यावापृथिवीभ्यां तदभिमानिदेवताभ्यां नमोऽस्तु । तयोरनुग्रहेण यजमानायाविघ्नस्थितिर्भवतीति नमस्क्रियते । तदाह तित्तिरिः । द्यावापृथिवीभ्यामेव नमस्कृत्यास्मिंलोके प्रतितिष्ठतीति ॥ ७॥

a. या तेऽअग्नेऽयःशया तनूर्वर्षिष्ठा गह्वरेष्ठा ।

उग्रं वचोऽअपावधीत्त्वेषं वचोऽअपावधीत्स्वाहा ।

b. या तेऽअग्ने रजःशया तनूर्वर्षिष्ठा - - स्वाहा ।

c. या तेऽअग्ने हरिशया तनूर्वर्षिष्ठा - - स्वाहा ॥ ८॥

का° [८. २. ३५.] उपसदं जुहोति स्रुवेण या तऽइति ॥ आग्नेयानि त्रीणि यजूंषि । अत्रेयमाख्यायिका अस्ति । देवैः पराजिता असुरास्तपस्तप्त्वा त्रैलोक्ये

त्रीणि पुराणि चक्रुर्लोहमयीं भूमौ राजतीमन्तरिक्षे हैमीं दिवि । तदा देवैस्ता दग्धुमुपसदाग्निराराधितस्ततत उपसद्देवतारूपोऽग्निर्यदा तासु पूर्षु प्रविश्य ता ददाह तदा तिस्रः पुरोऽग्नेस्तनवोऽभूवन् । तदभिप्रेत्यायं मन्त्रः ॥ हे अग्ने या ते तवायःशया तनूः । अयसि शेते इत्ययःशया लोहमयीत्यर्थः । लोहमयपुरव्यापित्वेन तद्रूपा सती (४.) ॥ वर्षिष्ठा देवानामतिशयेनाभिमतफलवर्षिणी ॥ तथा गह्वरेष्ठा गह्वरे असुराणां विषमे देशे तिष्ठतीति गह्वरेष्ठा । हलदन्तात्सप्तम्याः संज्ञायामिति [पा॰ ६. ३. ९.] विभक्तेरलुक् ॥ सा ते तनूरुग्रं वचोऽपावधीत् । छिन्द्धि भिन्द्धीत्यादिकमसुरप्रोक्तं तीव्रं वचनं विनाशितवती ॥ तथा त्वेषं वचः असुरोक्तं देवाधिक्षेपरूपं प्रदीप्तं वाक्यमपावधीत् ॥ स्वाहा तथाविधोपकाराय तुभ्यमग्नये हविर्दत्तम् । ततोऽसुरा एषु लोकेषु पुरश्चक्रिरे अयस्मयीमेवास्मिंल्लोके रजतामन्तरिक्षे हरिणीं दिवीत्यादिश्रुत्या [३. ४. ४. ३.] अयमितिहासो निरूपितः ॥ उग्रत्वेषवचसोरर्थान्तरम् । यथा असुरैः पराजिता देवा अन्नपानेऽअलभमानाः क्षुत्पिपासाभ्यां वयं पीडिता इति यदूचुस्तदुग्रं वचः । तथा किं वा वीरहत्यादि महापातकमस्माभिः कृतमिति क्लिश्नन्तो यद्वाक्यं संतापहेतुत्वेन दीप्तमूचुस्तत्त्वेषं वचः । तदाह तित्तिरिः । अशनायापिपासे ह वाऽउग्रं वच एनश्च वै वीरहत्यं च त्वेषं वच इति ॥ ॥ का॰ [८. २. ३८.] एवमितरेऽअन्वहं७ रजःशया७ हरिशयां चेति । यथा प्रथमदिने या तेऽअग्नेऽयःशयेत्युपसदेवमितरे द्वितीयतृतीये उपसदौ द्वितीयतृतीयदिनयोरनुतिष्ठेत् । द्वितीयस्यामुपसदि रजःशयेति तृतीयोपसदि हरिशयेति मन्त्रभेद इति सूत्रार्थः ॥ रजःशया रजतमयी । हरिशया हिरण्मयी । अन्यत्पूर्ववत् ॥ ८॥

III. a. त॒प्ताय॑नी मेऽसि । b. वि॒त्ताय॑नी मेऽसि ।

c. अव॑तान्मा नाथि॒तात् । d. अव॑तान्मा व्यथि॒तात् ।

e. वि॒दद॒ग्निर्न॒भो नाम॑ । f. अग्नेऽअङ्गि॒र आयु॑ना नाम्नेहि॑ ।

g. योऽस्यां॑ पृथि॒व्यामसि॒ यत्तेऽनाधृ॑ष्टं नाम॑ य॒ज्ञियं॒ तेन॒ त्वाद॑धे ।

h. i. = e. f. । k. यो द्वि॒तीय॑स्यां पृथि॒व्यामसि॒ - - °द॑धे ।

l. m. = e. f. । n. यस्तृ॒तीय॑स्यां पृथि॒° - - °द॑धे ॥ o. अनु॑ त्वा दे॒ववी॑तये ॥९॥

का° [५.३.२०-२५.] शम्यामादाय चात्वालं मिमीते पूर्वेणोत्करं संचरं परिहृाप्य शम्यामुदीचीं निदधाति पुरस्ताच्च दक्षिणतः प्राचीमुत्तरतश्च स्फ्येनान्तर्लिखति तप्तायनीति प्रतिमन्त्रमिति। उत्तरवेदिनिचयार्थं यत्र भूप्रदेशे मृदं खनति स प्रदेशश्चात्वाल उच्यते। तत्रोत्करात्पूर्वस्यां संचरपरिहारिणोदगग्रां शम्यां निधाय तत्प्रमाणां तत्पूर्वपार्श्वे स्फ्येन रेखां कुर्यात् तथा तत्पूर्वपार्श्वे तथैव शम्यां निधाय रेखां कुर्यात् अभ्यन्तरे एवं दक्षिणोत्तरयोरपि प्रागग्रां शम्यां निधाय रेखाद्वयं कुर्यादिति सूत्रार्थः॥ अस्यां कंडिकायां चतुर्दश यजूंषि। तत्राद्यानि चत्वारि पृथिवीदेवत्यानि॥ अत्र प्रथमं परिलिखति। हे पृथिवि त्वं मे ममानुग्रहार्थं तप्तायनी असि। तप्तं पुरुषमयति प्राप्नोतीति तप्तायनी। यो हि दरिद्रः क्षेत्ररहितो ऽहमिति संतप्यते तं तापोपशान्त्यर्थं प्राप्नोषीत्यर्थः। यद्वा तप्तः सन्नरो यस्यामयति सा तप्तायनी ममासि॥ द्वितीयं लिखति। वित्तार्थं नरो यस्यामितीति वित्तायनी। यद्वा वित्तार्थं निर्धनं पुरुषमयतीति वित्तायनी। पृथिव्यां हि प्राप्तायां सस्यनिष्पत्तिद्वारा मद्धनं लभते॥ तृतीयं परिलिखति। हे पृथिवि नाथितात् याचितात् मा मां त्वं अवतात् रक्ष। तुह्योस्तातङ्ङिति [पा° ७.१.३५.] हेस्तातङ्ङादेशः। यथा कमपि न याचे तथा मां कुर्वित्यर्थः। नाथतिधातुर्याञ्चार्थः॥ चतुर्थं परिलिखति। व्यथ भयचलनयोः। व्यथितात् भयाच्चलनात्स्थानभ्रंशाच्च मा मामवतात् रक्ष॥ ॥ का° [५.३.२६.] विदेदग्निरिति चात्वाले प्रहरति स्फ्येनेति। प्रहरति मृत्तिकां खनेदित्यर्थः॥ आग्नेयं यजुः। हे चात्वालगतमृत्तिके नभो नामाग्निर्नभःसंज्ञस्त्वदधिष्ठाताग्निर्विदेत्त्वां जानीयात्। मया खन्यमानां त्वां त्वदधिष्ठातानुजानात्वित्यर्थः। अग्निनामोच्चारणपुरःसरं प्रहरेत्। तथा च श्रुतिः [३.५.१.३१.]। स वाऽअग्नीनामिव नामानि गृह्णन्हरतीति॥ ॥ का° [५.३.२७.] अग्नेऽअङ्गिर इति पुरीषं प्रहरतीति (9.)। पुरीषं खाता मृत्॥ हे अग्ने हे अङ्गिरः। अङ्गिर्गतिरस्यास्तीति अङ्गिराः। मत्वर्थे रस्प्रत्ययः। तत्सम्बोधनम्। हे अग्ने त्वमायुना नाम्नाभिहितः सन् एहि गछ। एति गछतीत्यायुरग्नेर्नाम। अधिष्ठातृत्वेनागतऽएवाधिष्ठेयमागछतीत्यग्नेरागमनादिकं प्रार्थ्यते॥ ॥ का° [५.३.२८.] योऽस्यामिति निवपति पूर्वार्धे शङ्कुसहितमिति। उत्तरवेदिस्थाने मृदं निक्षिपेदित्यर्थः॥ हे अग्ने यस्त्वमस्यां दृश्य-

मानायां पृथिव्यां भूमावसि । किं च ते तव यज्ञियं यज्ञयोग्यं यत् नामाग्निरिति प्रसिद्धमनाधृष्यं केनापि याज्ञिकेनातिरस्कृतं तेन त्वादधे तेन नाम्ना युक्तां त्वां स्थापयामि ॥ ॥ का° [५.३.३०.३१.] एवं द्विरपरं द्वितीयस्यां तृतीयस्यामिति विशेष इति । यथा पूर्वैस्त्रिभिर्मन्त्रैः खात्वा हृत्वा मृत्प्रक्षिप्ता वेद्यर्थमेतत्त्रितयं पुनरपि द्विः कुर्यादिति मन्त्रयोः तत्रास्यामिति पदस्थाने द्वितीयस्यां तृतीयस्यामिति पाठविशेष इति सूत्रार्थः ॥ यद्यपि पृथिवीशब्देन भूमिरेव तथापि द्वितीयस्यामिति तृतीयस्यामिति विशेषणत्वाद्द्वितीया पृथिव्यन्तरिक्षं तृतीया पृथिवी द्यौः अन्यत्पूर्ववद्व्याख्येयम् ॥ ॥ का° [५.३.३२.] अनु त्वेति चतुर्थं यथार्थमाहृत्येति । यथा पूर्वस्मिन्पर्यायत्रये मृदाहृत्य प्रक्षिप्ता एवं चतुर्थमपि प्रक्षेपणपर्यन्तं मृदाहरणं कुर्यादिति सूत्रार्थः ॥ देववीतये देवानां प्रीतये हे मृत्तिके त्वा त्वामनु पूर्वोक्तमाहरणत्रयमनुसृत्याहरामीति शेषः ॥ ९॥

a. सिꣳह्यसि सपत्नसाही देवेभ्यः कल्पस्व ।

b. सिꣳह्यसि सपत्नसाही देवेभ्यः शुन्धस्व ।

c. सिꣳह्यसि सपत्नसाही देवेभ्यः शुम्भस्व ॥ १० ॥

का° [५.३.३२.] सिꣳह्यसीति व्यूहत्युत्तरवेदिꣳ शम्यामात्रीमिति । विशेषेण पांसुभिः समां करोति ॥ त्रयाणां वेदिर्देवता । वाक्पूर्वमसुरेभ्यः क्रुद्धा सिꣳही भूत्वा चचरेतीतिहासः [३.५.१.३२.] । सा वेदिमन्त्रैरुच्यते (10.) । हे उत्तरवेदि या त्वं सिंही सिंहसमाना भूत्वा सपत्नसाही सपत्नान् सहतेऽभिभवतीति सपत्नसाही कर्मण्यण् शत्रूणामभिभवित्री असि भवसि । अतो देवेभ्यः देवोपकारार्थं कल्पस्व समर्था उत्तरवेदिरूपेण क्लृप्ता भव ॥ ॥ का° [५.३.३७.] प्रोक्षत्युत्तरवेदिꣳ सिकताश्च प्रकिरति सिꣳह्यसीति प्रतिमन्त्रमिति ॥ हे उत्तरवेदे शुन्धस्व शुद्धा भव । शुन्ध शुद्धौ । अन्यत्पूर्ववत् ॥ हे उत्तरवेदे त्वं शुम्भस्व सिकताप्रक्षेपेण शोभिता भव । अन्यत्पूर्ववत् । शुभतिरलङ्कारार्थः ॥ १० ॥

IV. a. इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु । b. प्रचेतास्त्वा रुद्रैः पश्चात्पातु ।
c. मनोजवास्त्वा पितृभिर्दक्षिणतः पातु । d. विश्वकर्मा त्वादित्यैरुत्तरतः पातु ।

e. इदमहं तप्तं वार्बहिर्धा यज्ञान्निःसृजामि ॥ ११ ॥

का° [५. ४. ११.] वेद्यन्तरे स्थित्वोदङ्ङुत्तरवेदिं प्रोक्षतीन्द्रघोष इति प्रतिमन्त्रं प्रतिदिशं यथालिङ्गमिति ॥ चतुर्णां यजुषामुत्तरवेदिर्देवता । इन्द्र इति शब्देन घुष्यते विस्पष्टं कथ्यते यो देवः सोऽयमिन्द्रघोषः वसुभिः अष्टसंख्याकैर्गणदेवैर्युक्तः सन् हे उत्तरवेदे त्वा त्वां पुरस्तात्पूर्वस्यां दिशि पातु रक्षतु ॥ प्रचेताः प्रकृष्टप्रज्ञो वरुणो रुद्रैरेकादशसंख्यैर्गणदेवैः सहितः पश्चात्पश्चिमायां दिशि त्वां पातु ॥ मनोजवाः मनोवद्वेगयुक्तो यमो देवः पितृभिः स्वर्लोकवासिदेवविशेषैर्युक्तो दक्षिणतः दक्षिणस्यां दिशि त्वा त्वां पातु ॥ विश्वकर्मा विश्वानि कर्माणि जगदुत्पत्त्यादीनि यस्य स विश्वकर्मा आदित्यैः द्वादशसंख्यैर्गणदेवैः सहित उत्तरतः उत्तरस्यां दिशि त्वां पातु ॥ एकदा असुरा देवान्हन्तुमागतास्तदा देवसेनाधिपतय इन्द्रघोषादयश्चतसृषु दिक्षु तानसुरानपाकुर्वन् । तस्मादेतैर्मन्त्रैर्दिक्चतुष्टये रक्षा प्रार्थनीया । तदाह तित्तिरिः । असुरा वज्रमुद्यम्य देवानभ्यायन्त तानिन्द्रघोषो वसुभिः पुरस्तादपानुददित्यादि ॥ ॥ का° [५. ४. १२.] बहिर्वेदि शेषं निषिञ्चतीदमहं तप्तं वारिति ॥ असुरनिवारणाय येनोदकेन प्रोक्षणं कृतं तदुदकमुग्ररूपवात्तप्तमित्युच्यते । तप्तमिदं वाः उदकं प्रोक्षणशेषभूतं यज्ञात् बहिर्धा यज्ञप्रदेशाद्बाह्यप्रदेशेऽहं निःसृजामि निक्षिपामि ॥ ११ ॥

a. सिꣳह्यसि स्वाहा । b. सिꣳह्यस्यादित्यवनिः स्वाहा ।

c. सिꣳह्यसि ब्रह्मवनिः क्षत्रवनिः स्वाहा ।

d. सिꣳह्यसि सुप्रजावनी रायस्पोषवनिः स्वाहा ।

e. सिꣳह्यस्यावह देवान्यजमानाय स्वाहा । f. भूतेभ्यस्त्वा ॥ १२ ॥

का° [५. ४. १४.] नाभ्याः श्रोण्यꣳसेषु पञ्चगृहीतं जुहोत्यक्ष्णया दक्षिणेऽꣳसे श्रोण्याꣳ श्रोण्यामꣳसे मध्ये च हिरण्यं पश्यन्सिꣳह्यसीति । योऽयमुत्तरवेदेर्नाभ्याख्यो मध्यदेशस्तस्य श्रोण्यंसेषु आग्नेयैशकोणावंसौ वायव्यनैर्ऋतकोणौ श्रोणी तेषु चतुर्षु मध्ये च जुह्वां पञ्चवारं गृहीतेनाज्येन जुहुयात् कथम् अक्ष्णया कोणसूत्रप्रदेशेन (11.) । तद्यथा । प्रथमं दक्षिणेऽꣳसे तत उत्तरश्रोणौ ततो दक्षिणश्रोणौ

तत उत्तरांसे ततो मध्ये । एवं पञ्चसु स्थानेषु हिरण्यं निधाय तदवलोकयन्प्र-ञ्चभिर्मन्त्रैर्जुहुयादिति सूत्रार्थः ॥ पञ्च यजुषां वाग्देवता । पुरा कदाचिदुत्तरवेदिर्दे-वता केनापि निमित्तेन देवेभ्योऽपक्रम्यासुरानप्राप्योभयोर्देवासुरसेनयोर्मध्ये सिंह-रूपं धृत्वा तस्थौ । तदयं मन्त्र आह । तदुक्तं तित्तिरिणा । तेभ्योऽपक्रम्योत्तरवे-दिः सिंहीरूपं कृत्वोभयानन्तरातिष्ठदिति । तदभिप्रेत्य सिंही उच्यते । हे उत्तरवेदि त्वं सिंह्यसि सिंहरूपा भवसि तादृश्यै तुभ्यं स्वाहा हविर्दत्तम् ॥ सिंह्यसि किम्भू-ता । आदित्यवनिः आदित्यान्वनुते संभजति प्रीणयतीत्यादित्यवनिः । अन्यत्पूर्व-वत् ॥ सिंह्यसि ब्रह्मवनिः क्षत्रवनिः ब्रह्म क्षत्रं च वनुतऽइति ब्राह्मणजाति-क्षत्रियजात्योः प्रीणयितृत्वमत्र विशेषः ॥ सिंह्यसि सुप्रजावनिः पुत्रपौत्रादिरूपायाः शोभनप्रजायाः संपादयित्री । रायस्पोषवनिः सुवर्णरजतादिधनपुष्टेः संपादयित्री ॥ सिंह्यसियजमानाय यजमानोपकारार्थं देवानावहानयेति विशेषः ॥ ॥ का° [५. ४. १५.] भूतेभ्यस्त्वेति स्रुचमुद्गृह्णातीति ॥ भूतेभ्यः जरायुजाण्डजादिचतुर्विधभूतग्रामप्री-त्यर्थं हे होमविशेषाद्ययुक्ते जुहूः त्वामुद्गृह्णामीति शेषः । तदाह तित्तिरिः । भूते-भ्यस्त्वेति स्रुचमुद्गृह्णाति यऽएव देवा भूतास्तेषां तद्भागधेयं भवति तानेव तेन प्री-णातीति ॥ १२ ॥

a. ध्रुवोऽसि पृथिवीं दृꣳह । b. ध्रुवक्षिदस्यन्तरिक्षं दृꣳह ।
c. अच्युतक्षिदसि दिवं दृꣳह । d. अग्नेः पुरीषमसि ॥ १३ ॥

का° [५. ४. १६.] नाभिं पैतुदारवैः परिदधाति पूर्ववद्ध्रुवोऽसीति प्रतिमन्त्रमि-ति । पीतुदारुर्देवदारुः तदीयैः परिधिभिरुत्तरवेदेर्मध्यदेशरूपां नाभिं परिदध्यात् पूर्ववत् दर्शपौर्णमासेष्टौ यथा पश्चिमदक्षिणोत्तरेषु तथात्रापीति सूत्रार्थः ॥ त्रया-णां परिधयो देवताः । हे मध्यम परिधे त्वं ध्रुवः स्थिरोऽसि अतः पृथिवीं दृंह दृ-ढीकुरु ॥ हे दक्षिण परिधे त्वं ध्रुवे स्थिरे यज्ञे क्षियति निवसति ध्रुवक्षिदसि त-स्मादन्तरिक्षं दृढीकुरु ॥ अच्युते विनाशरहिते यज्ञे क्षियति निवसतीत्यच्युतक्षित् हे उत्तरपरिधे त्वं तादृशोऽसि तस्मात् दिवं द्युलोकं दृंह ॥ ॥ का° [५. ४. १७.] अग्नेः पुरीषमिति निवपति गुग्गुलुसुगन्धितेजनवृष्णिस्तुकाश्चोपरि (12.) शीर्षण्या

अभावेऽन्या इति । गुग्गुलुर्धूपद्रव्यम् सुगन्धितेजनं तृणविशेषः वृष्णेः स्तुका अविरोमाणि । एतानि नाभौ प्रक्षिपेदिति सूत्रार्थः ॥ हे गुग्गुलुप्रभृतिसंभारसमूह त्वमग्नेः पुरीषं पूरकमसि । पूरयतीति पुरीषम् । अग्नेर्ह्येतत्पुरीषं यत्संभारा इति तित्तिरिः ॥१३॥

V. युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः स्वाहा ॥१४॥

अस्ति तावत्प्राचीनवंशा शाला । तस्यामाहवनीयाद्यग्नित्रयमैष्टिकवेदिश्चास्ति । तस्याः शालायाः पुरतः षट्त्रिंशत्पददीर्घा सौमिकी वेदिर्विधेया । तद्वेद्या अग्रभागे पूर्वोक्तोत्तरवेदिः ततः पश्चान्मध्यभागे हविर्धानाख्यो मण्डपो विधेयः ततोऽपि पश्चात्सदोऽभिधानोदग्वंशा शाला निर्मितव्या । तस्याः स्थाने प्राचीनशालायाः पुरतो दक्षिणोत्तरभागयोर्हविर्धानसंज्ञके द्वे शकटे स्थापिते स्थः । तच्छकटद्वयं पुरतः प्रवर्त्य तदावरकत्वेन हविर्धानाख्यमण्डपो विधेयः । तच्छकटद्वयं सावित्रहोमादूर्ध्वं प्रवर्तनीयम् ॥ तदाह तित्तिरिः । सावित्र्यऽर्चा हुत्वा हविर्धाने प्रवर्तयतीति ॥ तं होमं विधत्ते कात्यायनः [८.३.२१.] । चतुर्गृहीतऽ शालाद्वार्ये जुहोति युञ्जतऽइति स गार्हपत्योऽत इति । प्राचीनशालाया द्वारसमीपे पूर्वसिद्ध आहवनीयो वर्तते तस्मिन्जुहुयात्स च पूर्वमाहवनीयोऽपि सन्नुत्तरवेद्याख्येऽन्यस्मिन्नाहवनीये निष्पन्ने सति तदपेक्षया स्वयं गार्हपत्यो भवतीति सूत्रार्थः ॥ सावित्री जगती श्यावाश्वदृष्टा । विप्रस्य ब्राह्मणस्य यजमानस्य सम्बन्धिनो विप्रा ब्राह्मणा ऋत्विजो मनो युञ्जन्ति लौकिकचिन्ताभ्यो मनो निवार्य यज्ञचिन्तायां नियमयन्ति । उत धिय इन्द्रियाण्यपि यज्ञार्थेषु नियमयन्ति ॥ कीदृशस्य विप्रस्य । बृहतो महतः ॥ तथा विपश्चितः सर्वज्ञस्य । अधीतवेदत्वाद्बहुत्वमर्थाभिज्ञत्वाद्विपश्चित्त्वम् ॥ किम्भूता विप्राः । होत्रा होमकर्तारः ॥ तदिदं विप्राणां मनोनियमनादिसामर्थ्यमेक इत् एक एव विदधे ससर्ज । किम्भूत एकः । वयुनावित् वयुनं वेतेः कान्तिर्वा प्रज्ञा वेति [निरु॰ ५.१४.] यास्कोक्तेर्वयुनं प्रज्ञां सर्वभूतानां मनोवृत्तिं वेत्तीति वयुनवित् संहितायां दीर्घः सर्वधीसाक्षीत्यर्थः ॥ नन्वेकस्य सर्वसृ-

ष्टौ (13.) कथं सामर्थ्यम् । तत्राह । यतः सवितुः प्रेरकस्यान्तर्यामिणो देवस्य परिष्टुतिः सर्वदोक्ता (14.) स्तुतिः मही महती । तथा चाथर्वणिकाः । यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तप इति ॥ बृहदारण्यकेऽपि [मा° ४.२.२४. का° ४.४.२१.] स एव सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं (15.) किं चेति ॥ श्वेताश्वतराश्च । परस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया (16.) चेति ॥ ॥ यद्वास्य मन्त्रस्यार्थान्तरम् । विप्रा ऋत्विजो विपश्चितो यज्ञस्य । कर्मणीति शेषः । मनो धियो वाचश्च युञ्जते प्रयुञ्जते । यज्ञो वै विपश्चिदिति श्रुतेः [३.५.३.११.] ॥ किम्भूतस्य विपश्चितः । विप्रस्य विशेषेण प्राति पूरयति फलमिति विप्रस्तस्य । फलदानं प्रति प्राप्तक्रियाशक्तेः । प्रा पूर्तौ । तथा बृहतः महतः सर्वसाधनसंपन्नस्य । होत्रा होतारः सप्त वषट्कर्तारः विदधे विदधते स्वस्वकर्मणीति शेषः । पुरुषवचनव्यत्ययः ॥ तन्मध्ये वयुनाविदेक इत् त्रिविदज्ञानवान्ब्रह्माख्य एक एव । सवितुर्देवस्य मही महती परिष्टुतिः स्तवनम् । ब्रह्माद्या ऋत्विजो यत्कर्म कुर्वते तत्सवितुः प्रेरणेनैवेति सवितुर्महती स्तुतिरित्यर्थः ॥१४॥

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाᳪसुरे स्वाहा ॥१५॥

का° [८.३.३१.] दक्षिणे वर्त्मनि दक्षिणस्यानसो हिरण्ये निधायाभिजुहोतीदं विष्णुरिति । दक्षिणशकटसम्बन्धिदक्षिणचक्रमार्गे हिरण्यं निधाय तत्रैष होमः ॥ विष्णुदेवत्या गायत्री मेधातिथिदृष्टा ॥ विष्णुः त्रिविक्रमावतारं कृत्वा इदं विश्वं विचक्रमे विभज्य क्रमते स्म । तदेवाह । त्रेधा पदं निदधे भूमावेकं पदमन्तरिक्षे द्वितीयं दिवि तृतीयमिति क्रमादग्निवायुसूर्यरूपेणेत्यर्थः । पांसवो भूम्यादिलोकरूपा विद्यन्ते यस्य तत्पांसुरं तस्मिन्पांसुरे अस्य विष्णोः पदे समूढं सम्यगन्तर्भूतं विश्वमिति शेषः ॥ यद्वायमर्थः । अस्य विष्णोः पदम् पद्यते ज्ञायतऽइति पदमद्वैताख्यं स्वरूपं समूढमन्तर्हितमज्ञातमकृतात्मभिः (17.) । कस्मिन्निव । पांसुरे-इव लुप्तोपमानम् पांसुले रजस्वले प्रदेशे निहितं यथा न ज्ञायते तद्वत् ॥ तदुक्तम् [अध्या° ६.५.] तद्विष्णोः परमं पदᳪ सदा पश्यन्ति सूरय इति ॥ स्वाहा तस्मै विष्णवे हविर्दत्तम् ॥१५॥

इरावती धेनुमती हि भूतᳪ सूयवसिनी मनवे दशस्या ।
व्यस्कभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः स्वाहा ॥ १६ ॥

का॰ [८. ३. ३५.] स्रुक्स्थाल्यौ प्रतिगृह्य प्रतिप्रस्थातोत्तरस्येरावतीऽइति पूर्ववदिति । यथा दक्षिणाशकटदक्षिणचक्रमार्गे अध्वर्युर्जुहुतवान् तथा उत्तरशकटसंबन्ध्युत्तरचक्रमार्गे प्रतिप्रस्थाता जुहुयादिति सूत्रार्थः ॥ वैष्णवी त्रिष्टुब्वसिष्ठदृष्टा ॥ हे रोदसी (18.) द्यावापृथिव्यौ युवामीदृश्यौ भूतं भवतम् भवतेर्लुङि मध्यमद्विवचने रूपम् अडभावश्छान्दसः ॥ किम्भूते युवाम् । इरावती इरावत्यौ अन्नवत्यौ सस्यवत्यौ । धेनुमती बहुधेनुयुक्ते । सुयवसिनी सुष्ठु यवसानि विद्यन्ते ययोस्ते सुयवसिनी । यवसशब्देनात्राभ्यवहार्याणि वस्तूनि (19.) । तथा मनवे दशस्या । मनुते जानातीति मनुर्ज्ञानवान्यजमानः तस्मै दशस्या दात्र्यौ यज्ञसाधनानाम् दाश दाने दाशतस्ते दशस्या । असुन्प्रत्यये उपधाह्रस्वः औविभक्तेर्यादेशश्च ॥ एवं द्यावापृथिव्यौ संप्रार्थ्य विष्णुमाह । हे विष्णो एते रोदसी त्वं व्यस्कभ्नाः विभज्य स्तम्भितवानसि । किं च पृथिवीं मयूखैः स्वतेजोरूपैर्नानाजीवैर्वराहाद्यनेकावतारैर्वा अभितो दाधर्थ दधर्थ सर्वतो धारितवानसि । तुजादीनां दीर्घोऽभ्यासस्येत्यभ्यासदीर्घः [पा॰ ६. १. ७.] ॥ स्वाहा तस्मै विष्णवे हविर्दत्तम् ॥ १६ ॥

a. देवश्रुतौ देवेष्वाघोषतम् ।
b. प्राची प्रेतमध्वरं कल्पयन्तीऽऊर्ध्वं यज्ञं नयतं मा जिह्वरतम् ।
c. स्वं गोष्ठमावदतं देवी दुर्येऽआयुर्मा निर्वादिष्टं प्रजां मा निर्वादिष्टम् ।
d. अत्र रमेथां वर्ष्मन्पृथिव्याः ॥ १७ ॥

का॰ [८. ३. ३२.] दक्षिणाया द्वारानीता पत्नी पाणिभ्याᳪ शेषं प्रतिगृह्याक्षधुरावनक्ति पराग्देवश्रुताविति । प्रतिप्रस्थात्रा समानीता पत्नी होमशेषेणाज्येनाक्षस्योभावग्रभागावञ्ज्यादिति सूत्रार्थः ॥ अक्षधुरौ देवते ॥ देवेषु श्रूयेते देवश्रुतौ शृणोतेः क्विप्तुगागमश्च । हे देवश्रुतौ (20.) देवसभायां प्रसिद्धे अक्षधुरौ अक्षाग्रभागौ युवां यजमानोऽयं यक्ष्यतीति देवेषु आघोषतम् उच्चध्वनिना कथयतम् । यु-

षिर् शब्दे ॥ का° [८.४.३.] प्राची प्रेतमिति वाचयतीति । हविर्धानाख्ये यदा प्रवर्तेते तदा यजमानं वाचयेदिति सूत्रार्थः ॥ त्रयाणां यजुषां हविर्धाने देवते ॥ हे उभे शकटे युवां प्राची प्राङ्मुखे प्रेतं प्रकर्षेण गच्छतम् प्राञ्चतस्ते प्राची । किम्भूते युवाम् । अध्वरं कल्पयन्ती इदं कर्म समर्थं कुर्वाणे ॥ किं च यज्ञमिममूर्ध्वं नयतमुपरिवर्तिदेवान्प्रति प्रापयतम् ॥ मा जिह्वरतं मा कुटिले भवतम् ह्वृ कौटिल्ये णिजन्तस्य लुङि रूपम् । यद्वा ह्वल चलने मा चलतम् ॥ ॥ का° [८.४.४.] स्वं गोष्ठमिति च खर्जतीति । प्रवर्त्यमानयोः शकटयोरक्षे खर्जति ध्वनिं कुर्वति सति स्वं गोष्ठमिति यजमानं वाचयेदिति सूत्रार्थः ॥ दुर्यशब्दो गृहवाची । गृहा वै दुर्या इति श्रुतिः [३.५.३.१८.] । तेन गृहसदृशे शकटे लक्ष्येते । हे देवी दुर्ये गृहसदृशशकटद्वयरूपे देवते स्वं गोष्ठं स्वकीयं गोस्थानमावदतम् सर्वतः कथयतम् योऽयमक्षशब्दस्तेन यजमानस्य गृहं बहूनां गवां यथा स्थानं भवति तथा कथयतमित्यर्थः । युवाभ्यामुच्चारितं तथैव स्यादिति भावः ॥ किं च आयुर्मा निर्वादिष्टम् यजमानस्य यावदायुरस्ति तावत्सर्वं मा निराकार्ष्टम् वदतेर्लुङि मध्यमद्विवचने रूपम् यद्वा निकृष्टं पशुधनादिरहितं मा उच्चारयतम् ॥ प्रजां मा निर्वादिष्टम् यजमानस्य प्रजां पुत्रादिरूपां मा निराकार्ष्टम् । अनेनाक्षशब्देनायुःप्रजयोर्निराकरणं मा भूदिति भावः । उभयबद्धो योऽक्षः स दुष्टवाक् वरुणदेवरूपः । तदाह श्रुतिः [३.५.३.१८.] । वरुणो वाऽएष दुर्वागुभयतो बद्धो यदक्ष इति । तस्माच्छापरूपदुर्वाक्यपरिहारायाशीर्वादरूपं सुवाक्यमनेन मन्त्रेण प्रार्थ्यते ॥ ॥ का° [८.४.५.] पश्चादुत्तरवेदेस्त्रिषु प्रक्रमेषु मत्या वा नभ्यस्थेऽअभिमन्त्रयतेऽत्र (21.) रमेथामिति । वेदिनिकटस्थापिते उभे शकटे अभिमन्त्रयेदिति सूत्रार्थः ॥ हे शकटे पृथिव्याः वर्ष्मन् वर्ष्मणि भूमेः शरीरभूतेऽत्रास्मिन्देवयजने युवां रमेथां क्रीडां कुरुताम् वर्ष्मणि स्तीर्णे वा (22.) । सुपां सुलुगिति [पा° ७.१.३९.] ङेर्लोपे न ङिसम्बुद्ध्योरिति [पा° ८.२.८.] नलोपाभावः ॥ देवयजनस्य भूमेः शरीरत्वं तित्तिरिणोक्तम् । वर्ष्म ह्येतत्पृथिव्या यद्देवयजनमिति ॥१७॥

a. विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांꣳसि ।
योऽअस्कभायदुत्तरꣳ सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥

b. विष्णवे त्वा ॥ १८ ॥

का° [८. ४. ६.] उत्तरेण परिक्रम्य दक्षिणामुपस्तभ्नाति विष्णोर्नु कमिति । दक्षिणाशकटस्याग्रं वोढुमाधारभूतं काष्ठं स्थापयेदित्यर्थः ॥ तिस्रो वैष्णव्यस्त्रिष्टुभः आद्ये यजुरन्ते । विष्णवे त्वेति यजुः ॥ नुकमित्यव्ययमवधारणार्थम् । विष्णोरेव वीर्याणि कर्माण्यहं प्रवोचं प्रब्रवीमि । प्रपूर्वस्य वचेर्लुङि रूपम् वचेरुम् अडभावः ॥ कानि कर्माणीत्याह । यो विष्णुः पार्थिवानि रजांसि पृथिव्यन्तरिक्षद्युलोकस्थानानि विममे । लोका रजांस्युच्यन्तऽइति यास्कोक्तेः [निरु° ४. १९.] रजःशब्दो लोकवाचकः । यद्वा यः पार्थिवानि रजांसि पार्थिवपरमाणून्विममे परिगणितवान् । यश्च विष्णुरुत्तरमुपरितनं सधस्थं देवानां सहवासस्थानं द्युलोकरूपमस्कभायत् यथाधो न पतति तथा स्तम्भितवान् । सह देवा तिष्ठन्ति यस्मिन् तत्सधस्थम् सध मादस्थयोश्छन्दसीति [पा° ६. ३. ९६.] सहस्य सधादेशः ॥ स्कम्भ रोधने । क्र्यादिभ्यः श्ना । हलः श्नः शानज्झाविति [पा° ३. १. ८३.] हेरनुवृत्तौ छन्दसि शायजपीति [पा° ३. १. ८४.] यद्यपि हौ परे श्नाप्रत्ययस्य शायजादेशो विहितस्तथाप्यत्र व्यत्ययो बहुलमिति [पा° ३. १. ८५.] लङ्यपि श्नः शायजादेशे अस्कभायदिति रूपम् ॥ कीदृशो विष्णुः । त्रेधा विचक्रमाणस्त्रिषु लोकेष्वग्निवायुसूर्यरूपेण पदत्रयं निदधानः । विपूर्वस्य क्रमतेर्लिटः कानज्वेति [पा° ३. २. १०६.] कानचि रूपम् । तथा उरुगायः उरुर्गायो गमनं यस्य उरुभिर्महात्मभिर्गीयत (23.) ऽइति वा ॥ ॥ का° [८. ४. ७.] दक्षिणतः स्थूणामुपनिहन्ति विष्णवे त्वेति ॥ हे स्थूणे काष्ठ विष्णवे हविर्धानशकटाभिमानिविष्णुप्रीत्यर्थं त्वां निहन्मि निखनामीति शेषः ॥ १८ ॥

a. दि॒वो वा॑ विष्ण॒ऽउ॒त वा॑ पृथि॒व्या म॒हो वा॑ विष्ण॒ऽउ॒रोर॒न्तरि॑क्षात् ।
उ॒भा हि हस्ता॒ वसु॑ना पृ॒णस्वा प्र य॑च्छ॒ दक्षि॑णा॒दोत स॒व्यात् ॥

b. विष्ण॑वे त्वा ॥ १९ ॥

का° [८. ४. ८. ९.] दिवो वेत्युत्तरं प्रतिप्रस्थातोत्तरस्थूणां (24.) पूर्ववदिति । यथाध्वर्युर्दक्षिणाशकटं मन्त्रेणोपष्टभ्य विष्णवे त्वेति स्थूणां निखातवानेवं प्रतिप्रस्थातोत्तरशकटे कुर्यादिति सूत्रार्थः ॥ हे विष्णो दिवो द्युलोकादुत अपि च पृथि-

व्याः भूलोकात् वापि च महो महतः उरोर्विस्तीर्णादन्तरिक्षलोकाद्वा समानीतेन वसुना द्रव्येण उभा हि हस्ता उभावपि स्वकीयौ हस्तौ पृणस्व पूरयस्व । ततो धनपूर्णाद्दक्षिणादुत सव्याद्वामाद्धस्तात् आ प्रयच्छ बहुकृत्व आवृत्य (25.) प्रकृष्टं मणिमुक्तादिधनमस्मभ्यं देहि ॥ ॥ विष्णवे त्वेत्ययं मन्त्रः पूर्ववत् ॥ १९ ॥

प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ २० ॥

का° [८. ४. १३.] प्र तद्विष्णुरिति वाचयति मध्यमं छदिरालभ्येति ॥ तत् स प्रसिद्धो विष्णुः वीर्येणासाधारणवीरकर्मणा प्रस्तवते प्रस्तूयते सर्वैरिति शेषः । तदिति लिङ्गव्यत्ययः । प्रस्तवते इत्यत्र व्यत्ययेन यकः स्थाने शप्प्रत्ययः ॥ किम्भूतो विष्णुः । मृजूष् शुद्धौ मार्ष्टि शोधयतीति मृगः ॥ नोऽनर्थकः पादपूरणः ॥ भीमः बिभेत्यस्मादसौ भीमः । भीमादयोऽपादानऽइति [पा° ३. ४. ७४.] मप्रत्ययः ॥ कुचरः कौ पृथिव्यां मत्स्यादिरूपेण चरतीति ॥ गिरिष्ठाः गिरि वेदवाण्यां गिरौ देहे वान्तर्यामिरूपेण तिष्ठतीति गिरिष्ठाः ॥ अथवा न इवार्थः । गिरिष्ठाः पर्वतस्थितः कुचरः कुत्सितचारी प्राणिबधजीवनो भीमः भयंकरो मृगो न सिंह-इव स यथा वीर्येण स्तूयते तद्वत् ॥ स को विष्णुरित्याह । यस्य विष्णोरुरुषु प्रभूतेषु त्रिषु विक्रमणेषु पादप्रक्षेपणस्थानेषु लोकेषु विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि अधिक्षियन्ति अधिनिवसन्ति । स स्तूयतऽइत्यर्थः ॥ २० ॥

a. विष्णो रराटमसि । b. विष्णोः श्नप्त्रे स्थः । c. विष्णोः स्यूरसि ।
d. विष्णोर्ध्रुवोऽसि । e. वैष्णवमसि विष्णवे त्वा ॥ २१ ॥

का° [८. ४. १५.] विष्णो रराटमिति रराट्यमिति । वाचयतीत्यनुवर्तते ॥ हविर्धानाख्ये द्वे शकटे दक्षिणोत्तरभागयोः स्थापयित्वा तदावरकत्वेन परितो हविर्धानाख्यं मण्डपं कुर्यात् स च मण्डपो विष्णुदेवताकत्वाद्विष्णुरित्युपचर्यते । विष्णोश्च मूर्तिधरस्य सर्वावयवसद्भावाल्ललाटाख्योऽवयवोऽस्ति । तद्वद्धविर्धानमण्डपस्यापि पूर्वद्वारवर्तिस्तम्भयोर्मध्ये काचिद्दर्भमाला ग्रथ्यते । तां मालां तद्बन्धनाधारतिर्यग्वंशं वा संबोध्य पुरुषललाटत्वेनोपचर्यते । हे दर्भमयमालाधार वंश त्वं

विष्णोः विष्णुमूर्तित्वेनोपचरितस्य हविर्धानमण्डपस्य रराटमसि ललाटस्थानीयोऽसि ॥ ॥ का° [८.४.१६.] विष्णोः श्नप्त्रे स्थ इत्युच्छ्राय्याविति । उच्छ्राय्यौ रराटीप्रान्तावुपस्पृश्य वाचयेदित्यर्थः । हे रराट्यन्तौ युवां विष्णोः विष्णुनामकस्य हविर्धानमण्डपस्य श्नप्त्रे स्थः ओष्ठसंधिरूपे (26.) भवथः ॥ ॥ का° [८.४.१८.] द्वार्याः परिषीव्यति लस्पूजनिप्रतिहृतया रज्ज्वा विष्णोः स्यूरसीति । बृहत्सूचिसमर्पितया रज्ज्वा द्वारशाखाः सीव्यतीति सूत्रार्थः ॥ हे लस्पूजनि त्वं विष्णोर्हविर्धानस्य स्यूरसि । सीव्यत्यनेनेति स्यूः सूचिः । षिवु तन्तुसंताने । क्विपि च्छ्वोः शूडनुनासिके चेति [पा° ६.४.१९.] वस्योडादेशः ॥ ॥ का° [८.४.१९.] विष्णोर्ध्रुवोऽसीति ग्रन्थिं करोतीति ॥ हे रज्जुग्रन्थे त्वं विष्णोः हविर्धानस्य ध्रुवोऽसि ग्रन्थिर्भवसि ॥ ॥ का° [८.४.२१.] प्राग्वꣳशꣳ हविर्धानं निष्ठाप्य वैष्णवमसीत्यालभतऽइति । प्रागग्रैर्वंशैर्मण्डपं निर्मायानेन मन्त्रेण स्पृशेदिति सूत्रार्थः ॥ हे हविर्धान त्वं वैष्णवमसि विष्णुदेवताकत्वेन तत्सम्बन्धि भवसि । तस्माद्विष्णवे विष्णुप्रीत्यर्थं त्वा त्वां स्पृशामीति शेषः ॥२१॥

VI. a. दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम् ।
b. आद॑दे॒ नार्य॑सि । c. इ॒दम॒हꣳ रक्ष॑सां ग्री॒वा अपि॑कृन्तामि ।
d. बृ॒हन्न॑सि बृ॒हद्र॑वा बृह॒तीमिन्द्रा॑य॒ वाचं॑ वद ॥२२॥

इत उत्तरमुपरवमन्त्रा देवस्य त्वेत्यस्मात् [क° २६.] प्राक् ॥ का° [८.४.२५ः५.१.] दक्षिणस्यानसोऽधः प्रउगं खनत्युपरवानभ्र्यादि करोत्यवटवदिति । यथा यूपस्यावटः क्रियते तथात्राप्युपरवनामकांश्चतुरो गर्तानभ्रिस्वीकारमारभ्य परिलेखनपूर्वकं कुर्यादित्यर्थः । अवटार्थमभ्रिस्वीकारमेवाह का° [६.२.८.] देवस्य त्वेत्यभ्रिमादायेति । अभ्रिशब्देन काष्ठनिर्मितं खननसाधनमुच्यते ॥ अभ्रिर्देवता । हे अभ्रे सवितुर्देवस्य प्रसवे वर्तमानः सन्नश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां त्वामाददे स्वीकरोमि ॥ त्वं तु नार्यसि खननसाधनत्वेन कर्मोपयोगित्वान्नराणां पुरुषाणामनुष्ठातॄणां संबन्धिनी भवसि ॥ ॥ का° [६.२.८.] यूपावटं परिलिखतीदमिति ॥ यदहं चतुरोऽवटान्परिलिखामि । इदमिति विभक्तिव्यत्ययः अनेन परिलेखनेन

रक्षसां यज्ञघ्नानां ग्रीवा अपिकृन्तामि कण्ठप्रदेशान् छिनद्मि ॥ ॥ का॰ [८. ५. ७.] बृहन्नसीति यथापरिलिखितं खनतीति । आग्नेयीं विदिशमारभ्य चतसृषु विदिक्षु चतुर उपरवान्खातुं भूमिः परिलिखिता । तेन परिलेखनक्रमेणावटान्खनेदिति सूत्रार्थः ॥ हे उपरवाख्य गर्त त्वं बृहन्नसि महान्भवसि वर्तुलस्य गर्तस्य प्रादेशपरिमाणेन विस्तृतत्वाद्बाहुपरिमाणेन खातत्वाच्च (27.) महत्त्वम् ॥ तथा त्वं बृहद्रवाः बृहन्महान्रवो ध्वनिर्यस्य सः । सकारान्तो रवसूशब्दः । खातुं भूमौ प्रहारे महान्ध्वनिर्भवतीत्यर्थः । तस्मात्त्वमिन्द्रायेन्द्रप्रीत्यर्थं बृहतीं वाचं वद प्रौढध्वनियुक्तं वाक्यं वद ॥२२॥

रक्षोहणं वलगहनं वैष्णवीम् ।

e. इदमहं तं वलगमुत्किरामि यं मे निष्ट्यो यममात्यो निचखान ।

f. इदमहं तं वलगमुत्किरामि यं मे समानो यमसमानो निचखान ।

g. इदमहं तं वलगमुत्किरामि यं मे सबन्धुर्यमसबन्धुर्निचखान ।

h. इदमहं तं वलगमुत्किरामि यं मे सजातो यमसजातो निचखान ।

i. उत्कृत्यां किरामि ॥२३॥

किम्भूतां वाचम् रक्षोहणं रक्षांसि हन्तीति रक्षोहा ताम् रक्षोबधविषयाम् ॥ तथा वलगहनम् वलगान्हन्तीति वलगहा ताम् बहुलं छन्दसीति [पा॰ ३. २. ८८.] क्विप् । पराजयं प्राप्य पलायमानै राक्षसैरिन्द्रादिबधार्थमभिचाररूपेण भूमौ निखाता अस्थिकेशनखादिपदार्थाः कृत्याविशेषा वलगाः । वलगो वृणोतेरिति यास्कः [निरु॰ ६. २. (28.)] । यस्य बधार्थं क्रियते तं वृण्वन्नाछादयन् गच्छतीति वलगः । ते वलगा बाहुमात्रे खातास्ततस्तदुद्धारार्थमुपरवस्य तावन्मात्रखननम् । तान्बाहुमात्रान्खनेदिति श्रुतिः [३. ५. ४. १.] । तदाह तित्तिरिः । असुरा वै निर्यन्तो देवानां प्राणेषु वलगान्न्यखनन् (29.) तान्बाहुमात्रे ऽविन्दन् तस्माद्बाहुमात्राः खायन्त ऽइति ॥ तथा वैष्णवीम् यज्ञरक्षकस्य विष्णोः संबन्धिनीम् । ईदृशीं वाचमिन्द्राय वदेति संबन्धः ॥ ॥ का॰ [८. ५. ८.] इदमहमित्युत्किरति यथाखातं प्रतिमन्त्रमिति । येन क्रमेण चत्वारो गर्ताः खातास्तेन क्रमेण चतुर्भ्यो गर्तेभ्यः खातं

मृत्तृणादिकं चतुर्भिर्मन्त्रैरुत्किरेदिति सूत्रार्थः ॥ ष्ट्यै स्त्यै शब्दसंघातयोः नितरां स्त्यायति संघातरूपेण सह वर्तत इति निष्ट्यः यद्वा निर्गत्य शरीरात्स्त्यायति विस्तीर्णो भवतीति निष्ट्यः पुत्रादिः यद्वा निर्गतो वर्णाश्रमेभ्यो निष्ट्यः चण्डालादिः निसो गत इति [पा° ४.२.१०४. वा° ४.] वार्तिकेन निस उपसर्गाद्गतार्थे त्यप् इति काशिकायाम् । अमाशब्दो गृहार्थः सहार्थो वा अमा गृहे सह वा भवो ऽमात्यः अव्ययात्त्यबिति [पा° ४.२.१०४.] भवार्थे त्यप् धनिकस्य स्वामिनो धनगृहादिनिर्वाहकोऽमात्यः । केनापि निमित्तेन कुपितः पुत्रोऽमात्यो वा मे मह्यं मद्वधार्थं यं वलगं निचखान निखातवान् तं वलगमहमुत्किरामि उद्वपामि उद्धृत्यान्यत्र परित्यजामि । इदंशब्दः क्रियाविशेषणम् इदं प्रत्यक्षं यथा भवति तथोद्वपामीत्यर्थः ॥ द्वितीयमुत्किरति समानो धनकुलादिभिः सदृशः असमानो न्यूनो ऽधिको वा अन्यत्पूर्ववत् ॥ तृतीयमुत्किरति सबन्धुः कुलशीलादिभिः समानो मातुलपैतृष्वसेयादिः तद्विपरीतोऽसबन्धुः अन्यत्पूर्ववत् ॥ चतुर्थमुत्किरति सजातः समानजन्मा भ्राता तद्विपरीतोऽसजातः अन्यत्पूर्ववत् ॥ का° [८.५.१.] उत्कृत्यां किरामीति पश्चात्सर्वेभ्य इति । असाधारणैर्मन्त्रैः पूर्वोक्तक्रमेणोत्किरणं कृत्वा पश्चात्साधारणेन मन्त्रेण चतुर्भ्यो गर्तेभ्य उत्किरेदिति सूत्रार्थः ॥ येयं कृत्या शत्रुभिरभिचरद्भिः संपादिता वलगरूपा तामुत्किरामि उद्धृत्य दूरे क्षिपामि ॥२३॥

a. स्वराडसि सपत्नहा । b. सत्रराडस्यभिमातिहा ।
c. जनराडसि रक्षोहा । d. सर्वराडस्यमित्रहा ॥२४॥

का° [८.५.१३.] स्वराडित्यभिमर्शयति (30.) यथाखातं प्रतिमन्त्रमिति । खननक्रमेण चतुर्षु गर्तेषु यजमानहस्तस्य स्पर्शं चतुर्भिर्मन्त्रैः कारयेदिति सूत्रार्थः ॥ चत्वारि यजूंषि औपरवाणि । तत्र प्रथमम् हे प्रथम गर्त त्वं स्वराडसि स्वेनैव राजत इति स्वराट् स्वयमेव राजमानो भवसि अतः सपत्नहा शत्रुघाती भवेति शेषः ॥ अथ द्वितीयम् सत्रराट् सत्रेषु द्वादशाहादिषु राजत इति सत्रराट् अभिमातिहा शत्रुघाती ॥ अथ तृतीयम् जनेषु यजमानेषु राजत इति जनराट् रक्षोहा यज्ञविनाशकराक्षसघाती ॥ अथ चतुर्थम् अमित्रहा शत्रुघाती ॥२४॥

a. र॒क्षो॒हणो॑ वो वलग॒हनः॒ प्रोक्षा॑मि वैष्ण॒वान् । b. र॒क्षो॒हणो॑ वो वलग॒हनोऽव॑नयामि वैष्ण॒वान् । c. र॒क्षो॒हणो॑ वो वलग॒हनोऽव॑स्तृणामि वैष्ण॒वान् । d. र॒क्षो॒हणौ॑ वां वलग॒हना॒ऽउप॑दधामि वैष्ण॒वी । e. र॒क्षो॒हणौ॑ वां वलग॒हनौ॒ पर्यू॑हामि वैष्ण॒वी । f. वैष्ण॒वम॑सि । g. वैष्ण॒वा स्थ ॥ २५ ॥

का° [८. ५. २२. २३.] प्रोक्षत्येनान्रक्षोहण इति भेदे मन्त्रावृत्तिरिति । चतुरो गर्तान्मन्त्रेण प्रोक्षेत् तस्य मन्त्रस्य गर्तभेदे सत्यावृत्तिः कर्तव्येति सूत्रार्थः ॥ सप्त यजूंषि वैष्णवानि ॥ वैष्णवान्विष्णुदेवताकान्गर्तान्वो युष्मान्प्रोक्षामि कीदृशान् रक्षोहणो राक्षसहन्तॄन्वलगहनः अभिचारसाधनहन्तॄन् ॥ का° [८. ५. २४.] अवनयनेऽवस्तरणे चावटवद्रक्षोहणो रक्षोहण इति । गर्तेषु प्रोक्षणशेषोदकसेचनमवनयनम् दर्भैराछादनं संस्तरणम् तयोर्द्वयोरपि क्रिययोर्गर्तभेदात्तन्मन्त्रावृत्तिर्द्रष्टव्येति सूत्रार्थः ॥ तत्रावनयनमन्त्रः अवनयामि सिञ्चयामि अन्यत्पूर्ववत् । अथावस्तरणमन्त्रः अवस्तृणामि दर्भैराछादयामि अन्यत्पूर्ववत् ॥ का° [८. ५. २५.] तनूनुपरि (31.) कुशान्कृत्वाधिषवणे फलके (32.) ध्यङ्गुलान्तरे प्रक्षालिते प्राचीऽअरत्निमात्रे संतृणे वोपदधाति पर्यूहति च रक्षोहणौ रक्षोहणाविति । ययोः फलकयोरुपरि सोमोऽभिषूयते ते द्वे अधिषवणफलके तयोरुभयोर्मध्ये ध्यङ्गुलव्यवहिते अरत्निप्रमाणे संतृणे ईषद्बन्धनोपेते चतुर्णां गर्तानामुपरि स्थापयेत् तयोः परितो मृदा छिद्रपिधानं कुर्यादित्यर्थः ॥ तत्रोपधानमन्त्रः यावधिषवणफलकविशेषौ रक्षोहणौ रक्षसां नाशकौ वलगहनौ कृत्याविनाशकौ वैष्णवी वैष्णवौ विष्णुदेवताकौ लिङ्गव्यत्ययः तौ वां युवामहमुपदधामि द्वयोर्गर्तयोरुपरि एकैकं फलकं स्थापयामि । अथ पर्यूहणमन्त्रः पर्यूहामि मृदा परितश्छादयामि अन्यत्पूर्ववत् ॥ का° [८. ५. २६.] तयोश्चर्माधिषवणं परिकृत्त७ सर्वरोहितं निदधाति वैष्णवमसीति । यस्मिंश्चर्मणि सोमोऽभिषूयते तच्चर्माधिषवणाख्यम् अग्रभागे छिन्नं सर्वमपि लोहितवर्णं तयोः फलकयोरुपरि स्थापयेदिति सूत्रार्थः । हे चर्म त्वं वैष्णवमसि यज्ञरक्षकविष्णुसंबन्धि भवसि ॥ का° [८. ५. २७.] तस्मिन्ग्रावाणः पञ्च वैष्णवा स्थेति ।

निदधातीत्यनुवर्तते तस्मिंश्चर्मणि सोमाभिषवहेतून्पञ्च पाषाणान् स्थापयेदिति सूत्रार्थः ॥ हे ग्रावाणो यूयं वैष्णवा स्थ यज्ञरक्षकविष्णुसंबन्धिनो भवथ ॥ २५ ॥

VII. a. देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । b. आददे नार्यसि । c. इदमहꣳ रक्षसां ग्रीवा अपिकृन्तामि । d. यवोऽसि यवयास्मद्द्वेषो यवयारातीः । e. दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा । f. शुन्धन्तां लोकाः पितृषदनाः । g. पितृषदनमसि ॥ २६ ॥

इत उत्तरमौदुम्बरीमन्त्राः ॥ का० [८.५.३०-३२.] औदुम्बरीं मिनोति यजमानमात्रीं यूपवद्धेतोऽभ्यादि करोत्यावस्तरणादिति । उदुम्बरवृक्षादुत्पन्नां कांचिच्छाखां यजमानदेहमितां सदोमण्डपमध्ये निखनेत् सा च शाखा निखननात्पूर्वं यूपवद्भूमौ शयित्वा वर्तते यूपावटखननवदभ्रिस्वीकारमारभ्य दर्भोपस्तरणपर्यन्तान्पदार्थान्मन्त्रैरेव कुर्यादिति सूत्रार्थः ॥ यूपावटप्रदेशे का० [६.२.८.] देवस्य त्वेत्यभ्रिमादयिति । व्याख्यातं यजुः ॥ का० [६.२.८.] यूपावटं परिलिखतीदमहमिति । एतदपि व्याख्यातम् ॥ का० [६.२.१५.] यवोऽसीत्यप्सु यवानोप्येति । यवदैवत्यम् हे धान्यविशेष त्वं यवोऽसि यौति पृथक्करोतीति यवः यस्मात् द्वेषो द्वेष्टॄन् शत्रून्द्वेषो दौर्भाग्यं वा अस्मत् अस्मत्तो यवय पृथक्कुरु तथा अरातीः अदानानि च यवय पृथक्कुरु । अनेन सौभाग्यं धनं च प्रार्थ्यतऽइति भावः ॥ का० [६.२.१५.१६.] प्रोक्षत्यग्रमध्यमूलानि दिवे त्वेति प्रतिमन्त्रं प्रोक्षामीति सर्वत्र साकाङ्क्षत्वादिति ॥ तत्र प्रथमो मन्त्रः हे औदुम्बर्यग्रभाग दिवे द्युलोकप्रीत्यर्थं त्वा त्वां प्रोक्षामीति शेषः ॥ द्वितीयः हे मध्यभाग अन्तरिक्षायान्तरिक्षलोकप्रीत्यै त्वां प्रोक्षामि ॥ अथ तृतीयः हे मूलभाग पृथिवीप्रीत्यै त्वां प्रोक्षामि ॥ का० [६.२.१७.] अवटे शेषमासिञ्चति शुन्धन्तामिति ॥ द्वे यजुषी पित्र्ये पितरः सीदन्ति येषु लोकेषु ते पितृषदनाः लोकाः शुन्धन्तामनेनोदकसेचनेन शुद्धा भवन्तु । खननेनोत्पन्नस्य क्रौर्यस्य शान्त्यर्थमिदमुदकसेचनम् । तदाह तित्तिरिः । क्रूरमिव वाऽएतत्करोति यत्खनति यत्पयोऽवनयति शान्त्यै तदिति ॥ का० [६.२.१८.] बर्हीꣳषि प्राञ्च्युदञ्चि च प्रास्यति पितृषदनमसीति । तस्मिन्नवटे प्रागग्रानुदगग्रांश्च दर्भानास्तृणातीति सू-

चार्थः ॥ पितरः सीदन्त्युपविशन्ति यस्मिन् तत्पितृषदनम् । हे बर्हिः त्वं पितृषदनमसि ॥२६॥

a. उद्दिवꣳ स्तभानान्तरिक्षं पृण दृꣳहस्व पृथिव्याम् । b. द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणौ ध्रुवेण धर्मणा । ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामि । ब्रह्म दृꣳह क्षत्रं दृꣳहायुर्दृꣳह प्रजां दृꣳह ॥२७॥

का° [८.५.३३.] उद्दिवमित्युच्छ्रयतीति । उच्छ्रयणमूर्ध्वाग्रत्वेन स्थापनम् ॥ पञ्च यजूंष्यौदुम्बरीदेवत्यानि ॥ हे औदुम्बरि त्वं दिवं द्युलोकमुत्तभान स्तम्भय ऊर्ध्वः सन्यथा न पतति तथा कुर्वित्यर्थः । अन्तरिक्षं पृण (33.) पूरय । पृथिव्यां दृंहस्व दृढा भव यद्वा पृथिव्यामिति सप्तमी द्वितीयार्थे पृथिवीं दृढीकुरु ॥ का° [८.५.३४.] द्युतान इति मिनोतीति । शाखां गर्ते प्रक्षिपतीति सूत्रार्थः ॥ हे औदुम्बरि द्युतानः दीप्यमानो मारुतो वायुः ध्रुवेण स्थिरेण धर्मणा धारणेन त्वां मिनोतु गर्ते प्रक्षिपतु डुमिञ् प्रक्षेपे स्वादिः । तथा मित्रावरुणौ देवौ ध्रुवेण धर्मणा त्वां प्रक्षिपतामिति शेषः ॥ का° [८.५.३५.] पर्यूहणाद्योपसेचनात्कृत्वेति । पर्यूहणमारभ्योपसेचनपर्यन्तं यथा यूपे कृतं तथात्रापि कुर्यादित्यर्थः । तत्र यूपस्थाने का° [६.३.१०.] ब्रह्मवनि त्वेति पांसुभिः पर्यूहतीति ॥ हे औदुम्बरि त्वा त्वां पर्यूहामि परितो मृत्तिकां क्षिपामि किम्भूतां त्वाम् ब्रह्मवनि ब्रह्म ब्राह्मणजातिं वनति संभजतऽइति ब्रह्मवनिः क्षत्रं क्षत्रियजातिं वनतीति क्षत्रवनिः (34.) रायो धनस्य पोषं पुष्टिं वनतीति रायस्पोषवनिः सर्वत्र सुपां सुलुगिति [पा° ७.१.३९.] विभक्तेर्लुक् ॥ का° [६.३.११.] ब्रह्म दृꣳहेति मैत्रावरुणदण्डेन समन्तं त्रिः पर्यूषतीति । परितो दृढीकुर्यादिति सूत्रार्थः ॥ हे औदुम्बरि ब्रह्म ब्राह्मणजातिं क्षत्रं क्षत्रियजातिमायुः जीवनं प्रजां पुत्रादिरूपां च दृंह दृढीकुरु ॥२७॥

a. ध्रुवासि ध्रुवोऽयं यजमानोऽस्मिन्नायतने प्रजया पशुभिर्भूयात् ।
b. घृतेन द्यावापृथिवी पूर्येथाम् । c. इन्द्रस्य छदिरसि विश्वजनस्य छाया ॥२८॥

का° [८.५.३५.] ध्रुवासीति वाचयत्यौदुम्बरीमालभ्येति । आलम्भनं स्पर्शनम् ॥ हे औदुम्बरि त्वं ध्रुवासि स्थिरा भवसि त्वमिवायं यजमानोऽस्मिन्नायतने स्वकीये गृहे ध्रुवो भूयात्प्रजया पुत्रादिकया पशुभिः गवादिभिश्च सह स्थिरोऽस्तु ॥ का° [८.५.३७.] स्रुवेण विशाखे जुहोति घृतेनेति । औदुम्बर्या विशाखे यस्मिन्प्रदेशे द्विधा शाखोत्पत्तिस्तत्र जुहुयादिति सूत्रार्थः ॥ हूयमानेनानेन (35.) घृतेन द्यावापृथिवी द्यावापृथिव्यौ पूर्येथां पूरिते भवताम् ॥ का° [८.६.१०.] इन्द्रस्य छदिरिति मध्यमं छदिरारोप्येति । औदुम्बरीनिखननादूर्ध्वं सदोनामकं मण्डपं निर्माय तस्योपरि प्रावरणाय मध्यं कटमारोपयेदिति सूत्रार्थः ॥ छदिःशब्देन तृणनिर्मितः कट उच्यते । हे तृणमय कट त्वमिन्द्रस्य छदिरसि इन्द्रसंबन्धी कटो भवसि अतस्त्वं विश्वजनस्य छाया भवेति शेषः । सदोमध्यवर्तिनः सर्वजनस्य यजमानर्त्विग्रूपस्य प्राणिनः प्रावरणाय छाया भवेत्यर्थः । सदस इन्द्रदेवताकत्वेन तदीयछदिष इन्द्रसंबन्धित्वम् ॥२८॥

परि॑ त्वा गिर्वणो॒ गिर॑ इ॒मा भ॑वन्तु वि॒श्वतः॑ ।
वृ॒द्धायु॒मनु॒ वृद्ध॑यो॒ जुष्टा॑ भवन्तु॒ जुष्ट॑यः ॥२९॥

का° [८.६.१२.] परि त्वेति परिवार्येति । परितः कुड्यवदावरणं (36.) कुर्वेति सूत्रार्थः ॥ ऐन्द्र्यनुष्टुबनिरुक्ता मधुछन्दोदृष्टा । गीर्भिः स्तुतिभिर्वननीयो भजनीयो गिर्वणा इन्द्रः सदोऽभिमानी । हे गिर्वण इन्द्र स्तोत्रशस्त्ररूपा गिरः त्वा त्वां विश्वतः सर्वतः कटरूपेण परि भवन्तु परिगृह्णन्तु किम्भूतं त्वाम् वृद्धायुम् वृद्धा आयवो मनुष्या यजमानादयो मरुतो वा यस्य तम् यद्वा वृद्धः श्रेष्ठश्चासावायुश्च तं महामनुष्यम् । किम्भूताः गिरः अनुवृद्धयः (37.) अनु सवनक्रमेण वृद्धिर्यासां ताः शनैः प्रातःसवनं तत उच्चैर्माध्यन्दिनं सवनं तानस्वरेण (38.) तृतीयं सवनमिति क्रमः । किं च जुष्टयोऽस्मत्सेवास्तव जुष्टाः प्रियाः भवन्तु जुषी प्रीतिसेवनयोः जोषणं जुष्टिः ॥२९॥

a. इन्द्र॑स्य॒ स्यूर॑सि । b. इन्द्र॑स्य ध्रु॒वो॑ऽसि । c. ऐ॒न्द्रम॑सि ।
d. वै॒श्व॒दे॒वम॑सि ॥३०॥

का° [८. ६. १२.] परिषीवणग्रन्थ्यभिमर्शनान्यैन्द्रैरिति । इन्द्रदेवताकैस्त्रिभिर्मन्त्रैः परिषीवणादित्रयं कुर्यादिति सूत्रार्थः ॥ तत्र प्रथमः हे रज्जो त्वमिन्द्रस्य सदोऽभिमानिदेवस्य संबन्धिनी स्यूः सीवनमसि सीव्यतेऽनया सा स्यूः क्विप् छ्वोः शूडनुनासिके चेति [पा° ६. ४. १९.] ऊडादेशः ॥ द्वितीयः हे ग्रन्थे त्वमिन्द्रसंबन्धी भूत्वा ध्रुवः स्थिरो भवसि ॥ अथ तृतीयः हे सदः त्वमिन्द्रसंबन्धि भवसि ॥ का° [८. ६. १३. १४.] हविर्धानापरान्तमुत्तरेणाग्नीध्रमग्न्यगारद्वारमन्तर्वेद्यर्धं भूयः सर्वं वा निष्ठाप्य वैश्वदेवमसीत्यालभतऽइति । हविर्धानमण्डपस्यापरान्तो वायव्यकोणस्तस्योत्तरभागे किंचिदाग्नीध्रनामकमग्निस्थानं कृत्वा तस्य स्पर्शं कुर्यादिति सूत्रार्थः ॥ हे आग्नीध्र त्वं सर्वदेवसंबन्धि भवसि ॥३०॥

VIII. a. विभूर॑सि प्र॒वाह॑णः । b. वह्नि॑रसि हव्य॒वाह॑नः । c. श्वा॒त्रो॑ऽसि प्रचे॑ताः । d. तु॒थो॑ऽसि वि॒श्ववे॑दाः ॥३१॥

इत उत्तरं षोडश धिष्ण्यमन्त्राः ॥ तदाह का° [८. ६. १५.] धिष्ण्यान्निवपत्युद्धतावोक्षिते (39.) पुरीषं निवपति स्फ्येनान्वारब्ध उदङ् उपविश्य विभूरसीति प्रतिमन्त्रमिति । अग्नीनामाश्रयभूता मृदा निर्मिताः स्वल्पवेदिका धिष्ण्यान्युच्यन्ते ॥ का° [८. ६. १६.] आग्नीध्रीयं पूर्वमिति ॥ विभूशब्दप्रवाहणशब्दावाग्नीध्रीयधिष्ण्यस्य नामनी । ते वै द्विनामानो भवन्तीति श्रुतेः [३. ६. २. २४.] अष्टयजुषां धिष्ण्या अग्नयो देवताः । हे आग्नीध्रीय धिष्ण्य त्वं विभूः प्रवाहणश्चासि विविधं भवतीति विभूः एतस्मादेव धिष्ण्यादितरधिष्ण्येष्वग्निविहरणादेतस्य विभूत्वम् प्रवाहयतीति प्रवाहणः तस्य हि दक्षिणोत्तरत ऋत्विजो गच्छन्ति हविषः प्रवाहयितृत्वाद्वा प्रवाहणत्वम् । धिष्ण्यगतानग्नीन्प्रत्यन्ये देवा ऊचुः प्रत्येकं स्वं नामधेयं संपादयतेति । तदाह तित्तिरिः । तान्देवा अब्रुवन्द्वे-द्वे नामनी कुरुतेति ॥ मैत्रावरुणहोतृब्राह्मणाछंसिपोतृनेष्टृच्छावाकानां धिष्ण्यान् सदसि कुर्यात् । तदाह का° [८. ६. १८-२१.] षट् सदसि प्रत्यङ्मुखो द्वारमपरेण होतुर्दक्षिणपूर्वेणौदुम्बरीं मैत्रावरुणस्य होतृधिष्ण्यमुत्तरेण चतुरः समान्तरान्ब्राह्मणाछंसिपोतृनेष्टृच्छावाकानामिति ॥ होतुर्धिष्ण्यम् हे होतृधिष्ण्य वह्निर्हव्यवाहनश्चासि वहति यज्ञकर्म निर्वह-

तीति वह्निः हव्यं वहति देवान्प्रति प्रापयतीति हव्यवाहनः । यथाग्नीध्रीयधि-
ष्ण्यस्य नामद्वयमुक्तम् तथा होत्रादिधिष्ण्यानामपि बोध्यम् ॥ मैत्रावरुणाधिष्ण्यम्
हे मैत्रावरुणाधिष्ण्य त्वं श्वात्रः प्रचेताश्चासि शु क्षिप्रमततीति श्वात्रो मित्रः (40.)
प्रकृष्टं चेतो ज्ञानं यस्य स प्रचेताः वरुणः तद्रूपोऽसि ॥ ब्राह्मणाच्छंसिनः हे ब्रा-
ह्मणाच्छंसिधिष्ण्य त्वं तुथो विश्ववेदाश्चासि । ब्रह्म वै तुथ इति श्रुतेः [४.३.४.१५.]
ब्रह्मरूपोऽसि । विश्वं वेत्ति विश्ववेदाः सर्वज्ञः । यद्वा तुथशब्देन देवान्प्रति द-
क्षिणानां विभागकर्ता पुरुष उच्यते तदाह तित्तिरिः तुथो ह स्म वै विश्ववेदा दे-
वानां दक्षिणा विभजतीति ॥३१॥

a. उ॒शिग॑सि क॒विः । b. अङ्घा॑रिरसि॒ बम्भा॑रिः । c. अ॒व॒स्यूर॑सि॒ दु-
व॑स्वान् । d. शु॒न्ध्यूर॑सि मार्जा॒लीयः॑ । e. स॒म्राड॑सि कृ॒शानुः॑ ।
f. प॒रि॒षद्यो॑ऽसि॒ पव॑मानः । g. नभो॑ऽसि प्र॒तक्वा॑ । h. मृ॒ष्टो॑ऽसि ह-
व्य॒सूद॑नः । i. ऋ॒तधा॑मासि॒ स्व॑र्ज्योतिः ॥३२॥

पोतुः । हे पोतृधिष्ण्य त्वमुशिक् कामनीयः कविः विद्वांश्चासि ॥ नेष्टुः । अङ्घ-
स्यांहसः पापस्यारिरङ्घारिः बिभर्तीति बम्भारिः त्वं तद्रूपोऽसि हे नेष्टृधिष्ण्य ।
दिवि सोमरक्षकौ द्वावङ्घारिबम्भारी तथा च सोमरक्षकमन्त्रे स्वान भ्राजाङ्घारे ब-
म्भारे इत्याम्नातम् [अध्या° ४.२७.] ॥ अच्छावाकस्य । हे अच्छावाकधिष्ण्य त्वमव-
स्यूः दुवस्वान् चासि अवोऽन्नमिच्छतीत्यवस्युः सुप आत्मनः क्यच् [पा° ३.१.८.]
क्याच्छन्दसीति [पा° ३.२.१७०.] क्यजन्तादुप्रत्ययः दीर्घश्छान्दसः औणादिक ऊप्रत्ययो
वा । दुवोऽस्यास्तीति दुवस्वान् हविष्मान् दुव इति हविर्नाम अच्छावाको हि
पुरोडाशभागं लभते ॥ एवं होत्रादिधिष्ण्यान् सदसि निर्माय वेदेर्दक्षिणभागे मा-
र्जालीयं निर्माति । तदाह का° [८.६.२२.] आग्नीध्राद्दक्षिणार्धं संप्रति वेद्यन्ते दक्षि-
णामुखो मार्जालीयमिति । शुन्धयतीति शुन्ध्यूः मार्ष्टीति मार्जालीयः तत्र हि
पात्राणि प्रक्षाल्यन्ते ॥ का° [८.६.२३.] सदोद्वारं पूर्वेण तिष्ठन्ननुदिशत्याहवनीय-
बहिष्पवमानदेशचात्वालशामित्रौदुम्बरीब्रह्मासनशालाद्वार्यप्राजहितान् सम्राडसी-
ति प्रतिमन्त्रमिति । सदोद्वारस्य पूर्वभागेऽवस्थायाहवनीयादीन् सम्राडसीत्याद्य-

ष्टमन्त्रैः क्रमेण निर्दिशेदिति सूत्रार्थः ॥ तत्रादावाहवनीयम् हे उत्तरवेदिगताहवनीय त्वं सम्राट् कृशानुश्चासि बहुविधाहुत्याधारत्वेन सम्यग्राजतऽइति सम्राट् पयोव्रतादिभिः कृशं क्षीणं यजमानमनु गच्छतीति कृशानुः ॥ बहिष्पवमानदेशम् हे बहिष्पवमानदेश त्वं परिषद्यः पवमानश्चासि स्तोतुं समेता ऋत्विजः परिषत् तद्योग्यः परिषद्यः अत एव शुद्धत्वात्पवमानः ॥ चात्वालम् हे चात्वाल त्वं नभोऽसि खनने छिद्ररूपत्वादाकाशः न भातीति वा । तथा प्रतक्वा प्रदक्षिणं तकन्ति गच्छन्ति ऋत्विजो यत्र स प्रतक्वा तकतिर्गत्यर्थः अन्येभ्योऽपि दृश्यन्तऽइति [पा॰ ३. २. ७५.] वनिप् ॥ शामित्रम् पशुविशसनप्रदेशः शामित्रशब्देनोच्यते हे शामित्र त्वं मृष्टोऽसि पशुविशसनस्य विहितत्वेनाशुद्धिहेतुत्वाभावात्सत्यपि विशसने शुद्धोऽसि यद्वा मृष्टः शृतवान्मिष्टः पक्वं हविर्मृष्टं भवति । तथा हव्यस्य हृदयजिह्वादिरूपस्य हविषः सूदनः पाकहेतुश्चासि ॥ औदुम्बरीम् हे औदुम्बरि त्वमृतधामा ऋतं सामगानं धामोपवेशनस्थानं यस्याः सा । औदुम्बरीं स्पृष्ट्वोद्गायतीत्युक्तेः (41.) । स्वर्ज्योतिः उन्नतत्वेन स्वर्गे प्रकाशकः यद्वा सूर्यज्योतिः ॥ ३२ ॥

a. समुद्रोऽसि विश्वव्यचाः । b. अजोऽस्येकपात् । c. अहिरसि बुध्न्यः । d. वागस्यैन्द्रमसि सदोऽसि । e. ऋतस्य द्वारौ मा मा संताप्तम् । f. अध्वनामध्वपते प्र मा तिर स्वस्ति मेऽस्मिन्पथि देवयाने भूयात् ॥ ३३ ॥

ब्रह्मासनम् हे ब्रह्मासन त्वं समुद्रः विश्वव्यचाश्चासि सर्वे देवाः सम्यगुत्कर्षेण द्रवन्त्यत्रेति समुद्रः समुद्र-इवागाधो ज्ञानेन ब्रह्मा यत्र तिष्ठतीति वा । विश्वं सर्वं यज्ञं व्यचति गच्छति कृताकृतप्रत्यवेक्षणायेति विश्वव्यचाः ॥ शालाद्वार्यम् हे प्राचीनवंशशालाद्वारवर्तिन्नग्ने त्वमजोऽसि अजति आहवनीयरूपेण यज्ञप्रदेशे गच्छतीत्यजः यद्वा परब्रह्मत्वमुपचर्यते न जायतऽइत्यजः । एकः पातीत्येकपात् यद्वा एकः पादः सर्वाणि भूतानि यस्येत्येकपात् पादोऽस्य विश्वा भूतानीति श्रुतेः ॥ प्राजहितम् पत्नीशालापश्चिमभागवर्ती पुरातनो गार्हपत्योऽग्निः प्राज-

हित (42.) उच्यते हे प्राज्ञहित त्वमहिरसि न हीयतऽइत्यहिः शालाद्वारीये नूतने गार्हपत्ये उत्पन्नेऽपि अयमग्निः स्वरूपेण न हीयते । बुध्नो मूलं तत्र भवो बुध्न्यः आधानकाले प्रथममाहितवान्मूलभावित्वम् स हि प्रथमं मथ्यते ॥ नामभिरेवात्र धिष्ण्यानां स्तुतिः । उक्तं च । स्तुतिः स्वनाम्ना कर्मणा वाथ रूपैरिति ॥ का° [१.८.२२.] वागसीति सदोऽभिमर्शनमिति ॥ हे सदः त्वं वागसि वाचास्मिन्कर्म कुर्वन्तीति वाक्शब्देनाभेदोपचारेण सद उच्यते । ऐन्द्रमिन्द्रदेवताकं चासि । सीदन्त्यस्मिन्निति सदः ॥ का° [१.८.२३.] ऋतस्य द्वाराविति द्वार्येऽइति । द्वार्ये सदोद्वारशाखेऽअभिमृशतीति सूत्रार्थः ॥ हे ऋतस्य यज्ञस्य द्वारौ द्वारदेशस्थायिन्यौ शाखे युवां मा मां मा संताप्तं मा संतापयतं प्रवेशनिःक्रमणे स्खलनादिना तपतेर्लुङि मध्यमैकवचने कल्लो कलीति [पा° ८.२.२६.] सिज्लोपे रूपम् ॥ का° [१.८.२४.२५.] अभिमन्त्रणमुत्तरैरध्वनामध्वपतऽइति सूर्यम् । उत्तरैस्त्रिभिर्मन्त्रैस्त्रयाणामभिमन्त्रणं दर्शनमित्यर्थः तत्राध्वनामिति सूर्यमभिमन्त्रयतऽइति सूत्रार्थः ॥ अध्वपते मार्गपालक रवे अध्वनां मार्गाणां मध्ये वर्तमानं मा मां त्वं प्रतिर प्रवर्धय तिरतिर्वृद्ध्यर्थः । किं च अस्मिन्देवयाने देवयानप्रापके पथि यज्ञमार्गे मे मम स्वस्ति कल्याणं भूयात् ॥३३॥

a. मित्रस्य॑ मा॒ चक्षु॑षेक्षध्वम् । b. अग्न॑यः सगराः॒ सग॑रा स्थ॒ सग॑रेण॒ नाम्ना॒ रौद्रे॒णानी॑केन पा॒त मा॑ग्नयः पिपृ॒त मा॑ग्नयो गोपा॒यत॑ मा॒ नमो॑ वोऽस्तु मा मा॑ हिꣳसिष्ट ॥३४॥

का° [१.८.२६.] मित्रस्येत्यृत्विज इति । अभिमन्त्रयतऽइति शेषः ॥ हे ऋत्विजः मित्रस्यादित्यस्य चक्षुषा नेत्रेण मा मामीक्षध्वं पश्यत सख्युर्नेत्रेण वा सखा यथा सखायं हितचक्षुषा पश्यति तथा मां पश्यधमित्यर्थः ॥ का° [१.८.२७.] अग्नयः सगरा इति धिष्ण्यानिति । अभिमन्त्रयतऽइति शेषः ॥ हे अग्नयः सगराः गॄ स्तुतौ गरेण स्तुत्या सहिताः सगराः यूयं सगरेण नाम्ना स्तुतिसहितेन नाम्ना धिष्ण्या इति नाम्ना व्यवह्रियमाणत्वात्सगराः स्थ समानस्तुतयो भवथ समानो गरो येषां ते सगराः । हे अग्नयः ते यूयं रौद्रेणानीकेन शत्रुविनाशकत्वादुग्रेण भवदीयेन सैन्येन मा मां पात रक्षत यद्वा रुद्रदेवत्येन मुखेन मां पात अनीकं मुखं सैन्यं

च । हे अग्नयः मा मां पिपृत धनादिभिः पूरयत । मा मां गोपायत रक्षत । अभ्यासे भूयांसमर्थं मन्यन्तऽइति यास्कोक्तेः [निरु° १०.४२.] निरन्तरं रक्षेत्यर्थः । वो युष्मभ्यं नमोऽस्तु मा मां मा हिंसिष्ट मा बधिष्ट निर्विघ्नं यज्ञं कारयतेत्यर्थः ॥३४॥

IX. a. ज्योतिरसि विश्वरूपं विश्वेषां देवानाꣳ समित् । b. त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्तासि वरूथꣳ स्वाहा । c. जुषाणोऽअप्तुराज्यस्य वेतु स्वाहा ॥३५॥

का° [५.४.२६.] ध्रुवायाः पुरस्तात्पृषदाज्यमाज्यं दधिमिश्रं पञ्चगृहीतं ज्योतिरसीति समिद्वन्तेनेति ॥ हे आज्य त्वं ज्योतिरसि किम्भूतम् विश्वरूपं सर्वरूपं बह्वाकृतिषूपयुक्तत्वाद्विश्वरूपत्वम् आज्यत्वाद्वा दीप्यमानत्वाद्वा ज्योतिष्ट्वम् । विश्वेषां सर्वाणां देवानां समित्समिन्धनं सम्यग्दीपकम् देवा ह्याज्यं भुक्त्वा दीप्यन्ते ॥ का° [८.७.१.] प्रदीप्तमिध्मं त्वꣳ सोमेति प्रचरण्याभिजुहोतीति । जुहूरिव होमसाधना काचित्स्रुक् प्रचरणीत्युच्यते ॥ अवसानरहिता सोमदेवत्या गायत्री भृगुसुतक्रतुदृष्टा । तनूं शरीरं कृन्तन्ति छिन्दन्तीति तनूकृतो राक्षसाः कृती छेदने (43.) । द्विषन्तीति द्वेषांसि दौर्भाग्यानि । अन्यैरस्मद्विरोधिभिः कृतानि प्रेरितान्यन्यकृतानि । हे सोम त्वं तेभ्यो यन्ता नियन्तासि यच्छतीति यन्ता यम उपरमे तृच् (44.) यथा तादृशा अस्मान्मा (45.) बाधन्ते तथास्मान्सुरक्षितप्रदेशे संस्थाप्य पालयसीत्यर्थः । तस्मात्त्वमेवास्माकमुरु प्रभूतं वरूथं बलमसि तस्मै तुभ्यमिदं हुतमस्तु सोमं नेतुं तमुद्दिश्यासावाज्याहुतिर्हुतेति भावः ॥ का° [८.७.२.] जुषाणोऽप्तुरिति द्वितीयामिति । जुहोतीत्यनुवर्तते ॥ अप्तुदेवत्यैकपदा विराट् यजुरन्ता विराजो दश इत्युक्तेर्दशाक्षरत्वाद्विराट् । अप्तुश्चात्र सोमः आप्नोति पीतः सन् शरीरमित्याप्तुः आप्लृ व्याप्तौ (46.) आप्नोतेर्ह्रस्वश्चेति [उणा° १.७४.] तुप्रत्ययो धातोर्ह्रस्वश्च । जुषाणः प्रीयमाणोऽप्तुः सोम आज्यस्य वेतु आज्यं पिबतु कर्मण्यपीति केचित् (47.) स्वाहा तस्मै सुहुतमस्तु ॥३५॥

अग्ने नय सुपथा रायेऽअस्मान्विश्वानि देव वयुनानि विद्वान् ।

युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ ३६ ॥

का° [८. ७. ६.] अग्ने नयेति वाचयतीति ॥ आग्नेयी त्रिष्टुबगस्त्यदृष्टा । हे अग्ने हे देव विश्वानि सर्वाणि वयुनानि मार्गान् ज्ञानानि वा विद्वान् जानानस्त्वमस्माननुष्ठातृन्राये धनाय यज्ञफलाय सुपथा शोभनमार्गेण नय प्रापय । किं च अस्मदस्मत्तोऽनुष्ठातृभ्यः एनः पापं युयोधि पृथक्कुरु यु मिश्रणामिश्रणयोः यौतिः शपः श्लुः वा छन्दसीति [पा° ३. ४. ८८.] हेः पित्त्वपत्ते अङितश्चेति [पा° ६. ४. १०३.] हेर्धिः पित्त्वाद्गुणः । किम्भूतमेनः जुहुराणम् हुर्छा कौटिल्ये अस्मात् हुर्छतेः (48.) सनो लुक् हलोपश्चेति [उणा° २. ८८.] औणादिकसूत्रेणानच्प्रत्यये रूपम् ह्वर्हितुं कुटिलीकर्तुमिच्छतीति जुहुराणम् अभिलषितक्रियाप्रतिबन्धकमित्यर्थः । किं च ते तव भूयिष्ठां बहुलतमां नमउक्तिं हविषां वचनं याज्यापुरोऽनुवाक्यालक्षणां विधेम करवाम नम इत्यन्ननाम [निघ° २. ७.] यद्वा नमस्कारविषयामुक्तिं संपादयाम ॥ ३६ ॥

अयं नोऽअग्निर्वरिवस्कृणोत्वयं मृधः पुर एतु प्रभिन्दन् ।
अयं वाजाञ्जयतु वाजसातावयꣳ शत्रूञ्जयतु जर्हृषाणः स्वाहा ॥ ३७ ॥

का° [८. ७. ७-९.] उत्तरेण सदो हृत्वाग्नीध्रेऽग्निं निदधाति ग्रावद्रोणकलशसोमपात्राणि चायं न इति जुहोत्यस्मिन्निति । शालामुखीयमग्निं ग्रावादीनि च सदस उत्तरभागे नीत्वाग्नीध्रमण्डपे निधाय तत्रत्यधिष्ण्यगतेऽग्नौ घृतेन जुहुयादिति सूत्रार्थः ॥ आग्नेयी त्रिष्टुब्व्यनुरुक्ता । अयमग्निर्नोऽस्माकं वरिवः धनं कृणोतु करोतु अयमेवाग्निर्मृधः संग्रामान्प्रभिन्दन्विदारयन्सन्पुर एतु अग्रतो यातु अयमेवाग्निर्वाजसातौ वाजानामन्नानां सम्भजने निमित्ते वाजान् शत्रुसंबन्धीन्यन्नानि अस्मभ्यं दातुं जयतु ततोऽयमेवाग्निर्जर्हृषाणोऽत्यर्थं हृष्यन् शत्रून् जयतु स्वाहा तुभ्यं सुहुतमस्तु (49.) ॥ ३७ ॥

उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि ।
घृतं घृतयोने पिब प्र-प्र यज्ञपतिं तिर स्वाहा ॥ ३८ ॥

का° [८. ७. १५.] उरु विष्णविति जुहोतीति । पूर्वमन्त्रेणाग्नीध्रीये होमोऽनेन

वाहवनीयऽइति सूत्रार्थः ॥ वैष्णव्यनुष्टुब्यजुरन्ता । हे विष्णो व्यापिन् आहवनीय उरु विक्रमस्व शत्रुषु बहुलं पराक्रमं कुरु किं च क्षयाय ब्रह्मगृहनिवासाय नोऽस्मानुरु बहु यथा तथा (50.) कृधि कुरु । हे घृतयोने अग्ने घृतं पिब हूयमानमिदमाज्यं भक्षय । अग्निर्यस्यै योनेरसृज्यत तस्यै घृतमुल्वमासीदिति श्रुतेर्घृतयोनित्वम् किं च यज्ञपतिं यजमानं प्रतिर अतिशयेन वर्धय प्रसमुपोदः पादपूरणऽइति [पा॰ ८. १. ६.] प्रशब्दस्य द्वित्वम् स्वाहा तस्मै तुभ्यं सुहुतमस्तु (51.) ॥३८॥

a. दे॒व स॑वितरे॒ष ते॒ सोम॒स्त७ र॑क्षस्व॒ मा त्वा॑ दभन् ।

b. ए॒तत्त्वं दे॑व सोम दे॒वो दे॒वाँ२॥ऽउपा॑गा इ॒दम॒हं म॑नु॒ष्या॒न्त्स॒ह रा॒यस्पोषे॑ण ।

c. स्वाहा॒ निर्वरु॑णस्य॒ पाशा॑न्मुच्ये ॥ ३९ ॥

का॰ [८. ७. १७.] दक्षिणेऽनसि कृष्णाजिनमास्तीर्य तस्मिन्त्सोमं निदधाति देव सवितरिति । अनसि शकटे ॥ सावित्रं यजुः हे सवितः सर्वस्य प्रेरक देव एष सोमस्ते तवार्पितः तं तादृशं सोमं त्वं रक्षस्व पालय मा त्वा दभन् सोमस्य रक्षितारं त्वामसुरा मा विहिंसिषुः (52.) ॥ का॰ [८. ७. १८.] एतत्त्वमिति विसृज्योपतिष्ठतऽइति । कृष्णाजिने स्थापितं बद्धं सोमं विस्रस्योपस्थानं कुर्यादिति सूत्रार्थः ॥ सौम्यं यजुः हे सोम देव त्वं देवः सन्भवदीयान्देवानितदिदानीमुपागाः प्राप्तोऽसि अहं मनुष्यो यजमानो मदीयान्मनुष्यानिदमिदानीं रायः पोषेण सह पश्वादिधनेन सार्धमुपागतोऽस्मीत्यनुषङ्गः ॥ का॰ [८. ७. १९.] स्वाहा निरिति निष्क्रम्येति । हविर्धानमण्डपान्निर्गत्येति सूत्रार्थः ॥ हानं हा न हा अहा स्वस्याहा स्वाहा स्वात्यागः सोमेनात्मानं (53.) निःक्रीयात्मीयोऽहमस्मीत्यर्थः यद्वा स्वाहा सोमरूपमन्नं देवेभ्यो दत्तमस्तु अनेन सोमप्रदानेनाहं वरुणपाशान्निर्मुच्ये निर्मुक्तोऽस्मि ॥ ३९ ॥

अग्ने॑ व्रतपास्त्वे॒ व्र॑तपा॒ या तव॑ त॒नूर्मय्य॑भू॒देषा सा त्वयि॒ यो मम॑ त॒नूस्त्वय्य॑भू॒दियं७ सा मयि॑ । य॒था॒य॒थं नौ॑ व्रतपते व्र॒तान्यनु मे दी॒क्षां दी॒क्षाप॑तिर॒म७स्तानु॒ तप॒स्तप॑स्पतिः ॥ ४० ॥

का॰ [८. २. ४.] अग्ने व्रतपा इत्याहवनीये समिधमाधायेति ॥ आग्नेयं यजुः यज-

मानोऽग्निशरीरेणात्मशरीरस्य कृतव्यत्ययोऽधस्तनं कर्मकलापं कृत्वाथ यथा स्वशरीरं कुर्वाण आह हे अग्ने व्रतपाः स्वभावतः सर्वेषां व्रतानां पालकोऽसि (54.) तस्मात्कारणादिदानीमपि त्वे त्वं व्रतपाः मदीयव्रतस्य पालको भवेति शेषः हे अग्ने व्रतप्रार्थनकाले तव संबन्धिनी या तनूर्मयि अभूदवस्थिता सा एषा तनूः त्वयि भवत्विति शेषः यो या उ या च मम तनूस्त्वय्यभूत्सा इयं मयि भवतु । हे व्रतपते व्रतपालकाग्ने नौ आवयोर्व्रतानि कर्माणि यथायथं यथास्वं स्वसंबन्धमनतिक्रम्य सन्त्विति शेषः अनुष्ठानरूपं व्रतं ममास्तु तत्पालनरूपं व्रतं तवास्त्वित्यर्थः किं च दीक्षापतिः दीक्षायाः पालकोऽग्निः मे दीक्षां मदीयदीक्षार्थं नियममन्वमंस्त अनुमतवानङ्गीकृतवानित्यर्थः तपस्पतिः तपसः पालकोऽग्निस्तपो मदीयामुपसदमन्वमंस्तानुमतवान् ॥४०॥

X. उरु विष्णो वि क्रमस्वोरु क्षयाय नस्कृधि ।
घृतं घृतयोने पिब प्र-प्र यज्ञपतिं तिर स्वाहा ॥४१॥

इदानीं यूपसंपादनमन्त्राः ॥ का° [६.१.३.४.] गृहेषु यूपाहुतिं जुहोति चतुर्गृहीता७ स्रुवेण वोरु विष्णवितीति । चतुर्गृहीतमाज्यमाहवनीये जुहोति यूपं छेत्तुं गमिष्यन् सा यूपाहुतिरिति सूत्रार्थः ॥ व्याख्याता ॥४१॥

a. अत्यन्याँ२॥ऽअगां नान्याँ२॥ऽउपागामर्वाक्त्वा परेभ्योऽविदं परोऽवरेभ्यः । तं त्वा जुषामहे देव वनस्पते देवयज्यायै देवास्त्वा देवयज्यायै जुषन्तां विष्णवे त्वा । b. ओषधे त्रायस्व । c. स्वधिते मैनं७ हिंसीः ॥४२॥

का° [६.१.५-७.] आज्यशेषमादाय सतक्षा गच्छति यूपमभिमृशत्यत्यन्यानिति प्राङ् तिष्ठन्नभिमन्त्रयते वेति । यूपाहुतिशेषाज्ययुतो यूपतक्षणार्थं वनं गत्वा यूपमभिमृशेदभिमन्त्रयेद्वेति सूत्रार्थः ॥ वनस्पतिदेवत्यम् । वृक्षा द्विविधाः यूप्या अयूप्याश्च पलाशखदिरबिल्वादयो यूप्याः निम्बजम्बीरादयस्त्वयूप्याः । हे पुरोवर्ति यूपवृक्ष त्वत्तोऽन्यान्कांश्चिद्यूप्यानपि समप्रदेशजन्मादिलक्षणरहितानत्यगाम् अतिक्रान्तवा-

नस्मि अन्यांश्चायूप्यान्नोपागाम् किं च परेभ्यो वृक्षेभ्यो दूरवर्तिभ्योऽर्वाक् निकटं त्वा त्वामविदं लब्धवानस्मि अवरेभ्यो निकटेभ्यः परः परस्तादविदं विद्लृ लाभे पुषादीत्यङ् [पा° ३.१.५५.] लुङि रूपम् किं च हे वनस्पते वनस्य पालक हे देव दीप्यमान वृक्ष देवयज्यायै देवयागार्थं तं तादृशं त्वां वयं जुषामहे सेवामहे देवा अपि देवयज्यायै त्वा जुषन्तां सेवन्ताम् ॥ का° [६.१.११.] स्रुवेणोपस्पृशति विष्णवे त्वेति ॥ हे यूपवृक्ष त्वा त्वां विष्णवे यज्ञाय उपस्पृशामीति शेषः यज्ञो वै विष्णुरिति श्रुतेः ॥ का° [६.१.१२.] ओषधऽइति कुशतरुणं तिरस्कृत्येति । यूपवृक्षस्य कुशमन्तर्धानं कुर्यादिति सूत्रार्थः ॥ हे ओषधे त्वं त्रायस्व स्वधितिभयान्मा रक्ष ॥ का° [६.१.१३.] स्वधितऽइति परशुना प्रहरतीति ॥ हे स्वधिते परशो एनं यूपं मा हिंसीः मा बधीः ॥४२॥

a. द्यां मा लेखीर्न्तरिक्षं मा हिꣳसीः पृथिव्या सम्भव । अयꣳ हि त्वा स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय । b. अतस्त्वं देव वनस्पते शतवल्शो विरोह सहस्रवल्शा वि वयꣳ रुहेम ॥४३॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां पञ्चमोऽध्यायः ॥ ॥

का° [६.१.१६.] द्यां मा लेखीरिति पतन्तमभिमन्त्रयतऽइति ॥ हे यूपवृक्ष द्यां द्युलोकं त्वं मा लेखीः मा हिंसीः लिख अक्षरविन्यासे इह तु हिंसार्थः अन्तरिक्षं च मा हिंसीः पृथिव्या सह संभव संगतो भव यूपस्य वज्ररूपत्वाल्लोकानां शान्तिराशास्यतऽइति भावः ॥ का° [६.१.१८.१९.] अयꣳ हि त्वेति शोधनमभिमन्त्रणशेषो वाविशेषोपदेशादिति ॥ हि यस्मात् हे छिन्न वृक्ष तेतिजानोऽतितीक्ष्णोऽयं स्वधितिः कुठारो महते सौभगाय सौभाग्याय दर्शनीयत्वाय यद्वा सुभगो यज्ञः स एव सौभगः स्वार्थेऽण् यज्ञाय त्वां प्रणिनाय प्रणयति यूपत्वं प्रापयति छन्दसि लुङ्लङ्लिट इति [पा° ३.४.६.] वर्तमाने लिट् । तिज निशाने अस्माद्यङ्लुगन्ताच्छानचि तेतिजान इति रूपम् । अतस्त्वया छेदान्न भेतव्यमिति भावः ॥ का° [६.१.२०.२१.] अतस्त्वमित्यावृश्चने जुहोति यूपे त्वेति ॥ हे देव वनस्पते अतोऽस्मात्स्था-

णोः त्वं शतवल्शः बहङ्कुरः सन्विरोह विशेषेण जायस्व वयं च सहस्रवल्शाः पुत्रपौत्रादिभिर्बहुशाखोपेता विरुहेम प्रजायेमहि ॥ ४३ ॥

श्रीमन्महीधरकृते वेददीपे मनोरमे । आतिथ्यात्स्थाणुहोमान्तः पञ्चमोऽध्याय ईरितः ॥ ५ ॥ ॥

अथ काण्वशाखायां पाठविशेषः ॥

I. ॥ १ ॥ १ ॥ २ ॥ २ ॥ ३ [°तसाऽग्रे°] ॥ ३ ॥ ४ [अग्नाऽअग्नि°] ॥ ४ ॥ ॥

II. ॥ ५ a - [त्वा गृह्णामि परिपतये त्वा गृ°] - शक्मन्नोजिष्ठाय ॥ १ ॥ ५ b - °शस्तेन्यम् ॥ २ ॥ अञ्जसा सत्यमुपगेषं सुविते मा धा अग्ने व्रतपास्त्वे व्रतपाः ॥ ३ ॥ ६ या तव - [या मम] - °स्पतिः ॥ ४ ॥ ७ - °प्यायस्व ॥ ५ ॥ ७ आप्याययाº - सुत्यामुदृचमशीय ॥ ६ ॥ ७ दृष्टा - °दिभ्यो नमो दिवे नमः पृथिव्यै ॥ ७ ॥ ८ [हरीशया] ॥ ८ ॥ १२ ॥ ॥

III. ॥ ९ a. b. c [व्यथितम्]. d [नाथितम्] ॥ १ ॥ ९ e-o [विदेरग्नेर्नभो]. १० ॥ २ ॥ १४ ॥ ॥

IV. ॥ ११ a-d ॥ १ ॥ ११ e. १२ a. b ॥ २ ॥ १२ c-f ॥ ३ ॥ १३ [°ह्यग्निर्भस्मास्यग्नेः पुरी°] ॥ ४ ॥ १८ ॥ ॥

V. ॥ १४ - °ष्टुतिः ॥ १ ॥ १५ [समूल्हम°] ॥ २ ॥ १६ [विष्णऽएते] ॥ ३ ॥ १७ a. b ॥ ४ ॥ १७ c. d ॥ ५ ॥ १८ ॥ ६ ॥ १९ ॥ ७ ॥ २० ॥ ८ ॥ २१ ॥ ९ ॥ २७ ॥ ॥

VI. ॥ २२ [रक्षसो]. रक्षोहणं वलगहनं वैष्णवीम् ॥ १ ॥ २३ e-i [नः instead of मे । °मुद्वपामि instead of °मुत्किरामि] ॥ २ ॥ २४ [°राल°] ॥ ३ ॥ २५ a. b. c [°णो वल°] ॥ ४ ॥ २५ d. e [°णौ वल°]. f. g ॥ ५ ॥ ३२ ॥ ॥

VII. ॥ २६ a-e [रक्षसो] ॥ १ ॥ २६ f. g. २७ a ॥ २ ॥ २७ b - यूह्णामि ॥ ३ ॥ २७ b ब्रह्म - °त्रां दृंह । ध्रुवासि ध्रुवोऽस्मिन्यजमान आयतने भूयात् । २८ b. c ॥ ४ ॥ २९ ॥ ५ ॥ ३० ॥ ६ ॥ ३८ ॥ ॥

VIII. ॥ ३१ ॥ १ ॥ ३२ a-d ॥ २ ॥ ३२ i. ३३ a. b. c ॥ ३ ॥ ३२ e [°शालं°] - h ॥ ४ ॥ समूह्योऽसि विश्ववेदा ऊनातिरिक्तस्य प्रतिष्ठा । ३४ b - पिपृत माग्नयो नमो वोऽस्तु मा मा हिंसिष्ट ॥ ५ ॥ ४३ ॥ ॥

IX. ॥ ३५ ॥ १ ॥ ३६ ॥ २ ॥ ३७ [°साताऽग्र°] ॥ ३ ॥ ३८ ॥ ४ ॥ ३९ a. b - पागाः ॥ ५ ॥ ३९ इदम° - °न्मुच्येऽग्ने व्रतपास्त्वे व्रतपाः ॥ ६ ॥ ४० या तव [या मम] - °स्पतिः ॥ ७ ॥ ५० ॥ ॥

X. ॥ ४१ ॥ १ ॥ ४२ a - परेभ्यः परोऽवरेभ्यः ॥ २ ॥ ४२ a तं त्वा - °स्त्वे त्वा ॥ ३ ॥ ४२ b. c. ४३ a - संभव ॥ ४ ॥ ४३ a अयछ - °गाय । b ॥ ५ ॥ ५५ ॥

॥ दशानुवाकेषु पञ्चपञ्चाशत् ॥ ॥

इति काण्वशाखायां संहितापाठे पञ्चमोऽध्यायः ॥ ॥

I. a. देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । b. आददे नार्यसि । c. इदमहꣳ रक्षसां ग्रीवा अपिकृन्तामि । d. यवोऽसि यवयास्मद्द्वेषो यवयारातीः । e. दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा । f. शुन्धन्तां लोकाः पितृषदनाः । g. पितृषदनमसि ॥ १ ॥

सौमिकवेदिप्रधाने पञ्चमाध्याये आतिथ्यमारभ्य यूपनिर्माणपर्यन्ता मन्त्रा उक्ताः अग्नीषोमीयपशुप्रधाने षष्ठेऽध्याये यूपसंस्कारमारभ्य सोमाभिषवोद्योगपर्यन्ता मन्त्रा उच्यन्ते ॥ का° [६. २. ८.] देवस्य त्वेत्यभ्रिमादाय यूपावटं परिलिखतीदमहमिति । [१५-१८.] यवोऽसीत्यप्सु यवानोप्य प्रोक्षत्यग्रमध्यमूलानि दिवे त्वेति प्रतिमन्त्रं प्रोक्षामीति सर्वत्र साकाङ्क्षत्वादवटे शेषमासिञ्चति शुन्धन्तामिति बर्हींषि प्राच्युदञ्चि च (1.) प्रास्यति पितृषदनमसीति ॥ एतानि यजूंषि औदुम्बरीविषये [५. २६.] व्याख्यातानि ॥ १ ॥

a. अग्रेणीरसि स्वावेश उन्नेतॄणामेतस्य वित्तादधि त्वा स्थास्यति । b. देवस्त्वा सविता मध्वानक्तु । c. सुपिप्पलाभ्यस्त्वौषधीभ्यः ।

d. द्यामग्रेणास्पृक्ष आन्तरिक्षं मध्येनाप्राः पृथिवीमुपरेणादृंहीः ॥ २ ॥

का° [६. २. १९.] प्रथमशकलं चाग्रेणीरसीति । यूपावटे प्रथमशकलं निक्षिपेदिति सूत्रार्थः ॥ हे यूपशकल त्वमग्रेणीरसि अग्रे प्रथमं यूपस्य छिद्यमानस्य नीयतेऽपनीयतऽइत्यग्रेणीः यूपस्य प्रथमावयवभूतो भवसीत्यर्थः यद्वा अग्रे प्रथमं यूपमवटं प्रति नयतीत्यग्रेणीः पुरःसरः । किम्भूतस्त्वम् उन्नेतृणामुन्नयनकर्तॄणामध्वर्यूणां स्वाविशः सुखेनाविशयितुं शक्यः ते ह्येनं यूपावटे सुखेनाविशयन्ति लघुत्वात् । स त्वमेतस्य कर्मणो वित्तात्कर्मणि षष्ठी एतत्कर्म विद्धि जानीहि किं तत्कर्म यत् यूपः त्वामधि स्थास्यति त्वदुपर्यवस्थानं (1.) करिष्यति तत्त्वया बोद्धव्यमित्यर्थः ॥ का° [६. ३. २.] देवस्य त्वेत्यनक्तीति । यूपमिति शेषः ॥ यूपदेवत्यम् हे यूप सविता देवः मध्वा मधुना मधुरेणाज्येन त्वा त्वामनक्तु । मध्वा अनित्यमागमशासनमिति नुमभावः ॥ का° [६. ३. ३. ४.] चषालमुभयतोऽक्तं प्रतिमुञ्चति सुपिप्पलाभ्य इति । अथ उपरि चाज्येन लिप्तं चषालं यूपाग्रे स्थापयेदिति सूत्रार्थः ॥ हे चषाल त्वां यूपस्याग्रे प्रतिमुञ्चामीति शेषः किमर्थमोषधीभ्यः व्रीह्याद्योषधिनिष्पत्त्यर्थम् किम्भूताभ्य ओषधीभ्यः सुपिप्पलाभ्यः शोभनफलयुक्ताभ्य इत्यर्थः ॥ का° [६. ३. ७.] द्यामग्रेणेत्युच्छ्रयतीति । उन्नतं कुर्यादित्यर्थः ॥ यूपदेवत्यम् यूपस्य महिमोच्यते हे यूप त्वमग्रेणाग्रभागेन द्यां दिवमस्पृक्षः स्पृष्टवानसि स्पृशतेर्लुङि शल इगुपधादनिटः क्स [पा° ३. १. ४५.] इतिक्सप्रत्ययः । मध्येन मध्यभागेनान्तरिक्षमाअप्राः आपूरितवानसि प्रा पूरणे । उपरेणाधोभागेन अनिष्टप्रदेशेन (2.) पृथिवीं भूमिमदृंहीः दृढीकृतवानसि ॥ २ ॥

a. या ते धामान्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।

अत्राह तदुरुगायस्य विष्णोः परमं पदमवभारि भूरि ॥

b. ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामि ।

c. ब्रह्म दृंह क्षत्रं दृंहायुर्दृंह प्रजां दृंह ॥ ३ ॥

का° [६. ३. ८.] या तऽइति मिनोतीति । अवटे यूपं प्रक्षिपेदित्यर्थः ॥ यूपदेवत्या त्रिष्टुप् दीर्घतमोदृष्टा । हे यूप या यानि ते तव धामानि स्थानानि गमध्यै

गन्तुं वयमुश्मसि उश्मः कामयामहे तुमर्थे सेऽइत्यादिना [पा° ३. ४. ९.] गमेस्तुमर्थे कध्यैन्प्रत्ययः नित्वादाद्युदात्तः । उश्मसि वश कान्तौ लटि उत्तमबहुवचने शपो लोपे संप्रसारणे इदन्तो मसीति [पा° ७. १. ४६.] इकारः । यानि तव स्थानानि गन्तुं वयमिच्छाम इत्यर्थः । किं च यत्र येषु तव स्थानेषु गावो रश्मयः अयासः अयन्तीति अयाः अय गतौ गन्तारो वर्तन्ते सर्वे किरणा-येषु स्थानेषु गता इत्यर्थः किम्भूता गावः भूरिशृङ्गाः भूरि बहु शृङ्गं दीप्तिर्येषां ते भूरिशृङ्गाः प्रज्वलन्नामसु [निघ° १. १७.] शृङ्गाणीति पठितम् । अहेत्येवार्थे विष्णोः व्यापकस्य ब्रह्मणः तत्परममुत्कृष्टं पदं भूरि महत् आदित्यमण्डललक्षणमत्रैव अवभारि अवभाति तकारस्थाने (3.) छान्दसो रेफः । यद्वा भूरि बहुप्रकारं यथा तथा अत्र अह अत्रैव एषैव स्थानेषु अवभाति शोभते । किम्भूतस्य विष्णोः उरुगायस्य गाङ् गतौ गानं गायः उरुर्गायो गतिर्यस्य महागतिरित्यर्थः यद्वा उरुभिर्महात्मभिर्गीयते स्तूयतेऽसावुरुगायस्तस्य । तादृशस्थानप्राप्तिहेतुभूतकर्मणि हे यूप घमत्रावटे तिष्ठेत्याशयः ॥ का° [६. ३. १०. ११.] ब्रह्मवनि त्वेति पाव्सुभिः । ब्रह्म दृंहेति मैत्रावरुणदण्डेन समन्तं त्रिः पर्यूषतीति ॥ द्वे यजुषी औदुम्बरीविषये [५. २७.] व्याख्याते ॥ ३ ॥

विष्णोः॒ कर्मा॑णि पश्यत॒ यतो॑ व्र॒तानि॑ पस्प॒शे । इन्द्र॑स्य॒ युज्यः॒ सखा॑ ॥ ४ ॥

का° [६. ३. १२.] विष्णोः कर्माणीति वाचयति यूपमन्वारब्धमिति । यूपं स्पृष्टवन्तं यजमानं वाचयेदिति सूत्रार्थः ॥ द्वे वैष्णव्यौ गायत्र्यौ मेधातिथिदृष्टे । हे ऋत्विजः विष्णोः यज्ञाधिष्ठातुः कर्माणि सृष्टिसंहारादिचरितानि यूयं पश्यत यतो यैः कर्मभिः व्रतानि भवदीयानि लौकिकवैदिककर्माणि पस्पशे बद्धवान्निर्मितवानित्यर्थः स्पश बन्धने । स विष्णुरिन्द्रस्य युज्यः वृत्रबधादिकर्मसु योज्योऽनुरूपः सखा मित्रम् ॥ यद्वा विष्णोः यज्ञस्य कर्माणि वीर्याणि पश्यत यतो यैर्वीर्यैर्व्रतानि आधानपशुसोमादीनि कर्माणि पस्पशे आत्मनि बद्धवान् यद्वा यैर्वीर्यैर्व्रतानि कर्माणि अग्निवायुसूर्याणां स्वानि स्वानि एतान्यप्रमत्ताः कुरुतेत्येवं पस्पशे निबद्धवान् शिष्टं समानम् ॥ ४ ॥

तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः दिवीव चक्षुराततम् ॥ ५ ॥

का॰ [६.३.१३.] तद्विष्णोरिति चषालमीक्षमाणमिति । यूपकटकं प्रेक्षमाणं यजमानं वाचयेदिति सूत्रार्थः ॥ सूरयः विद्वांसो वेदान्तपारगा विष्णोः तत्परमं पदं स्वरूपं सदा पश्यन्ति कीदृशम् दिवि आकाशे निरावरणे चक्षुरिवाततं व्याप्तम् यद्वा यत् दिवि आकाशे चक्षुरादित्यमण्डलमाततं विस्तारितम् इवोऽनर्थकः चक्षुःशब्देनान्यत्रापि मण्डलमुच्यते चक्षुर्मित्रस्य वरुणस्य [७.४२.] तच्चक्षुर्देवहितम् [३६.२४.] ॥ ५ ॥

a. परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमं यजमानꣳ रायो मनुष्याणाम् । b. दिवः सूनुरसि । c. एष ते पृथिव्यां लोक आरण्यस्ते पशुः ॥ ६ ॥

का॰ [६.३.१५.] त्रिगुणा त्रिव्यामा कौशी रशना तया नाभिमात्रे त्रिवृतं परिव्ययति परिवीरसीति । त्रिभिर्गुणैरवयवैरुपेता त्रिव्याममिता कुशसंबन्धिनी या रशना रज्जुस्तया नाभिप्रमाणे यूपप्रदेशे आवृत्तित्रयं यथा भवति तथा यूपमावेष्टयेदिति सूत्रार्थः ॥ यूपदेवत्यं यजुः हे यूप त्वं परिवीरसि परितो रशनया वीतो-वेष्टितोऽसि यद्वास्माभिः परिवारितोऽसि व्येञ् संवरणे इत्यस्य क्तप्रत्ययार्थे क्विपि संप्रसारणम् किं च दैवीर्विशः देवसंबन्धिन्यः (4.) प्रजाः मरुद्गणादयः त्वा त्वां परि व्ययन्तां परितो वेष्टयन्तु यद्वा दैवीर्विशः पशवः त्वा परिव्ययन्ताम् दैव्यो वा ऽएता विशो यत्पशव इति श्रुतेः । किं च मनुष्याणां संबन्धिन्यो रायो धनानि इमं यजमानं परि व्ययन्तां वेष्टयन्तु यद्वा मनुष्याणामिति निर्धारणे षष्ठी मनुष्याणां मध्ये रायो धनानि इमं यजमानमेव परि व्ययन्ताम् ॥ का॰ [६.३.१७.] यूपशकलमस्यामवगूहत्युत्तरेणाग्निष्ठां दिवः सूनुरसीति । अष्टास्रे यूपस्य यास्रिरग्निसमीपे स्थिता साग्निष्ठा तस्या उत्तरभागे रशनायां स्वरुनामकं शकलमवसृजेदिति सूत्रार्थः ॥ हे स्वरो त्वं दिवः द्युलोकस्य सूनुः पुत्रोऽसि द्युलोकाद्वर्षति ततो यूपो जायते यूपात्स्वरुरिति प्रणालिकया दिवः सूनुः स्वरुः ॥ का॰ [८.८.२३.] वर्षिष्ठाद्दक्षिणं वितष्टं द्वादशं निदधात्येष तऽइति । यूपैकादशिनीपक्षे

वर्षिष्ठाद्यूपाद्दक्षिणभागे वितष्टमतष्टाग्निं द्वादशं यूपं निदधाति स्थापयति न तु निखनतीति सूत्रार्थः ॥ यूपदेवत्यम् हे यूप पृथिव्यामेष ते तव लोकः आश्रयस्थानमित्यर्थः । ननु पशवो वै यूपमुञ्चयन्तीति श्रुतेः [३.७.३.४.] यूपे पशुना भवितव्यमित्यत आह ते तव आरण्योऽरण्ये भवोऽरण्यसंबन्धी पशुः वने वर्तमानः पशुस्तवैवेत्यर्थः ॥ ६॥

II. a. उपावीर॑सि । b. उप॑ दे॒वान्दैवी॒र्विशः॒ प्रागु॑रु॒शिजो॒ वह्नि॑तमान् । देव॑ त्वष्ट॒र्वसु॑ रम ह॒व्या ते॑ स्वदन्ताम् ॥७॥

का॰ [६.३.११.] उपावीरसीति तृणमादयेति ॥ हे तृणविशेष त्वमुपावीरसि उप समीपमवति गच्छतीत्युपावीः यद्वा उप समीपेऽवस्थितोऽवति रक्षतीत्युपावीः पशोर्द्वितीयः सखा त्वमसीत्यर्थः ॥ का॰ [६.३.११.] तेन पशुमुपस्पृशत्युप देवानिति । गृहीतेन तृणेन पुरस्तात्प्रत्यञ्चं स्थितं पशुं स्पृशेदिति सूत्रार्थः ॥ दैवीर्विशः पशवो देवानग्नीषोमादीनुप प्रागुः उपगच्छन्तु दैव्यो वाऽएता विशो यत्पशव इति श्रुतेः । इण् गतावित्यस्माच्छन्दसि लुङ्लङ्लिट इति [पा॰ ३.४.६.] कालमात्रे लुङ् इणो गा लुङीति [पा॰ २.४.४५.] गादेशः । किम्भूतान्देवान् उशिजो मेधाविनः यद्वा हवींषि कामयमानान् वहन्तीति वह्नयः अतिवह्नयो वह्नितमास्तान् यजमानं स्वर्गं प्रति प्रापयतां देवानां मध्ये श्रेष्ठतमानित्यर्थः । एवं पशूनभ्यर्थ्य त्वष्टारमाह हे देव हे त्वष्टः त्वं वसु पशुलक्षणं धनं रम रमयः छन्दस्युभयथेति [पा॰ ३.४.११७.] शपोऽप्यार्धधातुकसंज्ञत्वाण्णिचो लोपः । एवं त्वष्टारमुक्त्वा पुनः पशुमाह हे पशो ते तव हव्या हवींषि स्वदन्ताम् स्वद स्वादऽआस्वादने स्वादूनि भवन्तु यद्वा हवींषि स्वदन्तामास्वादयन्तु देवा इति शेषः पूर्ववण्णिचो लोपः ॥७॥

रेव॑ती॒ रम॑ध्वं॒ बृह॑स्पते॒ धार॒या॒ वसू॑नि ।

c. ऋ॒तस्य॑ त्वा देवहवि॒ः पाशे॑न॒ प्रति॑मुञ्चामि॒ धर्षा॒ मानु॑षः ॥८॥

रयिर्धनं क्षीरादि यासां ता रेवत्यः लिङ्गवचनव्यत्ययः रेवन्तः रेवन्तो हि पशव इति श्रुतेः [३.७.३.१३.] हे रेवन्तः क्षीरादिधनवन्तः पशवो यूयं यजमानगृहे

रमध्वं संक्रीडध्वम् । एवं पशुमुक्त्वा बृहस्पतिमाह हे बृहस्पते हे ब्रह्मन् वसूनि पशुलक्षणानि धारया निश्चलीकुरु ब्रह्म वै बृहस्पतिः पशवो वस्विति श्रुतेः [३. ७. ३. १३.] ॥ का॰ [६. ३. २६.] द्विगुणरशनया द्विव्यामया कौश्या पाशं कृत्वान्तरा शृङ्गमभिदक्षिणं बध्नात्यृतस्य त्वेति । अवयवद्वयोपेतया व्यामद्वयपरिमितया कुशकृतया रज्ज्वा नागपाशं कृत्वा शृङ्गयोरन्तराले पशुं बध्नाति कथमभिदक्षिणम् दक्षिणशृङ्गमभिमुखं पाशं प्रतिमुञ्चेदिति सूत्रार्थः ॥ हे देवहविः देवानां हवीरूप पशो ऋतस्यावश्यंभाविफलोपेतत्वात्सत्यस्य यज्ञस्य पाशेन त्वा त्वां प्रतिमुञ्चामि बध्नामि प्रतिपूर्वो मुञ्चतिर्बन्धने वर्तते । एवं पशुं संबोध्य शमित्रे समर्पयति मानुषो धर्षा ञिधृषा प्रागल्भ्ये विकरणपुरुषव्यत्ययः मानुषः शमिता धृष्णोतु शमयितुं शक्नोतु पाशेन बद्धत्वादिति भावः । संहितायां द्व्यचोऽतस्तिङ इति [पा॰ ६. ३. १३५.] सूत्रेण धर्षेत्यत्र दीर्घः ॥ ८ ॥

a. दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम् । b. अ॒ग्नीषोमा॑भ्यां॒ जु॒ष्टं॒ नि॒युनज्मि । c. अ॒द्भ्यस्त्वौष॑धी॒भ्योऽनु॑ त्वा माता मन्य॑ता॒मनु॑ पि॒तानु॒ भ्राता॒ सग॒र्भ्योऽनु॒ सखा॒ सयू॑थ्यः । अ॒ग्नीषोमा॑भ्यां त्वा॒ जु॒ष्टं॒ प्रोक्षा॑मि ॥ ९ ॥

का॰ [६. ३. २७.] देवस्य त्वेति यूपऽइति । यूपे पशुं बध्नातीति शेष इति सूत्रार्थः ॥ अग्नीषोमदेवताभ्यां जुष्टमभिरुचितं पशुं नियुनज्मि निबध्नामि व्याख्यातमन्यत् ॥ का॰ [६. ३. ३०.] अद्भ्यस्त्वेति पशुं प्रोक्षणीभिः प्रोक्षतीति ॥ हे पशो अद्भ्यः ओषधीभ्यः अत्र विभक्तिव्यत्ययः अद्भिरोषधिभिश्च त्वा त्वां प्रोक्षामि मेध्यं करोमि किम्भूतं त्वाम् अग्नीषोमाभ्यां जुष्टं प्रीतम् दर्भैरपामुत्पूतत्वादोषधीनामपि प्रोक्षणसाधनत्वमस्त्येव । स्वमातृभक्षिताभ्यां तृणोदकाभ्यां पशोरुत्पन्नत्वात्तेनोभयेन प्रोक्षणं युक्तम् । तदाह तित्तिरिः अद्भ्यस्त्वौषधीभ्यः प्रोक्षामीत्याहाद्भ्यो ह्येष ओषधीभ्यः संभवति यत्पशुरिति । किं च हे पशो एवं प्रोक्षितं त्वां माता भूमिरनुमन्यतां तथा पिता द्यौरनुमन्यताम् सगर्भ्यो समानगर्भे उदरे भवः सोदरो भ्राता अनुमन्यताम् सयूथ्यः समानयूथे भवः सखा सुहृत् अनुमन्यताम् ॥ ९ ॥

a. अपां पेरुरसि । b. आपो देवीः स्वदन्तु स्वात्तं चित्सद्देवहविः ।
c. सं ते प्राणो वातेन गच्छताᳲ समङ्गानि यजत्रैः सं यज्ञपतिराशिषा ॥१०॥

का॰ [६.३.३१.] अपां पेरुरित्यास्यऽउपगृह्णातीति । पशोर्मुखे प्रोक्षणीर्धारयेदिति सूत्रार्थः ॥ पशुदेवतम् हे पशो त्वमपां जलानां पेरुः पानशीलोऽसि पिबतीति पेरुः औणादिक एरुप्रत्ययः उदकपानशीलो भवसि तत इदं पिबेत्यर्थः ॥ का॰ [६.३.३२.] आपो देवीरित्यधस्तादुपोक्षतीति । पशोरधोभागे हृदि प्रोक्षेदिति सूत्रार्थः ॥ हे पशो आपो देवीः अब्रूपा देव्यः स्वदन्तु त्वामास्वादयन्तु भक्षयन्तु यद्वा आपो देव्यः स्वदन्तु पशुं भक्षयन्तु । को गुण इति चेत् स्वात्तं चित् चिदित्यव्ययं हेत्वर्थे हि यतो देवहविः देवानां हविः पशुलक्षणं स्वात्तमास्वादितं सत् शोभनं देवयोग्यं भूयादिति शेषः । अद्भ्यस्त्वेत्यादिमन्त्रत्रयेणोपरिष्टान्मुखेऽधोभागे पशोः प्रोक्षणेन सर्वं मेध्यं करोतीति तित्तिरिणा प्रतिपादितम् तदाह उपरिष्टात्प्रोक्षत्युपरिष्टदेवैनं मेध्यं करोति पाययत्यन्तरत एवैनं मेध्यं करोत्यधस्तादुपोक्षति सर्वमेवैनं मेध्यं करोतीति ॥ का॰ [६.४.२.] उत्तरमाघारमाघार्य पशुं पूर्वᳲ समनक्ति ललाटाᳲसश्रोणिषु सं तऽइति प्रतिमन्त्रमिति । उत्तराघारहोमानन्तरं ध्रुवासमञ्जनादर्वागेव भाले अंसयोः श्रोण्योश्च जुह्वैव पशुं समनक्ति सं तऽइति त्रिभिः प्रतिमन्त्रमिति सूत्रार्थः ॥ पशुदेवतयजूंषि ॥ ललाटाञ्जनमन्त्रः हे पशो ते तव प्राणो वाह्येन वातेन संगच्छताम् । अथांसयोर्मन्त्रावृत्तिः अङ्गानि अंसादीनि यजत्रैः यागैः सं गच्छन्ताम् इज्यन्तऽइति यजत्राः । अथ श्रोण्योः यज्ञपतिर्यजमान आशिषा यज्ञफलेन संगच्छताम् ॥१०॥

a. घृतेनाक्तौ पशूᳲस्त्रायेथाम् । b. रेवति यजमाने प्रियं धा आविश । उरोरन्तरिक्षात्सजूर्देवेन वातेनास्य हविषस्त्मना यज समस्य तन्वा भव । c. वर्षो वर्षीयसि यज्ञे यज्ञपतिं धाः । d. स्वाहा देवेभ्यः । e. देवेभ्यः स्वाहा ॥११॥

का॰ [६.४.१२.] स्वरुमादायाक्तोभौ जुह्वग्रे ताभ्यां पशोर्ललाटमुपस्पृशति घृतेनाक्ताविति । विशसित्रा दत्तं शासं गृहीत्वा स्वयमेव यूपात्स्वरुमादाय तावसि-

स्वरू जुहूग्रे घृतेनाक्ता ताभ्यामसिस्वरुभ्यां पशोर्ललाटं स्पृशेदिति सूत्रार्थः ॥ स्वरुशासदैवतम् हे स्वरुशासौ युवां घृतेनाक्तौ सन्तौ पशून्बहुवचनं पूजार्थम् एतं पशुं त्रायेथाम् पालयेथाम् ॥ का° [६.५.११.] रेवति यजमानऽइति वाचयतीति । यजमानं वाचयेदित्यर्थः । वाग्देवतम् वाग्वै रेवतीति श्रुतेः [३.८.१.१२.] हे रेवति धनवति वाग्देवते यजमानेऽस्मिन्प्रियमभिप्रेतं धाः धेहि बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः [पा° ६.४.७५.] । आविश ज्ञानप्रदानेन यजमानं प्रविश (5.) । किं च हे रेवति वातेन देवेन सजूः समानप्रीतिर्भूत्वा उरोर्विस्तीर्णादन्तरिक्षाद्यजमानं गोपायेति शेषः । किं चास्य पशुलक्षणस्य हविषस्त्मना आत्मना यज मन्त्रेष्वाङ्यादेरात्मन इति [पा° ६.४.१४१.] आकारलोपः । किं चास्य पशोस्तन्वा शरीरेण संभव एकीभव हे रेवति यजमानरूपेण पशुरूपेण चात्मना भूत्वात्मना च यजेति तात्पर्यार्थः ॥ का° [६.५.१५.] पश्चात्तृणमुपास्यति वर्षो वर्षीयसीति । शामित्रस्य पश्चात्प्रागग्रं तृणमुपास्यति हस्तस्थतृणद्वयमध्ये एकं क्षिपति विशसनीयस्य पशोर्भूमिस्पर्शपरिहारार्थमिति सूत्रार्थः ॥ तृणदेवतम् हे वर्षो वर्षाद्युत्पन्नं वर्षु तत्संबोधनं वर्षो वर्षप्रसव हे तृण यद्वा वर्षो विस्तीर्ण वर्षीयसि विस्तीर्णतरे यज्ञे यज्ञपतिं यजमानं धाः धेहि ॥ का° [६.५.२४.] देवेभ्यः स्वाहेति जुहोतीति । मन्त्रयोरर्थैक्येऽपि पाठभेदतात्पर्यं तित्तिरिराह । पुरस्तात्स्वाहाकृतयोऽन्ये देवा उपरिष्टात्स्वाहाकृतयोऽन्ये स्वाहा देवेभ्यो देवेभ्यः स्वाहेति ॥११॥

III. a. माहिर्भूर्मा पृदाकुः । b. नमस्तऽआतानानर्वा प्रेहि । घृतस्य कुल्या उप ऋतस्य पथ्या अनु ॥१२॥

का° [६.५.२६.] वपाश्रपणीभ्यां नियोजनीं चात्वाले प्रास्यति माहिर्भूरिति । वपा श्रप्यते याभ्यां ते वपाश्रपण्यौ काष्ठविशेषौ ताभ्यां कृत्वा नियोजनीं पशुबन्धनरज्जुं द्विगुणां चात्वाले क्षिपेदिति सूत्रार्थः ॥ रज्जुदेवतम् हे रज्जो त्वमहिः सर्पाकारा मा भूः मा भूयाः पृदाकुः अजगराकारापि मा भूः ॥ का° [६.६.१.] पान्नेजनहस्तां वाचयति नयन्नमस्तऽआतानेति । पादौ निज्येते क्षाल्येते येन स पान्नेजनः पादनेजनार्थ उदककलशः पादग्रहणमन्यावयवोपलक्षणम् पान्नेजनो मुखाद्यवय-

वशोधनार्थी जलकलशो हस्ते यस्याः सा पात्नेजनहस्ता तां पत्नीं नयन्गार्हपत्यसमीपात्पशुशोधनाय नयन्सन्प्रतिप्रस्थातामुं मन्त्रं तां वाचयेदिति सूत्रार्थः ॥ यज्ञदेवतम् आ समन्तात्तन्यते विस्तार्यतेऽइत्यातानो यज्ञः यज्ञो वाऽआतानो यज्ञो हि तन्वतऽइति श्रुतिः [३.८.२.२.] हे आतान यज्ञ ते तुभ्यं नमः त्वमनर्वा शत्रुरहितः सन्प्रेहि समाप्तिपर्यन्तं प्रकर्षेण गच्छ । इयर्ति बधार्थमित्यर्वा नास्त्यर्वा यस्यासावनर्वा अनर्वा प्रेहीत्यसपत्नेन प्रेहीति श्रुतिः (6.) अनर्वा प्रेहीत्याह भ्रातृव्यो वाऽअर्वा भ्रातृव्यापनुत्त्यै (7.) इति तित्तिरिवाक्यात् । किं च ऋतस्य यज्ञस्य पथ्याः पथि भवाः घृतस्य कुल्याः घृतनदीः अनुलक्ष्य उप प्रेहि गच्छ सांनाय्यपृषदाज्यकुल्योपलक्षणार्थं घृतकुल्याग्रहणाम् अत्र यज्ञे बहु घृतमाहुतमित्यभिप्रायः ॥१२॥

देवीरापः शुद्धा वोढ्‌ᳪ सुपरिविष्टा देवेषु । सुपरिविष्टा वयं परिविष्टारो भूयास्म ॥१३॥

एवं यज्ञं स्तुत्वेदानीमापः स्तूयन्ते । अर्धमब्दैवत्यमर्धमाशीर्दैवतम् हे आपो देव्यः यूयं देवेषु वोढ्वं पशुमिति शेषः एनं पशुं देवान्प्रति वहत प्रापयत वह प्रापणे अस्य लुङि तङि मध्यमबहुवचने अडभावे रूपम् किम्भूता यूयम् शुद्धाः स्वभावतः तथा सुपरिविष्टाः साधु परितः सर्वतो निविष्टाः पात्नेजनीपात्रे । किं च वयमपि सुपरिविष्टाः देवेष्विति पदमिहाप्यनुवर्तते वयमपि देवेषु मध्येऽवस्थितास्तैरेव देवैः सुपरिविष्टाः तर्पिताः सन्तस्तेषामेव देवानां परिवेष्टारः परिवेषणकर्तारो भूयास्मेत्याशीः ॥१३॥

a. वाचं ते शुन्धामि । b. प्राणं ते शुन्धामि । c. चक्षुस्ते शुन्धामि । d. श्रोत्रं ते शुन्धामि । e. नाभिं ते शुन्धामि । f. मेढ्रं ते शुन्धामि । g. पायुं ते शुन्धामि । h. चरित्राᳪस्ते शुन्धामि ॥१४॥

का° [६.६.२.३.] पशोः प्राणाञ्छुन्धति पत्नी मुखं नासिके चक्षुषी कर्णौ नाभिं मेढ्रं पायुं पादान्त्संहृत्य वाचं ते शुन्धामीति प्रतिमन्त्रमिति । पत्नी पशुसमीप

ऽउपविश्य मृतस्य पशोः प्राणान्मुखादीन्यष्टौ प्राणायतनानि प्रतिमन्त्रं शुन्धति शोधयति अद्भिः स्पृशतीति सूत्रार्थः ॥ पशुदेवतानि । हे पशो अहं ते तव वाचं वागिन्द्रियं शुन्धामि शोधयामि । एवमग्रेऽपि प्राणं प्राणवायुं प्राणेन्द्रियम् चक्षुरिन्द्रियम् श्रोत्रेन्द्रियम् नाभिं नाभिछिद्रम् मेढ्रं लिङ्गम् पायुं गुदम् चरन्ति गच्छन्त्येभिरिति चरित्राः पादाः एवं त्वदीयानि सर्वेन्द्रियाणि शुन्धामि ॥ १४ ॥

a. मनस्तऽआप्यायताम् । b. वाक्तऽआप्यायताम् । c. प्राणस्तऽआप्यायताम् । d. चक्षुस्तऽआप्यायताम् । e. श्रोत्रं तऽआप्यायताम् । f. यत्ते क्रूरं यदास्थितं तत्तऽआप्यायतां निष्ट्यायतां तत्ते शुध्यतु । g. शमहोभ्यः । h. ओषधे त्रायस्व । i. स्वधिते मैनं हिंसीः ॥ १५ ॥

का° [६. ६. ४. ५.] शेषेण यजमानश्च शिरःप्रभृत्यनुषिञ्चतो मनस्तऽइति शिर इति । पान्नेजनशेषेण यजमानः चकारादध्वर्युश्च पशोः शिरआद्यङ्गान्यनुषिञ्चतः तत्र शिरसो मन्त्रमाह मनस्तऽइति शिर इति सूत्रार्थः ॥ पशुदेवतानि । हे पशो ते तव मनः आप्यायतां शाम्यतु । विलिङ्गत्वादस्य विनियोग उक्तः वाक्तऽआप्यायतामित्यादिमन्त्राणां लिङ्गादेव विनियोगः सिद्ध इति सूत्रकृता नोक्तः । वाक्तऽइति मुखम् प्राणस्तऽइति नासिके चक्षुस्तऽइति चक्षुषी श्रोत्रं तऽइति कर्णौ एतानि मुखादीनि तव शाम्यन्तु ॥ का° [६. ६. ६.] यत्ते क्रूरमित्यङ्गानीति । सर्वाङ्गान्यवशिष्टान्यनुषिञ्चत इत्यर्थः ॥ हे पशो यत्ते तव क्रूरं बन्धननिरोधादिकं क्रूरमस्माभिः कृतं यच्च आस्थितं छेदादिकं कर्तुमुपस्थितं शमित्रा तत्सर्वं ते तवाप्यायतां शाम्यतु । किं च तत्सर्वं निष्ट्यायतां संहतं भवतु स्त्यै संघाते अनुन्नं भवत्वित्यर्थः तत्सर्वं तव शुध्यतु शुद्धं भवतु ॥ का° [६. ६. ७.] शमहोभ्य इति पश्चात्पशोर्निषिञ्चत इति । पशोर्जघनदेशे पान्नेजनशेषमुभावपि निषिञ्चतामिति सूत्रार्थः ॥ अहोभ्यः दिवसादिकालविशेषेभ्यः शं सुखमस्माकं पशोर्वा भूयादिति शेषः ॥ का° [६. ६. ८.] उत्तानं पशुं कृत्वाग्रेण नाभिं तृणं निदधात्योषधऽइति । नाभेरग्रेऽङ्गुलचतुष्टये तृणं निदध्यादिति सूत्रार्थः ॥ मन्त्रो व्याख्यातः [४. १.] ॥ का° [६. ६. ९.] स्वधितऽइति प्रज्ञातयाभिनिधाय छित्वेति । प्रज्ञातया प्रस्तुतया कृतचिह्नया

घृताक्तयासिधारयाभिनिधाय तृणोपर्यसिधारां निधाय तूष्णीं सतृणामुदरत्वचं छिन्द्यादिति सूत्रार्थः ॥ एनं पशुं स्वधिते मा हिंसीः ॥ १५ ॥

a. रक्षसां भागोऽसि । b. निरस्तꣳ रक्षः । c. इदमहꣳ रक्षोऽभितिष्ठामीदमहꣳ रक्षोऽवबाधऽइदमहꣳ रक्षोऽधमं तमो नयामि । d. घृतेन द्यावापृथिवी प्रोर्णुवाथाम् । e. वायो वे स्तोकानाम् । f. अग्निराज्यस्य वेतु स्वाहा । g. स्वाहाकृतेऽऊर्ध्वनभसं मारुतं गच्छतम् ॥ १६ ॥

का° [६. ६. ९.] अग्रꣳ सव्ये कृत्वा दक्षिणेन मूलमुभयतोऽनक्ति लोहितेन रक्षसामिति । यत्तृणं नाभ्यग्रे स्थापितं तस्य छिन्नस्य तृणस्याग्रं वामहस्तेन धृत्वा दक्षिणहस्तेन मूलं धृत्वा तद्विगुणीकृत्याग्रे मूले च पशुच्छेदननिष्पन्नेन रक्तेनाञ्ज्यादिति सूत्रार्थः ॥ रक्षोदेवत्यम् हे लोहिताक्त तृण त्वं रक्षसां भागोऽसि ॥ का° [६. ६. १०.] निरस्तमित्यपास्यतीति । लोहिताक्तं तृणमुत्करे त्यजेदिति सूत्रार्थः ॥ यज्ञविघातकं रक्षोऽस्ति तन्निरस्तं परित्यक्तम् ॥ का° [६. ६. ११.] इदमहमित्यभितिष्ठति यजमान इति । उत्करे क्षिप्तं रुधिराक्तं तृणं यजमानोऽभितिष्ठतीति सूत्रार्थः ॥ यत्तृणरूपं रक्षोऽध्वर्युणा निरस्तं तदिदं रक्षोऽहं यजमानोऽभितिष्ठामि अभितः पदेनोत्क्रम्य तिष्ठामि । न केवलमभितिष्ठामि किं तु अहमिदं रक्षोऽवबाधे अवाचीनं यथा भवति तथा नाशयामि किं च अहमिदं रक्षोऽधममत्यन्तनिकृष्टं तमो नरकं नयामि प्रापयामि ॥ का° [६. ६. १२.] वपामुत्खिद्य वपाश्रपण्यौ प्रोर्णोति घृतेन द्यावापृथिवीऽइति । पशूदराद्वपां निष्काश्य तया वपया वपाश्रपण्यावाछादयेदिति सूत्रार्थः ॥ वपाश्रपण्योर्द्यावापृथिव्यावध्यस्ते उच्येते हे द्यावापृथिवी युवां घृतेनोदकेनात्मानं प्रोर्णुवाथामाछादयेथां परस्परम् ऊर्णुञ् आछादने । आकृतिपरिणामाभिप्रायमेतत् तथा चोक्तम् ते वाऽएतेऽआकृती कृतेऽउत्क्रामत इत्युपक्रम्याकृतिपरिणाममिदं जगदिति ॥ का° [६. ६. १५.] तृणाग्रं चाध्वर्युर्वायो वेरिति । वामहस्तधृतं तृणाग्रमाहवनीये क्षिपेदिति सूत्रार्थः ॥ वायुदेवतम् हे वायो त्वं स्तोकानां वपासंबन्धिनां विप्रुषां वेः कर्मणि षष्ठी स्तोकान्विहि जानीहि ज्ञात्वा च पिबेत्यर्थः ते क्वात्र तिष्ठन्ति । विदि ज्ञाने इत्यस्य लुङि

मध्यमैकवचने दृश्चेति [पा° ८.२.७५.] दस्य रुत्वे कृते रूपम् अडभाव आर्षः वेः विद्धि ॥ का° [६.६.१७.] वपां स्रुवेणाभिघारयत्यग्निराज्यस्येति ॥ अग्निराहवनीयः आज्यस्य वेतु आज्यं पिबतु स्वाहा सुकृतमस्तु ॥ का° [६.६.२८.] हुत्वा वपाश्रपण्यावनुप्रास्यति प्राचीं विशाखां प्रतीचीमितरां स्वाहाकृतेऽइति । वपां हुत्वोत्तरत उपविश्य वपाश्रपण्यावाहवनीयऽएव क्षिपेत् तत्प्रकारः विशाखां द्विशृङ्गां प्रागग्रां क्षिपेत् इतरामेकशृङ्गां प्रत्यगग्रामिति सूत्रार्थः ॥ स्वाहाकारेणाहुतिभावमुपगते सत्यौ युवां मारुतं गच्छतं वायुं प्राप्नुतां वायुर्हि प्रतिष्ठा यज्ञस्य । किम्भूतम् ऊर्ध्वनभसमूर्ध्वं नभ आकाशो यस्य स ऊर्ध्वनभाः तम् नभोमध्ये वर्तमानमित्यर्थः ॥ १६ ॥

इ॒दमा॑पः॒ प्रव॑हताव॒द्यं च॒ मलं॑ च॒ यत् । यच्चा॑भिदु॒द्रोहानृ॑तं॒ यच्च॑ शे॒पेऽअ॑भी॒रुण॑म् । आपो॑ मा॒ तस्मा॒देन॑सः॒ पव॑मानश्च मुञ्चतु ॥ १७ ॥

का° [६.६.२१.] चात्वाले मार्जयन्ते सपत्नीका इदमापः प्रवहतेति । सर्वे ऋत्विजः चात्वालसमीपेऽद्भिरात्मानमभ्युक्षन्तीति सूत्रार्थः ॥ अब्देवत्या त्र्यवसाना महापङ्क्तिः पावमानश्चान्त्यः पादः यस्याः षट् पादा अष्टाक्षराः सा महापङ्क्तिः । हे आपः इदं पशुसंज्ञपननिमित्तं पापं प्रवहत किं च यच्चावद्यमवदनीयमभिशापादि यच्च मलं शरीरलग्नं प्रसिद्धं तच्च प्रवहत अपनयत । किं च यदहमनृतमसत्यमुक्त्वाभिदुद्रोह द्रुग्धवानस्मि द्रुह जिघांसायाम् यच्चाहमभीरुणं बिभेतीति भीरुरभीरुस्तमभीरुणमनपराधिनमपराधी हि बिभेति एवंविधं शेपे शपितवानस्मि अनपराधिनं प्रति यन्मयाभिशापो दत्तः आपः तस्मादेनसः पापात् मा मां मुञ्चतु पृथक्कुर्वन्तु पवमानश्च सोमो वायुर्वा तस्मात्पापान्मां मुञ्चतु ॥ १७ ॥

IV. a. सं ते॒ मनो॒ मन॑सा॒ सं प्रा॒णः प्रा॒णेन॑ गच्छताम् । b. रेड॑स्य॒ग्निष्ट्वा॑ श्रीणा॒त्वाप॑स्त्वा॒ सम॑रि॒ण॒न्वात॑स्य त्वा॒ ध्राज्यै॑ पू॒ष्णो रꣳह्या॑ऽऊ॒ष्मणो॑ व्यथिषत् । c. प्रयु॑तं॒ द्वेषः॑ ॥ १८ ॥

का° [६.८.६.] सं ते मन इति हृदयमभिघार्य सर्वमिति । जुहूस्थेन पृषदाज्येन पूर्वं हृदयमभिघार्य तूष्णीं सर्वं पशुमभिघारयेदिति सूत्रार्थः ॥ हृदयदेवतम् हे हृ-

दय ते तव पशोर्मनः देवानां मनसा सं गच्छताम् पृषदाज्येनाभिघारितं सत् । ते तव प्राणोऽपि देवानां प्राणेन सं गच्छतां संगतोऽस्तु अभिघारितः ॥ का° [६. ८. १२.] रेडसीति वसां गृह्णीत्वेति । मांसपाकभाण्डे स्थितः स्नेहात्मको द्रवविशेषो वसा तां गृह्णीयादिति सूत्रार्थः ॥ वसादेवतम् हे वसे त्वं रेट् असि रिषतिर्हिंसार्थः कर्मणि विच् रिष्टासि हिंसितेवाभासि अल्पत्वात् यूष्णोऽल्पत्वं श्रुत्योक्तम् [३. ८. ३. २०.] रेडसीति लेलयेव हि यूरिति लेलयाशब्दश्चाल्पवाचकः । अग्निः त्वा त्वां श्रीणातु श्री पाके क्र्यादिः अपयन्भूयसीं करोति यद्वाग्निराहवनीयस्त्वां श्रीणातु स्वीकरोतु । किं च आपः त्वा त्वां समरिणन् री बधे गतौ क्र्यादिः अत्र रिणातिर्बिभर्त्यर्थे समभरन्नपुष्णन् यद्वा आपः त्वां समरिणन् सम्यक् प्राप्नुवन्तु तव शोषो मा भूदित्यर्थः आपो हि पच्यमानेभ्यः पश्वङ्गेभ्यो यं रसमुत्पादयन्ति सा वसेत्युच्यते तां त्वा गृह्णामीति शेषः किमर्थं वातस्य ध्राज्यै गत्यै वातस्यान्तरिक्षे गतिर्भवत्विति तथा पूष्णो रंह्यै आदित्यस्य गत्यै रंहतिर्गत्यर्थः आदित्यस्य द्युलोके गतिर्भवत्विति वाय्वादित्ययोरप्रतिहतगमनसिद्ध्यर्थं त्वां गृह्णामीत्यर्थः । किं च ऊष्मणो व्यथिषत् ऊष्मान्तरिक्षं तद्धि ब्रह्मण ऊष्मेव ऊष्माणमन्तरिक्षं वसा व्यथयतु कर्मणि षष्ठी यद्वा व्यत्ययेन प्रथमार्थे षष्ठी ऊष्मा व्यथिषत् व्यथताम् वसां पीत्वा तृप्त्याधिक्येन यथा सीदति वसारूपं हविस्तथाविधं भवत्वित्यर्थः अन्तरिक्षार्थं हि वसा गृह्यते होममन्त्रे [११.] अन्तरिक्षस्य हविरसीति लिङ्गात् इयं वसान्तरिक्षस्य तृप्तिं कृत्वातिरिक्ता भवत्वित्यर्थः अन्तरिक्षे च तृप्ते तत्प्रभवत्वाद्वायुसूर्ययोरपि स्वकर्मक्षमता भवति तस्मादुच्यते वातस्य ते ध्राज्याऽइत्यादि । व्यथ भयचलनयोः अस्य लिङर्थे लेडिति [पा° ३. ४. ७.] लेटि सिब्बहुलं लेटीति [पा° ३. १. ३४.] सिप्रत्यये इतश्च लोपः परस्मैपदेष्विति [पा° ३. ४. ९७.] तिप इकारलोपे लेटोऽडाटाविति [पा° ३. ४. ९४.] अडागमे व्यथिषदिति रूपम् ॥ का° [६. ८. १२.] द्विरभिघार्य प्रयुतमिति पार्श्वेन स७सृजत्यसिना वेति । वसां द्विरभिघार्य पार्श्वेनासिना वाज्यं वसां च मिश्रयेदिति सूत्रार्थः ॥ द्वेषो दौर्भाग्यं प्रयुतं पृथग्भूतं वसायाः सकाशात् घृतमिश्रणेन ॥ १८ ॥

a. घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविर-

सि स्वाहा । b. दिशः । c. प्रदिशः । d. आदिशः । e. विदिशः । f. उद्दिशः । g. दिग्भ्यः स्वाहा ॥ १९ ॥

का° [६. ८. १७.] वसैकदेशं जुहोति घृतं घृतपावान इति । वसाहोमहवन्या वसाया एकदेशं जुहुयादिति सूत्रार्थः ॥ वैश्वदेवं यजुः । वसाया हविरभिघारितत्वाद्घृतमस्ति तत्र अत एवमाह । हे घृतपावानः घृतं पिबन्तीति घृतपावानः पा पाने आतो मनिन्नित्यादिना [पा° ३. २. ७४.] वनिप् घृतस्य पातारो देवा यूयं घृतं पिबत । हे वसापावानः वसायाः पातारो देवा यूयं वसां पिबत । एवं देवानुक्त्वा वसामाह हे वसे त्वमन्तरिक्षस्य हविरसि स्वाहा सुहुतमस्तु ॥ का° [६. ८. २१.] दिशो व्याघारयति वसाशेषेण वाजिनवदिति । यथा वाजिनशेषेण दिग्व्याघारणमुक्तं तथेत्यर्थः तद्यथा [का° ४. ४. १६. १७.] दिशो व्याघारयति दिश इति प्रतिमन्त्रं प्रदक्षिणं पुरस्तात्प्रथममुत्तमाभ्यां मध्ये पूर्वार्धे चेति ॥ षट् दिग्देवतानि अत्र स्वाहाकारः सर्वत्र साकाङ्क्षत्वादिति [का° ४. ४. १८.] वचनात्स्वाहा सर्वत्र युज्यते दिग्भ्यः स्वाहा प्रदिग्भ्यः स्वाहा आदिग्भ्यः स्वाहा विदिग्भ्यः स्वाहा उद्दिग्भ्यः स्वाहा सर्वाभ्यः दिग्भ्यः सुहुतमस्त्वित्यर्थः ॥ १९ ॥

a. ऐन्द्रः प्राणोऽअङ्गे-ऽअङ्गे निदीध्यदैन्द्र उदानोऽअङ्गे-ऽअङ्गे निधीतः । b. देव त्वष्टर्भूरि ते सꣳ-समेतु सलक्ष्मा यद्विषुरूपं भवाति । देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्तु ॥ २० ॥

का° [६. ९. १.] ऐन्द्रः प्राण इति पशुꣳ संमृशतीति । पशुरूपं हविः स्पृशेदिति सूत्रार्थः ॥ इन्द्र आत्मा तत्संबन्धी प्राणः प्राणवायुरस्य पशोरङ्गे-अङ्गे सर्वेष्वङ्गेषु निदीध्यत् निहितः दिधीङ् दीप्तिदेवनयोः अस्य धातोर्दधात्यर्थे वर्तमानात्कर्मणि लेट् परस्मैपदं व्यत्ययेन लेटोऽडाटावित्यट् [पा° ३. ४. ९४.] । तथा ऐन्द्रः इन्द्रसंबन्धी उदानवायुः पशोः सर्वेष्वङ्गेषु निधीतः निक्षिप्तः धीङ् आधारानादरयोः (8.) । अङ्गऽइत्यादौ चेत्यङ्गशब्दस्य [पा° ६. १. ११९.] एङ् अति प्रकृत्या ॥ एवमनेन यजुषा पश्वङ्गेषु प्राणान्दत्त्वा त्वष्टारमाह । त्वाष्ट्री त्रिष्टुप् हे त्वष्टः त्वष्टृनामक देव यत्पश्वङ्गजातं सलक्ष्मा समानलक्षणं सत् छेदनेन विषुरूपं नानारूपं

भवाति भवति तत्सर्वं ते तवानुग्रहेण भूरि बहुलमत्यन्तं सं-समेतु सम्यगेकीभवतु प्रसमुपोदः पादपूरणऽइति [पा° ८.१.६.] समित्यस्य द्विवम् । पुनः पशुमाह हे पशो एवं प्राणैः स्वाङ्गैश्चानेन मन्त्रेण दृढीकृतं देवत्रा यन्तं देवान्प्रति गच्छन्तं त्वा त्वां सखायो मित्रभूता इतरे पशवो माता पितरश्च अनुमदन्तु अभ्यनुजानन्तु बहुवचनं पूजार्थम् अवसे अवितुं प्रीणयितुम् तुमर्थे असेप्रत्ययः यद्वा अवितुं त्वन्मुखेन स्वर्गप्राप्त्या स्वकुलं सर्वमवितुमित्यर्थः ॥२०॥

V. a. समुद्रं गच्छ स्वाहा । b. अन्तरिक्षं गच्छ स्वाहा । c. देवꣳ सवितारं गच्छ स्वाहा । d. मित्रावरुणौ गच्छ स्वाहा । e. अहोरात्रे गच्छ स्वाहा । f. छन्दाꣳसि गच्छ स्वाहा । g. द्यावापृथिवी गच्छ स्वाहा । h. यज्ञं गच्छ स्वाहा । i. सोमं गच्छ स्वाहा । k. दिव्यं नभो गच्छ स्वाहा । l. अग्निं वैश्वानरं गच्छ स्वाहा । m. मनो मे हार्दि यच्छ । n. दिवं ते धूमो गच्छतु स्वर्ज्योतिः पृथिवीं भस्मनापृण स्वाहा ॥२१॥

का° [६.१.१०.] प्रतिप्रस्थातोपयजति गुदतृतीयस्य प्रच्छिदमनुयाजेषु समुद्रं गच्छेति प्रतिमन्त्रमिति । अनुयाजेषु हूयमानेषु प्रतिप्रस्थाता पूर्वं स्थापितं गुदतृतीयभागमेकादशधा तिर्यक् प्रच्छिद्य प्रतिमन्त्रं जुहोतीति सूत्रार्थः ॥ हे हविर्गुदावयवरूप त्वं समुद्रादिनामकान्देवान्गच्छ प्राप्नुहि तर्पणायेति शेषः स्वाहा सुहुतमस्तु ॥ का° [६.१.११.] प्रतिवषट्कारꣳ हुत्वा मनो मऽइति मुखोपस्पर्शनमिति । प्रतिवषट्कारमेकैकं गुदकाण्डं हुत्वा सर्वान्ते मुखं स्पृशेदिति सूत्रार्थः । हे समुद्रादिदेवतासमूह हार्दि हृदयसंबन्धि मे मनो यच्छ निबध्नीहि निबद्धं मनो हि स्वादायतनान्न च्यवते ॥ का° [६.१.१२.] अनुयाजान्ते स्वरुं जुहोति दिवं ते धूम इति ॥ स्वरुदैवतम् हे स्वरो ते तव धूमः दिवं द्युलोकं गच्छतु वृष्ट्यै । तव ज्योतिः ज्वाला स्वः आदित्यं गच्छतु स्वःशब्देनादित्योऽभिधीयतेऽन्तरिक्षं वा । भस्मना पृथिवीमापृण समन्तात्पूरय । स्वाहा सुहुतमस्तु ॥२१॥

a. मापो मौषधीर्हिꣳसीः । b. धाम्नो-धाम्नो राजँस्ततो वरुण नो मुञ्च ।

c. यदाहुरघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्च ।

d. सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥२२॥

का° [६.१०.३.] अभ्यवेत्य शुष्कार्द्रसंधौ हृदयशूलमुपगूहति शुगसि तमभिशोच योऽस्मान्द्वेष्टि यं च वयं द्विष्मो मापो मौषधीरिति चेति । जले प्रविश्य आलब्धस्य पशोर्हृदयस्थं मांसं यस्मिन् श्रितं (9.) स हृदयशूलस्तं शुष्कार्द्रभूप्रदेशयोः संधौ निगूहेत् भूमावधोमुखं क्षिपेत् शुगसि माप इति मन्त्राभ्यामिति सूत्रार्थः ॥ हृदयशूलदेवतं यजुः । हे हृदयशूल त्वमपो जलानि ओषधीः च मा हिंसीः ॥ का° [६.१०.५.] धाम्नो-धाम्नः सुमित्रिया न इत्युपस्पृशन्त्यप इति । सर्वे ऋत्विग्यजमाना मन्त्राभ्यां (10.) जलं स्पृशन्तीति सूत्रार्थः ॥ वरुणदेवतं यजुः हे राजन् वरुण धाम्नो-धाम्नः यस्माद्यस्मात्त्वदीयपाशसमन्वितात् स्थानात् (11.) वयं बिभीमस्तस्मात्तस्मात्स्थानात् नोऽस्मान्मुञ्च मोचय ॥ यदाहुः ॥ वरुणदेवत्या गायत्री अवसानहीना । अघ्न्या इति गोनाम [निघ° २.११.] प्रकरणादिहानूबन्ध्याविषयम् । बहुवचनमनूबन्ध्याबहुत्वेऽर्थवत् एकानूबन्ध्यापक्षे तु पूजार्थम् । अघ्न्या इति यदाहुः वेदस्मृतिलोकवाक्यानि अघ्न्या अहन्तव्या अवध्याः पूजनीया इति वदन्ति । इतिकरणेन (12.) वाक्यस्यार्थमभिनयेन दर्शयति । हे वरुण वयं तु इति शपामहे इतिकरणं (12.) प्रदर्शनार्थम् शपतिर्हिंसार्थः इति एवमनेन विधिना अघ्न्या हिंस्मः अत एव त्वां याचामहे हे वरुण ततस्तस्मादघ्न्याबधजातादेनसो नोऽस्मान्मुञ्च मोचय ॥ सुमित्रियाः । आपः ओषधयश्च नोऽस्माकं सुमित्रियाः साधुमित्रत्वेनावस्थिताः सन्तु । यः शत्रुरस्मान्द्वेष्टि वयं च यं शत्रुं द्विष्मः द्वेषं कुर्मः तस्मै उभयात्मकाय शत्रवे आप ओषधयश्च दुर्मित्रियाः अमित्रत्वेनावस्थिताः सन्तु ॥ धाम्नो-धाम्न इति मन्त्रः शूलोपगूहनमन्त्रस्य शेषो वा ॥ सुमित्रिया इति मन्त्रोऽपामभिमन्त्रणे वा ॥२२॥ एवमग्नीषोमीयः पशुः समाप्तः ॥ ॥

VI. हविष्मतीरिमा आपो हविष्माँ२॥ऽआविवासति ।

हविष्मान्देवोऽअध्वरो हविष्माँ२॥ऽअस्तु सूर्यः ॥२३॥

अथ सोमाभिषवोपयुक्तानां वसतीवरीसंज्ञानामपां ग्रहणमभिधीयते ॥ ॥ का॰ [८. १. ७-१०.] अग्नीषोमीयस्य वपामार्जनान्ते वसतीवरीग्रहणꣳ स्यन्दमानानामनस्तमितेऽस्तमितश्चेन्निनाह्यात्पुरेजानश्चेदनीजानोऽन्यस्यापि समीपावसितस्य पुरेजानस्योभयाभावऽउल्कुषीꣳ हिरण्यं वोपर्युपरि धारयन्हविष्मतीरिति । अग्नीषोमीयस्य पशोर्वपामार्जनपर्यन्ते कर्मणि कृते अनस्तं गते रवौ वहन्तीनामपामेकदेशाद्वसतीवरीसंज्ञानां सोमार्थानामपां ग्रहणं कार्यं हविष्मतीरिति मन्त्रेण । यदि रविरस्तंगतो यजमानश्च पुरा ईजानः सोमयाजी तदा गृहे एव निनाह्यान्मणिकाद्वसतीवरीग्रहणम् निनहनीयो निखननीयो निनाह्यः । यदि च यजमानः पुरा न सोमयाजी तर्हि समीपस्थितस्य यष्टुः मणिकाद्ग्रहणम् । स्वस्य अन्यस्य च यज्ञकर्तृत्वाभावे उल्कां कनकं वा वहन्तीनामपां समीपे धारयन्वहन्तीभ्यो वसतीवरीर्गृह्णीयादिति सूत्रार्थः ॥ अनुष्टुब्लिङ्गोक्तदेवता । हविष्मान्हविषा संयुक्तो यजमानः हविष्मतीः हविषा संयुक्ता इमा आपः अपः आविवासति वसतीवरीः परिचरति विवासतिः परिचर्यायाम् यत्र वै यज्ञस्य शिरोऽच्छिद्यत तस्य रसो द्रुत्वापः (13.) प्रविवेशेति [३. १. २. १.] श्रुतेरपां हविष्मत्त्वम् ततो देवो द्योतमानोऽध्वरो यागोऽपि स्वशरीरनिष्पत्तये हविष्मानस्तु आभिरद्भिरित्यर्थः ॥ किं च सूर्योऽपि देवो यजमानस्य फलदानाय तृप्त्यर्थं च (14.) हविष्मान्हविःसंपन्नोऽस्तु भवतु । एतस्मै वै गृह्णाति य एष तपतीति [३. १. २. १२.] श्रुतेर्वसतीवरीभिः सूर्यस्य हविष्मत्त्वम् ॥ २३ ॥

a. अ॒ग्नेर्वोऽप॑न्नगृहस्य॒ सद॑सि सादयामि । b. इ॒न्द्रा॒ग्न्योर्भा॑ग॒धेयी॑ स्थ ।
c. मि॒त्रावरु॑णयोर्भाग॒धेयी॑ स्थ । d. विश्वे॑षां दे॒वानां॑ भाग॒धेयी॑ स्थ ।
e. अ॒मूर्या उप॒ सूर्ये॒ याभि॑र्वा॒ सूर्यः॑ स॒ह । ता नो॑ हिन्वन्त्वध्व॒रम् ॥ २४ ॥

का॰ [८. १. ११.] अग्नेर्व इति निदधाति शालाद्वार्यमपरेणेति । नूतनगार्हपत्यात्पश्चिमभागे ता वसतीवरीरासादयतीति सूत्रार्थः ॥ चत्वारि यजूंष्यब्देवत्यानि । हे वसतीवर्यः वो युष्मान् अग्नेः शालाद्वार्यस्य सदसि सीदन्त्यस्मिन्निति सदो निकटस्थानं तत्र सादयामि स्थापयामि । किम्भूतस्याग्नेः अपन्नगृहस्य न पन्नं पतितं

गृहं यस्य तस्य अविनश्वरगृहस्येत्यर्थः ॥ का° [८. ९. १८.] दक्षिणेन निर्हृत्य दक्षिणस्यामुत्तरवेदिश्रोणौ निदधातीन्द्राग्न्योरिति । शालाद्वार्यसमीपस्था वसतीवरीरादाय शालादक्षिणद्वारेण नीत्वोत्तरवेदेर्दक्षिणश्रोणौ निदध्यादिति सूत्रार्थः ॥ हे वसतीवर्यो यूयमिन्द्राग्न्योः इन्द्राग्निदेवतयोर्भागधेयीः स्थ भागधेय्यो भागरूपा भवथ । भागा एव भागधेय्यः । नामरूपभागेभ्यः स्वार्थे धेयप्रत्ययः [पा° ५. ४. ३६. वा° २.] । केवलमामकेत्यादिना [पा° ४. १. ३०.] ङीप् ॥ का° [८. ९. २१. २२.] उत्तरस्यां पूर्ववन्मित्रावरुणयोरिति वेति । पूर्ववदिन्द्राग्न्योरिति मन्त्रेणैव मित्रावरुणयोरिति मन्त्रेण वोत्तरवेदेरुत्तरश्रोणौ वसतीवरीर्निदध्यादिति सूत्रार्थः ॥ हे वसतीवरीसंज्ञका आपो यूयं मित्रावरुणयोर्देवतयोर्भागरूपा भवथ ॥ का° [८. ९. २३.] विश्वेषां देवानामित्याग्नीध्रऽइति । उत्तरवेदिश्रोणेः सकाशाद्वसतीवरीरादायाग्नीध्रीयस्य पश्चान्निदध्यादिति सूत्रार्थः ॥ हे वसतीवर्यो यूयं सर्वेषां देवानां भागरूपा भवथ ॥ इदानीमभिनयेन दर्शयन्नाह । अमूर्याः । ऋक् अब्देवत्या गायत्री । याः प्रसिद्धा अमूरीदृश्यो वसतीवर्याख्या आपः उपसूर्ये (15.) सूर्यसमीपे स्थिताः विभक्तिव्यत्ययः याभिर्वा वाशब्दः समुच्चये याभिश्चाद्भिः सह सूर्यो याति ता आपो नोऽस्माकमध्वरं यज्ञं हिन्वन्तु तर्पयन्तु हिन्वतिः तर्पणार्थः ॥ २४ ॥

VII. हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा ।
ऊर्ध्वमिममध्वरं दिवि देवेषु होत्रा यच्छ ॥ २५ ॥

का° [९. १. ५.] आज्यासादनात्कृत्वेषान्तरेणार्धसोममद्रिषु संमुखेषु निदधाति हृदे त्वेति । आज्यासादनपर्यन्तं कर्म कृत्वा सोममादाय हविर्धाने गत्वा सोमं (16.) विस्रस्य तदर्धं दक्षिणशकटेषान्तरालेन संमुखेष्वभिषवार्थपाषाणेषु निदध्यात् अश्मनां स्थूलो भागो मुखमिति सूत्रार्थः ॥ सोमदेवत्यानुष्टुप् हे सोम हृदे बुद्ध्यै निश्चयात्मिकायै एतन्मम स्यादिति कामरूपायै त्वा त्वामुपावहरामीति शेषः । मनसे संकल्पविकल्पात्मकाय त्वामुपावहरामि । त्वाशब्दानामावृत्त्या क्रियावृत्तिर्बोध्या । दिवे द्युलोकप्राप्तये त्वामुपावहरामि । सूर्याय सूर्यमुखेभ्यो देवेभ्यस्तत्तृप्तये त्वामुपावहरामि ॥ यद्वायमर्थः हे सोम हृदे हृदयवद्भ्यो मनुष्येभ्यः । मनसे मनस्विभ्यः

पितृभ्यः दिवे द्युलोकवासिभ्यो देवेभ्यो विशेषतः सूर्याय च त्वामुपावहरामीति शेषः । एतदर्थे तित्तिरिः । स वाऽअध्वर्युः सोममुपावहरन्त्सर्वाभ्यो देवताभ्य उपावहरेदिति हृदे त्वेत्याह मनुष्येभ्य एवैतेन करोति मनसे त्वेत्याह पितृभ्य एवैतेन करोति दिवे त्वा सूर्याय त्वेत्याह देवेभ्य एवैतेन करोत्येतावतीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्य उपावहरतीति ॥ किं च एवमुपावहृतोऽभिषुतश्च त्वमिममध्वरं मदीयं यज्ञमूर्ध्वमुत्कृष्टं कृत्वा दिवि द्युलोकवर्तमानेषु देवेषु होत्राः वषट्कारवादिनः सप्त होतृकान्यच्छ निबध्नीहि ॥ २५ ॥

a. सोम॑ राजन्विश्वा॒स्त्वं प्र॒जा उ॒पाव॑रोह ।

b. विश्वा॒स्त्वां प्र॒जा उ॒पाव॑रोहन्तु ।

c. शृ॒णोत्व॒ग्निः स॒मिधा॒ हवं॑ मे शृ॒ण्वन्त्वापो॑ धि॒षणा॑श्च दे॒वीः । श्रोता॑ ग्रावाणो वि॒दुषो॒ न य॒ज्ञꣳ शृ॒णोतु॑ दे॒वः स॑वि॒ता हवं॑ मे॒ स्वाहा॑ ॥ २६ ॥

किं च । हे सोम राजन्विश्वाः सर्वाः प्रजा उपावरोह आधिपत्यं प्रजानां कुर्वित्यर्थः ॥ का० [१. १. ६.] विश्वास्त्वामिति विसृज्योपतिष्ठतऽइति । ग्रावसु स्थापितं सोमं विमुच्योपस्थापनं कुर्यादिति सूत्रार्थः ॥ हे सोम विश्वाः सर्वाः प्रजाः त्वामुपावरोहन्तु प्रत्युत्थानाभिवादनादिभिः प्राप्नुवन्तु ॥ का० [१. २. २४. ३. १.] अभूदुषा रुशत्पशुरित्युच्यमाने चतुर्गृहीतं प्रचरण्या जुहोति शृणोत्वग्निरिति । अभूदिति मन्त्रे होत्रा शस्यमाने चतुर्गृहीतमाज्यं प्रचरणीसंज्ञया स्रुचाध्वर्युरतिप्रणीते (17.) जुहोतीति सूत्रार्थः ॥ त्रिष्टुब्लिङ्गोक्तदेवता । अग्निः समिधा समित्पूर्विकया आहुत्या मे हवं मदीयमाह्वानं शृणोतु आपो ममाह्वानं शृण्वन्तु । चकारः समुच्चयार्थः धिषणा देवीः वाचो देव्यश्च मे हवं शृण्वन्तु । धिषणा धीसादिन्यो वा धीसानिन्यो वेति (18.) यास्कः [निरु० ८. ४.] धियं सन्वन्ति ददति धिषणाः षनु दाने तनादिः । तृतीयः पादः प्रत्यक्षकृतो मध्यमपुरुषयोगात् हे ग्रावाणोऽभिषवार्थमिहोपस्थिता यूयं मम हवं श्रोत शृणुत तप्तनप्तनथनाश्चेति [पा० ७. १. ४५.] लोण्मध्यमपुरुषबहुवचनस्य तबादेशे गुणे विकरणाव्यत्यये च श्रोतेति रूपम् संहितायां तु दीर्घः । विदुषो न न इवार्थे विभक्तिव्यत्ययः विद्वांसो यज्ञमिव यथा

विद्वांसः प्रत्यक्षतो जानन्तो यज्ञं शृण्वन्ति तथा यूयं हवं शृणुत तथा सविता देवः मे मम हवं शृणोतु स्वाहा सुहुतमस्तु स्वा वागाहेति वा ॥२६॥

देवीरापोऽअपां नपाद्यो व ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमः ।
तं देवेभ्यो देवत्रा दत्त शुक्रपेभ्यो येषां भाग स्थ स्वाहा ॥२७॥

का° [१.३.७.] अपो गत्वा देवीराप इत्यप्सु जुहोतीति । यच्चतुर्गृहीतमाज्यं सहनीतं तज्जलं प्रति गत्वा जुहोतीति सूत्रार्थः ॥ अब्देवत्या पङ्क्तिः पञ्चपदा चत्वारिंशद्वर्णा पङ्क्तिः अत्र द्वितीयः सप्ताक्षरः तुर्यपञ्चमौ नवार्णौ तेनैकाधिका स्वाहेति यजुः । हे आपो देवीः देव्यः वो युष्माकमपां नपात् अपत्यरूपो (19.) यो ऽयमूर्मिरप्संघातः कल्लोलोऽस्ति देवत्रा देवान्प्रति यायिनं तमूर्मिं देवेभ्यो दत्त प्रयच्छत येषां देवानां यूयं भागः स्थ भागरूपा भवथ । किम्भूत ऊर्मिः हविष्यः तथा इन्द्रियावान् इन्द्रियं वीर्यमस्यास्तीति इन्द्रियावान् दीर्घश्छान्दसः पीतः सन्निन्द्रियवीर्यवृद्धिकारी । तथा मदिन्तमः मदयतीति मदी अतिशयेन मदी मदिन्तमः पीयमानोऽत्यन्तहर्षकारी तर्पयितृतमः नाद्घस्येति [पा° ८.२.१७.] तमपि नुमागमः किम्भूतेभ्यो देवेभ्यः शुक्रपेभ्यः शुक्र इत्युपलक्षणम् शुक्रादीन्सोमग्रहान्पिबन्तीति शुक्रपाः तेभ्यः यद्वा शुक्रं दीप्तं सोमं पिबन्तीति । स्वाहा इदमाज्यं युष्मभ्यं हुतमस्तु । ग्रहीष्यमाणानामपां मूल्यत्वेनेयमाहुतिरित्युक्तं तित्तिरिणा । देवीरापोऽअपां नपादित्याहाहुत्या वै निष्क्रीय गृह्णातीति ॥२७॥

a. कार्षिरसि । b. समुद्रस्य त्वाक्षित्याऽउन्नयामि ।
c. समापोऽअद्भिरग्मत समोषधीभिरोषधीः ॥२८॥

का° [१.३.८.] कार्षिरसीति मैत्रावरुणचमसेनाज्यमपोहतीति । अप्सु हुतमाज्यं मैत्रावरुणचमसेन दूरीकरोतीति सूत्रार्थः ॥ कार्षिरसीत्यादिमन्त्रत्रयं मिलित्वानुष्टुप्छन्दः आद्यस्याज्यं देवता । हे आज्यपदार्थ त्वं कार्षिराकृष्टोऽसि (20.) देवतया भक्षितोऽसीत्यर्थः यद्वा कर्षतीत्येवंशीलः कार्षिः अन्तर्गतशमलापनेतासि । तदाह तित्तिरिः । कार्षिरसीत्याह शमलमेवासामपप्लावयतीति ॥ का° [१.३.९.] समुद्रस्य त्वेति तेन गृह्णातीति । मैत्रावरुणचमसेन तडागादिस्था अपो गृह्णातीति

z*

सूत्रार्थः ॥ हे यजुषी आपे (21.)। आपो वै समुद्र इति [३.१.३.२७.] श्रुतेर्वसतीवरीलक्षणस्य समुद्रस्याक्षित्यै अक्षीणत्वाय हे जल त्वा त्वामुन्नयामि गृह्णामि । वसतीवरीणां वृद्ध्यै जलमेतद्गृह्यत इति ॥ का० [९.३.१२.] प्रत्येत्य चात्वालस्योपरि मैत्रावरुणचमसं वसतीवरीश्च सꣳस्पर्शयति समाप इति । जलाशयात्प्रत्यागत्य चात्वालोपरि मैत्रावरुणचमसस्था अपो वसतीवरीभिः संयोजयतीति सूत्रार्थः ॥ आपो मैत्रावरुणचमसस्था अद्भिः वसतीवरीभिः समग्मत संगच्छन्ताम् गमेर्लुङि तङि प्रथमबहुवचने शपि लुकि गमहनेत्युपधालोपे [पा० ६.४.९८.] समग्मतेति रूपम् । तथा ओषधीः ओषधयः मुद्गमसूरादिका ओषधीभिर्व्रीहियवादिभिः संगच्छन्ताम् अपां कारणभूतत्वादोषधीनामपि योगोऽस्तु ॥२८॥

यम॑ग्ने पृत्सु मर्त्य॒मवा॒ वाजे॑षु॒ यं जु॒नाः । स यन्ता॒ शश्व॑ती॒रिषः॒ स्वाहा॑ ॥२९॥

का० [९.३.१६.] प्रचरणीसꣳस्रवमग्निष्टोमे जुहोत्यभावे चतुर्गृहीतं यमग्नऽइति । अग्निष्टोमसंस्थे क्रतौ प्रचरणीपात्रलिप्तमाज्यशेषं जुहुयात् शेषाज्यस्य होमपर्याप्त्यभावे चतुर्गृहीतमादाय जुहोतीति सूत्रार्थः ॥ आग्नेयी गायत्री मधुच्छन्दोदृष्टा हे अग्ने पृत्सु संग्रामेषु यं मर्त्यं मनुष्यं त्वमवाः अवसि रक्षसि अवतेः इतश्च लोपः परस्मैपदेष्विति [पा० ३.४.९७.] सिप इकारलोपे लेटोऽडाटावित्याडागमेऽवा इति रूपम् । किं च वाजेषु वाज इत्यन्ननाम [निघ० २.७.] हविर्लक्षणेष्वन्नेषु अन्ननिमित्तं यं पुरुषं त्वं जुनाः गच्छसि हवींषि ग्रहीतुं यस्य सकाशं गच्छसीत्यर्थः । जु गतौ श्नाप्रत्ययः इतश्च लोप इतीकारलोपे [पा० ३.४.९७.] रूपं जुना इति । स मर्त्यस्त्वदनुग्रहेण शश्वतीरिषः नित्यान्यन्नानि धनरूपाणि यन्ता नियंस्यति प्राप्स्यतीत्यर्थः लुट् स्वाहा सुहुतमस्तु ॥ उक्थ्यसंस्थे यमग्न इति मन्त्रेणाग्र्यं परिधिं स्पृशेत् षोडशिसंस्थे रराटीं स्पृशेत् अतिरात्रे छदिः स्पृशेत् अन्यसंस्थासु हविर्धानं प्रविशेत् ॥२९॥

VIII. a. दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे᳕ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम् ।

b. आद॑दे॒ राव्या॑सि गभी॒रमि॒मम॑ध्व॒रं कृ॑धीन्द्रा॑य सु॒षूत॑मम् । उ॒त्त॒मेन॑ प॒विनोर्ज॑स्वन्तं॒ मधु॑मन्तं॒ पय॑स्वन्तम् ।

वै राजसूयेनेष्ट्वा भवति सम्राड्वाजपेयेनेति श्रुतेः [५. १. १. १३.]। तयोरिन्द्रावरुणयोः संबन्धिनं भक्षमनु पश्चात् अहं भक्षयामि सोमं पिबामि। जुषाणा मदीयेन भक्षेण सेवमाना वाग्देवी सरस्वती प्राणेन प्राणदेवतया सह सोमस्य तृप्यतु सोमेन तृप्ता भवतु तृप्त्यर्थानां करणे षष्ठी वेति (16.) सोमशब्दात्षष्ठी। स्वाहा सुकृतमस्तु ॥३७॥ ॥ इति षोडशियागः संपूर्णः ॥ ॥

XIII. a. अग्ने॒ पव॑स्व॒ स्वपा॑ अ॒स्मे वर्चः॑ सु॒वीर्य॑म्। दध॑द्र॒यिं मयि॒ पोष॑म् ॥

b. उ॒प॒या॒मगृ॑हीतोऽस्य॒ग्नये॑ त्वा॒ वर्च॑से। c. ए॒ष ते॒ योनि॑र॒ग्नये॑ त्वा॒ वर्च॑से। d. अग्ने॑ वर्चस्वि॒न्वर्च॑स्वा॒ंस्त्वं दे॒वेष्व॒सि वर्च॑स्वा॒नहं मनु॒ष्ये॑षु भूयासम् ॥३८॥

अथ द्वादशाहमन्त्राः ॥ ॥ का॰ [१२. ३. १. २.] पृष्ठ्यः षडहस्तत्रातिग्राह्यग्रहणं त्र्यहे पूर्वेऽग्ने पवस्वेत्तिष्ठन्नहश्रमित्यन्वहमेकैकम् [६.] अग्ने वर्चस्विन्निन्द्रौजिष्ठ सूर्य भ्राजिष्ठेति भक्षणं यजमानैरिति। अस्ति कश्चित्पृष्ठ्यः षडहाख्यः क्रतुः स तु षड्भिरहोभिर्निष्पाद्यः तत्र पूर्वस्मिन्नहस्त्रये क्रमेणाग्ने पवस्वेत्यादिभिर्मन्त्रैरतिग्राह्यान्ग्रहान्गृह्णीयात्तथैवाग्ने वर्चस्विन्नित्यादिभिर्मन्त्रैस्तत्तद्ग्रहशेषं भक्षयेत् ॥ तत्र प्रथमो यथा अग्ने पवस्व। अग्निदेवत्या गायत्री वैखानसदृष्टा आर्षी सप्ताणीं पादौ एषा यजुरन्ता उपयाम एष तऽइति द्वे यजुषी। हे अग्ने त्वमस्मे अस्मासु सुवीर्यं शोभनं वीर्यं यस्मिंस्तादृशं शोभनसामर्थ्योपेतं वर्चो ब्रह्मवर्चसं पवस्व पव (17.) गत्यर्थः अन्तर्भूतण्यर्थः गमय प्रापय। सुपां सुलुगिति [पा॰ ७. १. ३९.] विभक्तेः शेआदेशे अस्मे इति रूपम्। किम्भूतस्त्वम् स्वपाः अप इति कर्मनाम [निघ॰ २. १.] शोभनान्यपांसि यस्य स स्वपाः सुकर्मा। एवमृत्विग्भिः सह संप्रार्थ्य स्वयं याचते मयि यजमाने रयिं धनं दधत् धारयन्स्थापयन्सन् पोषं पुष्टिं पुत्रपश्वादिवृद्धिं पवस्व प्रवर्तयेति संबन्धः ॥ उपयामयतीत्युपयामो ग्रहः हे सोम तेन त्वं गृहीतोऽसि हे ग्रह वर्चसे वर्चस्विने तेजस्विनेऽग्नये त्वां गृह्णामीति शेषः। सादयति एष खरप्रदेशस्तव योनिः स्थानं वर्चस्विनेऽग्नये त्वां सादयामीति शेषः ॥ भक्षणमन्त्रः। हे वर्चस्विन्विशिष्टतेजोयुक्त हे अग्ने त्वं देवेषु इन्द्रादिषु मध्ये वर्च-

स्वानतिदीप्तिमानसि अतस्त्वत्प्रसादादहमपि मनुष्येषु मध्ये वर्चस्वान्ब्रह्मवर्चससंपन्नो भूयासं भवेयम् ॥ ३८ ॥

XIV. a. उत्तिष्ठन्नोजसा सह पीत्वी शिप्रे ऽअवेपयः । सोममिन्द्र चमू सुतम् ।
b. उपयामगृहीतोऽसीन्द्राय त्वौजसे । c. एष ते योनिरिन्द्राय त्वौजसे ।
d. इन्द्रौजिष्ठौजिष्ठस्त्वं देवेष्वस्योजिष्ठोऽहं मनुष्येषु भूयासम् ॥ ३९ ॥

द्वितीयोऽतिग्राह्यग्रहणमन्त्रः । इन्द्रदेवत्या गायत्री कुरुस्तुतिदृष्टा (18.) यजुरन्ता । हे इन्द्र त्वमोजसा बलेन सह उत्तिष्ठन्नुत्सङ्गाद्रुदृहन्सन् शिप्रे हनू नासिके वा अवेपयः टुवेपृ कम्पने कम्पितवानसि किं कृत्वा सोमं पीत्वी पीत्वा स्नात्व्यादयश्चेति [पा° ७. १. ४९.] निपातः । किम्भूतं सोमं चमू सुतं (19.) चम्वामधिषवणचर्मणि सुतमभिषुतम् सोमपानं कृत्वातिहर्षवशान्नासि कम्पितवानित्यर्थः ॥ हे ग्रह त्वमुपयामगृहीतोऽसि ओजसे बलवते इन्द्राय त्वां गृह्णामि । सादयति एष ते योनिः ओजसऽइन्द्राय त्वां सादयामि ॥ भक्षणमन्त्रः । हे इन्द्र हे ओजिष्ठ ओजो बलमस्यास्तीत्योजस्वी अस्मायेत्यादिना [पा° ५. २. १२१.] विनिप्रत्ययः अत्यन्तमोजस्वी ओजिष्ठः अतिशायने तमबिष्ठनाविति [पा° ५. ३. ५५.] इष्ठन्प्रत्ययः विन्मतोर्लुगिति [पा° ५. ३. ६५.] इष्ठनि परे विनिलोपः टिलोपश्च तत्संबोधनमोजिष्ठ अतिबलयुक्त त्वं यथा देवेष्वोजिष्ठोऽसि एवं मनुष्येषु मध्येऽहमोजिष्ठोऽतिबलो भूयासम् ॥ ३९ ॥

XV. a. अदृश्रमस्य केतवो वि रश्मयो जनाँ२॥ऽअनु । भ्राजन्तोऽअग्नयो यथा (20.) । b. उपयामगृहीतोऽसि सूर्याय त्वा भ्राजाय । c. एष ते योनिः सूर्याय त्वा भ्राजाय । d. सूर्य भ्राजिष्ठ भ्राजिष्ठस्त्वं देवेष्वसि भ्राजिष्ठोऽहं मनुष्येषु भूयासम् ॥ ४० ॥

तृतीयोऽतिग्राह्यमन्त्रः । सूर्यदेवत्या गायत्री प्रस्कण्वदृष्टा यजुरन्ता । दृशेर्लुङि इरितो वेति [पा° ३. १. ५७.] च्लेरङादेशे ऋदृशोऽङि गुण इति [पा° ७. ४. १६.] उत्तमैकवचने अदर्शमिति प्राप्ते शीङो रुड्वेत्तेर्विभाषा बहुलं छन्दसीति [पा° ७. १.

६-८.] दृशेरुत्तरस्य मिबादिशस्यामो (21.) रुडागमो धातोर्गुणाभावश्छान्दसः अदृश्रमिति रूपम् कर्मणि लङि प्रथमपुरुषबहुवचनस्थाने द्रष्टव्यमदृश्यन्तेत्यर्थे । वीत्युपसर्गोऽदृश्रमित्यनेन संबध्यते केतुरिति प्रज्ञानामसु [निघ° ३. ९.] पठितम् अस्य सूर्यस्य केतवः प्रज्ञाहेतवः सर्वपदार्थज्ञानकृतो रश्मयः किरणा जनाननु सर्वप्राणिनोऽनुगता वि अदृश्रम् विशेषेणादृश्यन्त सूर्यकराः सर्वजनानुगता व्यापका दृश्यन्तऽइत्यर्थः तत्र दृष्टान्तः भ्राजन्तो ज्वलन्तोऽग्नयो वह्नयो यथा जनानुगता दृश्यन्ते तद्वत् ॥ हे ग्रह त्वमुपयामेन गृहीतोऽसि भ्राजते दीप्यतेऽसौ भ्राजस्तस्मै सूर्याय त्वा गृह्णामि । सादयति एष तव योनिः भ्राजाय दीप्ताय सूर्याय त्वां सादयामि ॥ तृतीयातिग्राह्यभक्षणमन्त्रः । अत्यन्तं भ्राजो भ्राजिष्ठः हे भ्राजिष्ठ अतिदीप्त हे सूर्य त्वं यथा देवेषु भ्राजिष्ठोऽसि तथाहमपि मनुष्येषु भ्राजिष्ठोऽतिदीप्तिमान्भूयासम् ॥ ४० ॥ ॥ इति द्वादशाहः संपूर्णः ॥ ॥

XVI. a. उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥

b. c. = ४० b. c. ॥ ४१ ॥

का° [१३. २. ११.] उदु त्यमिति ग्रहग्रहणमिति । गवामयनाख्यस्य संवत्सरसत्रस्य विषुवन्नामके मध्यमेऽहनि सौर्यपशुपालम्भादूर्ध्वमतिग्राह्यग्रहणं कार्यम् ॥ सौरी गायत्री देवदृष्टा पुनर्व्याख्यायते [७. ४१.] । त्यं तं प्रसिद्धं जातवेदसं जातानां प्रजानां ज्ञातारं जातप्रज्ञं वा देवं देवनशीलं (22.) सूर्यं केतवः प्रज्ञाहेतवः किरणा उ भाशु उद्वहन्ति उदयाचलादुद्गमयन्ति । किमर्थं विश्वाय षष्ठ्यर्थे चतुर्थी विश्वस्य दृशे दर्शनाय सर्वं जगद्द्रष्टुमित्यर्थः ॥ उपयाम एष ते व्याख्याते ॥ ४१ ॥

XVII. आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः । पुनरूर्जा निवर्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्माविशताद्रयिः ॥ ४२ ॥

का° [१३. ४. ११.] हविर्धानाग्नीध्रयोरन्तरे (23.) द्रोणाकलशमेनामाघ्रापयत्याजिघ्रेति । गर्गत्रिरात्रादावहीने त्रिसुत्ये गोसहस्रं दक्षिणास्ति तत्र सहस्रसंख्यापूरणी रोहिणी धेनुस्तां हविर्धानाग्नीध्रयोर्मध्यस्थां (24.) द्रोणाकलशमाघ्रापयेत् ॥ गोदेवत्या महापङ्क्तिः कुसुरुविन्दुदृष्टा अष्टार्णाषट्पादा । महीति गोनाम [निघ°

२.११.] हे मह्नि हे धेनो त्वं कलशं द्रोणकलशाख्यं पात्रमाजिघ्र आभिमुख्येन घ्राणं कुरु किं च हे धेनो इन्दवः सोमाः त्वा त्वामाविशन्तु द्रोणकलशस्थाः सोमास्त्वां प्रविशन्तु । किं च ऊर्जा विशिष्टरसेन पयोभूतेन सह पुनः अस्मान्प्रति निवर्तस्व । या त्वमेवं मया स्तुता सा त्वं नोऽस्माकं सहस्रं धुक्ष्व सहस्रसंख्यं धनं देहि यद्वा गवां सहस्रं यदस्माभिर्दत्तं तन्नोऽस्मभ्यं धुक्ष्व पुनर्देहि दुहतिर्दानार्थः । किं च त्वत्प्रसादादुरुधारा बहुपयोयुक्ता पयस्वती धेनुर्मा मां पुनराविशतादागच्छत्वित्यर्थः तथा रयिः धनमपि मा मामाविशतात् ॥४२॥

इडे॒ रन्ते॒ हव्ये॒ काम्ये॒ चन्द्रे॒ ज्योतेऽदि॑ते॒ सर॑स्वति॒ महि॒ विश्रु॑ति ।

ए॒ता ते॑ऽअघ्न्ये॒ नामा॑नि दे॒वेभ्यो॑ मा सु॒कृतं॑ ब्रूतात् ॥४३॥

का° [१३.४.२०.] इडे रन्तऽइति दक्षिणेऽस्याः कर्णे यजमानो जपतीति । पूर्वोक्ताया धेनोर्दक्षिणकर्णे यजमानो जपेत् ॥ गोदेवत्या प्रस्तारपङ्क्तिः कुसुरुविन्दुदृष्टा यस्या आद्यौ पादौ द्वादशार्णौ अन्त्यावष्टार्णौ सा प्रस्तारपङ्क्तिः । इड्यते स्तूयते इति इडा मनोर्दुहिता तत्तुल्या । रमयतीति रन्ता । हूयते यद्दुग्धं यज्ञेष्विति हव्या हूयते आहूयते सर्वैरिति वा हव्या । काम्यतऽइति काम्या मनुष्याणां ह्येतासु कामाः प्रविष्टा इति श्रुतेः । चन्दयत्याह्लादयतीति चन्द्रा । द्युत दीप्तौ द्योतयति प्रकाशयतीति ज्योता दकारस्य जः । अदितिरदीनानवखण्डिता । सरस्वती सरतीति सरः क्षीरं तद्वती सर इत्युदकनाम सर्तेरिति [निरु° १.२६.] यास्कोक्तेः उदकशब्देनात्र क्षीरमुच्यते । मही महती । विविधं श्रूयते स्तूयतऽइति विश्रुतिः । न हन्तुं योग्या अघ्न्या अहन्तव्या । तासां संबोधनानि हे धेनो एवम्भूते ते तव एता एतानि (25.) अतिशयगुणयुक्तानि नामानि एतैर्नामभिरभिहिता सती देवेभ्यः सुकृतं सुष्ठु करोतीति सुकृत् तं सुकृतं शोभनकर्मकारिणं मां त्वं ब्रूतात् ब्रूहि वद अयं यजमानः पुण्यकर्तेति देवेभ्यो वदेत्यर्थः ॥४३॥

XVIII. a. वि न॑ इन्द्र॒ मृधो॑ जहि नी॒चा य॑च्छ पृतन्य॒तः । योऽअ॒स्माँ२॥ऽअ॑भि॒दास॒त्यध॑रं गमया॒ तमः॑ ॥ b. उ॒प॒या॒मगृ॑हीतो॒ऽसीन्द्रा॑य त्वा वि॒मृधे॑ ।

c. ए॒ष ते॒ योनि॒रिन्द्रा॑य त्वा वि॒मृधे॑ ॥४४॥

का° [१३.२.१७.] ग्रहं गृह्णाति वि न इन्द्र वाचस्पतिं विश्वकर्मन्निति वेति । गवामयनस्योपान्त्ये महाव्रतेऽहनि प्राजापत्यपशूपालम्भादूर्ध्वमैन्द्रग्रहग्रहणे मन्त्रम् ॥ तत्राद्यः । इन्द्रदेवत्यानुष्टुप् शासदृष्टा (26.) । हे इन्द्र नोऽस्माकं मृधः शत्रून्संग्रामान्वा विजहि विशेषेण नाशय । किं च पृतन्यतः नीचा यह पृतनां संग्रामं सेनां वा इच्छन्ति ते पृतन्यन्ति पृतन्यन्तीति पृतन्यन्तस्तान् सुप आत्मनः क्यजिति [पा° ३.१.८.] पृतनाशब्दात्क्यचि प्रत्यये कव्यध्वरपृतनस्यर्चि लोप इति [पा° ७.४.३९.] टिलोपे शतृप्रत्यये च रूपम् पृतन्यतः सेनामिच्छतः शत्रून्नीचा न्यग्भूतान्यह निगृह्णीष्व युद्धादुपरतान्कुर्वित्यर्थः । किं च यश्चान्योऽस्मानभिदासति दसु उपक्षये उपक्षयति तं शत्रुमधरं निकृष्टं तमो नरकं गमय प्रापय संहितायां दीर्घः ॥ हे ग्रह त्वमुपयामेन गृहीतोऽसि विशिष्टो मृत् संग्रामो यस्य तस्मै विमृधे विशिष्टसंग्रामवते इन्द्राय त्वां गृह्णामि । सादयति एष तव योनिः विमृद्गुणविशिष्टायेन्द्राय त्वां सादयामि ॥४४॥

XIX. a. वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजेऽअद्या हुवेम ।
स नो विश्वानि हवनानि जोषद्विश्वशम्भूरवसे साधुकर्मा ॥
b. उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्मणे ।
c. एष ते योनिरिन्द्राय त्वा विश्वकर्मणे ॥४५॥

अथ द्वितीयः । विश्वकर्मदेवता त्रिष्टुप् शासदृष्टा (27.) ईदृशमिन्द्रं वाजे महाव्रतीयलक्षणान्नविषये अद्यास्मिन्दिने वयं हुवेम आह्वयाम किमर्थमूतये अवनाय रक्षणाय । किम्भूतं विश्वकर्माणं विश्वानि समस्तानि जगदुत्पत्त्यादीनि कर्माणि यस्य तम् । तथा वाचस्पतिं वाचां पालयितारं वाचोऽधिपतिं तस्मादाङ्गिरिन्द्रो वागिति श्रुतेः । तथा मनोजुवं जूरिति जवनाम मनसो जूरिव जव इव जवो यस्य स मनोजूस्तम् । स ईदृश इन्द्रो नोऽस्माकं विश्वानि सर्वाणि हवनानि आह्वानानि अवसेऽन्नायान्नसमृद्ध्यै रक्षणाय वा जोषत् जुषताम् अस्मदाह्वानं साधु-साध्विति सेवताम् लेटोऽडाटावित्यडागमे [पा° ३.४.९४.] इतश्च लोपः परस्मैपदेष्विति [पा° ३.४.९७.] तिप इलोपे जोषदिति रूपम् । किम्भूतः सः

विश्वशम्भूः विश्वस्य शं सुखं भवत्यस्मादिति विश्वशम्भूः साधुकर्मा शोभनकर्मकर्ता ॥ हे ग्रह उपयामगृहीतोऽसि विश्वकर्मणे सर्वकर्त्रे इन्द्राय त्वां गृह्णामि । सादयति एष ते योनिः विश्वकर्मणे इन्द्राय त्वां सादयामि ॥४५॥

XX. a. विश्वकर्मन्हविषा वर्धनेन त्रातारमिन्द्रमकृणोरवध्यम् । तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत् । b. c. = ४५ b. c. ॥४६॥

तृतीयो मन्त्रविकल्पः । इन्द्रविश्वकर्मदेवत्या त्रिष्टुप् शासदृष्टा । हे विश्वकर्मन्वर्धनेन वर्धमानेन वर्धयित्रा वा हविषा त्वमिन्द्रं त्रातारं जगतो रक्षकमवध्यं हन्तुमशक्यमप्रतिभटं चाकृणोः कृतवानसि । तस्मै तादृशायेन्द्राय पूर्वीर्विशः प्रजाः पूर्वे वसिष्ठादयो मनुष्याः समनमन्त सम्यग्नताः यथा पञ्चम्यर्थे याल्प्रत्ययः यथा यतः कारणात् अयमिन्द्रः उग्र उद्गूर्णवज्रो विहव्यो विविधेषु कार्येषु आह्वयतऽइति विहव्यश्च असदभूत् तस्माद्विशस्तस्मै नता इत्यर्थः । विश्वकर्मन् त्वद्धविःसामर्थ्यादिन्द्रस्यायं प्रभाव इति भावः ॥ उपयाम एष ते इति व्याख्याते ॥४६॥

XXI. a. उपयामगृहीतोऽस्यग्नये त्वा गायत्रछन्दसं गृह्णामि । b. इन्द्राय त्वा त्रिष्टुप्छन्दसं गृह्णामि । c. विश्वेभ्यस्त्वा देवेभ्यो जगछन्दसं गृह्णामि ।
d. अनुष्टुप्तेऽभिगरः ॥४७॥

का° [१२.५.१३-१५.] अदाभ्यं गृह्णात्यासिच्य निग्राभ्याः पात्रे तस्मिंस्तूष्णीं त्रीनꣳशूनवधायाग्नये त्वा गायत्रछन्दसमिति प्रतिमन्त्रमुपयामः सर्वत्राविशेषादिति । यस्मिन्नौदुम्बरे पात्रे अंशुर्गृहीतस्तस्मिन्होतृचमसस्था निग्राभ्यासंज्ञा अप आनीय तस्मिंस्तिस्रः सोमलताः प्रक्षिप्याग्नये त्वेत्यादित्रिभिर्मन्त्रैः क्रमेणादाभ्यं ग्रहं गृह्णाति मन्त्रैः सोमलताप्रक्षेपो वेति केचित् उपयामगृहीतोऽसीत्येतत्त्रिष्वपि मन्त्रेष्वादावनुषञ्जनीयं सर्वशेषत्वादाम्नानस्येति सूत्रार्थः ॥ तत्र प्रथमो मन्त्रः । अदाभ्यदेवत्यानि त्रीणि यजूंषि देवदृष्टानि । हे सोम त्वमुपयामेन ग्रहेण गृहीतोऽसि हे ग्रह गायत्री छन्दो यस्य ग्रहस्य तं गायत्रीछन्दसं त्वामग्नयेऽग्निप्रीत्यर्थं गृह्णामि ॥ द्वितीयो मन्त्रः उपयामेन गृहीतोऽसि हे ग्रह त्रिष्टुप् छन्दो यस्य तादृशं त्वामिन्द्राय गृह्णामि ॥ तृतीयो मन्त्रः उपयाम° जगती छन्दो यस्य तादृशं त्वां हे ग्रह विश्वेभ्यो दे-

HH*

वेभ्योऽर्थाय गृह्णामि । एवं सवनदेवताभ्यो वारत्रयं ग्रहणम् ॥ का॰ [१२.५.१७.] अनुष्टुप्त्वऽइत्युक्केति । एनं मन्त्रं पठेत् ॥ अदाभ्यदेवत्यं देवदृष्टम् एवं स्वछन्दसं सोमं गृहीत्वाथ तमाह हे सोम अनुष्टुप् छन्दस्ते तवाभिगरः अभिष्टव इत्यर्थः गृ स्तुतौ यद्वाऽऊर्ध्वᳲ सवनेभ्यस्तदानुष्टुभमिति श्रुतेः [११.५.९.७.] ॥४७॥

त्रेशीनां त्वा पत्मन्नाधूनोमि कुकूननानां त्वा पत्मन्नाधूनोमि भन्दनानां त्वा पत्मन्नाधूनोमि मदिन्तमानां त्वा पत्मन्नाधूनोमि मधुन्तमानां (28.) त्वा पत्मन्नाधूनोमि शुक्रं त्वा शुक्रऽआधूनोम्यह्नो रूपे सूर्यस्य रश्मिषु ॥४८॥

का॰ [१२.५.१७.] धूनोत्यᳲशुभिर्व्रेशीनां त्वेति गछन्नाहवनीयमिति । आहवनीयसमीपं गछन्नंशुभिरदाभ्यग्रहस्थानि जलानि चालयेत् ॥ एतदादीनि विश्वेषां देवानामित्यन्तानि [५०.] सोमदेवत्यानि देवदृष्टानि । हे सोम व्रेशीनाम् व्रजतो मेघस्योदरे शेरते ता व्रेश्यो मेघोदरस्था आपस्तासां पत्मन्पतने निमित्ते वृष्टिनिष्पत्त्यर्थं त्वा त्वामाधूनोमि कम्पयामि । कुकूननानाम् कुङ् शब्दे अत्यर्थं कुवन्त्यः शब्दं कुर्वाणा नमन्ति प्रह्वीभवन्तीति कुकूनना मेघस्था आपस्तासां पतने त्वां कम्पयामि । भन्दनानाम् भदि कल्याणे सुखे च भन्दन्तीति भन्दनाः कल्याणकारिण्यः सुखयित्र्यो वा मेघ्या आपः अन्यत्पूर्ववत् । मदिन्तमानाम् मादयन्तीति मदिन्यः अत्यर्थं मदिन्यो मदिन्तमाः तमपि पुंवद्भावः नलोपः प्रातिपदिकान्तस्येति [पा॰ ८.२.७.] नलोपः नाद्घस्येति [पा॰ ८.२.१७.] छान्दसो नुडागमः अत्यन्तं तर्पयन्त्यो (29.) मेघ्या आपः । मधुन्तमानाम् अत्यन्तं मधुस्वादोपेता मधुन्तमाः एवंविधानामपां पतने त्वां धूनोमि । किं च शुक्रं शुद्धमक्लिष्टकर्माणं त्वां शुक्रे शुद्धे अक्लिष्टकर्मणि निग्राभ्यालक्षणे जले त्वामाधूनोमि । किं च अह्नो दिवसस्य रूपे सूर्यस्य रश्मिषु हे सोम त्वामाधूनोमि ॥४८॥

a. ककुभᳲ रूपं वृषभस्य रोचते बृहच्छुक्रः शुक्रस्य पुरोगाः सोमः सोमस्य पुरोगाः । यत्ते सोमादाभ्यं नाम जागृवि तस्मै त्वा गृह्णामि ॥ b. तस्मै ते सोम सोमाय स्वाहा ॥४९॥

हे सोम वृषभस्य श्रेष्ठस्य तव ककुभं महत् आदित्यलक्षणं रूपं रोचते दीप्यते ककुभमिति महन्नामसु (30.) पठितम् बृहत् महान् (31.) शुक्रः शुद्ध आदित्यः शुक्रस्य शुद्धस्य सोमस्य तव पुरोगाः पुरोगामी। सोम एव सोमस्य पुरोगाः पुरोगामी भवितुमर्हति। हे सोम ते त्वदीयमदाभ्यमनुपहिंसितं जागृवि जागरणशीलं यन्नामास्ति तस्मै नाम्ने त्वां गृह्णामि॥ का° [१२.५.१७.] तस्मै तऽइति जुहोतीति। अदाभ्यं जुहोति॥ सौम्यम् हे सोम तस्मै तादृशाय ते तुभ्यं स्वाहा सुहुतमस्तु तत्सोममेवैतत्सोमाय जुहोतीति श्रुतेः [११.५.९.११.]॥४९॥

a. उशिक्त्वं देव सोमाग्नेः प्रियं पाथोऽपीहि।

b. वशी त्वं देव सोमेन्द्रस्य प्रियं पाथोऽपीहि।

c. अस्मत्सखा त्वं देव सोम विश्वेषां देवानां प्रियं पाथोऽपीहि॥५०॥

का° [१२.५.१८.] अꣳशून्सोमे निदधात्युशिक्कमिति प्रतिमन्त्रमिति। मन्त्रत्रयेणोलूखलस्थानंशून्सोमे क्षिपेत्॥ तत्राद्यः हे देव दीप्यमान हे सोम उशिक्कामयमानस्त्वमग्नेः प्रियं पाथोऽन्नमपीहि अपिगच्छ॥ द्वितीयः हे देव सोम वशी कान्तस्त्वमिन्द्रस्य प्रियमन्नं प्राप्नुहि॥ अथ तृतीयो मन्त्रः हे देव सोम अस्मत्सखा अस्माकं मित्रभूतस्त्वं विश्वेषां देवानां प्रियमभिरुचितमन्नं प्राप्नुहि अग्निर्वै प्रातःसवनमिन्द्रो माध्यन्दिनꣳ सवनं विश्वे देवास्तृतीयꣳ सवनमिति श्रुतेः सवनदेवेभ्योऽर्पणम्॥५०॥

XXII. a. इह रतिरिह रमध्वमिह धृतिरिह स्वधृतिः स्वाहा।

b. उपसृजन्धरुणं मात्रे धरुणो मातरं धयन्। रायस्पोषमस्मासु दीधरत्स्वाहा॥५१॥

अथ सत्रोत्थानमन्त्रा देवदृष्टाः॥॥ का° [१२.४.१०.] शालाद्वार्येऽन्वारब्धेष्विह रतिरिति जुहोतीति। सर्वेषु दीक्षितेषध्वर्युस्पृष्टेष्विदानींतनगार्हपत्ये घृतं जुहुयात्॥ पशुदेवतं यजुः हे गावो युष्मदीया रतिः रमणमिह यजमानेषस्तु इहैव यूयं रमध्वं युष्माकमिह यजमानेषु धृतिः संतोषोऽस्तु स्वधृतिः स्वकीयानामपि धृ-

तिरिहैवास्तु स्वाहा सुहुतमस्तु ॥ का० [१२.४.११.] अपरामुपसृजन्निति । शालाद्वार्ये एव द्वितीयाहुतिः ॥ उष्णिक् आद्यावष्टाक्षरौ तृतीयो द्वादशार्णः सोष्णिक् । धारयतीति धरुणोऽग्निरस्मासु रायस्पोषं रायो धनस्य पशुपुत्रसुवर्णादेः पुष्टिं दीधरत् धारयतु धारयतेर्लुङि रूपमडभाव आर्षः । किम्भूतो धरुणः मात्रे धरुणं षष्ठ्यर्थे चतुर्थी मातुः पृथिव्या धारयितारमग्निमुपसृजन्समीपं प्रापयन् तथा मातरं पृथिवीं धयन् पिबन् तत्रोत्पन्नं हविर्भक्षयन्नित्यर्थः । स्वाहेति होमार्थः ॥५१॥

सत्रस्यऽऋद्धिरस्यगन्म ज्योतिरमृता अभूम ।
दिवं पृथिव्या अध्यारुहामाविदाम देवान्त्स्वर्ज्योतिः ॥५२॥

का० [१२.४.१२.] सत्रस्यऽर्द्धिं गायन्ति सत्रस्य ऋद्धिरिति । सर्वे दीक्षिता उत्तरहविर्धानापरकूवरीमालम्ब्य सत्रर्धिसंज्ञकं साम गायन्ति ॥ बृहती यजमानानामात्मस्तुतिः (32.) सप्तैकादशनवार्णपादा । हे साम सत्रस्य ऋद्धिः समृद्धिस्त्वमसि अतो वयं यजमाना ज्योतिरादित्यलक्षणमगन्म प्राप्ताः ततः अमृता अमरणधर्मा अभूम भूताः पृथिव्याः सकाशाद्दिवं द्युलोकमध्यारुहाम अध्यारूढाः द्युलोकारूढाः ततो देवानिन्द्रादीनविदाम जानीमः पश्याम इत्यर्थः वेत्तेर्व्यत्ययेन तुदादित्वे लङि रूपम् ज्योतिर्ज्योतीरूपं स्वः स्वर्गं चाविदाम ॥५२॥

a. युवं तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तं-तमिद्धतं वज्रेण तं-तमिद्धतम् । दूरे चत्ताय छन्त्सद्गहनं यदिनक्षत् । अस्माकꣳ शत्रून्परि शूर विश्वतो दर्मा दर्षीष्ट विश्वतः ॥ b. भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याम सुवीरा वीरैः सुपोषाः पोषैः ॥५३॥

का० [१२.४.१४.] युवं तमिति दक्षिणस्याधोऽक्षं प्राञ्चो निःक्रामन्तीति । सर्वे यजमाना दक्षिणहविर्धानाक्षाधोमार्गेण प्राङ्मुखाः निःसरन्ति ॥ इन्द्रदेवत्यात्यष्टिरवसानत्रयोपेता षट्षष्ट्यक्षरत्वात् ऊना आद्योऽर्धर्चे इन्द्रपर्वतदेवत्यः । हे पुरोयुधा पुरोयुधौ पुरोऽग्रे युध्येते तौ पुरोयुधौ इगुपधेति [पा० ३.१.१३५.] कप्रत्ययः शत्रूणां पुरतो युद्धस्य कर्तारौ हे इन्द्रापर्वता हे इन्द्रपर्वतौ युवं युवां तं शत्रु-

मपहतं विनाशयतम् आदरे वीप्सा तं-तम् इदेवार्थे तं-तमिव शत्रुमपहतं तत्तत्समानमेव सर्वमपि शत्रुं विनाशयतम् तत्रापि विशिष्यते वज्रेण वज्राख्येनायुधेन तं-तमित् तं-तमिव शत्रुं विनाशयतम् । तदो वीप्साश्रवणाद्यदोऽपि वीप्सा यो यः शत्रुर्नोऽस्मान्पृतन्यात् पृतनां सेनां कुर्यात् योधयेदित्यर्थः ॥ इदानीमिन्द्रः प्रत्यक्षो वज्रस्य कर्तृत्वं चोच्यते हे शूर इन्द्र त्वदीयो वज्रो यद्यदा गहनमत्यन्तगम्भीरं वनं जलं वा प्रति दूरे चत्ताय चततिर्गतिकर्मा वनेऽतिदूरगताय शत्रवे इच्छत् इच्छतिः कामनार्थः शत्रुं प्राप्तुं कामयते तदा तमपि दूरगतमिनक्षत् प्राप्नुयात् इनक्षतिर्व्याप्तिकर्मा वने दूरगतमपि इहन्गृह्णात्येवेत्यर्थः । ततो दर्मा दारयतीति दर्मा दृ विदारे अन्येभ्योऽपि दृश्यन्तऽइति [पा° ३.२.७५.] मनिप्रत्ययः विदारणशीलो वज्रः अस्माकमस्मदीयान्विश्वतः सर्वतः स्थितान्विश्वतः सर्वान् शत्रून्परि दर्षीष्ट परितो विदारयतु दीर्यतेराशीर्लिङि तङि रूपम् ॥ का° [१२.४.२८.] पृथक्कामेषु भूर्भुव इति । नानाकामेषु यजमानेषु सर्वे वाग्विसर्जनं कुर्युः ॥ हे भूर्भुवः स्वः अग्निवायुसूर्याः वयं प्रजाभिः सुप्रजाः स्याम वीरैः पुत्रैः सुवीराः स्याम पोषैः पुष्टिभिः सुपोषाः स्याम भवेम । एकवचनान्तोऽयं व्याख्यातः [३.३७.७.२१.] अत्र तु बहुवचनान्तो मन्त्रः ॥५३॥ सत्रोत्थानं समाप्तम् ॥ ॥

XXIII. a. परमेष्ठ्यभिधीतः । b. प्रजापतिर्वाचि व्याहृतायाम् । c. अन्धोऽच्छेतः । d. सविता सन्याम् । e. विश्वकर्मा दीक्षायाम् । f. पूषा सोमक्रयण्याम् ॥५४॥

का° [२५.६.१-६.] परमेष्ठ्यादींश्चतुस्त्रिंशतं जुहोति घर्मदुग्घाले चादोहे चोदीच्या दोहस्थानेऽन्यस्याः शालाया वा पुरस्तात्प्राच्याः पुच्छकाण्डाद्दक्षिणेऽस्थनि हुत्वा दोहयेत्पृषदाज्यस्कन्दने चैकऽइति । मृन्मयघर्मपात्रभेदे भिन्नमभिमृश्य परमेष्ठिने स्वाहा प्रजापतये स्वाहेत्यादीन्सलिलाय स्वाहेत्यन्तांश्चतुस्त्रिंशद्धोमान् जुहोति घर्मदुहो गोर्मरणे तत्स्थाने उदङ्मुख्याः स्थितायाः पत्नीशालापूर्वभागे प्राङ्मुख्या वा पुच्छाद्दक्षिणेऽस्थनि (33.) परमेष्ठिने स्वाहेति चतुस्त्रिंशतमाज्याहुतीर्हुत्वा तां दोहयेत् स्थालीस्थस्य स्रुक्स्थस्य वा पृषदाज्यस्य वा भ्रंशे एके आचार्याः

परमेष्ठ्यादीन्जुहोतीति सूत्रार्थः ॥ परमेष्ठ्यादयो देवा यज्ञस्य शरीराणि तस्मात्तत्तदवस्थायां होमे यज्ञश्चिकित्सितः प्रतिसंहितो भवति । तथा च श्रुतिः [१२.५.१.१.२.] सोमो वै राजा यज्ञः प्रजापतिस्तस्यैतास्तन्वो या एता देवता या एता आहुतीर्जुहोति स यद्यज्ञस्यार्ईर्छेत्तत्प्रति देवतां मन्येत तामनुसमीक्ष्य जुहुयाद्यदि दीक्षोपसत्स्वाहवनीये यदि प्रसुतऽआग्नीध्रे विवाऽएतद्यज्ञस्य पर्व स्रꣳसते यद्ह्वलति सा यैव तर्हि तत्र देवता भवति तयैवैतद्देवतया यज्ञं भिषज्यति तया देवतया यज्ञं प्रतिसंदधातीति ॥ अथ मन्त्रार्थः । आध्यायाद्वसिष्ठ ऋषिः । यदा सोमो यजमानेनाभिधीतः संकल्पितो (34.) भवति मनसाभिध्यातस्तदा परमेष्ठी भवति । अयमर्थः मनसा ध्यातः सोमो यदि नोपनमेत् तदा परमेष्ठिने स्वाहेति जुहुयादिति तथा च श्रुतिः [१२.५.१.३.] स यद्येनं मनसाभिध्यातो यज्ञो नोपनमेत्परमेष्ठिने स्वाहेति जुहुयात्परमेष्ठी हि स तर्हि भवत्यप पाप्मानꣳ हतऽउपैनं यज्ञो नमतीति ॥ वाचि व्याहृतायां सोमेन यक्ष्ये इति वचस्युच्चारिते सति सोमः प्रजापतिनामको भवति तदा प्रायश्चित्तापत्तौ प्रजापतये स्वाहेति जुहुयादित्यर्थः ॥ यदा सोमः ग्रहाभिमुख्येन इतः प्राप्तस्तदा अन्धो भवति । सोमं प्रति गतौ किंचिन्निमित्तं चेत्तदा अन्धसे स्वाहेति जुहुयात् ॥ सन्यां सोमस्य संभक्तौ सत्यां सोमः सवितृनामको भवति तदा प्रायश्चित्तापत्तौ सवित्रे स्वाहेति जुहुयात् अथ यदि सातः (35.) किंचिदापद्येत सवित्रे स्वाहेति जुहुयादिति श्रुतेः [१२.५.१.६.]॥ दीक्षायां सत्यां सोमो विश्वकर्मेत्युच्यते तदा विश्वकर्मणे स्वाहेति जुहुयात् ॥ सोमः क्रीयतेऽनया सा सोमक्रयणी गौस्तस्यामानीतायां सत्यां सोमः पूषा भवति । तदा निमित्ते पूष्णे स्वाहेति जुहुयात् ॥५४॥

a. इन्द्रश्च मरुतश्च क्रयायोपोत्थितः । b. असुरः पण्यमानः ।

c. मित्रः क्रीतः । d. विष्णुः शिपिविष्टऽऊरावासन्नः ।

e. विष्णुर्नरन्धिषः प्रोह्यमाणः (36.) ॥५५॥

क्रयाय द्रव्यदानेनात्मसात्करणायोपोत्थितः उपस्थापितः सोम इन्द्रो मरुन्नामकश्च भवति तदा इन्द्राय मरुद्भ्यश्च स्वाहेति जु° ॥ क्रीयमाणः सोमोऽसुरो भ-

वति असुराय स्वाहेति तदा जु° ॥ यजमानेन क्रीतः सोमो मित्रो भवति तदा मित्राय स्वाहेति जु° ॥ ऊरौ यजमानोत्सङ्गे आसन्नः स्थितः सोमः शिपिविष्टो विष्णुर्भवति शिपिषु प्राणिषु यज्ञेषु वा विष्टः प्रविष्ट एतद्गुणको विष्णुरित्यर्थः तदा प्रायश्चित्तापत्तौ विष्णवे शिपिविष्टाय स्वाहेति जु° ॥ प्रोह्यमाणः शकटेनोह्यमानः सोमो विष्णुर्नरन्धिषो भवति नरो धीयन्ते आरोप्यन्ते यस्मिन्स नरन्धिः संसारः तं स्यति नाशयति नरन्धिषः जगत्संहर्तृविशिष्टो विष्णुः यद्वा रध हिंसायाम् रध्यति हिनस्ति रन्धिषः हन्ता न रन्धिषो नरन्धिषः जगत्पालको वा विष्णुः । तदा विष्णवे (37.) नरन्धिषाय स्वाहेति जुहुयात् ॥५५॥

a. सोम॒ आग॑तः । b. वरु॑ण आ॒सन्द्यामासन्नः । c. अ॒ग्निराग्नी॑ध्रे ।
d. इन्द्रो॑ ह॒विर्धाने॑ । e. अथ॑र्वोपाव॒ह्रि॒यमा॑णः ॥५६॥

शकटादागतोऽवरूढः सोमनामको भवति तदा सोमाय स्वाहेति जुहुयात् ॥ आसन्द्यां मञ्चिकायामुपविष्टः सोमो वरुणो भवति तदा वरुणाय स्वाहेति जु° ॥ आग्नीध्रे वर्तमानः सोमोऽग्निर्भवति तदाग्नये स्वाहेति जु° ॥ हविर्धाने वर्तमानः सोम इन्द्रो भवति तदेन्द्राय स्वाहेति जु° ॥ हृदे त्वा मनसे त्वेति मन्त्रेण [३७. १९.] कण्डनार्थमुपावह्रियमाणः आनीयमानः सोमोऽथर्वनामको भवति तदाथर्वणे स्वाहेति जु° ॥५६॥

a. विश्वे॑ दे॒वा अ॒ꣳशुषु॒ न्यु॑प्तः । b. विष्णु॑राप्रीत॒पा आ॑प्या॒य्यमा॑नः ।
c. य॒मः सू॒यमा॑नः । d. विष्णुः॑ सम्भ्रि॒यमा॑णः । e. वा॒युः पू॒यमा॑नः ।
f. शु॒क्रः पू॒तः । g. शु॒क्रः क्षी॑र॒श्रीः । h. म॒न्थी स॑क्तु॒श्रीः ॥५७॥

अंशुषु सोमखण्डेषु न्युप्तः कण्डनं कृत्वारोपितः सोमो विश्वदेवनामको भवति तदा विश्वेभ्यो देवेभ्यः स्वाहेति जुहुयात् ॥ अꣳशुरꣳशुष्टऽइत्यादिमन्त्रेण [५.७.] आप्याय्यमानः वर्ध्यमानः सोम आप्रीतपा विष्णुर्भवति आ समन्तात्प्रीतान्स्वस्मिन्प्रीतिमतो भक्तान्पाति रक्षतीत्याप्रीतपाः तद्गुणविशिष्टः तदा विष्णवऽआप्रीतपाय स्वाहेति जु° ॥ अभिषूयमाणः सोमो यमो भवति तदा यमाय स्वा° ॥ सम्य-

म्भ्रियमाणः पुष्यमाणः सोमो विष्णुर्भवति तदा विष्णवे स्वा° ॥ दशापवित्रेण पूयमानः सोमो वायुर्भवति तदा वायवे स्वा° ॥ पूतः सोमः शुक्रो भवति तदा शुक्राय स्वा° ॥ क्षीरेण दुग्धेन श्रीयते मिश्रीक्रियतऽइति क्षीरश्रीः तदा शुक्र एव सोमो भवति तदापि शुक्राय स्वा° ॥ सक्तुभिर्मिश्रितः सोमो मन्थी भवति तदा मन्थिने स्वा° ॥५७॥

a. विश्वे॑ दे॒वाश्च॑म॒सेषून्नी॑तः । b. अ॒सुर्होमा॑यो॒द्य॑तः । c. रु॒द्रो हू॒यमा॑नः । d. वातो॒ऽभ्यावृ॑त्तः । e. नृ॒चक्षाः॒ प्रति॑ख्यातः । f. भ॒क्षो भ॒क्ष्यमा॑णः । g. पि॒तरो॑ नाराश॒ꣳसाः स॒न्नः (38.) ॥५८॥

चमसेषु ग्रहपात्रेषून्नीतो गृहीतः सोमो विश्वदेवसंज्ञो भवति तदा विश्वेभ्यो देवेभ्यः स्वाहेति जुहुयात् ॥ होमार्थमुद्यतः सोमोऽसुसंज्ञो भवति तदा असवे स्वा° ॥ हूयमानः सोमो रुद्रो भवति तदा रुद्राय स्वा° ॥ अभ्यावृत्तः होमशेषीभूतः सदः प्रति भक्षणार्थमानीतः सोमो वातो भवति तदा वाताय स्वा° ॥ प्रतिख्यातः ब्रह्मन्नुपह्वयस्वेत्यादिना भक्षणार्थं (39.) पृष्टः सोमो नृचक्षा भवति नृन्मनुष्यान् चष्टे शुभाशुभकारिणः पश्यतीति नृचक्षाः तदा नृचक्षसे स्वा° ॥ भक्ष्यमाणः पीयमानः सोमो भक्षो भवति तदा भक्षाय स्वा° ॥ भक्षयित्वा सन्नः स्वखरेषु सादितः सोमो नाराशंसाः पितरो भवन्ति नरा अस्मिन्नासीना शंसन्तीति नराशंसो यज्ञस्तत्र हिता योग्या वा नाराशंसा नाराशंसगुणविशिष्टाः पितरः तदा निमित्तापत्तौ पितृभ्यो नाराशंसेभ्यः स्वा° ॥५८॥

a. सिन्धु॑रवभृ॒थायो॒द्य॑तः । b. स॒मु॒द्रो॑ऽभ्यवह्रि॒यमा॑णः ।
c. स॒लि॒लः प्रप्लु॑तः ।
d. ययो॒रोज॑सा स्कभि॒ता रजा॑ꣳसि वी॒र्ये॑भिर्वी॒रत॑मा॒ शवि॑ष्ठा ।
या पत्ये॑ते॒ऽअप्र॑तीता॒ सहो॑भि॒र्विष्णू॑ऽअ॒गन्वरु॑णा पू॒र्वहू॑तौ ॥५९॥

अवभृथार्थमुद्यतः सोमः सिन्धुर्भवति तदा सिन्धवे स्वाहेति जुहुयात् ॥ जलमभिमुखं नीयमानः सोमः समुद्रो भवति तदा समुद्राय स्वा° ॥ प्रप्लुतोऽप्सु नि-

मग्नः सोमः सलिलो भवति तदा प्रायश्चित्तापत्तौ सलिलाय स्वा° ॥ एताभिर्यज्ञाहुतिभिर्यज्ञः चिकित्सितः प्रतिसंहितश्च भवतीत्यर्थः । तथा च श्रुतिः [१२.५.१.३७.] ता वाऽएताश्चतुस्त्रिꣳशतमाज्याहुतीर्जुहोति त्रयस्त्रिꣳशद्वै देवाः प्रजापतिश्चतुस्त्रिꣳश एतदु सर्वैर्देवैर्यज्ञं भिषज्यति सर्वैर्देवैर्यज्ञं प्रतिसंदधातीति ॥ ॥ का° [२५.२.९.] पयोरोजसेति चोदकेनोपसिञ्चेदिति । अभिमर्शनेन विकल्पः स्कन्नं रसरूपं सोमं जलेन सिञ्चेत् कालाहुतिहोमं वाचनं च कृत्वेति ज्ञेयम् ॥ विष्णुवरुणदेवत्या त्रिष्टुप् । पूर्वार्धे यच्छब्दोपादानात्तच्छब्दाध्याहारः तौ विष्णू तौ वरुणा वरुणौ । एकत्र विष्णुशब्दस्यैकशेषोऽन्यत्र वरुणशब्दस्य । तुल्यकार्यत्वादुभावपि विष्णू उभावपि वरुणौ कर्मभूतौ प्रति अगन् गतं स्कन्नं यज्ञसाधनमिति शेषः । कदा पूर्वहूतौ पूर्वस्मिन्नाह्वाने यावत्प्रधानं हूयते तावदेव विष्णुं वरुणं च प्रति स्कन्नं हविर्गतमित्यर्थः । विशेषणं वा पूर्वं हूयेते तौ पूर्वहूतौ विष्णुवरुणौ प्रति हविरगनिति संबन्धः । तौ कौ ययोर्विष्णुवरुणयोरोजसा बलेन रजांसि लोकाः स्कभिता स्तम्भितानि लोका रजांस्युच्यन्तऽइति यास्कः [निरु° ४.१९.] स्कभ्नोतिः स्तम्भनार्थः । किं च या यौ विष्णुवरुणौ पत्येते ईशाते ऐश्वर्यं कुर्वाते जगतामीश्वरावित्यर्थः पत ऐश्वर्ये दिवादिरात्मनेपदी यद्वा पत्येते परसैन्येषु श्येनाविव पततः । किम्भूतौ वीर्येभिर्वीर्यैर्बलैर्वीरतमा अत्यन्तं वीरौ । तथा शविष्ठा शव इति बलनाम [निघ° २.९.] अत्यन्तं बलवन्तौ अतिशवस्विनौ शविष्ठौ विन्मतोर्लुगिति [पा° ५.३.६५.] विनिलोपे इष्ठनि टिलोपे शविष्ठाविति रूपम् । तथा सहोभिर्बलैरप्रतीता अप्रतिगतौ न केनापि संमुखं गन्तुं शक्यौ अनन्ययोध्यावित्यर्थः न प्रतीयेते तावप्रतीतौ । एवंविधौ विष्णुवरुणौ प्रति स्कन्नं हविर्गतमित्यर्थः ॥५९॥

देवान्दिवमगन्यज्ञस्ततो मा द्रविणमष्टु मनुष्यानन्तरिक्षमगन्यज्ञस्ततो मा द्र° पितॄन्पृथिवीमगन्यज्ञ° °मष्टु यं कं च लोकमगन्यज्ञस्ततो मे भद्रमभूत् ॥ ६० ॥

का° [२५.२.८.] देवान्दिवमिति सोमे । सोमे स्कन्ने देवान्दिवमित्यभिमर्श-

नम् ॥ अत्यष्टिर्यज्ञदेवत्या यजमानाशीः । अयं यज्ञो देवान्वाय्वादीन्प्राप्य दिवं द्युलोकमगन् अगच्छत् ततो द्युलोकस्थाद्यज्ञात् द्रविणं विशिष्टभोगसाधनरूपं धनं यज्ञफलभूतं मा मामष्टु व्याप्नोतु अश्नोतेः पदविकरणयोर्व्यत्ययः । अनेन सुकृतिनामारोहक्रममभिधायेदानीमवरोहक्रममाह ततो द्युलोकादवरोहणकाले यज्ञो मनुष्यान्मनुष्यलोकमागच्छन् अन्तरिक्षलोकमगन् गतः तत्र स्थिताद्यज्ञाद्द्रविणं यज्ञफलं मामष्टु व्याप्नोतु । दक्षिणायने गमनागमनमाह अयं यज्ञो धूमादिमार्गेण पितॄन्प्राप्य पृथिवीं भूलोकमगन् तत्र स्थिताद्यज्ञाद्द्रविणं मामष्टु व्याप्नोतु । किं बहुना यं कं च यं कमपि लोकं यज्ञोऽगन्गतस्तस्माद्यज्ञात् मे मम भद्रं कल्याणमभूद्भूयादिति यजमानेनाशास्यते ॥ ६० ॥

चतु॑स्त्रि॒ꣳशत्तन्त॑वो॒ ये वि॑तत्नि॒रे य इ॒मं य॒ज्ञꣳ स्व॒धया॒ दद॑न्ते ।

तेषां॑ छि॒न्नꣳ सम्वे॒तद्द॑धामि॒ स्वाहा॑ घ॒र्मोऽअप्ये॑तु दे॒वान् ॥ ६१ ॥

घर्मदेवत्या पङ्क्तिस्त्रिष्टुब्वा द्वाचत्वारिंशदक्षरत्वात् । कात्यायनेनास्या विनियोगो नोक्तः । महावीरभेदे घृतहोमः शाखान्तरे । तन्वन्ति प्रायश्चित्तशमनेन यज्ञं विस्तारयन्तीति तन्तवो देवाश्चतुस्त्रिंशत्संख्याका ये परमेष्ठ्यादय इमं यज्ञं वितत्निरे वितेनिरे वितन्वन्ति तनोतेर्लिटि तङि प्रथमबहुवचने लिटि धातोरनभ्यासस्येति [पा॰ ६. १. ८.] द्वित्वे तनिपत्योश्छन्दसीत्युपधालोपे [पा॰ ६. ४. ९९.] तत्निरे इति रूपम् ये चेमं यज्ञं स्वधयान्नेन ददन्ते धारयन्ति दद दानधारणयोः तेषां यज्ञं वितन्वतां देवानां यत् छिन्नं तदेतत् अहं संदधामि उकारः पादपूरणः स्वाहा सुहुतमस्तु अनेन घृतहोमेन महावीरः संहितो भवत्वित्यर्थः । घर्मो महावीरः संहितः सन्देवानप्येतु देवान्प्रति गच्छतु ॥ ६१ ॥

य॒ज्ञस्य॒ दोहो॒ वित॑तः पुरु॒त्रा सोऽअ॑ष्ट॒धा दिव॑म॒न्वात॑तान ।

स य॑ज्ञ धुक्ष्व॒ महि॑ मे प्र॒जाया॑ꣳ रा॒यस्पोषं॒ विश्व॒मायु॑रशीय॒ स्वाहा॑ ॥ ६२ ॥

का॰ [२५. ६. ७.] सोमिज्योपपाते चैकैकां यथाकालꣳ हुत्वा यज्ञस्य द्रोह इति वाचयतीति । सोमयागे यज्ञाङ्गविनाशे परमेष्ठ्यादिचतुस्त्रिंशदाहुतीनां मध्ये यथाकालमथ यदि पवमान इत्यादिश्रुत्युक्ते [१२. ५. १. १०.] काले एकैकामाहुतिं हु-

त्वा यजमानं वाचयेत् ॥ यज्ञदेवत्या त्रिष्टुप् पूर्वार्धः परोऽक्षो द्वितीयः प्रत्यक्षोऽतो यच्छब्दाध्याहारे सा योजना । हे यज्ञ स त्वं मे मम प्रजायां संततौ महि महिमानं धुक्ष्व क्षर देहीत्यर्थः यद्वा महि महान्तं पूर्वोक्तं दोहं धुक्ष्व अहं च त्वत्प्रसादाद्रायो धनस्य पोषं पुष्टिं विश्वं सर्वमायुश्चाशीय व्याप्नुयाम् । स कः यस्य यज्ञस्य यजनीयस्य तव दोह आकृतिपरिणामः स प्रसिद्धो यज्ञफलरूपः पुरुत्रा बहुधा विततः प्रसृतः सन्दिग्भेदेनाष्टधा भिद्यमानो द्युलोकमन्वाततान व्याप भूमिमन्तरिक्षं च व्याप्य स्वर्गं व्यापेत्यर्थः । ब्रह्मादिस्तम्बपर्यन्तो भूतग्रामो यज्ञपरिणाम इति भावः ॥ ६२ ॥

आप॑वस्व॒ हिर॑ण्यवद॒श्ववत्सोम वी॒रव॑त् । वाजं॒ गोम॑न्त॒माभ॑र॒ स्वाहा॑ ॥ ६३ ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायामष्टमोऽध्यायः ॥ ८ ॥

का॰ [२५. ६. ११.] आपवस्व हिरण्यवदित्युद्गातृहोमो धाड्कारोहणे यूपस्येति । पशौ सोमे च यूपस्य काकारोहणे उद्गात्रा होमः कार्यः ॥ सोमदेवत्या गायत्री कश्यपदृष्टा । हे सोम त्वमापवस्व आगच्छ तत्र क्रियाविशेषणानि कथं हिरण्यवत् कनकयुक्तमश्ववदश्वयुक्तं वीरवद्वीरयुक्तं यथा तथा पाहीत्यर्थः स्वर्णाश्ववीरावत्मक्यं देहीत्यर्थः किं च हे सोम गोमन्तं धेनुयुक्तं वाजमन्नमाभर आहर अन्नं धेनूंश्च देहीत्यर्थः स्वाहा सुहुतमस्तु ह्यग्रहोर्भश्छन्दसीति [पा॰ ८. २. ३२. वा॰ १.] भकारः ॥ ६३ ॥ प्रायश्चित्तानि समाप्तानि ॥ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ग्रहग्रहान्निमित्तान्तोऽष्टमोऽध्यायः समीरितः (40.) ॥ ८ ॥

अथ काण्वशाखायां पाठविशेषः ॥

I. ॥ १. २ ॥ १ ॥ ३ [- तुर्यादित्य॒ - आर्तस्या अ॒मृतं -] ॥ २ ॥ ४ [मृत्य॒न्तः] ५ a [विवस्वां आदि॰] ॥ ३ ॥

II. ॥ ५ b ॥ १ । ४ ॥ III. ॥ ६ ॥ १ ॥ ५ ॥

IV. ॥ ७ [चनो॒धा तो॒ मयि] - भर्गाय सवि॒त्रे त्वा ॥ १ ॥ ६ ॥ V. ॥ ८ ॥ १ ॥ ७ ॥

VI. ॥ ६ a [इन्द इन्द्रि°] ॥१॥ ६ b [पितासि] ॥२॥ १० a [अग्ने वाक्पत्नि सन्नू°] ॥३॥ १० b ॥४॥११॥

VII. ॥ ११ ॥१॥ १२ [यस्ते देव सोमाश्व° - °क्थस्योपहूत उपहूतस्य भक्ष°] ॥२॥१३॥

VIII. ॥ ३४ [षोलशि°] ॥१॥१४॥ IX. ॥ ३३ [षोलशि°] ॥१॥१५॥

X. ॥ ३५ [षोलशि°] ॥१॥१६॥ XI. ॥ ३६ [षोलशी] ॥१॥३७॥२॥१८॥

XII. ॥ अग्नऽआयूꣳषि पवसऽआसुवोर्जमिषं च नः । आरे बाधस्व दुछुनाम् [१९.३८.] ॥ उपयामगृहीतोऽस्यग्नये त्वा वर्चसऽएष ते योनिरग्नये त्वा वर्चसे ॥ अग्ने वर्चस्वन्वर्चस्वाँस्त्वं देवेष्वसि वर्चस्वानहं मनुष्येषु भूयासम् ॥१॥१९॥

XIII. ॥ ३८ [वर्चस्वन्वर्च°] ॥१॥२०॥

XIV. ॥ ३९ a. b. c । इन्द्रौजस्वन्नोजस्वाँस्त्वं देवेष्वस्योजस्वानहं मनुष्येषु भूयासम् ॥१॥२१॥

XV. ॥ ४० a. b. c [त्वा भ्राजे] । सूर्य भ्राजस्वन्भ्राजस्वाँस्त्वं देवेष्वसि भ्राजस्वानहं मनुष्येषु भूयासम् ॥१॥२२॥

XVI. ॥ ४१ a. b. c [त्वा भ्राजे] । सूर्य भ्राजस्वन्भ्रा° - - °यासम् ॥१॥२३॥

XVII. ॥ ७. ४२ - तस्थुषश्च । ८. ४० b. c [त्वा भ्राजे] । सूर्य भ्राजस्वन्भ्रा° - - °यासम् ॥१॥२४॥

XVIII. ॥ ४४ ॥१॥२५॥ XIX. ॥ ४५ ॥१॥२६॥

XX. ॥ विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् । मुह्यन्त्वन्येऽअभितः सपत्ना इहास्माकं मघवा सूरिरस्तु [१७.२२.] ॥ ८. ४५ b. c ॥१॥२७॥

XXI. ॥ ४६ [°णोरयुध्यम्] ॥१॥२८॥

XXII. ॥ ४७ ॥१॥ ४८ [भन्दनानां त्वा पत्मन्नाधूनोमि मधंत्तमानां त्वा प°] ॥२॥ ४९ [ककुह्ण्ण रूपं - बृहन्सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पु°] ॥३॥ ५० ॥४॥३२॥ ॥ द्वाविंशत्यरनुवाकेषु द्वात्रिंशत् ॥ ॥

इति काण्वशाखायां संहितापाठेऽष्टमोऽध्यायः ॥ ॥

I. ॥ ७. २७ a-d ॥१॥ e-g ॥२॥ २८ ॥३॥ २९ a ॥४॥ २९ b [प्रजया भूयासꣳ सुवी°] ॥५॥

II. ॥ ७. ४१ - सूर्यम् ॥१॥ ४२ - °स्युषश्च ॥२॥ ४३ - विधेम ॥३॥ ४४ - जर्हृषाणाः ॥४॥ ४५ a. b ॥५॥ ४५ c. d. ४६ a [विदेय] ॥६॥ ४६ b [गेह - °विश] । ४७ a - °त्वमश्यात् ॥७॥ ४७ a आयुर्दा° - ह्वीत्रे । b [°त्वमश्यात्प्रा° मयो म°]. c [°त्वमश्यात्व° मयो म°]. d [°त्वमश्याद्वयो दा° मयो म°] ॥८॥ ४८ तवं काम सता भुनजामहे ॥९॥१४॥

III. ॥ ८. १५ - °र्थानाम् ॥१॥ १६ ॥२॥ १७ [सꣳरराणो य°] - दधातु ॥३॥ १८ - वसूनि ॥४॥ १९ - °ष्टतानु ॥५॥ २० - विद्वान् ॥६॥ २१ [गातुमित्वा] ॥७॥ २२ ॥८॥२२॥

IV. ॥ २३ ॥१॥ २४ ॥२॥ २५ ॥३॥ २६ - लोकः परि च वन्नि शं च वन्नि । २७ ॥४॥२६॥

V. ॥ २८ ॥१॥ २९ [यस्यास्ते - यस्या यो°] ॥२॥ ३० ॥३॥ ३१ ॥४॥ ३२ ॥५॥३१॥

VI. ॥ ४२ ॥१॥ ४३ ह्व्ये काम्यऽइले रन्ते चन्द्रे - अघ्निये नामानि देवेषु मा -] ॥२॥ ५१ ॥३॥ ५२ अगन्म - °र्ज्योतिः ॥४॥ ५३ a ॥५॥ ५३ b - प्रजया भूयासꣳ सुवीरो वीरैः सुपोषः पोषैः ॥६॥३७॥

VII. ॥ ५४ ॥१॥ ५५ a-c ॥२॥ ५५ d [ऊराऽग्रासन्नः]. e. ५६ a. b ॥३॥ ५६ c. d. e. ५७ a - °प्सुषु न्युप्यमानेषु ॥४॥ ५७ b-f ॥५॥ ५७ g. h. ५८ a. b ॥६॥ ५८ c. d. e. । भक्षः पीतः पितरो नाराशꣳसाः साद्यमानः । ५९ a. b. c ॥७॥ ५९ d ॥८॥ ६० ॥९॥४६॥ ॥ सप्तानुवाकेषु षट्चत्वारिंशत् ॥ ॥

इति काण्वशाखायां संहितापाठे नवमोऽध्यायः ॥ ॥

I. देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय ।
दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाजं नः स्वदतु स्वाहा ॥१॥

चतुर्थाध्यायमारभ्याष्टमान्तमध्यायपञ्चके अग्निष्टोममन्त्रास्तदीयप्रासङ्गिका मन्त्राश्चोक्ताः नवमेऽध्याये वाजपेयमन्त्रा उच्यन्ते चतुस्त्रिंशत्कण्डिकापर्यन्तं । तेषां बृहस्पतीन्द्रावृषी ॥ तत्र का° [१४. १. ११.] देव सवितरिति जुहोति यजत्यादिष्विति । वाजपेयाङ्गभूतानां यजतीनां दीक्षणीयाप्रायणीयादीनामादिषु सकृद्गृहीतमाज्यं जुहोति ॥ सवितृदेवत्या त्रिष्टुप् । हे सवितः सर्वस्य प्रेरकान्तर्यामिन् हे देव दीप्यमान यज्ञं वाजपेयलक्षणं यागं प्रसुव अभ्यनुजानीहि प्रवर्तयेत्यर्थः । यज्ञपतिं यजमानं भगाय भजनीयायानुष्ठानरूपायैश्वर्याय (1.) प्रसुव प्रेरय । एवं मण्डलाधिष्ठातारं पुरुषमुक्त्वेदानीं मण्डलं प्रत्याह त्वत्प्रसादाद्दिवि भवो दिव्यो गन्धर्वो गवां रश्मीनां धारयिता केतपूः केतशब्देनान्नमुच्यते केतमन्नं पुनातीति केतपूः अन्नस्य पावयिता सूर्यमण्डलरूपो देवो नोऽस्माकं केतमन्नं पुनातु शोधयतु । किं च त्वत्प्रसादाद्वाचस्पतिः प्रजापतिर्नोऽस्माकं वाजमन्नं हविर्लक्षणं स्वदतु आस्वादयतु स्वाहा सुहुतमस्तु ॥१॥

a. ध्रुवसदं त्वा नृषदं मनःसदम् । b. उपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णामि । c. एष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ d. अप्सुषदं त्वा घृतसदं व्योमसदम् । e. f = b. c. ॥ g. पृथिविसदं त्वान्तरिक्षसदं दिविसदं देवसदं नाकसदम् । h. i = b. c. ॥२॥

का° [१४.१.२६: २.१.] प्रातःसवनेऽतिग्राह्यान्गृहीत्वा षोडशिनं पञ्च चैन्द्रान्ध्रुवसदमिति प्रतिमन्त्रमिति। प्रातःसवनऽआग्रयणानन्तरं त्रीनतिग्राह्यानादाय षोडशिनं चादाय पञ्चेन्द्रदेवत्यान्ग्रहान्गृह्णीयात्॥ त्रीणि यजूंषीन्द्रदेवत्यानि हे सोम त्वम् उपयामयतीत्युपयामो ग्रहस्तेन गृहीतोऽसि। इन्द्राय जुष्टं प्रियं त्वा त्वां गृह्णामि किम्भूतं त्वां ध्रुवसदं ध्रुवे स्थिरेऽस्मिन् लोके सीदतीति ध्रुवसत्तम् नृषु मनुष्येषु सीदतीति नृषत्तम् मनसि सीदतीति मनःसत्तम्। सोमाहुतिपरिणामभूतो रस एषु लोकेष्वावर्तमानः सोमाध्यस्त उच्यते॥ सादयति हे ग्रह एष खरप्रदेशस्तव स्थानम्। इन्द्राय प्रियतमं त्वां सादयामीति शेषः॥ अथ द्वितीयम् अप्सुपदमुदकसदं घृते सीदतीति व्योम्नि अन्तरिक्षे सीदतीति। शेषो व्याख्यातः॥ अथ तृतीयम् पृथिव्यामन्तरिक्षे दिवि स्वर्गे देवेषु नास्ति अकं दुःखं यस्मिन् तस्मिन्नाके सुखान्विते स्वर्गविशेषे सीदतीति तादृशम् शेषमृजु॥२॥

a. अपाꣳ रसमुद्वयसꣳ सूर्ये सन्तꣳ समाहितम्।
अपाꣳ रसस्य यो रसस्तं वो गृह्णाम्युत्तमम्॥ b. c = २ b. c. ॥३॥

अथ चतुर्थम् रसदेवत्यानुष्टुप् सूर्ये समाहितं समारोपितं स्थापितं सन्तमपामुदकानां रसं सारं वायुमहं गृह्णामि एष वाऽअपाꣳ रसो योऽयं पवतऽइति श्रुतेः [५.१.२.६.]। किम्भूतं रसमुद्वयसमुद्गतं वयोऽन्नं यस्माद्वायोः स उद्वयास्तम् वायुनैव धान्यानि निष्पद्यन्ते। किं च अपां रसस्य वायोर्यो रसः सारः प्रजापतिर्हिरण्यगर्भः स हि यज्ञलोककालाग्निवायुसूर्यर्ग्यजुःसामादिवपुः हे देवा वो युष्मदर्थं तं प्रजापतिमहं गृह्णामि किम्भूतमुत्तममुत्कृष्टतमम् वःशब्दोऽनर्थको वा सोमरूपेण वायुं तदभिमानिनं प्रजापतिं च गृह्णामीत्यर्थः॥ उपयामिति व्याख्यातम् एष तऽइति सादनम्॥३॥

a. ग्रहा ऊर्जाहुतयो व्यन्तो विप्राय मतिम्।
तेषां विशिप्रियाणां वोऽहमिषमूर्जꣳ समग्रभम्॥
b. c = २ b. c.। d. सम्पृचौ स्थः सं मा भद्रेण पृङ्क्तम्।

e. विपृचौ स्थो वि मा पाप्मना पृङ्क्तम् ॥४॥

अथ पञ्चमम् ग्रहदेवत्यानुष्टुप् हे ग्रहास्तेषां वो युष्माकं सम्बन्धिनमिषमन्नमूर्जं रसं चाहं समग्रभं समग्रहं सम्यग्गृह्णामि किम्भूतानां विशिप्रियाणाम् शिप्रे हनू नासिके वा इह तु हनू शिप्रयोर्हन्वोः कर्म शिप्रियं हनुचलनम् विगतं शिप्रियं येषु ग्रहेषु ते विशिप्रियाः सम्यगभिषुताः सुपूताश्च तत्र हि हन्वोर्व्यापारो नास्ति सुपेयत्वात् । तेषां केषां ये यूयमूर्जाकृतयः ऊर्जमन्नरसमाह्वयन्ति ये यैर्वा ते ऊर्जाकृतयः । तथा विप्राय मेधाविने इन्द्राय मतिं विशिष्टबुद्धिं व्यन्तः जानन्तो गमयन्तो वा वीत्यस्य गतिकर्मणो धातोः शतृप्रत्यये रूपम् ॥ उपयाम° एष ते इति व्याख्याते ॥ का° [१४. २. ७.] ऊपर्युपर्यन्नमध्वर्युर्धारयत्यधोऽधो नेष्टा सम्पृचाविति । अध्वर्युः सोमग्रहमन्नोपरि धारयति नेष्टा सुराग्रहमन्नाधस्तात् सहैव धारणं मन्त्रपाठश्च ॥ ग्रहदेवते यजुषी । हे सोमसुराग्रहौ यौ युवां सम्पृचौ स्थः सम्पृक्तौ भवथः पृची सम्पर्के क्विप् तौ युवां मा मां भद्रेण भन्दनीयेन कल्याणेन सम्पृङ्क्तं संसृजतं संयोजयतम् ॥ का° [१४. २. ८.] विपृचावित्याहरत इति । अध्वर्युनेष्टारौ स्वं-स्वं ग्रहं स्वसमीपमानयतः ॥ हे ग्रहौ यतो युवां विपृचौ वियुक्तौ स्थः ततो मा मां पाप्मना विपृङ्क्तं वियोजयतम् ॥४॥

11. a. इन्द्रस्य वज्रोऽसि वाजसास्त्वयायं वाजꣳ सेत् ।

b. वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे । यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्म साविषत् ॥५॥

का° [१४. ३. १.] मरुत्वतीयान्तेऽइन्द्रस्य वज्र इति रथावहरणमिति ॥ माहामरुत्वतीयान्ते माहेन्द्रात्पूर्वं रथवाहनाछकटाद्रथमवतारयति ॥ रथदेवत्यं यजुः हे रथ त्वमिन्द्रस्य वज्रोऽसि इन्द्रेण यदा वृत्राय वज्रं प्रहृतं तत्त्रिधा जातं (2.) तस्यैको भागो रथ इतीन्द्रो ह यत्र वृत्राय वज्रं प्रजहारित्यादिश्रुत्या [१. २. ४. १.] उक्तम् । किम्भूतस्त्वं वाजसाः वाजमन्नं सनोति ददातीति वाजसाः षणु दाने विट्प्रत्ययः विड्वनोरनुनासिकस्यादित्याकारः [पा° ६. ४. ४१.] । किं च अयं यजमानस्त्वया वज्रीभूतेन सहायेन वाजमन्नं सेत् सनोतेः सिनोतेर्वा रूपम् अन्नं सनुयात्सम्भजेत् यद्वा

सिनुयाद्बध्नीयात् बह्वन्नवान्भूयादित्यर्थः ॥ का° [१४.३.२.] चात्वालमावर्तयति वाजस्येति धूर्गृहीतमिति । अवतारितं रथं धुरि गृहीत्वा चात्वालाद्दक्षिणेनानीय वेद्यां स्थापयेत् ॥ पृथिवीदेवत्यातिजगती अन्त्यः पादः सवितृदेवत्यः । नु एवार्थे वाजस्यान्नस्य प्रसवेऽनुज्ञायामिव वर्तमाना वयं यां भूमिं नाम प्रसिद्धं यथा तथा वचसा वेदवाक्येन एवंविधामनुकूलां करामहे कृतवन्तः कुर्महे वा करोतेः शपि रूपम् । किम्भूतां भूमिं मातरं जगन्निर्मात्रीं महीं महतीं महनीयां वा अदितिमदीनामखण्डितां वा । किं च इदं विश्वं भुवनं सर्वं भूतजातं यस्यां भूमावाविवेश आविष्टम् । सविता देवस्तस्यां भूमाविव नोऽस्माकं धर्म धारणमवस्थानं साविषत् प्रसुवतां प्रेरयतु षू प्रेरणे इति धातोर्णिजन्तस्य लेटि साविषदिति रूपम् सिब्बहुलं लेटि [पा° ३.१.३४.] लेटोऽडाटौ [पा° ३.४.९४.] इतश्च लोपः परस्मैपदेष्विति [पा° ३.४.९७.] सूत्रैः ॥५॥

a. अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवत वाजिनः ।

b. देवीरापो यो व ऊर्मिः प्रतूर्तिः ककुन्मान्वाजसास्तेनायं वाजꣳ सेत् ॥६॥

का° [१४.३.३-५.] अश्वान्प्रोक्षत्यपोऽवनीयमानान् स्नातान्वागतानप्स्वन्तरिति देवीराप इति वा समुच्चयो वेति । स्नानार्थमपो नीयमानान् स्नात्वागतान्वाश्वानप्स्वन्तरिति देवीराप इति मन्त्रेण वोभाभ्यां वा प्रोक्षेत् ॥ अश्वदेवत्यावसानरहिता पुरउष्णिक् अस्याः पाद आद्यो द्वादशाक्षरो द्वावष्टाक्षरौ । अप्सु उदकेषु अन्तर्मध्ये अमृतमवस्थितमप्सु भेषजमारोग्यपुष्टिकरमौषधं चावस्थितम् हे अश्वा यूयं तत्रामृतभेषजयुतास्वप्सु वाजिनोऽन्नवन्तो भवत उतापि च अपां प्रशस्तिषु प्रशस्तेषु भागेषु यूयं भवत ॥ द्वितीयः प्रोक्षणमन्त्रः अब्देवत्यं यजुः हे देवीः देव्यो दीप्यमाना आपो वो युष्माकं य ऊर्मिः कल्लोलस्तेन सिक्तोऽयमश्वो वाजमन्नं सेत् सनुयाद्बध्नीयाद्वा । किम्भूत ऊर्मिः प्रतूर्तिः प्रकृष्टा तूर्तिर्वेगो यस्य प्रवरणशीलः । तथा ककुन्मान् ककुच्छब्देन वृषभस्कन्धे उन्नतप्रदेश उच्यते सादृश्ये मतुप् तत्सामान्यादुदकनिचयैः संयुक्तो बहुलोदकसंघातवान् ककुन्मानित्युच्यते । तथा वाजसाः अन्नस्य दाता ॥६॥

KK*

वातो॑ वा॒ मनो॑ वा ग॒न्धर्वाः॑ स॒प्तवि॑ꣳशतिः ।
ते॑ऽअग्रेऽश्व॑मयुञ्ज॒ꣳस्तेऽअ॒स्मिन्ज॒वमाद॑धुः ॥७॥

का॰ [१४.३.६.] दक्षिणं युनक्ति वातो वेति । दक्षिणमश्वं रथे योजयेत् ॥ अश्वदेवत्या उष्णिक् । वाशब्दौ समुच्चयार्थौ । वातो वायुर्मन इन्द्रियं सप्तविंशतिर्नक्षत्राणि गन्धर्वा गोर्भूमेर्धर्तारः ते वातादयोऽग्रे पूर्वमश्वमयुञ्जन् रथे योजितवन्तः ते च वातादयोऽस्मिन्नश्वे जवं वेगमादधुः स्थापितवन्तः ॥७॥

वात॑रꣳहा भव वाजिन्यु॒ज्यमा॑न॒ इन्द्र॑स्येव॒ दक्षि॑णः श्रि॒येधि॑ ।
यु॒ञ्जन्तु॑ त्वा म॒रुतो॑ विश्ववे॑दस॒ आ ते॒ त्वष्टा॑ प॒त्सु ज॒वं द॑धातु ॥८॥

का॰ [१४.३.७.] उत्तरं वातरꣳहा इति । उत्तरमश्वं युनक्ति ॥ अश्वदेवत्या त्रिष्टुप् । हे वाजिन्वेगवन्नश्व युज्यमानः सन् त्वं वातरंहा वातवद्वेगयुक्तो भव वातस्येव रंहो यस्य । किं च दक्षिणो दक्षिणभागे स्थितस्त्वमिन्द्रस्याश्व-इव श्रिया शोभया युक्त एधि भव किं च विश्ववेदसः सर्वज्ञाः सर्वधना वा मरुतो हे अश्व त्वां युञ्जन्तु रथे नियोजयन्तु । किं च त्वष्टा देवः हे अश्व ते तव पत्सु पादेषु जवं वेगमादधातु स्थापयतु ॥८॥

a. ज॒वो यस्ते॑ वाजि॒न्निहि॑तो॒ गुहा॒ यः श्ये॒ने परी॑त्तो॒ऽअच॑रच्च॒ वाते॑ ।
तेन॑ नो वाजि॒न्बल॑वा॒न्बले॑न वाजजि॒च्च भव॒ सम॑ने च पारयि॒ष्णुः ॥
b. वाजि॑नो वाजजितो॒ वाज॑ꣳ सरि॒ष्यन्तो॑ बृह॒स्पते॑र्भा॒गमव॑जिघ्रत ॥९॥

का॰ [१४.३.८.] दक्षिणाप्रष्टिं जवो यस्तऽइति । दक्षिणायां धुरि प्रकृष्टं देशमश्नुतऽइति दक्षिणाप्रष्टिस्तादृशं तृतीयमश्वं युनक्ति ॥ अश्वदेवत्या जगती । हे वाजिन्नश्व यस्ते तव जवो वेगः गुहा गुहायां हृदयप्रदेशे निहितोऽवस्थापितः सुपां सुलुगिति [पा॰ ७.१.३९.] गुहाशब्दात् ङेर्लुक् । श्येने श्येनाख्ये पक्षिणि यो जवः परीत्तः त्वयैव परिदत्तः सन् अचरत् चरति प्रवर्तते यश्च ते जवः परिदत्तः सन्वाते अचरत् वायौ चरति । परिपूर्वाद्ददातेर्निष्ठायामच उपसर्गात्त इति [पा॰ ७.४.४७.] तादेशे दस्तीति [पा॰ ६.३.१२४.] दादेशे (3.) तकारे परे इगन्तोपसर्ग-

स्य दीर्घे परीत्त इति । हे वाजिन् तेन त्रिविधेन (4.) बलेन वेगलक्षणेन बलवान्वेगवान्सन्नोऽस्माकं वाजजित् अन्नस्य जेता भव । च पुनः समने संग्रामे पारयिष्णुः पारयिता च भव पारप्रापको भव पार तीर कर्मसमाप्तावित्यस्माच्चुरादिणिजन्तात् णेश्छन्दसीति [पा° ३.२.१३७.] इष्णुप्रत्ययः ॥ का° [१४.३.१०.] बार्हस्पत्यमेनानाघ्रापयति वाजिन इति । बार्हस्पत्यं चरुमश्वानाघ्रापयेत् ॥ अश्वदेवत्यं यजुः । वाजजितोऽन्नस्य जेतारो वाजमन्नं प्रति सरिष्यन्तो गमिष्यन्तो हे वाजिनोऽश्वा यूयं बृहस्पतेर्भागं चरुमवजिघ्रत आघ्राणं कुरुत ॥ १ ॥

III. a. दे॒वस्या॒हꣳ स॑वि॒तुः स॒वे स॒त्यस॑वसो॒ बृह॒स्पते॑रुत्त॒मं नाक॑ꣳ रुहेयम् ।

b. दे॒वस्या॒हꣳ स॑वि॒तुः स॒वे स॒त्यस॑वस॒ इन्द्र॑स्योत्त॒मं नाक॑ꣳ रुहेयम् ।

c. दे॒व° स॒त्यप्र॑सवसो॒ बृह॒स्पते॑रुत्त॒मं नाक॑मरुहम् ।

d. दे॒व° स॒त्यप्र॑सवस॒ इन्द्र॑स्योत्त॒मं नाक॑मरुहम् ॥ १० ॥

का° [१४.३.१२.] देवस्याहमिति ब्रह्मा रथचक्रमारोहत्युत्करे नाभिमात्रे स्थाणौ स्थितमिति । उत्करप्रदेशे निखातस्य नाभिमात्रकाष्ठस्याग्रे स्थितं रथचक्रं ब्रह्मारोहेत् ॥ ब्राह्मणकर्तृके वाजपेये लिङ्गोक्तदेवतम् । सत्यसवसः सत्याभ्यनुज्ञस्य सवितुर्देवस्य सवेऽनुज्ञायां वर्तमानोऽहं बृहस्पतेः संबन्धिनमुत्तममुत्कृष्टं नाकं स्वर्गं रुहेयमारोहामि । क्षत्रियवाजपेये चक्रारोहमन्त्रः तत्र इन्द्रस्य नाकं रुहेयमिति विशेषः ॥ का° [१४.४.८.] आगतेषु ब्रह्मावरोहति देवस्याहमिति । यजमानादीनां सप्तदशरथेषु सप्तदशशरप्रक्षेपप्रदेशे निखातामौदुम्बरीं शाखां प्रदक्षिणीकृत्य देवयजनदेशमागतेषु सत्सु ब्रह्मा रथचक्रादवरोहति विप्रयज्ञे पूर्वमन्त्रेण क्षात्रे उत्तरेण ॥ सत्यं प्रकृष्टं च सवो यस्येति सत्यप्रसवाः अत्र प्रशब्दः प्रकर्षद्योतकः । अरुहमिति भूतकालः नाकमारूढवानस्मीत्यर्थः शेषं पूर्ववत् ॥ १० ॥

a. बृह॑स्पते॒ वाजं॑ जय॒ बृह॒स्पत॑ये॒ वाचं॑ वदत॒ बृह॒स्पतिं॒ वाजं॑ जापयत ।

b. इन्द्र॒ वाजं॑ ज॒येन्द्रा॑य॒ वाचं॑ वद॒तेन्द्रं॒ वाजं॑ जापयत ॥ ११ ॥

का° [१४.३.१५.] बृहस्पते वाजमित्येकं दुन्दुभिमाहन्ति तूष्णीमितरानिति ।

अनुविद्युच्छ्रितस्थाणवारोपितसप्तदशदुन्दुभीनां मध्ये एकं मन्त्रेणाहन्ति षोडश तूष्णीम् ॥ यजुः विप्रयज्ञे मन्त्रः हे दुन्दुभयो यूयं बृहस्पतये इति वाचं वदत किम् यत् (5.) हे बृहस्पते त्वं वाजमन्नं जय । किं च हे दुन्दुभयो यूयमेव बृहस्पतिं वाजमन्नं जापयत बृहस्पतिनान्नजयं कारयतेत्यर्थः जि जये इत्यस्य हेतुमणिचि क्रीङ्जीनां णाविति [पा॰ ६.१.४८.] धातोराकारे कृते अर्तिह्रीब्लीरीक्नूयीक्ष्माय्यातां पुग्णाविति [पा॰ ७.३.३६.] पुगागमे लोण्मध्यमबहुवचने जापयतेति रूपम् ॥ क्षत्रयज्ञे दुन्दुभिवादनमन्त्रः हे दुन्दुभयो यूयमिन्द्रायेति वाचं वदत यत् हे इन्द्र त्वं वाजं जय । इन्द्रं वाजं यूयं जापयतेति पूर्ववत् ॥११॥

a. एषा वः सा सत्या संवागभूद्यया बृहस्पतिं वाजमजीजपताजीजपत बृहस्पतिं वाजं वनस्पतयो विमुच्यध्वम् ।

b. एषा - °ध्ययेन्द्रं वाजमजीजपताजीजपतेन्द्रं वाजं व° वि° ॥१२॥

का॰ [१४.४.९.१०.] एषा व इति मन्त्राहतमवहरते तूष्णीमितरानिति । सप्तदशदुन्दुभीनां मध्ये मन्त्रवादितं मन्त्रेणावतारयति षोडश तूष्णीं स्थाणुभ्यः ॥ पूर्वो मन्त्रो विप्रयज्ञे उत्तरः क्षत्रे । हे दुन्दुभयो वो युष्माकमेषा वाक् सत्या समभूत् (6.) तथ्या जाता यया वाचा बृहस्पतिं वाजमजीजपत । पुनर्बृहस्पतिं वाजमजीजपत अभ्यासे भूयांसमर्थं मन्यन्त इति [निरु॰ १०.४२.] यास्कोक्तेर्भूयानर्थो ग्राह्यः अत्यन्तं बृहस्पतिमन्नजयं कारितवन्तो यूयं यया वाचा सा सत्या जातेत्यर्थः जयतेर्णिजन्तस्य लुङि मध्यमबहुवचनेऽजीजपतेति रूपम् । हे वनस्पतयो वनस्पतिविकारा दुन्दुभयो यूयं विमुच्यध्वं कृतकृत्याः सन्तो विमोचनं कुरुत ॥ क्षत्रे यज्ञे उत्तरो मन्त्रः । यया वाचा इन्द्रं वाजमजीजपत सा सत्याभूदतो यूयं विमुच्यध्वं तुल्यम् ॥१२॥

a. देवस्याहꣳ सवितुः सवे सत्यप्रसवसो बृहस्पतेर्वाजजितो वाजं जेषम् ।

b. वाजिनो वाजजितोऽध्वन स्कभ्नुवन्तो योजना मिमानाः काष्ठां गच्छत ॥१३॥

का° [१४. ३. १८.] देवस्याहमिति यजुर्युक्तमारोहति यजमानः । मन्त्रयुक्तं रथं यजमान आरोहेत् ॥ सत्यप्रसवसः सत्याभ्यनुज्ञस्य सवितुर्देवस्य सवेऽनुज्ञायां वर्तमानोऽहं वाजजितोऽन्नजितुर्बृहस्पतेः सम्बन्धिनं वाजमन्नं जेषं जयेयं जयतेर्लेटि उत्तमैकवचने लेटोऽडाटावित्यडागमे [पा° ३. ४. ९४.] सिब्बहुलं लेटीति [पा° ३. १. ३४.] सिप्प्रत्ययऽइतश्च लोपः परस्मैपदेष्विति [पा° ३. ४. ९७.] मिप इकारलोपे गुणे च जेषमिति रूपम् यद्वा लुङि अङि (7.) उत्तमैकवचनेऽडभावे ॥ का° [१४. ३. २२.] वाजिन इति वाचयतीति ॥ हे वाजिनोऽश्वा यूयं काष्ठां गच्छत आज्यन्तं प्राप्नुत उत्कर्षं गच्छतेत्यर्थः । आज्यन्तोऽपि काष्ठोच्यते क्रान्त्वा स्थितो भवतीति [निरु° २. १८.] यास्कोक्तेः काष्ठोत्कर्षे स्थितौ दिशीत्यभिधानाच्च [अमर° ३. ३. ४६.] । किम्भूता यूयं वाजजितः अन्नस्य जेतारः । तथा अध्वनो मार्गान्स्कभ्नुवन्तः रुन्धन्तः क्षोभयन्तः स ह्यश्वस्वभावः । तथा योजना योजनानि मिमानाः अतिशीघ्रतया परिच्छिन्दन्तः ॥ १३ ॥

दृष स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धोऽअपिकक्षऽआसनि ।
क्रतुं दधिक्रा अनु सꣳसनिष्यदत्पथामङ्काꣳस्यन्वापनीफणत्स्वाहा ॥ १४ ॥

का° [१४. ४. ३. ४.] दृष स्य इति प्रत्यृचं जुहोत्यनुमन्त्रयते वेति । ऋग्द्वयेनाज्यं जुहोत्यश्वाननुमन्त्रयते वा ॥ द्वे अश्वदेवत्ये जगत्यौ दधिक्रावदृष्टे । त्यत्शब्दस्तत्शब्दपर्यायश्छान्दसः स्यः दृष वाजी सोऽयमश्वः क्षिपणिं क्षिप्यते प्रेर्यतेऽनया सा क्षिपणिस्तां कशां कशाघातमनु तुरण्यति तूर्णमध्वानमश्नुते यद्वा क्षिपणिं तुरण्यति कशां त्वरयति कशायास्त्वरया शीघ्रं धावतीत्यर्थः । किम्भूतोऽश्वः ग्रीवायामपिकक्षे आसनि आस्ये च बद्धः तत्तदुचितरज्जुविशेषैः । पद्दन्न इत्यादिना [पा° ६. १. ६३.] आस्यशब्दस्यासन्आदेशः सप्तम्याम् । ग्रीवायामुरोबध्रेण (8.) बद्धः । कक्षयोः समीपे अपिकक्षं पर्याणदेशस्तत्र संनाहरज्ज्वा बद्धः (9.) । आस्ये मुखे कविकया बद्धः । तथा दधिक्राः दधाति अश्ववारमिति दधिः आदृगमेति [पा° ३. २. १७१.] किप्रत्ययः दधिः सन्क्रमतेऽध्वानमिति दधिक्राः विटि क्रमतेराकारः यद्वा दधीन्धारकान्मार्गावरोधानद्रिपाषाणगर्तकण्टकादीनप्यतिक्रामतीति दधिक्राः । तथा क्रतुं सादिनोऽभिप्रायमनु संसनिष्यदत् सम्यगनु संदधानः (10.) सादिसंकल्पा-

नुसारेण गच्छन् दाधर्तिदर्धर्तीत्यादिना [पा° ७.४.६५.] स्यन्दतेर्यङ्लुकि निपातो ऽयम् । तथा पथां मार्गाणामङ्कांसि लक्षणानि कुटिलानि निम्नोन्नतानि अन्वापनिफणात् अतिशीघ्रं प्राप्नुवन्समत्वमापादयन्नित्यर्थः अन्वाङ्पूर्वस्य फणतेर्गत्यर्थस्य यङ्लुकि निपातः पूर्ववत् । एवंविधोऽश्वस्तुरण्यतीति सम्बन्धः । स्वाहा सुकृतमस्तु ॥१४॥

उत स्मास्य द्रवतस्तुरण्यतः पर्णं न वेरनुवाति प्रगर्धिनः ।
श्येनस्येव ध्रजतोऽअङ्कसं परि दधिक्राव्णः सहोर्जा तरित्रतः स्वाहा ॥१५॥

उत स्म अपि च अस्याश्वस्य अङ्कसं शृङ्गारचिह्नं वस्त्रचामरादिकं परि सर्वस्मिन्नपि देहे वर्तमानं सत् अनुवाति गच्छन्तमश्वमनु उत्क्षिप्तत्वेन दृश्यमानं गच्छति । कस्य किमिव वेः पक्षिणः पर्णं न पक्ष-इव यथा त्वरया गच्छतः पक्षिणः पक्ष उत्क्षिप्तो गच्छन्नवलोक्यते तथा धावतोऽश्वस्याङ्कसरूपं वस्त्रचामरादिकं विस्पष्टमवलोक्यतऽइत्यर्थः । किम्भूतस्याश्वस्य द्रवतो गच्छतः तथा तुरण्यतस्त्वरयतः प्रगर्धिनः प्रगृध्यतीति प्रगर्धी अवधिं प्राप्तुं काङ्क्षतः । पक्षिमात्रस्य पर्णमङ्कसदृष्टान्तत्वेनाभिहितम् शीघ्रधावने श्येनदृष्टान्त उच्यते श्येनस्येव ध्रजतो गच्छतो वेगेन ध्रज गतौ दधिक्राव्णः दधीन्क्रमते दधिक्रावा धारकपर्वताद्यतिक्रामिणः अन्येभ्योऽपि दृश्यन्तऽइति [पा° ३.२.७५.] क्रमतेर्वनिपि विड्वनोरिति [पा° ६.४.४१.] आकारः । ऊर्जा बलेन सह तरित्रतः मार्गं भृशं तरतः यङ्लुकि निपातोऽयम् स्वाहा सुकृतमस्तु ॥१५॥

शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः ।
जम्भयन्तोऽहिं वृकꣳ रक्षाꣳसि सनेम्यस्मद्युयवन्नमीवाः ॥१६॥

का° [१४.४.५.] उत्तरेण तृचेन चेति (11.) । शं न इति अक्रयेणाज्यहोमो ऽश्वाभिमन्त्रणं वा ॥ अश्वदेवत्या विराड्वसिष्ठदृष्टा दशाक्षरचतुःपादा । देवानां कर्म देवतातिः सर्वदेवात्तातिलिति [पा° ४.४.१४२.] देवशब्दात्कर्मणि (12.) तातिल्प्रत्ययः लितीति [पा° ६.१.१९३.] प्रत्ययात्पूर्वस्य वकारस्योदात्तत्वम् तस्य सप्तम्यां सुपां सुलुगित्यादिना [पा° ७.१.३९.] डेराकारः देवताता देवतातौ यज्ञे ह-

येषु आह्वानेषु सत्सु वाजिनोऽश्वा नोऽस्माकं शं सुखकरा भवन्तु । किम्भूताः मितद्रवः मितं परिमितं द्रवन्ति गच्छन्तीति मितद्रवः क्विपि तुगभाव आर्षः । स्वर्काः शोभनोऽर्को येषां ते सुरुचः स्वर्चना वा । तथा अहिं सर्पं वृकमरण्यश्वानं रक्षांसि राक्षसान् च जम्भयन्तो नाशयन्तः । किं च तेऽश्वा अस्मत्सकाशात्सनेमि क्षिप्रममीवा व्याधीन्युयवन्पृथक्कुर्वन्तु यु पृथग्भावे अस्य छान्दिके लङि रूपम् गुणाऽभावावार्षौ । सनेमीति पुराणनाम [निघ° ३. २७.] इह तु क्षिप्रवाचकः ॥ १६ ॥

ते नोऽअर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनो मितद्रवः ।
सहस्रसा मेधसाता सनिष्यवो महो ये धनꣳ समिथेषु जभ्रिरे ॥ १७ ॥

अश्वदेवत्या जगती नाभानेदिष्ठदृष्टा । विश्वे सर्वे ते वाजिनोऽश्वा नोऽस्माकं हवमाह्वानं शृण्वन्तु । किम्भूताः अर्वन्तः इयर्ति (13.) कुटिलं गच्छन्तीत्यर्वन्तः ऋ गतावित्यस्माद्वनिप् अर्वणस्त्रसावनञ इति [पा° ६. ४. १२७.] इति त्रन्तादेशे रूपम् । हवनश्रुतः हवनमाह्वानं शृण्वन्तीति हवनश्रुतः । मितद्रवः यजमानचित्तानुकूल्येन परिमितगामिनः । सहस्रसाः सहस्रस्यानेकजनतृप्तिक्षमस्य महतोऽन्नराशेः सनितारो दातारः । मेधसाता सनिष्यवः मेधो यज्ञः सन्यते सम्भज्यते यत्र सा मेधसातिर्यज्ञशाला उर्डाकारः तस्यां सनिष्यवः सम्भक्तारः पूरयितारः । ते के येऽश्वाः समिथेषु संग्रामेषु महः महत्पूज्यं वा धनं जभ्रिरे जह्रिरे आहृतवन्तः ॥ १७ ॥

वाजे-वाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः ।
अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥ १८ ॥

अश्वदेवत्या त्रिष्टुब्वसिष्ठदृष्टा । हे वाजिनोऽश्वा वाजे-वाजे सर्वस्मिन्नन्ने उपस्थिते सति धनेषु चोपस्थितेषु सत्सु नोऽस्मानवत पालयत । किम्भूता यूयम् विप्रा मेधाविनः परिदृष्टकारिणः अमृता अमरणधर्माणः ऋतज्ञाः सत्यज्ञाः यज्ञज्ञा वा । किं च अस्य मध्वः पिबत कर्मणि षष्ठी इदं मधु धावनात्पूर्वं पश्चाच्चावघ्रायमाणं नैवारचरुलक्षणं मधुरं हविः पिबत पीत्वा च मादयध्वं तृप्ता भवत ततस्तृप्ताः सन्तो देवयानैर्देवाधिष्ठितैः पथिभिर्मार्गैर्यात गच्छत ॥ १८ ॥

a. आ मा वाजस्य प्रसवो जगम्यादिमे द्यावापृथिवी विश्वरूपे ।
आ मा गन्तां पितरा मातरा चा मा सोमोऽअमृतत्वेन गम्यात् ॥
b. वाजिनो वाजजितो वाजꣳ ससृवाꣳसो बृहस्पतेर्भागमवजिघ्रत निमृजानाः ॥१९॥

का० [१४.४.११.] अवरुह्य नैवारमालभते तीर्थे स्थितमा मा वाजस्येति । यजमानो रथादवतीर्य चावालोत्करान्तरे स्थितं नैवारं चरुं स्पृशति ॥ प्रजापतिदेवत्या त्रिष्टुब्वसिष्ठदृष्टा । वाजस्यान्नस्य प्रसव उत्पत्तिर्मा मामाजगम्यात् आगच्छतु गच्छतेर्व्यत्ययेन श्लादिवे लिङि रूपम् । आ इमे विश्वरूपे सर्वरूपात्मिके इमे द्यावापृथिव्यौ मां प्रत्यागच्छताम् । पितरा मातरा पितरामातरा च छन्दसीति [पा० ६.३.३३.] द्विरूपैकशेषो निपात्यते अस्मदीयः पिता माता च मा मां प्रति आगन्तामागच्छताम् व्यत्ययेनादादित्वे लोटि रूपम् । सोमश्चामृतत्वेन सहितो मा मामागम्यात् चतुर्थ्यर्थे तृतीया अमृतत्वाय मम देवजन्मने सोमो मां प्रत्यागच्छेत् लिङि रूपम् ॥ का० [१४.४.१२.] यजुर्युक्तानाघ्रापयति वाजिन इति । मन्त्रेण युक्तानश्वान्नैवारचरुमाघ्रापयेत् ॥ अश्वदेवत्यं यजुः । हे वाजिनोऽश्वा यूयं बृहस्पतेः सम्बन्धिनं भागं चरुमवजिघ्रत आघ्राणं कुरुत । किम्भूताः वाजजितः वाजस्यान्नस्य जेतारः । वाजमन्नं जेतुं ससृवांसः सृतवन्तो (14.) गतवन्तः सर्तेः क्वसुप्रत्यये रूपम् । निमृजानाः मृजूष शुद्धौ शानच्प्रत्ययः शोधयन्तः चरुमेनं यजमानं वा पुनन्त इत्यर्थः ॥१९॥

IV. a. आपये स्वाहा । b. स्वापये स्वाहा । c. अपिजाय स्वाहा ।
d. क्रतवे स्वाहा । e. वसवे स्वाहा । f. अहर्पतये स्वाहा ।
g. अह्ने मुग्धाय स्वाहा । h. मुग्धाय वैनꣳशिनाय स्वाहा ।
i. विनꣳशिनऽआन्त्यायनाय स्वाहा । k. आन्त्याय भौवनाय स्वाहा ।
l. भुवनस्य पतये स्वाहा । m. अधिपतये स्वाहा ॥२०॥

का० [१४.५.१.] द्वादश स्रुवाहुतीर्जुहोत्यापये स्वाहेति प्रतिमन्त्रं वाचयति वे-

का० [१६.५.३.] परिमण्डलाभ्यामिण्ड्वाभ्यामुखां परिगृह्णाति नक्तोषासेति । वर्तुलाभ्यामुखाधारणसाधनरूपाभ्यामिण्ड्वाभ्यामुखां गृह्णातीति सूत्रार्थः ॥ अग्निदेवत्या त्रिष्टुप्कुत्सदृष्टा अर्धमुखाग्रहणे विनियुक्तम् । नक्तोषासा नक्तं च उषाश्च नक्तोषसौ विभक्तेराकारः संहितायां दीर्घः नक्तं रात्रिः उषा अहः नक्तोषसौ रात्रिदिवसौ एकमग्निं धापयेते पाययेते सायंप्रातरग्निहोत्रादिकर्मभिः तर्पयेतेऽइत्यर्थः । तत्र लुप्तोपमानम् शिशुं बालं मातापितराविव । धेट् पाने हेतुमति चेति [पा० ३.१.२६.] णिच् आदेच उपदेशेऽशितीति [पा० ६.१.४५.] आकारे अर्तिह्री-त्यादिना [पा० ७.३.३६.] पुक् । कीदृश्यौ नक्तोषसौ (2.) समनसा समनसौ समानं मनो ययोस्ते एकमनस्के परस्परैकमत्ययुक्तेऽइत्यर्थः । विरूपे विलक्षणं रूपं ययोस्ते विरूपे कृष्णा रात्रिः शुक्लमहः । समीची सम्यगञ्चतस्ते समीच्यौ सम्यगञ्चने समन्विते संश्लिष्टे वा पूर्वसवर्णो विभक्तेः । ये इत्थम्भूते रात्र्यहनी ताभ्यामिण्ड्वारूपाभ्यामुखां गृह्णामीति शेषः ॥ का० [१६.५.४.] हरति द्यावाक्षामेति । आहवनीयोपरिस्थामुखामेवमिण्ड्वाभ्यामादाय द्यावेति पादेनासन्दीं प्रति तां हरतीति सूत्रार्थः ॥ द्यावाक्षामा द्यौश्च क्षामा पृथिवी च द्यावाक्षामा दिवो द्यावादेशः विभक्तेर्लोपः द्यावापृथिव्योरन्तर्मध्ये अन्तरिक्षे च यो रुक्मः रोचमानोऽग्निर्विभाति प्रकाशते तं हरामीति शेषः ॥ का० [१६.५.५.] आहवनीयस्य पुरस्तादुद्गात्रासन्दीवदासन्द्यां चतुरस्राङ्ग्यां शिक्यवत्यामादधाति देवा अग्निमिति । आहवनीयात्पूर्वदिशि भूमौ स्थापितायामासन्द्यामुखां निदधाति देवा इति पादेन उद्गात्रासन्दीवदिति प्रादेशमात्रपाद्यामौदुम्बर्यामरत्निमात्राङ्ग्यां मुञ्जरज्ज्वा व्युतायामिति लभ्यते तथा चतुरस्राङ्ग्यां चतुरस्राणि चतुष्कोणानि अङ्गानीषोपलपादरूपाणि यस्यास्तस्यां सशिक्यायां चेति सूत्रार्थः ॥ देवाः दीव्यन्ति व्यवहरन्तीति देवाः प्राणा यजमानस्य एतमग्निं धारयन् अधारयन् अडभाव आर्षः । कीदृशा देवाः द्रविणोदाः यागद्वारेण द्रविणं धनरूपं फलं ददति प्रयच्छन्ति ते । तमहं धारयामीति शेषः । अग्निं धारयन्द्रविणोदा इत्याह प्राणा वै देवा द्रविणोदा इति तैत्तिरीयश्रुतेर्देवशब्देन प्राणा उच्यन्ते ॥२॥

विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे ।

वि नाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो विराजति ॥३॥

का° [१६.५.६.] शिक्यपाशं प्रतिमुञ्चते षडुद्यामं विश्वा रूपाणीति। उत् ऊर्ध्वं यम्यते नियम्यते यैस्ते उद्यामा रज्जवः षडुद्यामा रज्जव ऊर्ध्वाकर्षणहेतवो यस्येदृशमासन्दीस्थं शिक्यपाशं यजमानः कण्ठे बध्नातीति सूत्रार्थः॥ सवितृदेवत्या जगती श्यावाश्वदृष्टा। कविः विद्वान्क्रान्तदर्शनः। वरेण्यः श्रेष्ठः सविता सर्वस्य प्रसविता सूर्यः विश्वा विश्वानि सर्वाणि रूपाणि प्रतिमुञ्चते द्रव्येषु प्रतिबध्नाति रात्रितमोऽपहृत्य रूपाणि प्रकाशयतीत्यर्थः। यश्च द्विपदे चतुष्पदे द्विपाद्भ्यश्चतुष्पाद्भ्यो मनुष्यपश्वादिभ्यो भद्रं कल्याणं स्वस्वव्यवहारप्रकाशनरूपं श्रेयः प्रासावीत् प्रसौति प्रेरयति। यश्च नाकं स्वर्गं व्यख्यत् विख्याति प्रकाशयति अस्यतिवक्तिख्यातिभ्योऽङ् इति [पा° ३.१.५२.] च्लेरङ्। यश्च उषसः उषःकालस्य प्रयाणं गमनमनु पश्चात् उषःकाले व्यतीते सति विराजति विशेषेण दीप्यते। उषाः सवितुः पुरोगामिनीति सवितुः स्तुतिः। ईदृशः सविता शिक्यं प्रतिमुञ्चत्विति शेषः॥३॥

सुपर्णोऽसि गरुत्माँस्त्रिवृत्ते शिरो गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ।
स्तोम आत्मा छन्दाᳬस्यङ्गानि यजूᳬषि नाम।
साम ते तनूर्वामदेव्यं यज्ञायज्ञियं पुच्छं धिष्ण्याः शफाः।
सुपर्णोऽसि गरुत्मान्दिवं गच्छ स्वः पत ॥४॥

का° [१६.५.७.] सशिक्यं प्राञ्चं प्रगृह्णाति सुपर्णोऽसीति पिण्डवत्। शिक्यसहितमुख्याग्निं प्राच्यामूर्ध्वं धारयति पिण्डवदित्यूर्ध्वबाहुः अनेनोख्याग्निरभिमन्त्रणमप्युक्तं कैश्चिदिति सूत्रार्थः॥ गरुत्मद्देवत्या विपर्यस्ता चतुरवसाना कृतिः। हे अग्ने त्वं सुपर्णः शोभनं पर्णं पतनं यस्य स पक्षिरूपोऽसि पक्ष्याकारेण चितवात् तत्र दृष्टान्तः गरुत्मान्गरुडो यथा पक्षिराजस्तद्वत्। तस्यावयवाः कथ्यन्ते त्रिवृत्ते तव शिरः त्रिवृत्स्तोमस्तव शिरःस्थानीयः। गायत्रं चक्षुः यद्गायत्राख्यं साम तत्तव चक्षुः नेत्रस्थानीयम्। बृहद्रथन्तरे पक्षौ बृहद्रथन्तराख्ये सामनी तव पक्षस्थानीये। स्तोम आत्मा पञ्चदश स्तोमस्तवात्मा अन्तःकरणस्थानीयः। छन्दांसि

अङ्गानि गायत्र्यादीनि एकविंशतिछन्दांसि तव हृदयाद्यङ्गस्थानीयानि । यजूंषि नाम इषे त्वेत्यादीनि यजूंषि तव नामस्थानीयानि । वामदेव्यं साम ते तव तनूः शरीरस्थानीयम् । यज्ञायज्ञियाख्यं साम तव पुछं पुछस्थानीयम् । धिष्ण्याः शफाः होत्रादिधिष्ण्यस्थिता अग्नयस्तव शफाः खुरस्थानीयाः । हे अग्ने एवम्भूतस्त्वं यतो गरुत्मान् गरुड-इव सुपर्णः पक्षिरूपोऽसि अतो दिवमाकाशं प्रति गछ तत्रापि स्वः पत स्वः स्वर्गलोकं प्राप्नुहि ॥४॥

a. विष्णोः क्रमोऽसि सपत्नहा गायत्रं छन्द आरोह पृथिवीमनु विक्रमस्व ।

b. विष्णोः क्रमोऽस्यभिमातिहा त्रैष्टुभं छन्द आरोहान्तरिक्षमनु विक्रमस्व ।

c. विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतं छन्द आरोह दिवमनु विक्रमस्व ।

d. विष्णोः क्रमोऽसि शत्रूयतो हन्तानुष्टुभं छन्द आरोह दिशोऽनु विक्रमस्व ॥५॥

का° [१६.५.११.] विष्णुक्रमान्क्रमते विष्णोरिति प्रतिमन्त्रमग्न्युद्ग्रहणं च तस्मिंस्तस्मिन् (3.)। विष्णुक्रमसंज्ञान्पादन्यासान्करोति तस्मिंस्तस्मिन्क्रमणे (4.) उख्यस्याग्नेरूर्ध्वं ग्रहणं (5.) कार्यमिति सूत्रार्थः ॥ चत्वारि यजूंष्युख्याग्निदेवत्यानि अग्ब्रहतीछन्दस्कानि त्रीणि चतुर्थं प्राजापत्या बृहती । विष्णुशब्देनाग्निरुच्यते स यः स विष्णुर्यज्ञः सः स यः स यज्ञोऽयमेव स योऽयमग्निरुखायामिति श्रुतेः [६.७.२.११.] । हे प्रथम पादविन्यास त्वं विष्णोः यज्ञस्याग्नेः क्रमोऽसि सपत्नहा सपत्नान् शत्रून् हन्तीति शत्रुघातकश्च अतो गायत्रं छन्दः आरोह अनुग्राहकत्वेन स्वीकुरु ततः पृथिवीमनु विक्रमस्व भूदेवतारूपमिमं प्रदेशं विशेषेण प्राप्नुहि । एवमुत्तरेष्वपि मन्त्रेषु योज्यम् । हे द्वितीय पादन्यास त्वं विष्णोः क्रमोऽसि अभिमातिहा अभिमातिर्घातकः पाप्मा वा तं हन्तीति त्रैष्टुभं छन्दः स्वीकुरु अन्तरिक्षं प्रदेशं व्याप्नुहि । हे तृतीय पादन्यास विष्णोः क्रमोऽसि अरातीयतो हन्ता रातिर्दानं न रातिररातिर्दानाभावस्तमात्मन इछतीत्यरातीयन् तस्य हन्ता विनाशकः जागतं छन्दः आरोह दिवं द्युलोकमनु विक्रमस्व द्युलोकं व्याप्नुहि । हे चतुर्थ पादन्यास त्वं विष्णोः क्रमोऽसि शत्रूयतो हन्ता शत्रुत्वं हन्तृत्वमिछति शत्रूयति शत्रूयतीति

शत्रूयन् क्यजन्ताहृतृप्रत्यय उभयत्र तस्य हन्ता आनुष्टुभं छन्द आरोह । अत्र चतुर्ष्वपि पादन्यासेषु यजमान आत्मानं विष्णुत्वेन भावयेत् चतुर्णां प्रक्रमाणां प्रदेशान्पृथिव्यादिलोकरूपत्वेन भावयेत् ॥ का° [१६.५.१३.] दिशो वीक्षते दिशोऽनु विक्रमस्वेति । सर्वा दिशः पश्यतीत्यर्थः ॥ यजुरुलिङ्क् । हे अग्ने त्वं दिशोऽनु विक्रमस्व प्राच्यादिदिशो व्याप्नुहि ॥५॥

अक्रन्ददग्नि स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।

सद्यो जज्ञानो वि हीमिद्धोऽअख्यदा रोदसी भानुना भात्यन्तः ॥६॥

का° [१६.५.१४.] पिण्डवत्प्रागुदञ्चं प्रगृह्णात्यक्रन्ददग्निरिति । ऊर्ध्वबाहुः प्रागूर्ध्वमग्निं गृह्णातीति सूत्रार्थः ॥ अग्निदेवत्या त्रिष्टुब्वत्सप्रीदृष्टा । अग्निरक्रन्दत् छन्दसि लुङ्लङ्लिटः [पा° ३.४.६.] क्रन्दति विस्फूर्जति । कीदृशः द्यौरिव स्तनयन् द्योशब्देनात्र पर्जन्य उक्तः द्यौर्मेघ-इव स्तनयन्गर्जयन् शब्दं कुर्वाणः स्तन गद देव शब्दे चुरादिरदन्तः । मेघसाधर्म्यमाह क्षामा रेरिहत् सुपां सुलुगिति [पा° ७.१.३९.] विभक्तिलोपः क्षामिति पृथिवीनामसु [निघ° १.१.(७.)] पठितं क्षामां पृथिवीं रेरिहत् लिह आस्वादने यङ्लुगन्ताहृतृप्रत्ययः रेफश्छान्दसः अत्यन्तं लेढीति लेलिहत् नाभ्यस्ताच्छतुरिति [पा° ७.१.७८.] नुमभावः भूमिमति आस्वादयन्व्याप्नुवन् यथा मेघो जलभावं गच्छन्नत्यर्थं भूमिं लेढि । वीरुधः समञ्जन् स्वकीयज्वालासमूहेन ओषधीर्व्याप्नुवन् । अन्यदप्युच्यते हि यस्मात् जज्ञानः उत्पद्यमानः (7.) सन् सद्यः तदानीमेव इद्धः दीप्तश्च सन् व्यख्यत् विख्याति अन्तर्भूतणिजन्तो ज्ञेयः श्रुत्या तथा व्याख्यातत्वात् विख्यापयति इदं सर्वं विविधं प्रकाशयति । अन्यच्च योऽग्निः रोदसी द्यावापृथिव्योः अन्तर्मध्ये भानुना रश्मिना स्वयमाभाति समन्तात्प्रकाशते यथा पर्जन्यो भानुना विद्युद्रूपेण द्यावापृथिव्योरन्तर्भाति एवमग्निः पर्जन्यवत्स्तूयते । ईम् निपातः पादपूरणे ॥६॥

अग्नेऽभ्यावर्तिन्नभि मा निर्वर्तस्वायुषा वर्चसा प्रजया धनेन ।

सन्या मेधया रय्या पोषेण ॥७॥

का° [१६.५.१५.] अवहरत्यग्नेऽभ्यावर्तिन्निति । ऋक्चतुष्टयेन चतुर्वारमुख्याग्नि-

मात्मसमीपमानयतीति सूत्रार्थः ॥ अग्निर्देवत्योर्ध्वबृहती द्वादशार्णत्रिपादा । अभि आभिमुख्येनावर्तितुं शीलमस्यास्तीत्यभ्यावर्ती तत्सम्बोधनम् अस्मदभिमुखागमनशील आयुरादिभिः सह मा मामभि मां प्रति निवर्तस्व शीघ्रमागच्छ आयुषा जीवनेन वर्चसा ब्रह्मवर्चसेन प्रजया पुत्रादिकया धनेन वसुना सन्या इष्टलाभेन मेधया धारणावत्या बुद्ध्या रय्या सुवर्णालंकारैः पोषेण आयुरादीनां पुष्ट्या ॥७॥

अग्ने॒ऽअङ्गिरः श॒तं ते॑ सन्त्वा॒वृतः॑ स॒हस्रं॑ तऽउपा॒वृतः॑ ।
अधा॒ पोष॑स्य॒ पोषे॑ण॒ पुन॑र्नो न॒ष्टमाकृ॑धि॒ पुन॑र्नो र॒यिमाकृ॑धि ॥८॥

आग्नेयी महाबृहती एकः पादो द्वादशार्णश्चत्वारोऽष्टार्णाः । हे अङ्गिरः अङ्गिनां रसभूत अङ्गसौष्ठवयुक्त हे अग्ने ते तव शतमावृतः सन्तु शतसंख्याका आवृत्तिशक्तयः सन्तु । तथा ते तव सहस्रमुपावृतः सन्तु सहस्रसंख्याका उपावृत्तिशक्तयः सन्तु स्वस्यैवावर्तनमावृत् त्वत्समीपवर्तिनां पुरुषाणां द्रव्यविशेषाणां चावर्तनमुपावृत्तिः अस्मासु स्नेहातिशयेन त्वमपि पुनः-पुनरावर्तस्व त्वदीयाः पुरुषास्त्वदीयानि च द्रव्याणि पुनःपुनरावर्तन्तामित्यर्थः । अधेत्यव्ययमथार्थम् निपातस्य चेति [पा॰ ६. ३. १३६.] संहितायां दीर्घः अथापि शतसहस्रसंख्यानामावृत्त्युपावृत्तिशक्तीनां यः पोषः समृद्धिस्तस्यापि पोषस्यान्यः पोषोऽयुतलक्षादिसंख्याकाभिवृद्धिस्तादृशेन पोषेण नोऽस्मदीयं नष्टं धनं पुनर्भूयोऽपि आकृधि आवृत्तं कुरु आगमय पुनः भूयोऽपि नोऽस्मदीयं पूर्वमसम्पादितं धनमाकृधि (8.) सर्वतः सम्पादितं कुरु करोतिर्गतिकर्मा श्रुशृणुपृकृवृभ्यश्छन्दसीति [पा॰ ६. ४. १०२.] हेर्धिः व्यत्यये शपोलुक् ॥८॥

पुन॑रू॒र्जा निव॑र्तस्व॒ पुन॑रग्नऽइ॒षायु॑षा । पुन॑र्नः पा॒ह्यꣳह॑सः ॥९॥

आग्नेय्यौ द्वे गायत्र्यौ । हे अग्ने त्वमूर्जा क्षीरादिरसेन सह निवर्तस्व पुनरत्रागच्छ इषा अन्नेन आयुषा जीवेन च सह पुनरागच्छ आगतस्त्वं नोऽस्मान्पुनः कृतादंहसः पापात्पाहि रक्ष ॥९॥

स॒ह र॒य्या निव॑र्त॒स्वाग्ने॒ पिन्व॑स्व॒ धार॑या । वि॒श्वप्स्न्या वि॒श्वत॒स्परि॑ ॥१०॥

हे अग्ने रय्या धनेन सह निवर्तस्व किं च धारया जलधारया वृष्टिरूपया विश्वतः परि सर्वेषां तृणधान्यलतापादपानामुपरि पिन्वस्व सिञ्च पिन्वतिः सेचनार्थः । कीदृश्या धारया विश्वप्स्न्या प्सा भक्षणे विश्वैः प्सायते भक्ष्यते पीयतऽइति विश्वप्स्नी तया यद्वा विश्वप्स्न्या सर्वजनोपभोग्यया धारया धनधारया सर्वतः परि सर्वतोऽधिगतैरर्थैः पूर्यमाणया पिन्वस्व सिञ्च अनवच्छिन्नधनदानेन पुनः-पुनराप्यायस्वेत्यर्थः ॥ १० ॥

आ त्वा॑हार्षम॒न्तर॑भूर्ध्रु॒वस्ति॒ष्ठावि॑चाचलिः ।
विश॑स्त्वा॒ सर्वा॑ वाञ्छन्तु॒ मा त्वद्रा॒ष्ट्रमधि॑भ्रशत् ॥ ११ ॥

का० [१६.५.१६.] उपरिनाभि धारयन्ना त्वाहार्षमित्यभिमन्त्रयते । नाभेरुपर्युख्याग्निं धारयंस्तमभिमन्त्रयतऽइति सूत्रार्थः ॥ अग्निदेवत्यानुष्टुब्ध्रुवदृष्टा । हे अग्ने अहं त्वामाहार्षमाहृतवानस्मि आङ्पूर्वस्य हरतेर्लङि उत्तमैकवचनम् त्वं च अन्तरभूः उखामध्येऽवस्थितोऽसि । अविचाचलिरत्यन्तं चलनरहितो ध्रुवः स्थिरः सन् तिष्ठ विचलतीति विचाचलिः यङ्लुगादिनू । किं च सर्वा विशः प्रजाः त्वा त्वां वाञ्छन्तु यद्वा सर्वा विशः सर्वाण्यन्नानि त्वां वाञ्छन्तु अन्नानि तवोपतिष्ठन्तु अन्नं वै विश इति श्रुतेः [६.७.३.७.] । इदं राष्ट्रं त्वत् त्वत्तः सकाशान्मा अधि भ्रशत् अयं जनपदस्त्वत्तो मापभ्रश्यतु शून्यो मा भूत् अस्मिन्राज्ये स्थित्वा सर्वाः प्रजाः पाहीत्यर्थः । यद्वा श्रीर्वै राष्ट्रं मा त्वच्छ्रीरधिभ्रशदिति श्रुतेः [६.७.३.७.] श्रीः त्वत्तो मा भ्रश्यतु भ्रंशु अधःपतने पुषादित्वाच्च्लेरङ् न माङ्योगऽइति [पा० ६.४.७४.] अडभावः ॥ ११ ॥

उदु॑त्त॒मं व॑रुण॒ पाश॑मस्मदवा॑ध॒मं वि म॑ध्य॒मं श्र॑थाय ।
अथा॑ व॒यमा॑दित्य व्र॒ते त॒वाना॑गसो॒ऽअदि॑तये स्याम ॥ १२ ॥

का० [१६.५.१७.] पाशाऽउन्मुच्योदुत्तममिति । रुक्मपाशशिक्यपाशौ गलादूर्ध्वमार्गेण निष्काशयतीति सूत्रार्थः ॥ वरुणदेवत्या त्रिष्टुप् शुनःशेपदृष्टा । उदित्युपसर्गोऽव वि एतावपि श्रथयेत्यनेन सम्बध्यन्ते । हे वरुण उत्तममुत्तमाङ्गे शिरसि स्थापितं त्वदीयं पाशमस्मत् अस्मत्तः सकाशात् उत् श्रथय उत्कृष्य विनाशय अधममधमाङ्गे पादप्रदेशे स्थापितं त्वत्पाशमवश्रथय अवकृष्यास्मत्तो विनाशय म-

ध्यमं मध्यमप्रदेशे स्थितं पाशं विश्रथय विच्छिद्य श्रथ बधे मित्वाणिचि ह्रस्वः लोटि मध्यमैकवचने रूपम् श्रथायेति संहितायां दीर्घश्छान्दसः यद्वा श्रथ क्र्यादिः लोटि मध्यमैकवचने छन्दसि शायजपीति [पा° ३.१.८४.] श्नाप्रत्ययस्य शायजादेशे श्रथायेति रूपम् । अथ पाशत्रयविनाशानन्तरं हे आदित्य अदितिपुत्र वरुण अनागसः अनपराधा निष्पापास्तव व्रते कर्मणि वर्तमानाः सन्तो वयमदितये अदीनतायै स्याम अखण्डितत्वाय योग्या भवेम । निपातस्य चेति [पा° ६.३.१३६.] दीर्घः अथा इत्यत्र ॥१२॥

अग्रे॑ बृ॒हन्नु॒षसा॑मू॒र्ध्वोऽअ॑स्थान्निर्ज॒गन्वान्तम॑सो॒ ज्योति॒षागा॑त् ।
अ॒ग्निर्भा॒नुना॒ रुश॑ता॒ स्वङ्ग॒ आ जा॒तो विश्वा॒ सद्मा॑न्यप्राः ॥१३॥

का° [१६.५.१७.] पिण्डवत्प्राग्दक्षिणा प्रगृह्णात्यग्रे बृहन्निति । पूर्वमन्त्रेण पाशावुन्मुच्योर्ध्वबाहुरग्नेर्यीं दिशं प्रत्युख्याग्निमूर्ध्वं धारयतीति सूत्रार्थः ॥ अग्निदेवत्या त्रिष्टुप् त्रितदृष्टा । आदित्यात्मनाग्नेः स्तुतिः क्रियते । बृहन्प्रभावान्महानयमग्निरुषसामग्रे प्रातःकालानां मुखे ऊर्ध्वोऽअस्थात् ऊर्ध्वः स्थितः यद्वाग्निहोत्रादौ बोध्यमान उत्तिष्ठति ऊर्ध्वोऽअस्थादित्यत्र प्रकृत्यान्तःपादमव्यपरेऽइति [पा° ६.१.११५.] एङः पदान्तादतीति [पा° ६.१.१०९.] सूत्रप्राप्तसंध्यभावः । यश्च तमसो रात्रिलक्षणान्निर्जगन्वान्निर्गतः सन् ज्योतिषाह्र्लक्षणेन सह आ अगात् इहागतः सोऽग्निर्जात उत्पन्नमात्र एव विश्वा विश्वानि सर्वाणि सद्मानि स्थानानि सर्वान् लोकाना अप्राः स्वतेजसा सर्वत्र पूरितवान् प्रा पूरणे लङ् पुरुषव्यत्ययः इमे वै लोका विश्वा सद्मानीति श्रुतिः [६.७.३.१०.] । कीदृशः रुशता रुश हिंसायाम् रुशतीति रुशन् तेन रुशता तमो हिंसता भानुना रश्मिना स्वङ्गः शोभनान्यङ्गानि यस्य शोभनशरीरः ॥१३॥

a. ह॒ꣳसः शु॑चि॒षद्व॒सुर॑न्तरिक्ष॒सद्धोता॑ वेदि॒षदति॑थिर्दुरोण॒सत् । नृ॒षद्व॑र॒सदृ॑त॒सद्व्यो॑म॒सद॒ब्जा गो॒जा ऋ॑त॒जा अ॑द्रि॒जा ऋ॒तम् । b. बृ॒हत् ॥१४॥

का° [१६.५.१८.] अवहरति हꣳसः शुचिषदिति । उख्याग्निमवतारयति ॥ जगती अग्निप्रोक्षणे इयमुक्ता यजुरन्ता । राजसूयप्रकरणे इयमतिजगत्युक्ता इह तु ज-

गती अन्ते बृहदिति यजुः तद्विनियोगमाह का° [१६.५.१९.] आसन्द्यां करोति बृहदिति । बृहदिति यजुषा उख्याग्निमासन्द्यां स्थापयतीति सूत्रार्थः ॥ हंस इति मन्त्रस्तु व्याख्यातः [१०.२४.] ॥ १४ ॥

सीद् त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान् ।
मैनां तपसा मार्चिषाभिशोचीरन्तरस्याᳪ शुक्रज्योतिर्विभाहि ॥ १५ ॥

का° [१६.५.२०.] उपतिष्ठते सीद त्वमिति । आसन्दीनिधानानन्तरमुख्याग्निमुपतिष्ठते ऋचां त्रयेणेति सूत्रार्थः ॥ अग्निदेवत्या त्रिष्टुप् । हे अग्ने त्वं मातुः मातृसमाया अस्या उखाया उपस्थे उत्सङ्गे सीद उपविश । कीदृशस्त्वं विश्वानि वयुनानि सर्वान् ज्ञानोपायान्विद्वान् जानन् सर्वपदार्थतत्त्ववेदी सन्नित्यर्थः । किं च एनामुखां तपसा संतापेन माभिशोचीः मा संतापय अर्चिषा ज्वालया च माभिशोचीर्मा दीपय तपः कार्यमर्चिः कारणं कार्येण भूयांस्तापो भवति कारणेन त्वीषत् तदुभयं मा कुर्वित्यर्थः अस्यामुखायामन्तर्मध्ये शुक्रज्योतिः निर्मलप्रकाशः सन् विभाहि विशेषेण दीप्यस्व ॥ १५ ॥

अन्तरग्ने रुचा त्वमुखायाः सदने स्वे ।
तस्यास्त्वᳪ हरसा तपञ्जातवेदः शिवो भव ॥ १६ ॥

अग्निदेवत्ये द्वे अनुष्टुभौ । हे अग्ने त्वमुखाया अन्तः मध्ये स्वे सदने स्वकीये स्थाने रुचा दीप्त्या युक्तः सन् सीदेति शेषः । किं च जातं-जातं विन्दतीति जातवेदाः तस्य सम्बोधनं हे जातवेदः सर्वज्ञ जातं वेदो ज्ञानं यस्येति वा जातविज्ञान तस्या उखायाः शिवः कल्याणकारी शान्तो भव किं कुर्वन् हरसा ज्योतिषा तपन्प्रतपन् सन् ॥ १६ ॥

शिवो भूत्वा मह्यमग्नेऽअथो सीद शिवस्त्वम् ।
शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहासदः ॥ १७ ॥

हे अग्ने मह्यं मदर्थं शिवः शान्तो भूत्वा अथो अनन्तरं शिवः सीद सर्वात्मना शान्तः सन्नुपविश । सर्वा दिशः शिवाः शान्ताः कृत्वा इहास्यामुखायां स्वं योनिं

स्वकीयं स्थानमासदः आसीद् आगत्योपविश छन्दसि लुङ्लङ्लिट इति [पा॰ ३. ४. ६.] लोडर्थे लुङ् ॥ १७॥

II. दिवस्परि प्रथमं जज्ञेऽअग्निरस्मद्द्वितीयं परि जातवेदाः ।
तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः ॥ १८॥

का॰ [१६. ५. ३१. २२.] वात्सप्रेण च दिवस्परीत्येकादशभिरनुवाकेनैके । दिवस्परीत्येकादशर्चेन वात्सप्रेणाख्यमग्निमुपतिष्ठते एके आचार्या अनुवाकेन द्वादशर्चेन वदन्तीति सूत्रार्थः ॥ अग्निदेवत्या द्वादश त्रिष्टुभो भलन्दनपुत्रवत्सप्रीदृष्टाः । अग्निः प्रथमं दिवः परि दिवः सकाशात् जज्ञे जातः प्राणो वै दिवः प्राणाद्ध वाऽएष प्रथममजायतेति श्रुतिः [६. ७. ४. ३.] । जातवेदाः अग्निः द्वितीयं द्वितीयवारमस्मत्परि अस्मत्तः सकाशात् ब्रह्मणो जज्ञे जातः यदेनमदो द्वितीयः पुरुषविधोऽजनयदिति श्रुतेः [६. ७. ४. ३.] स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजतेति च श्रुतेः स पुरुषविध इत्यर्थः । नृषु मनो यस्य स नृमणा पूर्वपदाच्चेति [पा॰ ८. १. ३. (9.)। णत्वम् नृमणाः प्रजापतिः अजस्रमनुपक्षीणमग्निमप्सु जलेष्वन्तर्व्यवस्थितं तृतीयं तृतीयवारमजनयत् यदेनमदस्तृतीयमद्भ्योऽजनयत् । अथ-यो गर्भोऽन्तरासीत्सोऽग्निरसृज्यत । प्रजापतिर्वै नृमणा अजस्रोऽग्निरित्यादिश्रुतयः [६. ७. ४. ३.] । एवं बहुजन्माग्निः स्वाधीः शोभना आहिता धीर्बुद्धिर्यस्य स यजमान एनं बहुजन्मानमग्निमिन्धानो दीपयन् जरते जनयति धातोरर्थान्तरे वृत्तिः ॥ यद्वायमर्थः अग्निः प्रथमं दिवः परि द्युलोकस्योपरि जज्ञे सूर्यरूपेणोत्पन्नः । अस्मत्परि अस्मदीयमनुष्यलोकस्योपरि जातवेदाः द्वितीयं जज्ञे प्रसिद्धवह्निरूपेण द्वितीयं जन्म प्राप्तवान् । अप्सु समुद्रे तृतीयं जज्ञे वडवानलरूपेण तृतीयवारमुत्पन्नः । अजस्रं त्रिष्वपि जन्मसु नृमणा नृषु मनो यस्य यजमानेष्वनुग्रहबुद्धियुक्तः एनमीदृशमग्निमिन्धानः पुरोडाशादिना दीपयन् स्वाधीः स्वायत्तचित्तो यजमानो जरते जीर्यति जरापर्यन्तं परिचरतीत्यर्थः ॥ १८॥

विद्मा तेऽअग्ने त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रा ।
विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थ ॥ १९॥

हे अग्ने यानि पूर्वस्मिन्मन्त्रे दिवस्परीत्यादिना त्रेधा स्वरूपाण्युक्तानि आदित्याग्निवडवानलरूपाणि तानि त्रयाणि त्रिसंख्याकानि ते तव सम्बन्धीनि रूपाणि वयं विद्म जानीमः (10.) द्व्यचोऽतस्तिङ इति [पा° ६.३.१३५.] संहितायां दीर्घः विदो लटो वेति [पा° ३.४.८३.] मसो मादेशः । यद्वा त्रेधा विभक्तानि त्रयाणि त्रीणि ते तव रूपाणि अग्निवायुसूर्याख्यानि वयं विद्म । किं च ते तव सम्बन्धीनि पुरुत्रा बहुषु प्रदेशेषु गार्हपत्याहवनीयान्वाहार्यपचनाग्नीध्रीयरूपेषु विभृता विहृतानि धाम धामानि स्थानानि अपि वयं विद्म विभृतेति विभक्तेराकारः धामेत्यत्र विभक्तिलोपः । किं च ते तव परममुत्कृष्टं गुहा सप्तमीलोपः गुहायां यद्व्यवस्थितं गोप्यं यविष्ठ इत्यादि मन्त्रप्रसिद्धं नाम यदस्ति तदपि विद्म । किं च यत उत्सात् अब्रूपात्स्थानात्त्वमाजगन्थ वैद्युतरूपेणागतोऽसि तमुत्समुत्स्यन्दनं जलरूपं स्थानं वयं विद्म । गमेर्लिट् ॥१९॥

स॒मु॒द्रे त्वा॑ नृ॒मणा॑ अ॒प्स्व॒न्तर्नृ॒चक्षा॑ ईधे दि॒वोऽअ॒ग्न॒ऽऊध॑न् ।

तृ॒तीये॑ त्वा॒ रज॑सि तस्थि॒वास॑म॒पामु॒पस्थे॑ महि॒षा अ॑वर्धन् ॥२०॥

हे अग्ने नृषु मनो यस्यासौ नृमणाः प्रजापतिः समुद्रे वडवानलरूपेण तस्थिवांसं वर्तमानं त्वा त्वामीधे दीपयांचकार इन्धिभवतिभ्यां चेति [पा° १.२.६.] कित्वान्नलोपः । नृचक्षाः नृषु पठत्सु (11.) पुरुषेषु चष्टे मन्त्रान्विस्पष्टं वक्तीति नृचक्षाः प्रजापतिः अप्सु वृष्टिरूपासु अन्तर्मध्ये विद्युद्रूपेण स्थितं त्वामीधे दीपितवान् । तथा दिवः द्युलोकस्य ऊधन् ऊधःस्थानीये तृतीये समुद्रवृष्ट्यपेक्षया तृतीयस्थाने रजसि रञ्जनात्मके तेजोमण्डले आदित्यात्मना तस्थिवांसं त्वां नृचक्षा एव ईधे । किं च महिषाः महान्तः प्राणा अपामुपस्थे उत्सङ्गे नाव्यानामपां मध्ये स्थितं त्वामवर्धन् अवर्धयन् छन्दस्युभयथेति [पा° ३.४.११७.] शप आर्धधातुकत्वाणिलोपः । प्राणा वै महिषा इति [६.७.४.५.] श्रुतिः ॥२०॥

अक्र॑न्ददु॒ग्नि स्त॒न° - ॥२१॥

व्याख्याता [६.] ॥२१॥

श्री॒णामु॑दा॒रो ध॒रुणो॑ र॒यी॒णां म॑नी॒षाणां॒ प्रार्प॑णः॒ सोम॑गोपाः ।

वसुः सूनुः सहसोऽअप्सु राजा विभात्यग्रेऽउषसामिधानः ॥ २२ ॥

एवंविधोऽग्निर्विभाति विशेषेण भासते कीदृशः श्रीणां गवाश्वादिसम्पदामुदारः अत्यर्थं दाता उदारो दातृमहतोरिति कोशः [मेदिनी° रान्तव° ११८.]। रयीणां धनानां धरुणो धारयिता मनीषाणां मनसा इषितानामभिलषितानां प्रार्पणः प्रकर्षेणार्पयिता। सोमगोपाः सोमं गोपायतीति यजमानकर्तृकसोमयागस्य रक्षिता। वसुः सर्वस्य निवासहेतुः वासयतीति वसुः यद्वा वसुः धनरूपः यथान्यानि शयनासनरथादिधनान्युपकुर्वन्ति तथायमपि तापपाकप्रकाशैर्जनानामुपकर्तातो वसुः। सहसः सूनुः बलस्य मन्थनवेगरूपस्य पुत्रः यतो मथ्यमानो जायतेऽत एवमुच्यते। अप्सु राजा जलेऽवस्थितो वरुणात्मना राजा यद्वा अप्सु वृष्टिरूपासु राजा विद्युद्रूपेण दीप्यमानः। उषसामग्रे प्रातःकाले इधानः आदित्यात्मना दीप्यमानः उषःकालेऽग्निहोत्रहोमायाग्नयः प्रादुष्क्रियन्ते तदभिप्रायेणोच्यते प्रातर्दीप्यमान इति ॥ २२ ॥

विश्वस्य केतुर्भुवनस्य गर्भ आ रोदसीऽअपृणाज्जायमानः।
वीडुं चिदद्रिमभिनत्परायञ्जना यदग्निमयजन्त पञ्च ॥ २३ ॥

सोऽग्निर्जायमानः उत्पद्यमानः सूर्यात्मना प्रकटीभवन् रोदसी द्यावापृथिव्यौ आ अपृणात् सर्वतस्तेजसा पूरयति। कीदृशः विश्वस्य केतुः प्राणिजातस्य विज्ञानभूतोऽग्न्यात्मना। भुवनस्य गर्भः भूतजातस्य गर्भवदन्तरवस्थितो वाय्वात्मना स हि प्राणभावेन भूतानामन्तः संचरति। किं च यः परायन् इन्दुरूपेण परा परतो गच्छन् वीडुं चित् वीडुशब्दो दृढार्थः चिदप्यर्थः दृढमपि अद्रिमदारयितव्यं मेघमभिनत् भिनत्ति विदारयति। यत् विभक्तिलोपः यमग्निं पञ्च जना अयजन्त यजन्ते विप्राद्याश्चत्वारो निषादश्चेति पञ्च यद्वा चत्वारो महऽर्त्विजो यजमानश्च ॥ २३ ॥

उशिक्पावकोऽअरतिः सुमेधा मर्त्येष्वग्निरमृतो निधायि।
इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन् ॥ २४ ॥

योऽग्निर्मर्त्येषु मरणधर्मेषु मनुष्येषु निधायि निहितः देवैरिति शेषः बहुलं

छन्दस्यमाङ्योगेऽपीत्यडभावः [पा° ६. ४. ७५.] । स अरुषमरोषं चक्षुराद्युपद्रवरहितमरोचनं वा धूममुदियर्ति उद्गमयति व्यवहिताश्चेति [पा° १. ४. ८२.] उपसर्गक्रिययोर्व्यवधानम् इतो वाऽअयमूर्ध्व७ रेतः सिञ्चति धूमः सामुत्रा वृष्टिर्भवतीति श्रुतेः । कीदृशोऽग्निः उशिक् उश्यते काम्यते लोकैरित्युशिक् कान्तः वशेरौणादिक इक्प्रत्ययः । पावकः पावयिता पुनातीति । अरतिः प्रलमतिः पर्याप्तमतिः यद्वा दुष्टेष्वरतिः प्रीतिरहितः । सुमेधाः शोभना सेवकाभिप्रायधारणसमर्था मेधा बुद्धिर्यस्य शोभनो मेधो यज्ञो यस्येति वा । अमृतोऽमरणधर्मा । भरिभ्रत् बिभ्रत् जगद्धारयन् दाधर्तीत्यादिना [पा° ७. ४. ६५.] निपातः । शुक्रेण शोचिषा निर्मलेन तेजसा प्रभारूपेण व्यामाकाशमिनक्षन् व्याप्नुवन् नक्षत्रयक्षतारासम्बन्धितेजसा द्युलोकं व्याप्नुवन्नित्यर्थः इतः प्रदानाद्धि देवा उपजीवन्तीति श्रुतेः ॥ २४॥

दृशानो रुक्म उ° ॥ २५॥

व्याख्याता [१.] ॥ २५॥

यस्तेऽअद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तमग्ने ।

प्र तं नय प्रतरं वस्योऽअच्छाभि सुम्नं देवभक्तं यविष्ठ ॥ २६॥

भद्रा कल्याणकारिणी शोचिर्दीप्तिर्यस्य तत्सम्बोधने हे भद्रशोचे हे देव अग्ने अद्य प्रतिपदि यः पुमान् ते तव अपूपं पुरोडाशं घृतवन्तं घृतयुक्तमुपस्तरणाभिघारणार्पितं कृणवत् कृणोति करोति कृञ् करणे स्वादिः इतश्च लोपः परस्मैपदेष्विति [पा° ३. ४. ९७.] तिप इकारलोपे लेटोऽडाटाविति [पा° ३. ४. ९४.] अडागमे नोर्गुणे कृणवदिति रूपम् स आज्यस्योपस्तीर्य द्विर्हविषोऽवदायाथोपरिष्टादाज्यस्याभिघारयतीत्येतच्छ्रुत्यभिप्रायम् [१. ७. २. १०.] । हे यविष्ठ युवतम यद्वा मिश्रयितृतम तं यजमानं प्रतरमतिशयेन प्रकृष्टं प्रतरम् अमु च छन्दसीति [पा° ५. ४. १२.] अव्ययात्परात् घादमुप्रत्ययः प्रकृष्टतरम् वस्यः स्थानमुत्तमलोकं प्र नय प्रापय । अच्छाभिमुख्येन सुम्नं सुखं चाभि नय सर्वतः प्रापय कीदृशं सुम्नम् देवभक्तं देवैः भक्तं सेवितं देवयोग्यं सुखं प्रापयेत्यर्थः । वसति यत्र तद्वस्तृ तृन्प्रत्ययः अतिशयेन वस्तृ वसीयः तुश्छन्दसीति [पा° ५. ३. ५९.] ईयसुन् तुरिष्ठेमेयः-

स्विति [पा° ६.४.१५४.] तृचो लोपः छान्दसे ईलोपे वस्य इति सिध्यति स लोकमागछत्यशोकमहिमं तस्मिन्वसति शाश्वतीः समा इति [बृहदारण्य° मा° ४.१५.] श्रुतेः। प्रकृत्यान्तःपादम्व्यपरऽइति [पा° ६.१.११५.] वस्योऽग्रहेत्यत्र संध्यभावः ॥२६॥

आ तं भंज सौश्रवसेष्वंग्नऽउक्थऽउंक्थऽआभंज शस्यमाने।
प्रियः सूर्यें प्रियोऽअग्ना भंवात्युज्जातेन भिनदुदुज्जनित्वैः ॥२७॥

शोभनं श्रवः कीर्तिः सुश्रवः सुश्रवसः सम्बन्धीनि कीर्तिहेतुभूतानि कर्माणि सौश्रवसानि तेषु यज्ञकर्मसु हे अग्ने त्वं तं यजमानमाभज सेवस्व निरन्तरं कर्मानुष्ठायिनं कुर्वित्यर्थः। उक्थे-उक्थे निष्केवल्यप्रगाथादिरूपे (12.) च शस्यमाने तत्तच्छस्त्रे सति तमाभज सर्वतः सेवस्व कर्मणि शस्त्रे च प्रेरयेत्यर्थः। एवं त्वया सेवितोऽयं यजमानः सूर्ये सूर्यस्य प्रियो भवाति भवतु लिङर्थे लेट् लेटोऽडाटौ [पा° ३.४.९४.]। अग्ना अग्नेश्च प्रियोऽस्तु डसो डादेशः। तथा जातेनोत्पन्नेन पुत्रेण उद्भिनदत् उद्भेदमुदयं वृद्धिमाप्नोतु इलोपेऽडागमे चोद्भिनददिति रूपम् तथा जनित्वैः जनिष्यमाणैश्च पौत्रादिभिरुद्भिनदतु जनिष्यन्ते ते जनित्वाः तैः भविष्यदर्थे औणादिक इत्वप्रत्ययः ॥२७॥

त्वामंग्ने यजमाना अनु द्यूविश्वा वसुं दधिरे वार्याणि।
त्वया सह द्रविंणमिच्छमाना व्रजं गोमंन्तमुशिजो विवव्रुः ॥२८॥

हे अग्ने यजमानास्त्वामनु वर्तमानाः त्वां सेवमानाः सन्तः द्यून् द्युशब्दो दिनवाची कालाध्वनोरिति [पा° २.३.५.] द्वितीया दिनेषु सर्वदा वार्याणि वरणीयानि प्रार्थ्यानि विश्वा विश्वानि सर्वाणि वसु वसूनि धनानि गोभूहिरण्यादीनि दधिरे धारयन्ति यथेष्टं धनं प्राप्नुवन्तीत्यर्थः। वसु अत्र सुब्लोपः। किं च त्वया सह स्थिताः त्वां भजन्तस्ते यजमाना द्रविणं यज्ञफलमिच्छमाना इच्छन्तः उशिजः मेधाविनो ज्ञानकर्मसमुच्चयकारिणः सन्तो गोमन्तं गावो रश्मयोऽत्र सन्तीति गोमान् तं रविमण्डलमध्यगं व्रजं व्रजन्त्यनेन सुकृतिन इति व्रजस्तं देवयानमार्गं

विवव्रुः बिभिदुः रविमण्डले मार्गं कृतवन्त इत्यर्थः तदुक्तम् ते य॰ एवमेतद्विदुरित्युपक्रम्य देवलोकादादित्यमिति ॥२८॥

अस्ताव्यग्निर्नराᳪ सुशेवो वैश्वानरऽऋषिभिः सोमगोपाः ।

अद्वेषे द्यावापृथिवी हुवेम देवा धत्त रयिमस्मे सुवीरम् ॥२९॥

ऋषिभिः यजमानऽर्त्विग्भिः अग्निरस्तावि स्तुतः कर्मणि चिण् । कीदृशोऽग्निः नरां नराणां सुशिवः शोभनं सुखयिता नुडागमाभावे गुणे च नरामिति रूपम् शोभनं शिवः सुखं यस्मात् । वैश्वानरः विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितः जठराग्निरूपेण । सोमं गोपायतीति सोमगोपाः सोमस्य रक्षिता । अद्वेषे पादौ लिङ्गोक्तदेवौ । यतोऽग्निः स्तुतः अतोऽद्वेषे द्वेषरहिते द्यावापृथिवी रोदसी वयं (13.) हुवेम आह्वयामः तदाश्रितकर्मार्थं । हे देवा अग्न्यादयः अस्मे अस्मासु सुवीरं शोभनपुत्रयुतं रयिं धनं यूयं धत्त स्थापयत ॥२९॥

III. समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन्हव्या जुहोतन ॥३०॥

अथ वनीवाहनम् ॥ का° [१६. ६. १५.] प्रागनः कृत्वोख्यस्योत्तरतः समिदाधानᳪ समिधाग्निमिति । उख्याग्निरुत्तरदिशि प्रागीषं शकटं संस्थाप्य यजमान उख्येऽग्नौ वनीवाहने समिधमाधत्तऽइति सूत्रार्थः ॥ विरूपाक्षदृष्टाग्नेयी गायत्री व्याख्याताप्युच्यते [३. १.] । हे ऋत्विग्यजमानाः समिधा कृत्वाग्निं दुवस्यत परिचरत अतिथिमिनमग्निं (14.) बोधयत । अस्मिन्नग्नौ हव्या हवींषि आजुहोतन साकल्येन जुहुत ॥३०॥

उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः ।

स नो भव शिवस्त्वᳪ सुप्रतीको विभावसुः ॥३१॥

का° [१६. ६. १६.] सासन्दीकमुद्यम्योदु त्वेति दक्षिणतोऽनसि करोति । समिदाधानानन्तरमुदु त्वेति मन्त्रेणासन्दीसहितमुख्याग्निमूर्ध्वं कृत्वा दक्षिणे स्थितो यजमानः शकटे तं स्थापयतीति सूत्रार्थः ॥ तापसदृष्टाग्नेय्यनुष्टुप् । हे अग्ने विश्वे सर्वे देवाः प्राणरूपाः चित्तिभिः उद्यमनप्रवीणाभिर्धीवृत्तिभिः त्वा त्वामुद्भरन्तु ऊर्ध्वं धा-

रयत्तु भृञः शप् उ पादपूरणः हे अग्ने स उद्धार्यमाणस्त्वं नोऽस्माकं शिवः कल्याणकृद्भव । किम्भूतः सुप्रतीकः शोभनं प्रतीकं मुखं यस्य । विभा दीप्तिरिव वसु धनं यस्य सः ॥३१॥

प्रेद॑ग्ने॒ ज्योति॑ष्मान्याहि शि॒वेभि॑र॒र्चिभि॒ष्ट्वम् ।

बृ॒हद्भि॑र्भा॒नुभि॒र्भास॒न्मा हि॑ꣳसीस्त॒न्वा॒ प्र॒जाः ॥३२॥

का॰ [१६. ६. १८.] अनड्वाहौ युक्त्वा प्रेदग्नऽइति प्राङ् यात्वा यथार्थम् । शकटे तूष्णीं वृषौ संयोज्य प्रेदिति मन्त्रेण प्राचीं गत्वा यथार्थं प्रयोजनवन्तं देशं गच्छेदित्यर्थः ॥ अग्निदेवत्यानुष्टुप् । हे अग्ने शिवेभिरर्चिभिः शान्ताभिर्ज्वालाभिर्ज्योतिष्मान्प्रकाशयुक्तस्त्वं प्रयाहि गच्छ इत्पादपूरणः । किं च बृहद्भिर्भानुभिः प्रौढैः रश्मिभिः भासन्भासयन् जगदवभासयन् तन्वा स्वकीयेन दाहकेन शरीरेण प्रजाः पुत्रादिका मा हिंसीः मा नाशय ॥३२॥

अक्र॑न्दद॒ग्नि स्त॒न॰ ॥३३॥

का॰ [१६. ६. २०.] अन्ते खर्जत्यक्रन्ददग्निरिति जपति । अन्ते शब्दं कुर्वति जपेत् ॥ व्याख्याता [६.] ॥३३॥

प्र-प्राय॑म॒ग्निर्भ॑र॒तस्य॑ शृण्वे॒ वि यत्सूर्यो॒ न रोच॑ते बृ॒हद्भाः ।

अ॒भि यः पू॒रुं पृत॑नासु त॒स्थौ दी॒दाय॒ दैव्यो॒ऽअति॑थिः शि॒वो नः ॥३४॥

का॰ [१६. ६. २१.] वासेऽवहरत्युद्धतावोक्षितऽउत्तरतः समिदाधानं प्र-प्रेति । वासे स्थितौ क्रियमाणे उत्तरदिशि उद्धतावोक्षिते प्रदेशेऽग्निमवहरत्युत्तारयति ततोऽग्नौ समिदाधानम् ॥ वसिष्ठदृष्टाग्नेयी त्रिष्टुप् । प्रसमुपोदः पादपूरणऽइति [पा॰ ८. १. ६.] प्रोपसर्गस्य द्वित्वम् अयमग्निः बिभर्ति हवींषि भरतस्तस्य भरतस्य यजमानस्य शृण्वे शृणुते आह्वानमिति शेषः यजमानकृतमाह्वानं शृणोतीत्यर्थः पुरुषव्यत्ययः । यत् योऽग्निः सूर्यो न सूर्य-इव भाः (15.) भासतऽइति भाः सूर्यवद्भासमानः सन् बृहद्यथा तथा रोचते अत्यन्तं दीप्यते । योऽग्निः पृतनासु संग्रामेषु पूरुं राक्षसमभितस्थौ संमुखं तिष्ठति । दैव्यो देवसम्बन्धी अतिथिः नोऽस्माकं

शिवः मङ्गलरूपः सोऽग्निर्दिदीय दीप्यते दीङ् क्षये धातूनामनेकार्थत्वादत्र दीप्त्यर्थः लिटि रूपम् तुजादीनां दीर्घोऽभ्यासस्येति [पा॰ ६.१.७.] अभ्यासदीर्घः छन्दसि लुङ्लङ्लिट इति [पा॰ ३.४.६.] वर्तमाने लिट् ॥३४॥

आपो॑ देवीः॒ प्रति॑गृभ्णीत॒ भस्मै॒तत्स्यो॒ने कृ॑णुध्व७ सुर॒भाऽउ॑ लो॒के ।

तस्मै॑ नमन्तां॒ जन॑यः सु॒पत्नी॑र्मा॒तेव॑ पु॒त्रं बि॑भृता॒प्स्वे॑नत् ॥३५॥

का॰ [१६.६.२६.] पलाशपुटेनापो देवीरित्येकया । वनीवाहनानन्तरं तडागादिजलस्थानं गत्वा वटादिपत्रपुटेन सायं प्रातरुखायाः सकाशादुद्धृतं यद्भस्मास्ति तदेकया ऋचा जले क्षिपेदिति सूत्रार्थः ॥ अब्देवत्या त्रिष्टुप् । हे आपो देवीः देव्यः दीप्यमानाः भस्म यूयं प्रतिगृभ्णीत स्वागतादिभिः प्रतिगृह्णीत । किं च स्योने सुखावहे सुरभौ पुष्पधूपादिभिः शोभनगन्धयुते लोके स्थाने एतद्भस्म कृणुध्वं कुरुध्वं कृञ् कृतौ स्वादिः उ पादपूरणः । किं च शोभनः पतिर्वरुणो यासां ताः सुपत्न्यः आपो वरुणस्य पत्नय आसन्निति श्रुत्यन्तरात् । जनयन्त्यग्निमुत्पादयन्ति वृक्षोत्पत्त्यादिद्वारेति जनयः सुपत्नीर्जनयो भवन्त्यस्तास्मै भस्मरूपायाग्नये नमन्तां प्रह्वा भवन्तु । किं च हे आपः एनत् भस्म अप्सु स्वात्मनि यूयं बिभृत धारयत माता पुत्रमिव यथा माता पुत्रं स्वात्मनि धारयति तद्वत्पालयत ॥३५॥

अ॒प्स्व॑ग्ने॒ सधि॒ष्टव॒ सौष॑धी॒रनु॑ रुध्यसे । गर्भे॒ सञ्जा॑यसे॒ पुनः॑ ॥३६॥

का॰ [१६.६.२७.] ततो द्वाभ्याम् । ततोऽनन्तरं पठिताभ्यां द्वाभ्याप्स्वग्ने गर्भोऽअसीत्येताभ्यामृग्भ्यां पत्रपुटेन द्वितीयवारमुख्याग्निभस्माप्सु प्रास्यति ॥ विरूपदृष्टाग्नेयी गायत्री । पूर्वमन्त्रेण भस्मातिथित्वेन संस्तुत्य द्वाभ्यामग्नेः सर्वव्यापकत्वं वदन्भस्माभ्यवहरणमपह्नुते । हे अग्ने अप्सु जलेषु तव सधिः स्थानं स त्वमोषधीः यवाद्या अनु रुध्यसे ओषधिपरिणाममनु विपरिणमसे सोऽचि लोपे चेत्पादपूरणमिति [पा॰ ६.१.१३४.] स इत्यस्य विसर्गलोपे संधिः यद्वा ओषधीः स्वीकरोषि जठराग्निरूपेण । किं च गर्भे अरण्योर्मध्ये स्थितः सन्पुनः-पुनर्जायसे ॥३६॥

गर्भो॒ऽअ॒स्योष॑धीनां॒ गर्भो॒ वन॒स्पती॑नाम् ।

गर्भो॒ विश्व॑स्य भू॒तस्या॑ग्ने॒ गर्भो॒ऽअ॒पाम॑सि ॥३७॥

तिस्रोऽनुष्टुभोऽग्निदेवत्याः । हे अग्ने त्वमोषधीनां गर्भोऽसि भेषजरूपैरोषधिविशेषैरुत्पद्यमानत्वात् हे अग्ने त्वं वनस्पतीनां तरूणां गर्भोऽसि अरणिभ्यो जायमानत्वात् विश्वस्य भूतस्य सर्वस्य प्राणिजातस्य गर्भोऽसि जठराग्निरूपेण विद्यमानत्वात् अपां गर्भोऽसि वाडववैद्युतादिरूपत्वात् ॥ ३७॥

प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने ।
सꣳसृज्य मातृभिष्ट्वं ज्योतिष्मान्पुनरासदः ॥ ३८॥

का॰ [१६. ६. २१.] अनामिकया प्रास्तादादत्ते प्रसद्येति । अप्सु क्षिप्ताद्भस्मनः सकाशादनामिकया भस्म गृह्णाति प्रसद्येति चतुर्ऋग्भिः ॥ हे अग्ने त्वं भस्मना कृत्वा योनिं कारणभूतां पृथिवीं योनिभूता अपश्च प्रसद्य प्राप्य मातृभिरद्भिः संसृज्यैकीभूय ज्योतिष्मान् तेजस्वी सम्पन्नः सन् पुनरासदः स्वस्थानमुखामासीद ॥ ३८॥

पुनरासद्य सदनमपश्च पृथिवीमग्ने ।
शेषे मातुर्यथोपस्थेऽन्तरस्याꣳ शिवतमः ॥ ३९॥

हे अग्ने अपश्च पृथिवीं च सदनमासद्य जलभूमिरूपं स्थानं प्राप्य पुनरपि अस्यामुखायामन्तर्मध्ये त्वं शेषे स्वपिषि मातुरुपस्थे उत्सङ्गे यथा शिशुः शेते किम्भूतस्त्वं शिवतमः कल्याणतमः ॥ ३९॥

पुनरूर्जा निव॰ ॥ ४०॥ सह रय्या निव॰ ॥ ४१॥

द्वे व्याख्याते [९.] ॥ ४०॥ [१०.] ॥ ४१॥

बोधा मेऽअस्य वचसो यविष्ठ मꣳहिष्ठस्य प्रभृतस्य स्वधावः ।
पीयति त्वोऽअनु त्वो गृणाति वन्दारुष्टे तन्वं वन्देऽअग्ने ॥ ४२॥

का॰ [१६. ६. ३०.] प्रास्योखायामुपतिष्ठते बोधा मऽइति (16.) । तडागादागत्यानामिकया गृहीतं भस्म तूष्णीमुखायां प्रास्य बोधा मऽइति (17.) ऋचेनोख्याग्निमुपतिष्ठते ॥ दीर्घतमोदृष्टाग्नेयी त्रिष्टुप् । स्वधान्नमस्यास्तीति स्वधावान् तत्सम्बोधने स्वधावः मतुवसो रुः (18.) सम्बुद्धौ छन्दसीति [पा॰ ८. ३. १.] रुत्वम् हे अन्नवन् हे यविष्ठ युवतम अग्ने मे मम वचसो बोध बुध्यस्व अभिप्रायमिति शे-

58

षः यद्वा कर्मणि षष्ठी मद्वचनं जानीहीत्यर्थः । किम्भूतस्य वचसः मंहिष्ठस्य भूयिष्ठस्य अतिशयेन बहु मंहिष्ठं तस्य । तथा प्रभृतस्य प्रहृतस्य श्रोत्रपथं प्रापितस्य आदरोक्तस्येत्यर्थः । किं च त्वशब्द एकशब्दार्थः सर्वादिः पीयतिराक्रोशतिकर्मा हे अग्ने त्वः एकः पुरुषः पीयति आक्रोशति निन्दति त्वः एकः त्वामनुगृणाति त्वां स्तौति कश्चित्स्तौति कश्चिन्निन्दतीति लोकस्वभावः । एवं सति हे अग्ने अहं तु ते तव तन्वं तनूं शरीरं वन्दे स्तौमि नमामि च वदि अभिवादनस्तुत्योः । कीदृशोऽहम् वन्दारुः वन्दनशीलः शृवन्द्योरारुरिति [पा॰ ३. २. १७३.] आरुप्रत्ययः शीलार्थः ॥ ४२ ॥

a. स बो॑धि सू॒रिर्म॒घवा॒ वसु॑पते॒ वसु॑दावन् । यु॒यो॒ध्य॒स्मद्द्वेषा॑ꣳसि ॥

b. वि॒श्वक॑र्मणे॒ स्वाहा॑ ॥ ४३ ॥

सोमाहुतिदृष्टाग्नेयी यजुरन्ता गायत्री । विश्वकर्मणे स्वाहेति यजुः । हे वसुपते धनपते हे वसुदावन् वसु ददातीति वसुदावा आतो मनिन्निति [पा॰ ३. २. ७४.] क्वनिप् तत्सम्बुद्धौ हे वसुदावन् धनस्य दातः स त्वं बोधि अस्मदभिप्रायं बुध्यस्व बुध्यतेः शपि लुप्ते हुझल्भ्यो हेर्धिरिति [पा॰ ६. ४. १०१.] धिः गुणाल्यलोपौ छान्दसौ । कीदृशस्त्वं सूरिः विद्वान् मघवा धनवान् मघं धनमस्यास्तीति । संतुष्टः सन्द्वेषांसि दौर्भाग्यानि अस्मद्युयोधि अस्मत्तः पृथक्कुरु । का॰ [१६. ७. १.] प्रायश्चित्तिं समिधोऽपहृत्याज्यं विश्वकर्मणऽइति जुहोति । स्रुवस्थानीयया समिधा घृतमादायोख्येऽग्नौ जुहोति तत्कर्मणः प्रायश्चित्तिरिति संज्ञेति सूत्रार्थः ॥ यजुः । जगत्सृष्टिस्थित्यादिकर्मकर्त्रे तुभ्यं स्वाहा सुहुतमस्तु ॥ ४३ ॥

पुन॑स्त्वादि॒त्या रु॒द्रा वस॑वः॒ समि॑न्धतां॒ पुन॑र्ब्र॒ह्माणो॑ वसुनीथ य॒ज्ञैः ।
घृ॒तेन॒ त्वं त॒न्वं॒ वर्धयस्व स॒त्याः स॑न्तु॒ यज॑मानस्य॒ कामा॑ः ॥ ४४ ॥

का॰ [१६. ७. २.] उत्थायादधाति समिधं पुनस्त्वेति । घृतहोमानन्तरमुत्थाय तामेव समिधमुख्येऽग्नावादधाति ॥ आग्नेयी त्रिष्टुप् आद्यपादश्चतुर्दशार्णस्तृतीयो दशकस्तेन त्र्यधिका । हे अग्ने आदित्याः रुद्राः वसवश्च त्वा त्वां पुनः समिन्धतामुपशान्तं दीपयन्तु । हे वसुनीथ वसु धनं तन्निमित्ता नीथा स्तुतिर्यस्य यद्वा वसूनि

नयतीति वसुनीयः तत्सम्बुद्धौ हे धननेतः ब्रह्माणः ब्राह्मणा (19.) ऋत्विग्यजमाना यज्ञैः कृत्वा त्वां पुनः समिन्धतां त्वं च तन्वं स्वशरीरं घृतेनास्मद्दत्तेन वर्धयस्व त्वयि वृद्धे सति यजमानस्य कामाः सत्याः सन्तु ॥४४॥

IV. अपे॑त॒ वीत॒ वि च॑ सर्प॒तातो॒ येऽत्र॒ स्थ पु॑रा॒णा ये च॒ नूत॑नाः ।
अदा॑द्य॒मोऽव॒सानं॑ पृथि॒व्या अक्र॑न्नि॒मं पि॒तरो॑ लो॒कम॑स्मै ॥४५॥

अथ गार्हपत्यचयनमुच्यते ॥ ॥ का° [१७. १. ३.] पलाशशाखया गार्हपत्यं व्युदूह्त्यपेत वीतेति पच्छः प्रतिदिशं पुरस्तात्प्रथमम् । अत्र भाविन्यावृत्त्या शालाद्वार्यो गार्हपत्यशब्देनोच्यते तदर्था चितिश्चितेः स्थानमपि गार्हपत्य एव । पलाशशाखया गार्हपत्यचितेः स्थानं व्युदूहति ऊहिरत्र प्रेरणे तत्र पतितं तृणादिकं स्थानाद्बहिः क्षिपतीत्यर्थः अपेत वीति ऋचः पच्छः पादैः प्रतिदिशमादौ प्राच्यामपेत वीति येऽत्र स्थेति दक्षिणे अदादिति पश्चादक्रन्नित्युत्तरे इति सूत्रार्थः ॥ लिङ्गोक्तबहुदेवत्या त्रिष्टुप् अर्धर्चेन तत्स्थानसर्पिण (20.) उच्यन्ते पादेन यमः पादेन पितरः । यमस्य सर्वभूम्यधिपतित्वात्तद्भृत्याः सर्वत्र चरन्ति तान्प्रत्युच्यते । हे यमभृत्याः ये पुराणाः चिरंतना ये च नूतनाः इदानींतना यूयमत्र स्थाने स्थ भवथ ते सर्वे यूयमतः स्थानादपेत अपगच्छत वीत विगच्छत अतिदूरं गच्छत विसर्पत च अतः स्थानादपेत्य संघातं विहाय विविधं गच्छत । कस्माद्वयमपसर्पामेत्यत आह अवस्यति स्थापयत्यस्मिन्निति अवसानं पृथिव्या अवसानं स्थानमिदं यमो देवोऽस्मै यजमानायादात् दत्तवान् । पितरश्चेमं लोकं स्थानमस्मै यजमानायाक्रन् कृतवन्तः करोतेः शपि लुप्ते लङि रूपम् यमेन पितृभिश्च एतच्चयनस्थानस्य यजमानाय दत्तत्वाद्यूयमपसर्पतेत्यर्थः ॥४५॥

a. सं॒ज्ञान॑मसि । b. का॒म॒धर॑णम् । c. मयि॑ ते का॒म॒धर॑णं भूयात् ।
d. अ॒ग्नेर्भस्मा॑स्य॒ग्नेः पुरी॑षमसि । e. चित॑ स्थ परि॒चित॑ ऊर्ध्व॒चितः॑ श्रयध्वम् ॥४६॥

का° [१७. १. ४.] उदीचीं शाखामुदस्योषान्निवपति संज्ञानमिति । यया व्युदू-

हनं कृतं तां शाखामुदक् क्षिप्त्वा गार्हपत्यचितिस्थाने क्षारमृदो निदधाति ॥ ऊषदेवत्यं यजुः हे ऊषस्वरूप त्वं संज्ञानमसि पशूनां सम्यक् ज्ञानसाधनमसि पशवो हि ऊषदेशं ग्रात्वा लिहन्ति । तथा कामधरणम् कामान्मनोरथान्धरति सम्पादयतीति कामधरणं यज्ञद्वारा कामसम्पादकत्वात् । अतस्ते तव कामधरणं कामसम्पादनसामर्थ्यं मयि भूयात् अस्तु । यद्वा श्रुत्यनुसारेण व्याख्यानं ते तव कामधरणं पशवः मयि भूयात् भूयासुः यतस्त्वं कामधरणं पशुरूपं संज्ञानं सम्यक् ज्ञापकमसि उल्वसम्भवात् पशवो वाऽऊषाः पशवः कामधरणं मयि ते पशवो (21.) भूयासुरिति [७.१.१.८.] श्रुतिः उल्वाभिप्रायमेकवचनमुल्वस्योषोत्पन्नत्वात् ॥ का° [१७.१.६.] सिकताश्चाग्नेर्भस्मेत्यूषवत् । ऊषवत्सिकता निवपति ॥ सिकतादेवत्यं यजुः हे सिकतास्वरूप त्वमग्नेर्भस्म भासकमसि सिकतास्थोऽग्निरत्युग्रो भवति । अग्नेश्च पुरीषं पूरणमसि पूरयतीति पुरीषं पिपर्तेरीषक्प्रत्यये औणादिके उदोष्ठ्यपूर्वस्येति [पा° ७.१.१०२.] उदादेशः । भस्माभिप्रायमेकवचनम् । न वाऽअग्निः स्वं भस्मातिदहति । अग्नेरेतद्वैश्वानरस्य रेतो यत्सिकता इति च [७.१.१.९:१०.] श्रुतिः ॥ का° [१७.१.७.] परिश्रिद्भिः परिश्रयति पूर्ववदेकविंशत्या चित स्थेति । एकविंशतिपरिश्रिद्भिर्गार्हपत्यस्थानं वेष्टयति पूर्ववदिति प्रदक्षिणमूर्धास्ताः खननीया इति ॥ परिश्रिद्देवत्यं यजुः हे परिश्रितः शर्करा यूयं चितः स्थ चीयन्ते भूमौ प्रक्षिप्यन्ते इति चितः भूमौ क्षिप्ता भवथ परिचितः स्थ परितः सर्वतः स्थापिता भवथ ऊर्ध्वं चीयन्तऽइति ऊर्ध्वचितः ऊर्ध्वं स्थापिताः सत्यो यूयं श्रयधमिदं गार्हपत्यायतनं सेवधम् ॥४६॥

अयꣳ सोऽअग्निर्यस्मिन्त्सोममिन्द्रः सुतं दधे जठरे वावशानः ।
सहस्रियं वाजमत्यं न सप्तिꣳ ससवान्त्सन्त्स्तूयसे जातवेदः ॥४७॥

का° [१७.१.८.] मध्येऽर्धबृहतीश्चतस्रो दक्षिणोत्तराः प्राचीरुपदधाति दक्षिणात उदङ्ङयꣳ सोऽअग्निरिति प्रत्यृचम् । ततोऽध्वर्युर्मण्डलाद्दक्षिणे उदङ्मुख उपविश्य मध्ये चतस्रोऽर्धबृहतीसंज्ञा इष्टकाः प्राचीः प्राग्लक्षणा दक्षिणोत्तरपङ्क्त्योत्तरमारभ्योपदधाति अभ्यात्मं चयनमित्युक्तेः । ऋक्चतुष्केणैकैकाम् । हस्तदीर्घास्तदर्धाया-

माः पञ्चा लोकद्वयव्यापिन्य इष्टका अर्धबृहत्य उच्यन्तऽइति सूत्रार्थः ॥ पञ्च ऋचो विश्वामित्रदृष्टा आग्नेय्यस्त्रिष्टुभश्चतुर्थ्यनुष्टुप् । इष्टकोपधानं कुर्वन्नभिनयेन दर्शयति अयं गार्हपत्यः सः अग्निरिष्टकाभिश्चीयतऽइति शेषः । यस्मिन्नग्नौ चिते सति इन्द्रः सुतमभिषुतं सोमं जठरे स्वोदरे दधे धारयति वर्तमाने लिट् । किम्भूत इन्द्रः वावशानः वष्टीति वावशानः बहुलं छन्दसीति [पा° २.४.७६.] शपः श्लौ सति द्वित्वेऽभ्यासदीर्घे शानचि रूपम् कामयमानः । कीदृशं सोमं सहस्रियं सहस्रार्हम् । वाजमन्नं बहूनां तृप्तिकरमित्यर्थः । अत्यं न नकारः सम्प्रत्यर्थः (22.) भक्षणादेव मदकरम् । सप्तिं सरणं तृप्तिकरम् । अग्नौ चिते न केवलमिन्द्र एव सोमं जठरे धत्ते किं तु हे जातवेदः जातं वेदो धनं यस्मात् हे अग्ने त्वमपि ससवान् हवींषि सम्भजमानः सन् ऋत्विग्यजमानैः स्तूयसे षण सम्भक्तौ क्वसुप्रत्ययः । उत्तरार्धस्यायं वार्थः हे जातवेदः सप्तिं सरणं गमनकुशलमत्यं न अश्वमिव सहस्रियं सहस्रसंख्याकेन धनेन संमितं वाजमन्नं ससवान् दत्तवान् सन् यजमानैस्त्वं स्तूयसे सहस्रेण संमितौ घ इति [पा° ४.४.१३५.] घप्रत्ययः षणु दाने क्वसुः ससवान् ॥४७॥

अग्ने॒ यत्ते॑ दि॒वि वर्चः॑ पृथि॒व्यां यदोष॑धीष्व॒प्स्वा य॑जत्र ।
येना॒न्तरि॑क्षमु॒र्वा॑त॒तन्थ॑ त्वे॒षः स भा॒नुर॑र्ण॒वो नृ॒चक्षाः॑ ॥४८॥

हे आयजत्र (23.) मर्यादया यजनीय हे अग्ने ते तव यत् दिवि द्युलोके वर्चो दीप्तिरर्करूपं वर्तते यच्च पृथिव्यामग्निरूपं यच्च ओषधीषन्तः स्थितं यच्चाप्सु जलेषु अन्तः स्थितं यच्च वर्चसा उरु विस्तीर्णमन्तरिक्षमाततन्थ आतनोषि विस्तारयसि बभूयाततन्थेति [पा° ७.२.६४.] इडभावः । स भानुः दीप्तिः त्वेषः त्वेषयति प्रकाशयति सकलं विश्वमिति त्वेषः त्विष दीप्तौ पचादित्वादच् अर्णवः अर्णांसि उदकानि सन्ति यत्रेत्यर्थः अर्णसो वः सलोपश्च यद्वा अरणवान्गमनवान्प्रसरणशीलः । नृचक्षाः नॄन् चष्टऽइति नृणां शुभाशुभकर्मद्रष्टा । ईदृशो यस्ते भानुस्तमेवेष्टकारूपमुपदधामीति शेषः । अनेन त्रिस्थानोऽग्निः स्तुतः ॥ ४८ ॥

अग्ने॑ दि॒वोऽअर्ण॒मच्छा॑ जिगा॒स्यच्छा॑ दे॒वाँ२॥ऽऊचिषे॒ धिष्ण्या॒ ये ।
या रो॑च॒ने प॒रस्ता॒त्सूर्य॑स्य॒ याश्चा॒वस्ता॑दुप॒तिष्ठ॑न्त॒ऽआपः॑ ॥४९॥

AAA*

हे अग्ने दिवो द्युलोकस्य सम्बन्धि अर्णमुदकं त्वमछजिगासि आभिमुख्येन गछसि गा स्तुतिगत्योर्ह्वादिः अभ्यासेत्वं छान्दसम् अछाभेराप्तुमिति शाकपूणिः [निरु° ५.३१.] निपातस्य चेति [पा° ६.३.१३६.] अछेत्यस्य संहितायां दीर्घः आपो वा ऽअस्य दिवोऽर्णास्ता एष धूमेनाछेतीति [७.१.१.२४.] श्रुतिः । किं च ये देवा धिष्ण्या ऊचिषे ऊचिरे उच्यन्ते धियो बुद्धीरिन्द्रियाणि इष्णन्ति प्रेरयन्ति धिष्ण्याः प्राणरूपा देवास्तान्देवांश्च त्वमछजिगासि अभिगछसि । ऊचिषे ब्रूञः कर्मणि लिट् पुरुषवचनयोर्व्यत्ययः । प्राणा वै देवा धिष्ण्यास्ते हि सर्वा धिय इष्णन्तीति [७.१.१.२४.] श्रुतिः । किं च रोचने दीप्तिरूपे मण्डले वर्तमानस्य सूर्यस्य परस्ता-दुपरिष्टाद्या आप उपतिष्ठन्ते अवस्तादर्वेरधस्ताच्च या आप उपतिष्ठन्ते ता अपश्च (24.) त्वमभिजिगासीत्यन्वयः त्वमेवैते रूपैः परिणमसीति भावः ॥४९॥

पुरीष्यासोऽअग्नयः प्रावणेभिः सजोषसः ।
जुषन्तां यज्ञमद्रुहोऽनमीवा इषो महीः ॥५०॥

अनुष्टुप् । बहुवचनमिष्टकापेक्षम् अग्नयः एते इष्टकारूपा यज्ञमस्मदीयमिमं यागं जुषन्तां सेवन्ताम् अनमीवा नास्ति अमीवा व्याधिरशनायाबुभुक्षारूपो याभिस्ता अनमीवा क्षुधातृष्णानिवर्तिकाः महीः महतीः बहुला इषः अन्नभक्षीश्चाग्नयो जुषन्ताम् । कीदृशा अग्नयः पुरीष्यासः पुरीषेभ्यः पशुभ्यो हिताः पुरीष्याः आज्जसेरसुक् । तथा प्रवणेभिः प्रवणैः प्रकर्षेण वनन्ति सम्भजन्ति विषयानिति प्रवणानि मनांसि तैः सजोषसः समानप्रीतयः मनसा प्रीतियुक्ता इत्यर्थः अन्येषामपि दृश्यतऽइति [पा° ६.३.१३७.] संहितायां प्रावणेति दीर्घः बहुलं छन्दसीत्येवम् (25.) । तथा अद्रुहः न द्रुह्यन्तीत्यद्रुहः अहिंसितारः परस्परं प्रीतियुताः ॥५०॥

इडामग्ने पुरुदꣳसꣳ सनिं गोः शश्वत्तमꣳ हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥५१॥

का° [१७.१.११.] इडामग्नऽइति पश्चिमे प्रतिमल्लमुत्तरतः । इडामग्नऽइति ऋग्द्वयेन प्रतिमल्लं पश्चिमे द्वे पादमात्र्यौ पश्चे तिरश्च्यौ उदग्लक्षणे उपदध्यात् उत्तरतोऽवस्थितो दक्षिणामुखः इडामिति दक्षिणाम् अयं तऽइत्युत्तरामिति सूत्रार्थः ॥

द्वे आग्नेय्यौ त्रिष्टुबनुष्टुभौ । हे अग्ने ह्ववमानाय यजमानाय इडामन्नं साध साधय सम्पादय छन्दस्युभयथेति [पा॰ ३.४.११७.] शप आर्धधातुकत्वाट्टिलोपः ह्वयति आ-ह्वयति देवान्जुहोति वा ह्ववमानः तस्मै । यत्तु श्रुत्योक्तं पशवो वाऽइडेति [७.१.१.२७.] तद्बलीवर्दैरन्नस्योत्पाद्यमानत्वात् किम्भूतामिडां पुरुदंसं दंस इति कर्म-नामसु [निघ॰ २.१.] पठितं पुरूणि बहूनि दंसांसि कर्माणि यया सा पुरुदंसाः तां पुरुदंससमिति प्राप्ते टिलोपश्छान्दसः । बहुकर्मसाधनभूतमन्नं देहीत्यर्थः । तथा शश्वत्तममत्यन्तमविच्छेदेन वर्तमानमनपायिनं गोः सनिं धेनुसम्बन्धि दानं पयोद-धिघृतादिकं सर्वदा देहीत्यर्थः । किं च नोऽस्माकं यजमानानां सूनुः पुत्रः स्याद-स्तु । कीदृशः सूनुः तनयः औरसः पुत्रस्य सूनुशब्देनोक्तत्वाद्दत्तपुत्रादिव्यावृत्त्यै तनयशब्दः यद्वा तनोत्यग्निहोत्रादिकर्माणीति तनयः । तथा विजावा विविधं जा-यते पुत्रादिद्वारेति विजावा प्रजावान् विड्वनोरनुनासिकस्यादिति [पा॰ ६.४.४१.] धातोराकारः । हे अग्ने ते तव सान्नगोपुत्रदानविषया सुमतिः शोभना बुद्धिरनु-ग्रहेणास्मे अस्मासु भूतु भवतु यजमानेभ्यस्त्वयान्नादि देयमिति भावः व्यत्ययेन श-पो लुक् अस्मे विभक्तेः शेआदेशे त्यदाद्यत्वम् ॥५१॥

अ॒यं ते॒ योनि॑र्ऋ॒त्वियो॒ यतो॑ जा॒तोऽअरो॑चथाः ।
तं जा॒नन्न॑ग्न॒ऽआरो॒हाथा॑ नो वर्धया र॒यिम् ॥५२॥

व्याख्याता [३.१४.] ॥५२॥

a. चिद॑सि॒ तया॑ दे॒वत॑याङ्गिर॒स्वद्ध्रु॒वा सी॑द ।
b. प॒रि॒चिद॑सि॒ तया॑ दे॒वत॑याङ्गिर॒स्वद्ध्रु॒वा सी॑द ॥५३॥

का॰ [१७.१.१२.] चिदसीति पूर्वे दक्षिणतः प्रतिमन्त्रम् । तदुत्तरतोऽपरमार्गेण दक्षिणां गत्वा चिदसीति प्रतिमन्त्रं पूर्वे तिरश्च्यौ उदग्लक्षणे दक्षिणे स्थित उद-ङ्मुख उपदधाति चिदसीत्युत्तरां परिचिदसीति दक्षिणाम् ॥ इष्टकादैवत्ये द्वे यजु-षी । चीयतऽइति चित् । हे इष्टके त्वं चिता स्थापितासि यद्वा चिनोति भोगा-न्सम्पादयतीति चित् त्वं भोगसम्पादिकासि । तया प्रसिद्धया देवतया वाग्रूपया सादिता सती अङ्गिरस्वत्प्राणवत् प्राणा यथा सर्वाङ्गेषु स्थितास्तथा ध्रुवा स्थिरा

सती त्वं सीद निविशस्व तया देवतयेति वाग्वै सा देवताङ्गिरस्वदिति प्राणो वाऽअङ्गिरा इति श्रुतेः ॥ द्वितीयामुपदधाति । परिचित् परितः सर्वतः चीयते परितो भोगांश्चिनोतीति वा त्वं परिचिदसि । तया देवतयेति व्याख्यातम् ॥५३॥

लोकं पृण छिद्रं पृणाथो सीद ध्रुवा त्वम् ।
इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन् ॥५४॥

का° [१७.१.१७] तिसृषु लोकम्पृणासु मन्त्रो दशसु च द्वयोर्वा दशस्वेकस्यां च । आदौ तिसृषु लोकम्पृणेष्टकासु तूष्णीमुपहितासु लोकं पृणेत्यभिमन्त्रणम् ततो दशसु मन्त्रः यद्वादौ द्वयोर्लोकम्पृणयोर्मन्त्रस्ततो दशसु तत एकस्याम् एवमेकविंशतीष्टका गार्हपत्ये स्युरिति सूत्रार्थः ॥ लोकम्पृणादेवत्यानुष्टुप् । हे लोकम्पृणेष्टके त्वं लोकं पृण गार्हपत्यचयनदेशे पूर्वेष्टकाभिरनाक्रान्तं स्थानं पूरय । तथा छिद्रं पृण किंचिदपि छिद्रं यथा न दृश्यते तथा संश्लिष्टा भवेत्यर्थः पृण तृप्तौ तुदादिः । अथो अपि च ध्रुवा दृढा सती त्वं सीद-तिष्ठ । किं च इन्द्राग्नी बृहस्पतिश्चैते देवा अस्मिन्योनौ स्थाने त्वा त्वामसीषदन् सादितवन्तः संदेशद्वन् न हि मानुषोऽध्वर्युस्त्वां सादयितुं शक्य इति भावः ॥५४॥

ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः ।
जन्मन्देवानां विशस्त्रिष्वा रोचने दिवः ॥५५॥

का° [१६.७.१४] नित्ये सादनसूददोहसाऽउपधानादुत्तरे तया देवतया ता अस्येति । तया देवतयेति सादनम् ता अस्येति सूददोहसाधिवदनम् एते नित्ये सर्वत्रेति सूत्रार्थः ॥ इन्द्रपुत्रप्रियमेधदृष्टाब्देवत्यानुष्टुप् । दिवो द्युलोकसम्बन्धिनो दिवश्च्युता वा सूददोहसः सूदाश्च दोहसश्च ते सूददोहसः सूदेन जलेन सहिता दोहसोऽन्नानि अन्नयुक्ता आपः ताः प्रसिद्धा अस्य विशो यज्ञस्य सम्बन्धिनं सोममाश्रीणन्ति सम्यग्मिश्रयन्ति पक्वं कुर्वन्ति वा श्री पाके क्र्यादिः आपो वै सूदोऽन्नं दोहः [८.७.३.२१.] यज्ञो वै विश इति च [८.७.३.२१.] श्रुतिः । कीदृशाः सूददोहसः पृश्नयः नानाविधाः यद्वा अन्नं वै पृश्नीति [८.७.३.२१.] श्रुतेरन्नरूपाः अत्रागत्य व्रीह्यादिधान्यनिष्पादका इत्यर्थः । कदा श्रीणन्ति देवानां जन्मन्

जन्मनि संवत्सरे संवत्सरो वै देवानां जन्मेति [८.७.३.२१.] श्रुतेः । संवत्सरे-संवत्सरे सोमयागस्तदभिप्रायमेतत् । सवनानि वै त्रीणि रोचनानीति [८.७.३.२१.] श्रुतिः (26.) । यज्ञपरिणामभूता अन्नोत्पादिका आपो दिवः सकाशादस्मिन् लोके पतितौषधिवनस्पत्यन्नभूताः सत्यः सोमस्योपस्कुर्वन्तीति भावः ॥५५॥

इन्द्रं॒ विश्वा॑ अवीवृधन्त्समु॒द्रव्य॑चसं॒ गिर॑ः ।
र॒थीत॑मꣳ र॒थीनां॒ वाजा॑नाꣳ॒ सत्प॑तिं॒ पति॑म् ॥५६॥

का° [१७.१.१८.] चावालदेशात्पुरीषं निवपतीन्द्रं विश्वा इति । चावालस्थानान्मृदमानीय गार्हपत्यचितेरुपरि क्षिपति ॥ इन्द्रदेवत्या मधुच्छन्दःसुतजेतृदृष्टानुष्टुप् । विश्वाः सर्वा गिरः स्तुतयः ऋग्यजुःसामरूपा इन्द्रमवीवृधन् वर्धयन्ति । कीदृशमिन्द्रं समुद्रव्यचसं समुद्रवद्व्यचो व्याप्तिर्यस्य तं समुद्रवद्व्यापकं विविधाञ्चनं नानागतिमित्यर्थः अञ्चोऽभ्यगतिं वा । रथीनां रथयुक्तानां सर्वेषां मध्ये रथीतममत्यन्तं रथयुतं रथयुद्धे लब्धातिशयमित्यर्थः ईद्रथिन इति [पा° ८.२.१७. वा° १.] घे परे रथिन ईदादेशः । तथा वाजानामन्नानां पतिं स्वामिनं सत्पतिं सधर्मवर्तिनां च प्रतिपालकम् ॥५६॥

समि॑तꣳ॒ संक॑ल्पेथा॒ꣳ सम्प्रि॑यौ॒ रोचि॒ष्णू सु॑मन॒स्यमा॑नौ ।
इष॒मूर्ज॑म॒भि सं॒वसा॑नौ ॥५७॥

का° [१७.१.१९.] समंविलां कृत्वोख्यं निवपति समितमिति । समं विलं यस्याः सा समंविला विभक्त्यलुक् छान्दसः गार्हपत्यचितिं मृत्पूरणेन परिश्रित्समां कृत्वा तन्मध्ये नीचैरुख्याग्निं स्थापयति चतुर्मन्त्रैः ॥ चतस्रो ह्यग्निदेवत्याः । समितम् उष्णिगेकाधिका अनियताक्षरपादत्वेऽप्यष्टाविंशत्यक्षरत्वात् । हे चित्योख्याग्नी युवां समितं संगच्छतम् इण् गतौ संगतौ भवतम् संकल्पेथां च एकसंकल्पौ भवतम् यद्वा संकल्पनं यज्ञनिष्पादनं कुरुतम् । कीदृशौ युवाम् सम्प्रियौ सम्प्रीणीतस्तौ इगुपधेति [पा° ३.१.१३५.] कः सम्यक् परस्परं प्रीतियुक्तौ । रोचिष्णू दीप्यमानौ अलंकृञित्यादिना [पा° ३.२.१३६.] इष्णुच् । सुमनस्यमानौ शोभनं मनः कुरुतस्तौ सुमनस्येते सुमनस्येते तौ सुमनस्यमानौ सुब्धातु क्यङन्ताच्छानच् परस्परं शोभनं

चित्तवन्तौ । इषमन्नमूर्जमुपसेचनं घृतादि चाभिसंवसानौ अभ्यवहरन्तौ भुञ्जानौ अभितः सम्यक् सम्पादयन्तौ वा वस्तेरर्थान्तरे वृत्तिः ॥५७॥

सं वां मनांꣳसि सं व्रता समु चित्तान्याकरम् ।
अग्ने पुरीष्याधिपा भव त्वं न इषमूर्जं यजमानाय धेहि ॥५८॥

उपरिष्टाद्बृहती अष्टसप्तनवत्रयोदशाक्षरपादत्वादेकाधिका । हे पूर्वोक्तावग्नी वां युवयोर्मनांसि बहुवचनत्वान्मनोबुद्ध्यहंकारानहं समाकरं सर्वतः संगतान्करोमि करोतेर्लङुत्तमबहुवचने शपि अकरमिति रूपम् । तथा व्रता व्रतानि कर्माणि समाकरम् व्रतमिति [निघ° २.१.] कर्मनाम । तथा चित्तानि च मनोगतसंस्कारान्समाकरम् उकारः समुच्चयार्थः । एवं मनःकर्मसंस्कारैरेकीकृतैरेकीभूतमग्निं प्रार्थये हे पुरीष्य पशव्य हे अग्ने त्वं नोऽस्माकम् अधिपातीति अधिपाः पालको भव इषमन्नमूर्जं तदुपसेचनं दध्यादि च यजमानाय धेहि देहि ॥५८॥

अग्ने त्वं पुरीष्यो रयिमान्पुष्टिमाँ२॥ऽअसि ।
शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहासदः ॥५९॥

उख्याग्निदेवत्योष्णिक् आर्ष्येकाधिका अनियताक्षरपादत्वात् हे अग्ने त्वं पुरीष्यः पशव्योऽसि रयिमान्धनवान् पुष्टिमान्पोषयुक्तश्चासि अतः सर्वाः दिशः शिवाः शान्ताः कृत्वा इहास्मिंश्चयने स्वं योनिं स्वकीयं स्थानमासदः प्राप्नुहि ॥५९॥

भवतं नः समनसौ सचेतसावरेपसौ ।
मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः ॥६०॥

आर्षी पङ्क्तिः अनियताक्षरपादत्वात् अग्निदेवत्या । पुनर्व्याख्यायते [५.३.] । हे जातवेदसौ अग्नी यज्ञमस्मदीयं कर्म युवां मा हिंसिष्टं मा विनाशयतम् यज्ञपतिं यजमानं च मा हिंसिष्टम् अद्यास्मिन्कर्मदिने नोऽस्मभ्यं शिवौ शान्तौ युवां भवतम् । किं च युवां नोऽस्मदर्थं समनसौ सचेतसौ अरेपसौ च भवतम् । मनसा सहितौ । समानचित्तौ । अन्यविषयं मनो हित्वास्मदनुग्रहाभिमुखत्वं समनस्त्वम् अस्मदनुग्रहेऽन्योन्यविप्रतिपत्तिराहित्यं सचेतस्त्वम् । अरेपसौ निष्पापौ अस्माकं

प्रामादिकापराधसत्त्वे कोपाभावो निष्पापत्वम् ईदृशावस्मभ्यं भवतमित्यर्थः ॥ ६० ॥

मातेव पुत्रं पृथिवी पुरीष्यमग्निꣳ स्वे योनावभारुखा ।
तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चतु ॥ ६१ ॥

का° [१७.१.२१.] सिकताभिः समंविलां कृत्वा मातेव पुत्रमिति शिक्याद्विमुच्याग्निवन्निधायासिञ्चति पयोमध्ये तूष्णीम् । शून्यामुखां सिकताभिः सम्पूर्य मातेवेति मन्त्रेण शिक्यात्पृथक्कृत्वाग्निवदिति स्थापिताग्निरुत्तरेऽरत्निमात्रे गार्हपत्यचितेरुपर्येवोखां निधाय तन्मध्ये तूष्णीं दुग्धं सिञ्चेदिति सूत्रार्थः ॥ उखादेवत्या त्रिष्टुप् तृतीयो नवकः चतुर्थो द्वादशकः । पृथिवी भूरूपा मृन्मयी या उखा पुरीष्यं पशव्यमग्निं स्वे योनौ स्वकीयगर्भस्थाने अभाः अभार्षीत् धृतवती भृञो लुङि बहुलं छन्दसीति [पा° ७.३.९७.] ईडागमाभावे सिचो विसर्गे तिपि लुप्ते रूपम् । माता पुत्रमिव यथा माता पुत्रमुत्सङ्गे बिभर्ति । प्रजापतिः कृतकृत्यां तामुखां विमुञ्चतु शिक्यपाशाद्विमुक्तां करोतु । कीदृशः प्रजापतिः विश्वैर्देवैर्ऋतुभिश्च संविदानः संवित्तऽइति ऐकमत्यं गतः अहो महत्कर्मोखया कृतमिति संवादं कुर्वन् । विश्वकर्मा विश्वं सृष्टिरूपं कर्म यस्यासौ विश्वकर्मा ॥ ६१ ॥

V. असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य ।
अन्यमस्मदिच्छ सा तऽइत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥ ६२ ॥

का° [१७.१.२३.२.१.] नैर्ऋतीः कृष्णास्तुषपक्वास्तिस्रोऽलक्षणाः पादमात्रीर्हविष्यशनहोमवद्देशे दक्षिणोत्तराः कृत्वा दक्षिणामुखोऽनुपस्पृशन्नसुन्वन्तमिति प्रत्यृचं पराचीः । ततोऽध्वर्युः राजसूये हविष्यशनहोमे यादृशो देशस्तादृशे स्वयंप्रदीर्णे इरिणे वा असुन्वन्तमिति प्रत्यृचं तिस्रो नैर्ऋतीसंज्ञा इष्टका दक्षिणोत्तराः कृत्वा ततस्ता अस्पृशन्नुपदधाति । कीदृशीः पाकेन कृष्णवर्णाः तुषैरेव पक्वाः लक्षणहीनाः पद्याः पराचीः अनात्ममुखीः । स्वयं दक्षिणामुखः पूर्वमुत्तरां निधाय ततो दक्षिणे द्वेऽइति सूत्रार्थः ॥ तिस्रो निर्ऋतिदेवत्यास्त्रिष्टुभः । हे निर्ऋते असुन्वन्तं सोमयागमकुर्वाणम् अयजमानमन्यैर्हविर्यज्ञैर्यजनमकुर्वाणं च त्वमिच्छ प्रतिगच्छ तं गृहाणेत्यर्थः । किं च स्तेनो गुप्तचोरः तस्करः प्रकटचोरः तयोरित्यां ग-

तिमन्विहि अनुगछ पृष्ठतो गत्वा तावपि गृहाणेत्यर्थः । सर्वथा सोमं सुन्वद्भ्यो हविर्यद्भिश्च यजद्भ्योऽस्मदन्यमिछ न त्वस्मानिछ । सा दुष्टशिक्षा (27.) ते तवेत्या गतिश्चर्या हे देवि निर्ऋते एवम्भूतायै तुभ्यं नमोऽस्तु ॥ ६२॥

नमः सु ते निर्ऋते तिग्मतेजोऽयस्मयं विचृता बन्धमेतम् ।

यमेन त्वं यम्या संविदानोत्तमे नाकेऽअधिरोहयैनम् ॥ ६३॥

निर्ऋतिः कृच्छ्रापत्तिः स्यादलक्ष्मीस्तु निर्ऋतिरित्यभिधानात् [अमर° १. २. १३.] भूमिर्वा निर्ऋतिर्दिगभिमानिनी देवता वा अलक्ष्म्यां दिक्पतौ चापि निर्ऋतिर्निरुपद्रवे इति [हेम° नाना° ३. २७२.] कोशात् । तिग्मं तीक्ष्णं दुःसहं तेजो यस्याः सा तिग्मतेजाः तस्याः सम्बोधने हे तिग्मतेजः हे निर्ऋते ते तुभ्यं सु सुतरां नमोऽस्तु । अयस्मयमयोमयम् अयस्मयादीनि छन्दसीति [पा° १. ४. २०.] सत्वम् लोहपाशवद्दृढमेतं बन्धं जीवत्वेन जन्ममृतिरूपमज्ञानं त्वं विचृत विछिन्धि नाशय चृती ग्रन्थे तुदादिः द्व्यचोऽतस्तिङ इति [पा° ६. ३. १३५.] संहितायां दीर्घः । किं च यमेन अग्निना यम्या पृथिव्या च संविदाना ऐकमत्यं गता सती उत्तमे उत्कृष्टे नाके सर्वसुखोपेते दुःखमात्रहीने स्वर्गे एनं यजमानमधिरोहय स्थापय ॥ ६३॥

यस्यास्ते घोरऽआसञ्जुहोम्येषां बन्धानामवसर्जनाय ।

यां त्वा जनो भूमिरिति प्रमन्दते निर्ऋतिं त्वाहं परिवेद विश्वतः ॥ ६४॥

हे घोरे विषमशीले क्रूररूपे निर्ऋतिदेवि यस्याः ते तव आसन् आस्ये मुखे अहं जुहोमि आहुतिवदिष्टकामुपदधामि । किमर्थम् एषां बन्धानां यजमानस्य स्वर्गाप्तिप्रतिबन्धकानां पापानामवसर्जनाय । किं च जनो जन्तुमात्रो यां त्वा त्वां भूमिरिति प्रमन्दते स्तौति शास्त्रानभिज्ञत्वात् मदिङ् स्वपने जाड्ये मदे मोदे स्तुतौ गताविति धातुः । त्वं तु निर्ऋतिः । अहं तु शास्त्रज्ञतया तादृशीं त्वा त्वां विश्वतः सर्वथापि निर्ऋतिमेव परिवेद सम्यग्जानामि । निर्ऋतिशब्दस्यायमर्थः सर्वदेवसाधारणाद्दिवयजनान्निष्कृष्य (28.) स्वतन्त्रदेशे विदीर्णादौ ऋतिः प्राप्तिर्यस्याः सा निर्ऋतिरिति । इदं प्रकारद्वयं वेदेति विश्वत इत्युक्तम् ॥ ६४॥

a. यं ते देवी निर्ऋतिराबबन्ध पाशं ग्रीवास्वविचृत्यम् ।

तं ते विष्याम्यायुषो न मध्यादथैतं पितुमद्धि प्रसूतः ॥

b. नमो भूत्यै येदं चकार ॥ ६५॥

का° [१७. २. ४.] शिक्यरुक्मपाशेण्ड्वासन्दीः परेणास्यति यं तऽइति । शिक्यं रुक्मपाशं द्वे इण्ड्वे आसन्दीं च नैर्ऋतीष्टकातः पश्चात्क्षिपति ॥ यजमानदेवत्या त्रिष्टुप् यजमानं प्रत्युच्यते हे यजमान निर्ऋतिर्देवी ते तव ग्रीवासु कण्ठावयवेषु यं पाशं शिक्यरूपमाबबन्ध आ समन्ताद्बद्धवती कीदृशं पाशमविचृत्यं चृती हिंसाग्रन्थनयोः अहिंस्यं दृढं तं ग्रीवस्थं ते तव पाशमनेन मन्त्रेणाहं विष्यामि विमुञ्चामि स्यतिरुपसृष्टो (29.) विमोचनार्थः । कस्मात्स्थानाद्विमुञ्चामि आयुषोऽग्नेर्मध्याद्गार्हपत्यचितिस्थानात् न सम्प्रति इदानीमेव पाशं दूरीकरोमीत्यर्थः नकारः सम्प्रत्यर्थः अग्निर्वाऽआयुस्तस्यैतन्मध्यं यच्चितो गार्हपत्यो भवत्यचित आहवनीय इति [७. २. १. १५.] श्रुतेरायुःशब्देनात्राग्निरुच्यते । अथ पाशविमोकानन्तरं प्रसूतः निर्ऋत्यानुज्ञातः सन् अग्निरूपमाश्रित्य हे यजमान एतं पितुमन्नमद्धि भक्षय ॥ का° [१७. २. ४.] उदपात्रं निषिच्यान्तरात्मेष्टकमुत्तिष्ठन्ति नमो भूत्याऽइति । शिक्यादिनिरसनानन्तरमात्मनो नैर्ऋतीष्टकानां च मध्ये जलपूर्णं चमसं तूष्णीं निनीय ब्रह्मयजमानाध्वर्यवो नम इति मन्त्रेणोत्तिष्ठन्ति नैर्ऋतीसमीपादिति सूत्रार्थः ॥ भूतिदेवत्यैकपदा विराट् । या देवी इदमग्निलक्षणं कर्म चकार कृतवती तस्मै भूत्यै श्रीरूपिण्यै देव्यै नमो नमस्कारोऽस्तु ॥ ६५॥

निवेशनः संगमनो वसूनां विश्वा रूपाभिचष्टे शचीभिः ।

देव-इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम् ॥ ६६॥

का° [१७. २. ६.] अनपेक्षमेत्य शालाद्वार्योपस्थानं निवेशन इति । ब्रह्मयजमानाध्वर्यवो नैर्ऋत्युपधानदेशात्पश्चादपश्यन्तः शालां गच्छन्ति अध्वर्युरेत्य शालाद्वारि भवं गार्हपत्यचितिरूपमग्निमुपतिष्ठते ॥ विश्वावसुगन्धर्वदृष्टेन्द्रदेवत्या त्रिष्टुप् । अयमग्निः विश्वा विश्वानि रूपा रूपाणि अभिचष्टे पश्यति आहवनीयातिप्रणीताग्नीध्रधिष्ण्यादीनि सर्वाणि रूपाणि सर्वतः पश्यति । कीदृशानि रूपाणि शचीभिः स्वैः-स्वैः कर्मभिर्युक्तानीति शेषः । कीदृशोऽग्निः निवेशनः निवेशयति यजमानं स्वगृ-

BBB*

हि स्थापयतीति निवेशनः । तथा वसूनां धनानां संगमनः संगमयति प्रापयतीति संगमनः प्रजापशुरूपधनप्रापकः । सत्यधर्मा सत्योऽवश्यम्भाविफलोपेतो धर्मोऽग्निहोत्रादिलक्षणो यस्यासौ सत्यधर्मा । क-इव सविता देव-इव यथा सविता सूर्यो देवः सर्वाणि रूपाणि अभिचष्टे । यश्चाग्निः पथीनां विभक्तिव्यत्ययः पथिभिः परिपन्थिभिः सह समरे संग्रामे इन्द्रो न इन्द्र-इव तस्थौ स्थितवान् यथेन्द्रो युद्धे तिष्ठति तद्वत् तं वयं स्तुम इति शेषः । पथिन्शब्दस्य परिपन्थिवाचकत्वाद्भस्य टेरिति [पा° ७. १. ८८.] टिलोपाभावे छान्दसे दीर्घे पथीनामिति रूपम् ॥ ६६॥

सीरा॑ युञ्जन्ति क॒वयो॑ यु॒गा वि त॑न्वते॒ पृथ॑क् । धीरा॑ दे॒वेषु॑ सुम्न॒या ॥ ६७॥

का° [१७. २. ११.] दक्षिणामग्निश्रोणिमपरेण तिष्ठन्युज्यमानमभिमन्त्रयते सीरा युञ्जन्तीति। चितेर्दक्षिणश्रोणेः पश्चिमे तिष्ठन्नध्वर्युः प्रतिप्रस्थात्रोत्तरांसपूर्वे षड्भिर्वा दशभिश्चतुर्विंशत्या वा वृषैर्युज्यमानमौदुम्बरं हलं द्वाभ्यामभिमन्त्रयते ॥ सीरदेवत्ये सोमपुत्रबुधदृष्टे द्वे गायत्रीत्रिष्टुभौ । धीराः धीमन्तोऽग्निक्षेत्रविदः कवयः कृषिकर्माभिज्ञाः सीरा सीराणि हलानि युञ्जन्ति वृषैर्योजयन्ति युगा युगानि पृथक् नाना वितन्वते विस्तारयन्ति । किं कर्तुम् देवेषु सुम्नया (30.) सुम्नमिति सुखनाम [निघ° ३. ६.] ततो द्वितीयैकवचनस्य सुपां सुलुगिति [पा° ७. १. ३९.] यादेशः सुम्नं सुखं कर्तुमिति शेषः । देवानां सुम्नं कर्तुं युञ्जन्तीत्यर्थः चतुर्थ्या यादेशो वा देवानां सुम्नाय युञ्जन्ति । सीरकविपदयोर्बहुत्वं पूजार्थं तयोरेकत्वात् युगानि बहूनि सन्ति ॥ ६७॥

यु॒नक्त॒ सीरा॒ वि यु॒गा त॑नुध्वं कृ॒ते योनौ॑ वपते॒ह बीज॑म् ।
गि॒रा च॑ श्रु॒ष्टिः सभ॑रा॒ अस॑न्नो॒ नेदी॑य॒ इत्सृ॒ण्यः॑ प॒क्वमेया॑त् ॥ ६८॥

हे कर्षकाः सीरा सीराणि हलानि युनक्त युङ्क्त (31.) योजयत तप्तनप्तनथनाश्चेति [पा° ७. १. ४५.] थस्य तबादेशे श्नसोरल्लोपाभावे [पा° ६. ४. १११.] युनक्तेति रूपम् । युगा युगानि वितनुध्वं शम्यायोक्त्रादिभिर्विस्तारयत । ततः कृते कर्षणेन संस्कृते इह अस्मिन्योनौ स्थाने बीजं व्रीह्यादिकं यूयं वपत । कया । गिरा या ओषधीरित्यादिकया [क° ७५.] वेदमन्त्रवाचा चकाराच्चमसेन च । किं च वाग्वै

गीरन्न७. ग्रुष्टिरिति [७.२.२.५.] श्रुतेः श्रुष्टिः अन्नजातिर्व्रीह्याद्रिका सभरा असत् भरणं भरः पुष्टिः भृञोऽसुन्प्रत्ययः भरसा फलपुष्ट्या सह वर्तमाना सभराः पुष्टा अस्तु इतश्च लोपः परस्मैपदेष्विति [पा° ३.४.९७.] इकारलोपेऽडागमेऽसदिति रूपम् । पक्वं धान्यं नेदीय इत् अतिशयेनान्तिकं नेदीयः अन्तिकबाढयोर्नेदसाधाविति [पा° ५.३.६३.] अन्तिकस्येयसुनि प्रत्यये नेदादेशः इत् एवार्थे नेदीय इत् अन्तिकतममेवात्यल्पकालमेव पक्वं धान्यं सृण्यः सृण्या सृणिशब्दोऽत्र दात्रार्थः सृण्या लवनसाधनेन दात्रेण लूनमिति शेषः दात्रेण छिन्नं सत् नः अस्मान्प्रति आ इयात् आगच्छतु अल्पकालेन पक्वमस्मद्गृहमागच्छत्वित्यर्थः ॥ ६८॥

शुन७ सु फाला विकृषन्तु भूमि७ शुनं कीनाशा अभियन्तु वाहैः ।
शुनासीरा हविषा तोशमाना सुपिप्पला ओषधीः कर्तनास्मे ॥ ६९॥

का° [१७.२.१२.] आत्मनि कृषत्यनुपरिश्रित्कुन७ सु फाला इति प्रत्यृचम् । चितिस्थाने परिश्रित्समीपे चतुर्ऋग्भिर्दक्षिणपश्चिमोत्तरपूर्वेषु चतस्रः सीताः कृषति ॥ कुमारहारितदृष्टाः सीतादेवत्याश्चतस्रः द्वे त्रिष्टुभौ तृतीया पङ्क्तिः चतुर्थ्यनुष्टुप् । सु शोभनाः फालाः सीराग्रस्था लोहविशेषाः शुनं सुखं यथा तथा भूमिं विकृषन्तु विलिखन्तु शुनमिति सुखनाम [निघ° ३.६.] फालः सीरोपकरणोत्प्लवयोः फालमंशुके इति कोशः । कीनाशा हलिनः शुनं सुखेन वाहैः वृषभैः सह अभियन्तु अभिगच्छन्तु । हे शुनासीरा शुनासीरौ हे वाय्वादित्यौ अस्मे अस्माकमोषधीः व्रीह्याद्रिकाः सुपिप्पलाः शोभनफलाः युवां कर्तन कुरुत कुरुतमिति वचनव्यत्ययः थस्य तनबादेशे शपि लुप्ते गुणे कृते कर्तनेति रूपम् । कीनाशः कर्षके क्षुद्रे कृतान्तोपांशुघातिनोरिति कोशः । शुनश्च सीरश्च शुनासीरौ देवताद्वन्द्वे चेति [पा° ६.३.२६.] पूर्वपददीर्घः शुनो वायुः सीर आदित्यः । शुनो वायुः शु एत्यन्तरिक्षे सीर आदित्य सरणादिति यास्कोक्तेः [निरु° ९.४०.] । कीदृशौ शुनासीरौ हविषा जलेन तोशमाना तोशतिर्वधकर्मा भूमिं घ्नन्तौ जलेन भूमिं सिञ्चन्तौ सन्तावोषधीः सफलाः कुरुतमिति भावः पिप्पलं फलम् ॥ ६९॥

घृतेन सीता मधुना समज्यतां विश्वैर्देवैरनुमता मरुद्भिः ।
ऊर्जस्वती पयसा पिन्वमानास्मान्त्सीते पयसाभ्याववृत्स्व ॥७०॥

सीता लाङ्गलपद्धतिर्मधुना मधुरेण घृतेनोदकेन समज्यतां संसिच्यतां सिक्ता भवतु । कीदृशी सीता विश्वैर्देवैर्मरुद्भिश्चानुमता अनुज्ञाता अङ्गीकृता वा । एवं परोऽक्षमुक्त्वा प्रत्यक्षमाह हे सीते ऊर्जस्वती अन्नवती सा त्वं पयसा पयोदधिघृतादिभिः पिन्वमाना दिशः पूरयन्ती सती पयसा दुग्धादिभिः सह अभ्याववृत्स्व अस्मदभिमुखमावृत्ता भव अस्माकमनुकूला भवेत्यर्थः । वृतेर्बहुलं छन्दसीति [पा॰ २.४.७६.] शपः श्लौ सति लोटि ववृत्स्वेति रूपम् ॥७०॥

लाङ्गलं पवीरवत्सुशेवꣳ सोमपित्सरु ।
तदुद्वपति गामविं प्रफर्व्यं च पीवरीं प्रस्थावद्रथवाहनम् ॥७१॥

तत्पूर्वोक्तं लाङ्गलं हलं गां धेनुमविं छागविशेषं रथवाहनं रथवाहकमश्वादिकं च उद्वपति उद्गमयति प्रापयति । रथं वाहयति प्रापयतीति रथवाहनम् । कृषिसमृद्धाविव गवादिकं यजमानस्य सुलभमिति भावः अत एव लाङ्गलं गवादिप्रापकम् । कीदृशं लाङ्गलं पवीरवत् पविर्धारास्यास्तीति (32.) पवीरं फालः रो मत्वर्थः पवीरमस्यास्तीति पवीरवत् फालसंयुक्तम् । तथा सुशेवं शेवमिति सुखनाम [निघ॰ ३. ६.] शोभनसुखकरं शोभनं शेवं यस्मात् । तथा सोमपित्सरु सोमं पिबतीति सोमपा यजमानः तस्मिन्सोमपि यजमाननिमित्तं त्सरति भूमिं खनतीति सोमपित्सरु यद्वा सोमपि यजमाने त्सरति नाशयति पापमिति सोमपित्सरु त्सर छद्मगताविति धातोरुप्रत्ययः शीलार्थः हलदन्तात्सप्तम्या इति [पा॰ ६.३.९.] विभक्तेरलुक् आतो धातोरिति [पा॰ ६.४.१४०.] आलोपे हलन्तत्वात् यद्वा सोमः पीयतेऽनेनेति सोमपिश्चमसः तस्य त्सरु निष्पादकं न हि लाङ्गलकर्म विना सोमचमसाः स्युः । ईदृशं लाङ्गलं गवादि गमयतीत्यर्थः । कीदृशीं गामविं च प्रफर्व्यं फर्वतिर्गतिकर्मा प्रकर्षेण फर्वति गच्छति प्रफर्वी तां प्रफर्व्यं वा छन्दसीति [पा॰ ६.१.१०६.] अमि पूर्वरूपाभावे यणादेशः युवतित्वादतिवेगवतीमित्यर्थः । तथा पीवरीं स्थूलां पुष्टाङ्गीम् । कीदृशं रथवाहनं प्रस्थावत्

प्रस्था प्रस्थानं गतिरस्यास्तीति प्रस्थावत् प्रयाणसमर्थमुत्कृष्टजवोपेतमित्यर्थः ॥७१॥

कामं कामदुघे धुक्ष्व मित्राय वरुणाय च ।
इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्य ओषधीभ्यः ॥ ७२॥

कामान्मनोरथान्दुग्धे पूरयति कामदुघा दुहः कब्घश्चेति [पा॰ ३.२.७०.] कप्प्रत्ययो घान्तादेशश्च तस्याः सम्बुद्धौ हे कामदुघे लाङ्गलपद्धते मित्रादिपूषान्तदेवानामर्थे प्रजार्थमोषधिनिष्पत्त्यर्थं च काममपेक्षितं भोगं धुक्ष्व सम्पादय ॥७२॥

विमुच्यध्वमघ्न्या देवयाना अगन्म तमसस्पारमस्य । ज्योतिरापाम ॥७३॥

का॰ [१७.२.२०.२१.] अनडुहो विमुच्य विमुच्यध्वमिति पशुवदुत्सृज्य दक्षिणाकालेऽध्वर्यवे ददाति । वृषान्हलाद्वियोज्य पशुवदित्यैशानीदिशं प्रति विसृजत्यध्वर्युः यजमानश्च सुत्यायां ससीरांस्तानध्वर्यवे ददातीति सूत्रार्थः । विमोचने मन्त्रः वृषदेवत्यार्षी गायत्री पादानियमात् । हे देवयानाः देवतार्थकर्मकारिणः देवार्थं यानं कृष्याद्युद्यमो येषां ते यद्वा देवयानमार्गहेतुभूताः कर्मद्वारा तत्प्रापकाः । हे अघ्न्या अहन्तव्या गावो बलीवर्दा यूयं विमुच्यध्वम् मुचेः कर्मकर्तरि यक् लोटि जगत्स्थितिहेतुं कृषिमेवं निष्पाद्य कृतकृत्याः सन्तो युगात्पृथग्भवतेत्यर्थः अस्य तमसः क्षुत्पिपासाद्युद्भूतस्य दुःखस्य पारं समाप्तिं वयमगन्म प्राप्ताः गच्छतेर्लङि शपि लुप्ते रूपम् तदुक्तं [बृहदार॰ मा॰ ३.२.१.] योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येतीति । दुःखपारमेव स्पष्टयति वयं ज्योतिरापाम परमात्मलक्षणं यज्ञरूपं वा तेजः प्राप्ता आप्नोतेर्लुङि पुषादीत्यादिना [पा॰ ३.१.५५.] अङ्प्रत्ययः ॥७३॥

सजूरब्दोऽअयवोभिः सजूरुषा अरुणीभिः सजोषसावश्विना दꣳसोभिः सजूः सूर एतशेन सजूर्वैश्वानर इडया घृतेन स्वाहा ॥७४॥

का॰ [१७.३.३.] पञ्चगृहीतेनोद्धलन्नभिजुहोति सजूरब्द इति । तदानीं संस्कृतेन जुह्वा पञ्चगृहीतेनाज्येन कृष्टात्ममध्यस्थापितकुशस्तम्बे स्रुचमूर्धां कुर्वन्जुहोति ॥ लिङ्गोक्तदेवतं यजुर्ब्राह्म्यनुष्टुप्छन्दस्कम् । अब्दः अपो जलानि ददातीत्यब्दः संवत्सरः उषाः प्रातरधिष्ठात्री देवता अश्विना अश्विनौ देवभिषजौ सूरः सूर्यः वै-

श्वानरः अग्निश्च एभ्योऽब्दादिदेवेभ्यो घृतेन स्वाहा इदं घृतं तेभ्यः सुहुतमस्तु । तेषां प्रत्येकं विशेषणानि । कीदृशोऽब्दः अयवोभिः सजूः यवाश्चायवाश्चार्धमासा मासाश्चोच्यन्ते जोषणं जुट् प्रीतिः सह जुषा वर्तते समाना जुट् वा यस्य सजूः जुषतेः सम्पदादिवाद्भावे क्विप् मासार्धमासैः प्रीतियुक्त इत्यर्थः । कीदृश्युषाः अरुणीभिः अरुणवर्णाभिः गोभिः सजूः प्रीतियुता । कीदृशावश्विनौ दंसोभिः कर्मभिश्चिकित्सादिभिः सजोषसौ प्रीतौ । कीदृशः सूरः एतशेनाश्वेन सजूः तुष्टः । कीदृशोऽग्निः इडया पृथिव्या सजूः प्रीतः तदधिष्ठातृत्वात् आग्नेयी हि पृथिवी इडाशब्देन गौर्वागन्नं चोच्यते ॥७४॥

या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा ।
मनै नु बभ्रूणामह७ शतं धामानि सप्त च ॥७५॥

का॰ [१७. ३. ८.] या ओषधीरिति तृचैर्वपत्युदपात्रवत् । पञ्चभिस्तृचैश्चमसेन सर्वौषधं वपति उदपात्रवदिति चतुश्चतुःसीतासु यथा कृष्टम् ॥ अथर्वपुत्रभिषग्दृष्टा ओषधिदेवत्या योऽअस्मानभिदासतीत्यन्ताः [१०१.] सप्तविंशतिरनुष्टुभः मुञ्चन्तु मेत्याद्या [१०.] द्वादश बन्धुदृष्टाः कुत्रापि कर्मण्यनियुक्ताः । पादानां न्यूनाधिको व्यूहाधिक्ये कार्ये । युगशब्दः कालवाची त्रयाणां युगानां समाहारस्त्रियुगं त्रिकालं वसन्ते प्रावृषि शरदि च । पुरा सृष्ट्यादौ या ओषधीः ओषधयः पूर्वाः प्रथमा भाविनीभ्य ओषधीभ्यः आद्याः जाता उत्पन्नाः । किमर्थं देवेभ्यः ऋतुभ्यः ऋतवो वै देवा इति [७. २. ४. २६.] श्रुतेः ऋतव ओषधियुताः कर्तव्या (33.) एतदर्थम् । बभ्रूणां जगज्जनभरणसमर्थानां (34.) पाकेन पिङ्गलवर्णानां वा तासामोषधीनां शतं सप्त च धामानि अहं मनै नु मन्यऽएव जाने मन्यतेर्लेटि आत्मनेपदे उत्तमैकवचने शपि एत ऐ इति [पा॰ ३. ४. ९३.] रूपम् । संवत्सरोपलक्षितमेकैकं स्थानं शतायुर्वै पुरुष इति श्रुतेः शतं धामानि वर्षात्मकानि शिरःस्थानि मुखदङ्नासाकर्णाख्यानि सप्त स्थानानि च यऽएवेमे सप्त शीर्षन् प्राणास्तानेतदाहेति [७. २. ४. २६.] श्रुतेः नराणां शतवर्षपर्यन्तमिन्द्रियाणामोषधिभिस्तर्प्यमाणत्वादोषधीनां तत्स्थानत्वम् यद्वा शतं धामानि स्थानभेदान्जातिभेदानसंख्यान्विशेषतश्च सप्त भेदान्ग्राम्यानारण्यांश्च व्रीह्यादीन्नीवारादींश्चाहं जाने ॥७५॥

शतं वोऽअम्ब धामानि सहस्रमुत वो रुहः ।
अधा शतक्रत्वो यूयमिमं मेऽअगदं कृत ॥७६॥

हे अम्ब मातृस्थाना ओषधयः वो युष्माकं धामानि जातिभेदाः क्षेत्राणि वा जन्मानि वा शतं सन्ति उत अपि च वो युष्माकं रुहः रोहन्तीति रुहः प्ररोहा अङ्कुराः सहस्रं सन्ति शतसहस्रपदाभ्यामपरिमितत्वमुच्यते । अध अथ निपातस्य चेति [पा° ६.३.१३६.] संहितायां दीर्घः शतं क्रतवः कर्माणि याभिस्ता शतक्रतवः जसि चेति [पा° ७.३.१०९.] प्राप्तगुणस्याभावे छान्दसो यणादेशः अथैवं सति हे शतक्रत्वो यूयं मे मम इमं यजमानमगदं क्षुत्पिपासादिषडूर्मिरोगरहितं कृत कुरुत करोतेः शपो लुक् ॥७६॥

ओषधीः प्रतिमोदध्वं पुष्पवतीः प्रसूवरीः ।
अश्वा-इव सजित्वरीर्वीरुधः पारयिष्णवः ॥७७॥

हे ओषधीः हे ओषधयः यूयं प्रतिमोदध्वं हृष्टा भवत । कीदृश्यो यूयं पुष्पवतीः पुष्पैरुपेताः । प्रसूवरीः फलप्रसववत्यः प्रसुवते जनयन्ति फलानीति प्रसूवरीः अन्येभ्योऽपि दृश्यन्तऽइति [पा° ३.२.७५.] सूतेर्वनिपि प्रत्यये वनो र चेति ङीप् [पा° ४.१.७.] रान्तादेशश्च । अश्वा-इव सजित्वरीः सह जयन्ति तच्छीलाः इणनशजीति [पा° ३.२.१६३.] क्वरप् टिड्ढाणञिति [पा° ४.१.१५.] ङीप् यथाश्वाः संग्रामे जयशीलाः तद्वत्फलपर्यन्तत्वाज्जयशीलाः । वा छन्दसीति [पा° ६.१.१०६.] सर्वत्र पूर्वसवर्णदीर्घः । वीरुधः विविधं रुन्धन्ति निवारयन्ति व्याधिमिति वीरुधः नहिवृतिवृषीत्यादिना [पा° ६.३.११६.(35.)] उपसर्गदीर्घः यद्वा विविधं रोहन्ति प्ररोहन्ति वीरुधः विरुहः क्वौ धात्वादेशो वेर्दीर्घ इति (36.) धात्वादेश उपसर्गदीर्घश्च । पारयिष्णवः पार तीर कर्मसमाप्तौ चुरादिरदन्तो धातुः पारयन्ति फलपाकान्तत्वं परित्यज्य बहुकालं कर्मपरायणशीलाः पारयिष्णवः णेश्छन्दसीति [पा° ३.२.१३७.] शीलार्थे इष्णुच्प्रत्ययः ॥७७॥

ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे ।

सनेयमश्वं गां वास आत्मानं तव पूरुष ॥ ७८ ॥

हे ओषधीः ओषधयः हे मातरः जगन्निर्मात्र्यः भोजनदानव्याध्यपगमादिभिरुपकर्त्र्यः हे देवीः देव्यः वो युष्मान्प्रति इति अमुना वक्ष्यमाणविधिना तत्प्रसिद्धं मदभीष्टमुपब्रुवे वच्मि प्रार्थयामि । इति किम् तदाह हे पुरुष यज्ञपुरुष तव प्रसादादश्वं हयं गां धेनुं वासो वस्त्रमात्मानं शरीरमहं सनेयं सम्भजेयम् वन षन सम्भक्तौ लिङ् यज्ञपुरुषं प्रति मया यदश्वादिकं प्रार्थ्यते तदोषधिभिरनुमन्तव्यमित्योषधिप्रार्थनमिति भावः ॥ ७८ ॥

अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ।
गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥ ७९ ॥

हे ओषधयः वो युष्माकमश्वत्थे आश्वत्थ्यामुपभृति स्रुचि निषदनं स्थानं भवति हविषां तत्र स्थापनात् किं च वो युष्माकं पर्णे पलाशे पर्णमय्यां जुह्वां वसतिः स्थितिः कृता अध्वर्युणा होमार्थं जुह्वां स्थापनात् अश्वत्थपर्णशब्दाभ्यां तद्धितप्रत्ययलोपश्छान्दसः अथापि तद्धितेन कृत्स्नवन्निगमा भवन्तीति यास्कोक्तेः [निरु॰ २. ५. (37.)] । हविर्भूता ओषधयः प्रार्थ्यन्ते किलेति विद्याप्रकर्षे इत् एवार्थे हे हविर्भूता ओषधयो यूयमग्नौ हुताः सत्यो गोभाजः असथ भवथ गामादित्यं भजन्तीति गोभाजः अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठतऽइति स्मृतेः ॥ यद्वा अश्वत्थे वो निषदनमश्वत्थे फलिते सर्वौषधीनां फलवत्त्वात् पर्णे वो वसतिः कृता पलाशे च फलिते व्रीह्यादीनां फलितत्वात् अत एव यूयमुप्ताः सत्यो गोभाजो भूमिभाज एव किलासथ भवथ । गौर्नादित्ये बलीवर्दे मखभेदऽर्षिभेदयोः । स्त्रियां स्याद्दिशि भारत्यां भूमौ च सुरभावपीति कोशात् । किमर्थमिदमित्यत आह यत् यस्मात्कारणात् पुरुषं यजमानं यूयं सनवथ सेवध्वमन्नदानेन पोषयथ तस्मादश्वत्थादिस्थानमित्यर्थः अश्वत्थे पलाशे च वः स्थानम् देवाधिष्ठानादश्वत्थो लोके नतिप्रदक्षिणादिना पूज्यते पलाशश्चेध्मादिरूपेण एवमश्वत्थादिरूपेण यूयं भूभाजः स्थ शेषं पूर्ववत् । अस्तेः शपि असथेति रूपं लटि सनवतिः (38.) परिचर्यार्थः ॥ ७९ ॥

यत्रौषधीः समग्मत राजानः समिताविव ।
विप्रः स उच्यते भिषग्रक्षोहामीवचातनः ॥ ८० ॥

हे ओषधीः ओषधयः यत्र विप्रे भैषज्यकर्तरि ब्राह्मणे यूयं समग्मत संगच्छत रोगं जेतुम् के-इव राजान-इव यथा राजानः समितौ युद्धे शत्रून्जेतुं समागच्छन्ति । गमेर्लुङि मध्यमबहुवचने पुषादीत्यङि [पा॰ ३.१.५५.] गमहनेति [पा॰ ६.४.९८.] उपधालोपे छान्दसेऽग्मतेति रूपम् । स भवदाश्रितो विप्रः भिषग्वैद्य उच्यते कथ्यते । कीदृशो विप्रः रक्षोहा रक्षांसि हन्तीति रक्षोघ्नं पुरोडाशं कृत्वा रक्षसां हन्ता रक्षःकृतोपद्रवनाशकः । तथा अमीवचातनः अमीवान्रोगान् चातयति नाशयति अमीवचातनः औषधदानै रोगनाशकः । चातयतिर्नाशनार्थः धातूनामनेकार्थत्वात् ॥ ८० ॥

अश्वावतीꣳ सोमावतीमूर्जयन्तीमुदोजसम् ।
आवित्सि सर्वा ओषधीरस्माऽअरिष्टतातये ॥ ८१ ॥

अस्मै अस्य यजमानस्य अरिष्टतातये रिषतिर्विनाशार्थः रेषणं रिष्टम् भावे क्तः न रिष्टमरिष्टमनाशो मङ्गलमित्यर्थः तस्य करणमरिष्टतातिः शिवशमरिष्टस्य करऽइति [पा॰ ४.४.१४३.] तातिप्रत्ययः यद्वा तननं तातिर्विस्तारः तस्मै यजमानस्य शुभकरणाय सर्वा ओषधीरहमा अवित्सि समन्ताद्वेद्मि जानामि विन्तेर्लुङि आत्मनेपदे उत्तमैकवचने इडभावे अवित्सीति रूपम् । अस्मै यजमानार्थं वेद्मीति वा । तद्विशेषणम् अरिष्टं शुभं करोति तनोति वारिष्टतातिस्तस्मै । सर्वाः का इत्यत आह अश्ववतीमश्वा अस्यां सन्तीत्यश्ववती ताम् अश्वसम्पादिनीं कांचित् ओषधिसमृद्धौ सत्यां धनद्वारेणाश्वलाभात् । अन्यां सोमवतीं सोमयोगोऽस्यामस्तीति सोमवती तां सोमसम्पादिनीं मन्त्रे सोमाश्वेत्यादिना [पा॰ ६.३.१३१.] अश्वसोमयोर्दीर्घः । ऊर्जयन्तीमूर्ज बलप्राणनयोः बलसम्पादिनीं जीवयन्तीं वा ऊर्जयतीति । उदोजसमुद्गतमोजो यस्याः सा उदोजास्तां तेजःसम्पादिनीम् । एवं नानाकार्यकारिणीः सर्वा ओषधीः जानामीत्यर्थः यद्वा अश्वावतीमित्यादीनि बहुवचनान्तानि कार्याणि ओषधीरित्यस्य विशेषणत्वात् ॥ ८१ ॥

उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते ।
धनᳪ सनिष्यन्तीनामात्मानं तव पूरुष ॥ ८२ ॥

हे पुरुष यज्ञपुरुष तवात्मानं त्वदीयं शरीरं प्रति धनं सनिष्यन्तीनाम् षणु दाने हवीरूपं धनं दातुमिच्छन्तीनामोषधीनां शुष्मा बलानि सामर्थ्यानि उदीरते उद्गच्छन्ति प्रकाशीभवन्ति गावो गोष्ठादिव यथा गोष्ठात्स्वस्थानाद्गावोऽरण्यदेशं प्रति उद्गच्छन्ति तद्वत् ईर कम्पे अदादिः ॥ ८२ ॥

इष्कृतिर्नाम वो माताथो यूयᳪ स्थ निष्कृतीः ।
सीराः पतत्रिणी स्थन यदामयति निष्कृथ ॥ ८३ ॥

हे ओषधयो वो युष्माकमिष्कृतिर्नाम निष्कृतिनाम्नी माता जननी निष्करोति व्याधिं नाशयति निष्कृतिः निशब्दो बहुलमिति [३. १. १७.] प्रातिशाख्यसूत्रेणोपसर्गैकदेशनकारलोपः अथो अपि च यूयमपि निष्कृतीः निष्कृतयः स्थ व्याधिनिष्क्रमणकारिण्यो भवथ निष्कृतिमातृकत्वात् । किं च सीराः सह इरया अन्नेन वर्तन्तऽइति सीराः सहस्य सादेशे टिलोप इकारदीर्घश्च छान्दसः यद्वा सीराः क्षुधादीनामपसारयित्र्यः यद्वा सीरं हलं निष्पादकत्वेन यासु ताः सीराः । पतत्रिणीः पतत्रं पतनं गमनं विद्यते यासां ताः पतत्रिण्यः प्रसरणशीलाश्च स्थन भवथ वा छन्दसीति [पा० ६. १. १०६.] दीर्घः तप्तनबित्यादिना [पा० ७. १. ४५.] थस्य थनादेशः । यत् यस्मात् आमयति अम रोगे चुरादिः शत्रन्तः रुजति आमयाविनि (39.) नरे स्थितं रोगं निष्कृथ नाशयथ यद्वा यत् आमयति यत् क्षुधादिकं रोगवद्बाधते तद्यूयं निष्कृथ करोतेः शपि लुप्ते लटि रूपम् ॥ ८३ ॥

अति विश्वाः परिष्ठा स्तेन-इव व्रजमक्रमुः ।
ओषधीः प्राचुच्यवुर्यत्किं च तन्वो रपः ॥ ८४ ॥

परि सर्वतो रोगानधिष्ठाय तिष्ठन्तीति परिष्ठाः रोगनाशिका विश्वाः सर्वाः ओषधीः ओषधयो यदा अत्यक्रमुः आक्रमन्ते भक्षिताः सत्यो देहं व्याप्नुवन्ति क्रमतेर्लङि अन उस् छान्दसः । तत्र दृष्टान्तः स्तेन-इव व्रजम् यथा रात्रौ स्तेनश्चो-

रो गोष्ठमाक्रमते गोशालायां गामपहर्तुं सर्वत्र गच्छति तद्वत् यदौषधयो रोगमपहर्तुं देहमाक्रमन्ते तदा तन्वः शरीरस्य यत्किं च यत्किमपि रपः पापं शिरोव्यथागुल्मातिसारादिरूपं पापफलं यत्किंचिदस्ति तत्सर्वं प्राचुच्यवुः प्रच्यावयन्ति नाशयन्ति च्यु गतौ लुङि णिश्रिद्रुस्रुभ्यः कर्तरि चङ् इति [पा° ३. १. ४८.] चङ्प्रत्यये रूपम् । रपो रिप्रमिति पापनामनी भवत इति यास्कः [निरु° ४. २१.] ॥ ८४ ॥

यदि॒मा वा॒जय॑न्न॒हमोष॑धी॒र्हस्त॑ऽआद॒धे ।

आ॒त्मा यक्ष्म॑स्य नश्यति पु॒रा जी॑व॒गृभो॑ यथा (40.) ॥ ८५ ॥

यत् यदा इमा ओषधीः वाजयन्पूजयन्मानयन्सन् अहं हस्ते स्वकरे आदधे स्थापयामि तदैव यक्ष्मस्य व्याधेरात्मा स्वरूपं पुरा भक्षणात्प्रागेव नश्यति किं पुनर्भक्षणेनेति भावः । तत्र दृष्टान्तः जीवगृभो यथा जीवन्तमेव यो हिंसार्थं गृह्णाति आघातस्थानं नीयते स जीवगृप् तस्य जीवगृभो वधात्प्रागेवातिविषादात् मृतोऽहमिति मन्यमानस्य मनुष्यस्यात्मा यथा नश्यति नष्टप्रायो भवति तथौषधौ हस्ते धृतायां व्याधिरात्मा नश्यतीत्यर्थः ॥ ८५ ॥

यस्यौ॑षधीः प्र॒सर्प॑थाङ्ग॑मङ्गं॒ परु॑ष्परुः ।

ततो॒ यक्ष्मं॒ विबा॑धध्वऽउ॒ग्रो म॑ध्यम॒शीरि॑व ॥ ८६ ॥

हे ओषधीः ओषधयो यस्य रोगिणः अङ्गमङ्गं प्रत्यङ्गं सर्वाण्यङ्गानि परुष्परुः परुःशब्दः पर्ववचनः प्रतिपरुः सर्वाणि पर्वाणि ग्रन्थीन्यूयं प्रसर्पथ प्रगच्छथ व्याप्नुथ ततोऽङ्गपर्वसमुदायात् यक्ष्मं रोगं यूयं विबाधध्वे निवर्तयथ व्याधिनाशं कुरुध्वे । तत्र दृष्टान्तः उग्रो मध्यमशीरिव मध्ये देहमध्ये भवं मध्यमं मर्मभागं शृणाति हिनस्ति मध्यमशीः शॄ हिंसायां क्विप् ॠत इद्धातोरिति [पा° ७. १. १००.] इदादेशः उरण् रपर इति [पा° १. १. ५१.] रेफः मर्मघातक उग्र उत्कृष्टो बद्धगोधाङ्गुलित्राण उद्गूर्णशस्त्रः क्षत्रियो यथा शत्रुं बाधते यद्वा उग्रो रुद्रो मध्यमेन त्रिशूलमध्यभागेन शृणातीति मध्यमशीः यथा युगान्ते जगद्बाधते तद्वद्यूयमपि रोगिणो देहं प्रविष्टा व्याधिं विबाधध्वऽइत्यर्थः ॥ ८६ ॥

सा॒कं य॑क्ष्म॒ प्रप॑त॒ चाषे॑ण किकिदी॒विना॑ ।

साकं वातस्य ध्राज्या साकं नश्य निहाकया ॥ ८७॥

हे यक्ष्म रोग त्वं चाषेण पक्षिणा साकं सह प्रपत प्रकर्षेण गच्छ किम्भूतेन चाषेण किकिदीविना किकीति शब्दानुकरणं किकीतिशब्देन दीव्यति क्रीडतीति किकिदीविस्तेन । चाषस्तवोचितः (41.) सार्थः । वातस्य ध्राज्या गत्या साकं प्रपत वातगतिवत्पलायस्वेत्यर्थः । किं च निहाकया साकं नश्य नष्टो भव निहन्ति कायमिति निहाका निर्ऋतिः कृच्छ्रापत्तिस्तया सह नश्य यद्वा शब्दानुकरणमिदं हा कष्टं कया ओषध्या निहतोऽहमिति शब्दं कुर्वन् हे यक्ष्म त्वं नश्य ॥ अर्थान्तरं वा कफावरुद्धकण्ठोत्थध्वनेरनुकरणार्थः किकिशब्दः किकिना कण्ठध्वनिना दीव्यतीति किकिदीविः श्लेष्मरोगः । चष बधे चषति व्याकुलं कृत्वा हन्ति चाषः पित्तरोगः । वातस्य ध्राजिर्वातरोगः । हे यक्ष्म रोगराज त्वं कफपित्तवातरोगैः सह प्रपत गच्छ । यया पीडया कया रुजा निहतोऽस्मि हा कष्टमिति शब्दं करोति सा निहाका सर्वाङ्गवेदना तया साकं हे यक्ष्म त्वं नश्य ॥ ८७॥

अन्या वोऽअन्यामवत्वन्यान्यस्या उपावत ।

ताः सर्वाः संविदाना इदं मे प्रावता वचः ॥ ८८॥

हे ओषधयो वो युष्माकं मध्ये अन्या काचिदोषधिव्यक्तिरन्यामोषधिव्यक्तिमवतु तथा रक्षिता अन्यापि अन्यस्या रक्षिकाया उपावत उपावतु उप समीपमागत्य पालयतु पुरुषवचनव्यत्ययः अन्यान्यस्याः प्रभावमवतु वा । ताः सर्वास्तथाविधा ओषधयो यूयं संविदानाः परस्परैकमत्यं गताः सत्यो मे ममेदं वचो वाक्यं प्रार्थनारूपं प्रावत प्रकर्षेण रक्षत ॥ ८८॥

याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ।

बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥ ८९॥

या ओषधयः फलिनीः फलिन्यः फलयुक्ताः याश्चाफलाः फलरहिताः याश्चापुष्पाः पुष्परहिताः याश्च पुष्पिणीः पुष्पिण्यः पुष्पयुक्ताः ताः सर्वा ओषधयो बृहस्पतिप्रसूताः बृहस्पतिप्रेरिताः सत्यो नोऽस्मानंहसः पापाद्रोगरूपात् मुञ्चन्तु पृथक्कुर्वन्तु ॥ ८९॥

मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत ।
अथो यमस्य पड्वीशात्सर्वस्माद्देव किल्विषात् ॥ १० ॥

एवमोषधिवापार्थानि पञ्च तृचानि समाप्तानि । अथानारभ्याधीताः ॥ शपथनिमित्तात्किल्विषात्पापादोषधयो मा मां मुञ्चन्तु पृथक्कुर्वन्तु अथो अपि च वरुण्यात् वरुणे भवं वरुण्यं तस्माद्वरुणापराधनिमित्तात्पापान्मां मुञ्चन्तु उतापि च यमस्य सम्बन्धिनः पड्वीशात् पड्वीशशब्दो बन्धनवाची यमबन्धननिमित्तात्पापान्मां मुञ्चन्तु अथो अपि च सर्वस्माद्देवकिल्विषाद्देवापराधनिमित्तात्पापान्मां मुञ्चन्तु ॥ १० ॥

अवपतन्तीरवदन्दिव ओषधयस्परि ।
यं जीवमश्नवामहै न स रिष्याति पूरुषः ॥ ११ ॥

दिवः परि द्युलोकात्सकाशादवपतन्तीरवपतन्त्योऽधस्ताद्भूमौ गच्छन्त्यः ओषधय अवदन् परस्परं वदनमुक्तवत्यः । किम् तदाह जीवतीति जीवस्तं यं जीवमनुत्क्रान्तप्राणं पुरुषं वयमश्नवामहै अश्नूङ् व्याप्तौ लोट् व्याप्नुमः स पुरुषो न रिष्यति न नश्यति रिष्यतीत्यत्र लेटोऽडाटाविति [पा॰ ३. ४. ९४.] आडागमः पूरुष इति छान्दसो दीर्घः सर्वत्र ॥ ११ ॥

या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः ।
तासामसि त्वमुत्तमारं कामाय शं हृदे ॥ १२ ॥

सोमो राजा यासां ताः सोमराज्ञ्यः बह्वीः बह्व्योऽनन्ताः शतविचक्षणाः शतमसंख्यं विचक्षणाश्चतुराः बहुवीर्या वा शतं विचक्षणाः स्तोतारो यासामिति वा एवम्भूता या ओषधीः ओषधयः सन्ति तासामोषधीनां मध्ये हे ओषधे त्वमुत्तमा उत्कृष्टा यतोऽसि भवसि अतः कामायेप्सिताय अरमलं पर्याप्ता भव हृदे हृदयाय शं सुखकारिणी भव ॥ १२ ॥

या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु ।
बृहस्पतिप्रसूता अस्यै संदत्त वीर्यम् ॥ १३ ॥

61

सोमराज्ञ्यो या ओषधयः पृथिवीमनु विष्ठिताः विविधं स्थिताः बृहस्पतिप्रसूताः बृहस्पतिना प्रेरिताः ता ओषधयोऽस्यै ओषध्यै मद्गृहीतायै वीर्यं संदत्त सामर्थ्यं प्रयच्छत इयं बहुवीर्या भवत्विति भावः ॥ १३ ॥

याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः ।
सर्वाः संगत्य वीरुधोऽस्यै संदत्त वीर्यम् ॥ १४ ॥

या ओषधय इदं मद्वचनं प्रार्थनारूपमुप समीपस्थाः (42.) शृण्वन्ति याश्चान्याः दूरं परागताः दूरे व्यवस्थिता व्यवहिताः सत्यः ईषत् शृण्वन्ति हे वीरुधः विविधरोहणा ओषधयः ताः सर्वाः समीपदूरस्थाः संगत्य संगता भूत्वा अस्यै ओषध्यै यूयं वीर्यं संदत्त प्रयच्छत ॥ १४ ॥

मा वो रिषत्खनिता यस्मै चाहं खनामि वः ।
द्विपाच्चतुष्पादस्माकꣳ सर्वमस्त्वनातुरम् ॥ १५ ॥

हे ओषधयः वो युष्माकं खनिता चिकित्सायै युष्मन्मूलं ग्रहीतुं खननकर्ता मा रिषत् मा विनश्यतु यस्मै च रुग्णाय चिकित्सार्थं वो युष्मानहं खनामि युष्मन्मूलमादातुं खननं करोमि स च मा रिषत् । किम्बहुनास्माकं सम्बन्धि द्विपात् स्त्रीपुंसं चतुष्पाद्गवादि प्राणिजातं सर्वमनातुरं रोगरहितमस्तु। द्वौ पादौ यस्य चत्वारः पादा यस्य संख्यासुपूर्वस्येति [पा॰ ५.४.१४०.] पादशब्दस्यान्तलोपः ॥ १५ ॥

ओषधयः समवदन्त सोमेन सह राज्ञा ।
यस्मै कृणोति ब्राह्मणस्तꣳ राजन्पारयामसि ॥ १६ ॥

राज्ञा स्वस्वामिना सोमेन सह ओषधयः देवताः समवदन्त संवादं कृतवत्यः । कथं संवादस्तमाह ब्राह्मणो यस्मै रुग्णाय कृणोति अस्मन्मूलादिना चिकित्सां करोति कृ कृतौ स्वादिः हे राजन्स्वामिन्सोम तं रुग्णं नरं वयं पारयामसि पारयामः इदन्तो मसि सोमसंवादो व्याधिनाशदार्ढ्यार्थः ॥ १६ ॥

नाशयित्री बलासस्यार्शस उपचितामसि ।
अथो शतस्य यक्ष्माणां पाकारोरसि नाशनी ॥ १७ ॥

हे ओषधे त्वं बलासस्य क्षयव्याधेर्नाशयित्री नाशनकर्त्री असि भवसि बलमस्यति क्षिपति बलासः (43.) क्षयः । अर्शसो गुदव्याधेश्च नाशिकासि । उपचिताम् उपचिन्वन्ति शरीरं वर्धयन्तीत्युपचितः क्विप् श्वयथुगण्डुत्रीपदादयः (44.) तेषां च नाशिकासि । अथो अपि च शतस्य यक्ष्माणां बहूनां व्याधीनां पाकारोः मुखपाकक्षतादेश्च नाशनी नाशकर्त्री त्वं भवसि पाको मुखपाकः अरुः क्षतमुच्यते पाकेनारुः पाकारुस्तस्य यद्वा पाकोऽन्नपाकस्तस्यारुर्व्यथा मन्दाग्नित्वं तस्य नाशनी त्वमसि ॥९७॥

त्वां ग॑न्ध॒र्वा अ॑खनँ॒स्त्वामिन्द्र॒स्त्वां बृह॒स्पतिः॑ ।
त्वामो॑षधे॒ सोमो॒ राजा॑ वि॒द्वान्यक्ष्मा॑दमुच्यत ॥९८॥

हे ओषधयः गन्धर्वाः देवविशेषास्त्वामखनन् स्वेष्टकार्यसिद्ध्यर्थं खननमकुर्वन् इन्द्रश्च त्वामखनत् बृहस्पतिश्च त्वामखनत् हे ओषधे सोमो राजा त्वां च विद्वान् त्वत्सामर्थ्यं जानन्सन् त्वामुपयुज्य यक्ष्मात् महाव्याधेरमुच्यत मुक्तोऽभवत् ॥९८॥

सह॑स्व मे॒ऽअरा॑तीः॒ सह॑स्व पृतनाय॒तः ।
सह॑स्व॒ सर्वं॑ पा॒प्मान॒ꣳ सह॑मानास्योषधे ॥९९॥

हे ओषधे यतस्त्वं सहमानासि शत्रूनभिभवन्ती भवसि अतो मे अरातीः अदानशीलाः शत्रुसेनाः सहस्व अभिभव नास्ति रातिर्दानं यासां ता अरातयस्ताः । पृतनायतः संग्रामकामांश्च सहस्व पृतनां संग्रामं कामयन्ते ते पृतनायन्तस्तान् सुप आत्मनः क्यजिति [पा° ३.१.८.] क्यजन्ताच्छतृप्रत्ययः किं च सर्वं पाप्मानमशुभं सहस्व सहतिरभिभवार्थः ॥९९॥

दी॒र्घायु॑स्तऽओषधे खनि॒ता यस्मै॑ च त्वा॒ खना॑म्य॒हम् ।
अथो॒ त्वं दी॒र्घायु॑र्भू॒त्वा श॒तव॑ल्शा॒ वि रो॑हतात् ॥१००॥

हे ओषधे ते तव खनिता खननकर्ता दीर्घायुर्भूयादिति शेषः यस्मै चातुराय नरायाहं त्वा खनामि सोऽपि दीर्घायुरस्तु अथो अपि च त्वं दीर्घायुरखण्डितजीवना भूत्वा शतवल्शा बह्वङ्कुरा सती विरोहताद्विरोह बह्वङ्कुरोत्पत्त्यस्य तुह्यो-

स्तातङ् इति [पा॰ ७. १. ३५.] तातङ् । वल्शशब्दोऽङ्कुरवाची शतं वल्शाः यस्याः सा शतवल्शा ॥ १०० ॥

त्वमुत्तमास्योषधे तव वृक्षा उपस्तयः ।
उपस्तिरस्तु सोऽस्माकं योऽअस्माँ२॥ऽअभिदासति ॥ १०१ ॥

हे ओषधे त्वमुत्तमा उत्कृष्टासि भवसि वृक्षा शालतालतमालादयस्तवोपस्तयः सन्तु स्त्यै शब्दसंघातयोः उपस्त्यायन्ति उपकारायोपद्रवनिराकरणाय च समीपे संहतास्तिष्ठन्तीत्युपस्तयः वृक्षाः त्वां सेवन्तामित्यर्थः । किं च यो नरोऽस्मानभिदासति अभिहन्ति स नरोऽस्माकमुपस्तिः समीपस्थ उपासकोऽस्तु दासतिर्हिंसाकर्मा ॥ १०१ ॥ अनारभ्याधीताः समाप्ताः ॥ ॥

VII. मा मा हिꣳसीज्जनिता यः पृथिव्या यो वा दिवꣳ सत्यधर्मा व्यानट् ।
यश्चापश्चन्द्राः प्रथमो जजान कस्मै देवाय हविषा विधेम ॥ १०२ ॥

का॰ [१७. ३. ११.] लोगेष्टकाः स्फ्येनाहृत्य बहिर्वेदेरनूकान्तेषूपदधाति तिष्ठन्मा मा हिꣳसीदिति प्रत्यृचं प्रतिदिशं (45.) पुरस्तात्प्रथमम् । ततोऽध्वर्युः स्फ्येन वेदिबहिःप्रदेशाल्लोगेष्टकाश्चतुरो मृत्खण्डान्यत्याप्रमाणानानीयात्मनो दक्षिणोत्तरपूर्वापरमध्यसूत्रप्रान्तेषु पूर्वादि तिष्ठन्मन्त्रचतुष्टयेनोपदध्यादिति सूत्रार्थः ॥ हिरण्यगर्भदृष्टा कदेवत्या त्रिष्टुप् । यः प्रजापतिः पृथिव्या भूमेर्जनिता जनयिता उत्पादकः जनिता मन्त्रऽइति [पा॰ ६. ४. ५३.] णिचो लोपः । वा चार्थे यो वा यश्च दिवं व्यानट् द्युलोकमसृजत् व्यानट् इति व्याप्तिकर्मा [निघ॰ २. १८. (46.)] श्रुतौ तु सृजतेरर्थे व्याख्यातः यो वा दिवꣳ सत्यधर्मासृजतेति श्रुतेः [७. ३. १. २०.] । यश्च चन्द्राः आह्लादिका जगत्कारणभूता अपो जलानि प्रथमः आदिभूतः सञ्जजानोत्पादितवान् तद्द्वारा मनुष्यानुत्पादितवानित्यर्थः यतः श्रुतौ आपश्चन्द्रा इति मनुष्या व्याख्याताः मनुष्या एव हि यज्ञेनाप्नुवन्ति चन्द्रलोकं पितृमार्गानुसारिणः मनुष्या वाऽआपश्चन्द्रा इति श्रुतेः [७. ३. १. २०.] कारणे कार्योपचारात् । कीदृशः प्रथमः शरीरी सत्यधर्मा सत्यं धरतीति सत्यस्य धारयिता स प्रजापतिर्मा मा हिंसीत् मा हन्तु यतः कस्मै काय प्रजापतये हविषा हविः वयं विधेम दद्मः । हवि-

र्दानाम्ना हन्तु । कशब्दस्य सर्वनामत्वाभावात्स्मै-आदेशः छान्दसः । हविषा इति विभक्तिव्यत्ययः । विधतिर्धातुर्दानार्थः ॥ १०२॥

अभ्यावर्तस्व पृथिवि यज्ञेन पयसा सह ।

वपां तेऽअग्निरिषितोऽअरोहत् ॥ १०३॥

अग्निदेवत्या उष्णिक् हे पृथिवि यज्ञेनास्मच्चिकीर्षितेन पयसा तत्फलभूतेन दुग्धादिभोगेन च सह अभ्यावर्तस्व आभिमुख्येनागच्छ । कथमागन्तव्यमत आह इषितः प्रजापतिप्रेषितोऽग्निः ते तव वपां त्वचं पृष्ठं वपासदृशमिमं प्रदेशमरोहत् आरोहतु । अनयर्चा दक्षिणे लोगेष्टकोपधानम् (47.) ॥ १०३॥

अग्ने यत्ते शुक्रं यच्चन्द्रं यत्पूतं यच्च यज्ञियम् । तद्देवेभ्यो भरामसि ॥ १०४॥

अग्निदेवत्या गायत्री पश्चाल्लोगेष्टकोपधाने विनियुक्ता । हे अग्ने यत्ते तवाङ्गं शुक्रं शुक्लं शुद्धं दीप्तिमत् यच्चान्यदङ्गं चन्द्रमाह्लादकरं यदन्यत्पूतं पवित्रं यच्चान्यदङ्गं यज्ञियं यज्ञार्हं तत्सर्वं श्लाघ्यरूपं देवेभ्यो देवानामर्थे भरामसि भरामः सम्पादयामः ॥ १०४॥

इषमूर्जमहमित आदमृतस्य योनिं महिषस्य धाराम् ।

आ मा गोषु विशत्वा तनूषु जहामि सेदिमनिराममीवाम् ॥ १०५॥

आशीर्दैवी (48.) त्रिष्टुप् पादत्रयस्योत्तरतो लोगेष्टकोपधाने विनियोगः । इषमन्नमूर्जं तदुपसेचनं दधिपयोघृतादिकमृतस्य सत्यस्य योनिं स्थानं विद्यात्रयम् महिषस्य महत इज्यावतोऽग्नेर्धारां धारणामाहुतिं वा इतोऽस्मात्प्रदेशादुदीच्या दिशः सकाशादहमादमग्नि भक्षयामि स्वीकरोमीत्यर्थः अद भक्षणे लङ् । किं च एतत्सर्वमिडादिकं मा मामाविशतु आगत्य प्रविशतु तनूषु मदीयपुत्रादिशरीरेषु गोषुमदीयधेन्वादिपशुषु चाविशतु ॥ का° [१७.३.१३.] उत्तरस्याः सिकताः प्रमार्ष्टि जहामि सेदिमिति । उत्तरलोगेष्टकातः सिकताः पातयति ॥ नास्ति इरान्नं यस्यां तामनिरामन्नरहिताममीवां व्याधियुतां सेदिमवसादमहं जहामि त्यजामि अन्नाभावरोगदुःखानि मे मा सन्त्वित्यर्थः ॥ १०५॥

DDD*

अग्ने तव श्रवो वयो महि भ्राजन्तेऽअर्चयो विभावसो ।
बृहद्भानो शवसा वाजमुक्थ्यं दधासि दाशुषे कवे ॥ १०६ ॥

का॰ [१७. ३. १५.] अग्ने तवेति सिकता न्युप्य छादयत्यात्मानम् । षडृचेनोत्तरवेदौ सिकताः प्रक्षिप्य ताभिः पुच्छपक्षं विनात्मानं छादयेत् ॥ पावकाग्निदृष्टं षडृचमग्निदेवत्यम् । आद्ये द्वे विष्टारपङ्क्ती (49.) यस्या द्वितीयतृतीयपादौ द्वादशार्णौ आद्यतुर्यावष्टकौ सा विष्टारपङ्क्तिः । हे अग्ने हे विभावसो विभा दीप्तिरेव वसु धनं यस्य तत्सम्बोधनं हे कान्तिधन तव वयो धूमः अर्चयो दीप्तयश्च भ्राजन्ते दीप्यन्ते वीयते भक्ष्यते प्राणिभिरिति वयोऽन्नम् वी कान्त्यसनस्वादनव्याप्तिषु धूमस्याकृतिपरिणामद्वारेणान्नहेतुत्वाद्वयोऽत्र धूम उच्यते । कीदृशं वयः श्रवः श्रावयति द्युलोके कृतं कर्मेति श्रवः धूमदर्शनाद्देवानां कर्मज्ञानम् । तथा महि महत् नभोगामित्वात् धूमो वाऽअस्य श्रवो वयः स ह्येनममुष्मिंल्लोके श्रावयतीति श्रुतेः [७. ३. १. २९.] । किं च बृहन्तो महान्तो भानवो रश्मयो यस्य तत्सम्बुद्धौ हे बृहद्भानो हे कवे क्रान्तदर्शिन् विद्वन् यजमानाभिप्रायज्ञ दाशुषे हविर्दत्तवते यजमानाय शवसा बलेन सह वाजमन्नं त्वं दधासि ददासि । कीदृशं वाजम् उक्थ्यम् उक्थः शस्त्राद्युपेतो यज्ञस्तद्योग्यं यज्ञपर्याप्तमन्नं (50.) ददासीत्यर्थः ॥ १०६ ॥

पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना ।
पुत्रो मातरा विचरन्नुपावसि पृणक्षि रोदसीऽउभे ॥ १०७ ॥

हे अग्ने त्वं भानुना दीप्त्या उदियर्षि उद्गच्छसि उत्कर्षं प्राप्नोषीत्यर्थः कीदृशस्त्वं पावकवर्चाः पावकं शोधकं वर्चो दीप्तिशक्तिर्यस्य सः । शुक्रवर्चाः शुक्रं शुक्लं निर्मलं वर्चो यस्य । अनूनवर्चाः अनूनमहीनं वर्चो यस्य पूर्णशक्तिः । किं च हे अग्ने त्वं विचरन् सर्वतः प्रचरन्सन् उपावसि उप संगम्य पालयसि सदेवमनुष्यं जगद्रक्षसि । तत्र दृष्टान्तः पुत्रो मातरा यथा पुत्रश्चरमे वयसि मातरा मातापितरौ उपावति तद्वत् पितरामातरा च छन्दसीति [पा॰ ६. ३. ३३.] निपातः । किं च उभे रोदसी द्यावापृथिव्यौ पृणक्षि पूरयसि हविषा द्यां वृष्ट्या भूमिं पूरयसीत्यर्थः इमे

वै द्यावापृथिवी रोदसी ते ऽएष उभे पृणाक्ति धूमेनामूं वृष्ट्येमामिति [७. ३. १. ३०.] श्रुतेः। तं त्वां स्तुम इति वाक्यशेषः॥१०७॥

ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मन्दस्व धीतिभिर्हितः।
त्वेऽइषः संदधुर्भूरिवर्पसश्चित्रोतयो वामजाताः॥१०८॥

तिस्रः सतोबृहत्यः यस्या आद्यतृतीयौ द्वादशकौ द्वितीयतुर्यावष्टकौ सा सतोबृहती। ऊर्क् जलं नपात्पौत्रः हे ऊर्जो नपादपां पौत्र अद्भ्य ओषधिवनस्पतयो जायन्ते तेभ्योऽग्निर्जायतऽइत्यपां पौत्रत्वमग्नेः। यद्वा ऊर्जोऽन्नस्य नपात् न पातयति नाशयति नपात् पतेर्णिजन्तात्क्विप् हे अन्नस्याविनाशक। हे जातवेदः जातप्रज्ञान धीतिभिः कर्मभिर्निमित्तभूतैर्हितः स्थापितः सन् सुशस्तिभिः शोभनाभिः शस्तिभिः स्तुतिभिः कृत्वा त्वं मन्दस्व मोदस्व हृष्टो भव मदिङ् स्वपने जाड्ये मदे मोदे स्तुतौ गताविति धातुः। किमिति हर्षः कार्यस्तत्राह यजमानाः त्वे त्वयि इषो हविर्लक्षणान्यन्नानि संदधुः जुहुवुः हविःप्राप्त्या हर्षः कार्य इत्यर्थः। कीदृशा यजमानाः भूरिवर्पसः वर्प इति रूपनाम [निघ० ३. ७.] भूरीणि वर्पांसि येषां ते नानारूपाः। चित्रोतयः चित्रा विचित्रा नानाविधा ऊतयो रक्षा अवनानि अन्नानि तर्पणानि वा त्वत्कृतानि येषां ते त्वया तर्पिता इत्यर्थः। वामजाताः वामं वननीयं सम्भजनीयं जातं जन्म येषां ते विशिष्टदेशजातिकुलोत्पन्ना इत्यर्थः ॥१०८॥

इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायोऽअमर्त्य।
स दर्शतस्य वपुषो विराजसि पृणक्षि सानसिं क्रतुम्॥१०९॥

हे अमरणधर्मन् हे अग्ने रायो धनानि अस्मे अस्मासु त्वं प्रथयस्व विस्तारय। कीदृशस्त्वं जन्तुभिः प्राणिभिर्हविःप्रदैरध्वर्युप्रभृतिभिः इरज्यन्दीप्यमानः। किं च यस्त्वमीदृशो धनप्रथयिता स त्वं दर्शतस्य दर्शनीयस्य वपुषः चित्याग्निरूपस्य शरीरस्य मध्ये विराजसि विशेषेण दीप्यसे विभक्तिव्यत्ययो वा दर्शतेन वपुषा ज्वालालक्षणेन शरीरेण विराजसि। सानसिं चिरंतनं क्रतुं संकल्पं पृणक्षि पूरयसि सर्वेष्टं ददासीत्यर्थः॥१०९॥

इष्कर्तारमध्वरस्य प्रचेतसं क्षयन्त७ राधसो महः ।
रातिं वामस्य सुभगां महीमिषं दधासि सानसि७ रयिम् ॥११०॥

हे अग्ने अध्वरस्य यज्ञस्य इष्कर्तारं निस उपसर्गस्य नलोपः पूर्वमुक्तः [८३.] निष्कर्तारं निश्चयेन कर्तारं यज्ञनिष्पादकं प्रचेतसं प्रकृष्टचित्तयुक्तं क्षयन्तं क्षि निवासगत्योः विशिष्टस्थाने निवसन्तमीदृशं यजमानं प्रति वामस्य वननीयस्य महो महतो राधसो धनस्य रातिं दानं (51.) त्वं दधासि ददासि । किं च सुभगां सुष्ठु भजनीयां महीं महतीमिषमन्नं च ददासि । सानसिं पुराणं रयिं धनमस्मर्यमाणविषयं निधानलक्षणं च दधासि निधिं दर्शयसीत्यर्थः ॥११०॥

ऋतावानं महिषं विश्वदर्शतमग्नि७ सुम्नाय दधिरे पुरो जनाः ।
श्रुत्कर्ण७ सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा ॥१११॥

उपरिष्टाज्ज्योतिः । यस्यास्त्रयः पादा द्वादशाक्षराश्चतुर्थोऽष्टाक्षरः सोपरिष्टाज्ज्योतिः । मानुषा विभक्तेराकारः (52.) मनुष्या जना मनुष्यजातियुक्ता जनत्व (53.) ऋत्विग्यजमानाः युगा विभक्तेराकारः युगशब्दः कालवाची युगैः कालैः पौर्णमास्यमावास्यादिभिर्निमित्तैः गिरा वेदवाचा कृत्वा सुम्नाय यज्ञाय त्वा त्वामग्निं पुरोऽग्रतः पूर्वभागे आह्वनीयरूपेण दधिरे स्थापितवन्तः । किम्भूतं त्वामृतवानमृतमस्यास्तीति ऋतवा तं सत्यवन्तं छान्दसो दीर्घः छन्दसीवनिपौ वाच्यौ वंश्च मतुप् चेति [पा० ५.२.१०९. वा० २.] अस्त्यर्थे वन्प्रत्ययः । महिषं महान्तं विश्वदर्शतं सर्वस्य दर्शनीयं श्रुत्कर्णं शृणुत इति श्रुतौ क्विप् श्रुतौ कर्णौ यस्य तम् यद्विज्ञाप्यते तत्सत्यमेव कर्णाभ्यां श्रुत्वा सम्पादयतीत्यर्थः । सप्रथस्तमं प्रथनं प्रथः कीर्तिः प्रथ प्रख्याने अस्मादसुन्प्रत्ययः प्रथसा सह वर्तमानः सप्रथाः अतिशयेन सप्रथाः सप्रथस्तमस्तमतिकीर्तिमन्तम् । दैव्यं देव एव दैव्यस्तं स्वार्थे यत् यद्वा देवेभ्यो हितम् ॥१११॥

आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य संगथे ॥११२॥

का० [१७.३.१६.] आप्यायस्वेति सिकतालम्भनमृग्भ्याम् । आत्मनि विस्तारिताः सिकताः स्पृशति ऋग्द्वयेन ॥ गोतमदृष्टाः सोमदेवत्यास्तिस्रो गायत्रीत्रिष्टुबु-

त्रिकछन्दस्काः आप्यायस्व मदिन्तमेति [११४.] तृतीयस्या विनियोगः सूत्रे नास्ति। हे सोम विश्वतः सर्वस्मात् वृष्ण्यं वीर्यं सर्वभूतोत्पत्तिकृद्बीजं ते तव समेतु समागच्छतु तेन च वीर्येण त्वमाप्यायस्व सर्वतो वर्धस्व। किं च वाजस्यान्नस्य संगथे संगमननिमित्तं भवान्नमस्मासु संगमयेत्यर्थः ॥११२॥

सं ते॒ पयां॑ऽसि॒ समु॑ यन्तु॒ वाजाः॒ सं वृष्ण्या॑न्यभिमाति॒षाहः॑।

आ॒प्याय॑मानो॑ऽअ॒मृता॑य सोम दि॒वि श्रवां॑ऽस्युत्त॒मानि॑ धिष्व ॥११३॥

हे सोम पयांसि पातव्या रसाः ते तव संयन्तु संगच्छन्तामुत अपि च वाजा अन्नानि संयन्तु वृष्ण्यानि रेतांसि ते संयन्तु। कीदृशस्य ते अभिमातिषाहः अभिमातिं पाप्मानं सहतेऽभिभवतीत्यभिमातिसाट् (54.) तस्याभिमातिसाहः षत्वं छान्दसम्। हे सोम पयोऽन्नवृष्ण्यैराप्यायमानः वर्धमानः सन् अमृताय अमरणधर्मिण्यै प्रजात्यै पुत्रादिवृद्ध्यै यजमानस्य भवेति शेषः अमृतशब्देन श्रुत्या प्रजातिर्व्याख्याता तथा च श्रुतिः [७.३.१.४६.] प्रजात्यां तदमृतं दधाति तस्मात्प्रजातिरमृतेति। किं च दिवि द्युलोके उत्तमानि उत्कृष्टानि श्रवांसि अन्नानि आहुतिपरिणामजनितानि धिष्व धारय सम्पादय लोकद्वयभोगं सम्पादयेत्यर्थः धि धारणे तुदादिः विकरणव्यत्यय आत्मनेपदं च छान्दसं बहुलं छन्दसीत्युक्तेः [पा° २.४.७३.] सुधितवसुधितेति [पा° ७.४.४५.] सूत्रेण दधातेर्निपातो वा धत्स्वेत्यर्थे ॥११३॥

आप्या॑यस्व मदिन्तम॒ सोम॒ विश्वे॑भिर॒ꣳशुभिः॑।

भवा॑ नः स॒प्रथ॑स्तमः॒ सखा॑ वृ॒धे ॥११४॥

हे मदिन्तम मदयति तर्पयतीति मदी ग्रहादित्वाणिनिप्रत्ययः [पा° ३.१.१३४.] यद्वा मदस्तृप्तिरस्यास्तीति मदी अत इनिठनाविति [पा° ५.२.११५.(55.)] इनि अतिशयेन मदी मदिन्तमः नाद्घस्येति [पा° ८.२.१७.] नान्तात्परस्य तमपो नुडागमः। ईदृश हे सोम विश्वेभिर्विश्वैः सर्वैरंशुभिः सूक्ष्मांशैः आप्यायस्व प्रवृद्धो भव वृद्धः सन्नोऽस्माकं वृधे वर्धनाय सखा सहायो भव द्व्यचोऽतस्तिङ इति [पा° ६.३.१३५.] संहितायां दीर्घः। कीदृशस्त्वं सप्रथस्तमः अत्यन्तं सप्रथाः सकीर्तिः सप्रथस्तमः ॥११४॥

आ ते॑ व॒त्सो मनो॑ यमत्पर॒माच्चि॑त्स॒धस्था॑त् । अग्ने॑ त्वां॑कामया गि॒रा ॥११५॥

का॰ [१७.३.२०.२१.] श्वेतेऽश्वे पुरस्तात्तिष्ठति श्वेताभावेऽश्वेतेऽश्वाभावेऽनडु-
ह्यग्निभ्यः प्रह्रियमाणेभ्योऽनुवाचयति । श्वेतवर्णेऽश्वेऽन्यवर्णे तदभावे वृषे वा
तिष्ठति सति अग्निभ्यः प्रह्रियमाणेभ्योऽनुब्रूहीति प्रेषितो होतोति वत्स इति तृ-
चमनुवक्तीति सूत्रार्थः ॥ अग्निदेवत्यास्तिस्रो गायत्र्यः आद्यावत्सारदृष्टा द्वितीया
विरूपदृष्टा तृतीया प्रजापतिदृष्टैव । हे अग्ने ते तव वत्सः पयोव्रतत्वाद्वत्ससम-
स्त्वत्प्रियो यजमानः परमाच्चित् चिदप्यर्थे उत्कृष्टादपि सधस्थात्सहस्थानात् द्युलो-
कात् मन आहृत्येति शेषः आयमत् आयच्छति गृह्णाति मनोनिग्रहं करोतीत्यर्थः
इतश्च लोप इति [पा॰ ३.४.९७.] इकारलोपे यमदिति रूपम् इषुगमियमां छ इ-
ति [पा॰ ७.३.७७.] छत्वाभावश्छान्दसः । कया गिरा वेदवाचा मन आहृत्येत्यर्थः ।
कीदृश्या गिरा त्वांकामया त्वां कामयते स्तोतुमिच्छतीति त्वांकामा तया अलुक् ।
देवैः सह तिष्ठति (56.) यस्मिन्नग्निः तत्सधस्थं द्युलोकः सध माद इति [पा॰ ६.३.
९६.] सहस्य सधादेशः ॥११५॥

तुभ्यं॒ ता अ॑ङ्गिरस्तम॒ विश्वाः॑ सुक्षि॒तयः॒ पृथ॑क् । अग्ने॒ कामा॑य येमिरे ॥११६॥

हे अङ्गिरस्तम अन्यते जीव्यते येनेत्यन् अन्नम् अन् प्राणने क्विप् अन् अन्नं
गिरति अत्तीत्यङ्गिराः अतिशयेनाङ्गिरा अङ्गिरस्तमः हे अग्ने पृथक् नानाभूताः वि-
श्वाः सर्वाः ताः प्रसिद्धाः स्तुतयः कामायाभिलाषपूरणाय तुभ्यं त्वयि येमिरे निय-
म्यन्ते यजमानैरिति शेषः कर्मणि लिट् । कीदृश्यः सुक्षितयः शोभनाः क्षितयो नि-
वासायाभ्यस्ताः स्वर्गादिशुभस्थानप्रदा इत्यर्थः । यजमाना इष्टकामपूर्त्यै द्युलोकाप्त्यै
च मन्त्रैस्त्वामेव स्तुवन्तीति भावः ॥११६॥

अ॒ग्निः प्रि॒येषु॒ धाम॑सु॒ कामो॑ भू॒तस्य॒ भव्य॑स्य । स॒म्राडेको॒ वि रा॑जति ॥११७॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां द्वादशोऽध्यायः ॥१२॥

अग्निः प्रियेषु अभिरुचितेषु धामसु स्थानेषु धिष्ण्येषु एकोऽसहायभूतः सन्वि-
राजति विशेषेण दीप्यते । कीदृशोऽग्निः भूतस्योत्पन्नस्य भव्यस्य भविष्यतश्च जन-

स्य कामः कामपूरकः । सम्राट् सम्यक् राजमानः शोभमानः भूतस्य भव्यस्य सम्राडीश्वर इति वा । काम्यते सर्वैर्यष्टुमिष्यतऽइति काम इति वा ॥ ११७॥

श्रीमन्महीधरकृते वेददीपे मनोहरे । रुक्मादिवाचनान्तोऽयं (57.) द्वादशोऽध्याय ईरितः (58.) ॥ १२॥ ॥

अथ काण्वशाखायां पाठविशेषः ॥

I. ॥ १-३ ॥ १-३॥ ४-पद्मौ ॥ ४॥ स्तोमं-शफाः ॥ ५॥ सुपर्णोऽसि-पत । ५ ॥ ६॥ ६-१४ [दुरोणसत्] ॥ ७-१५॥ १५-१७ ॥ १६-१८॥ ॥

II. ॥ १८-२३ [वीलुं] ॥ १-६॥ २४-२९ ॥ ७-१२॥ ३०॥ ॥

III. ॥ ३०-४४ [कामाः स्वाहा] ॥ १-१५॥ ४५॥ ॥

IV. ॥ ४५-५१ [इलामग्ने] ॥ १-७॥ ५२-५४ [योनाऽअसीषदन्] ॥ ८-१०॥ ५५-६१ [योनाऽअभारुखा] ॥ ११-१७॥ ६२॥ ॥

V. ॥ ६२-६७ [सुम्नया] ॥ १-६॥ ६८ ॥ ७॥ ६९ [कर्तमस्मे] ॥ ८॥ ७०-७४ [सजोषसाऽअश्विना - इलया -] ॥ ९-१३॥ ७५॥ ॥

VI. ॥ ७५-७७ [प्रतिगृभ्णीत] ॥ १-३॥ ७८-८० [समिताऽइव] ॥ ४-६॥ ८१-९१ [अवयतीः समवदन्त दिव -] ॥ ७-१७॥ ९२-९४ ॥ १८-२०॥ ९७ ॥ २१॥ ९५ [द्विपच्चतुष्पदस्मा॰] ॥ २२॥ ९६ [संवदन्ते] ॥ २३॥ ९८ ॥ २४॥ १०१ ॥ २५॥ १००॥ ॥

VII. ॥ १०२-११७ [सम्रालिको] ॥ १-१६॥ ११६॥ ॥ सप्तानुवाकेषु षोडशाधिकं शतम् ॥ ॥

इति काण्वीयायां वाजसनेयसंहितायां त्रयोदशोऽध्यायः ॥ ॥

I. मयि गृह्णाम्यग्रेऽअग्निꣳ रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय । मामु देवताः सचन्ताम् ॥ १॥

द्वादशेऽध्याये (1.) उखाधारणगार्हपत्यचयनक्षेत्रकर्षणौषधवपनादिमन्त्रा उक्ता-स्त्रयोदशे पुष्करपर्णाद्युपधानमन्त्रा उच्यन्ते ॥ का° [१७. ३. २७.] उत्तरवेदिमपरेण तिष्ठन्यजमानो मयि गृह्णामीति जपति । उत्तरवेदेः पश्चात्तिष्ठन्यजमानो जुहोति ॥ अग्निदेवत्या ककुप् यस्या मध्यपादो द्वादशक आद्यतृतीयावष्टकौ सा ककुप् अत्र मध्यश्चतुर्दशकस्तेन द्व्यधिका । अहं यजमानोऽग्रे प्रथमं मयि आत्मनि अग्निं गृह्णामि धारयामि ततोऽग्निं चिनोमीति शेषः । किमर्थं रायो धनस्य पोषाय पुष्ट्यर्थम् ॥ सुप्रजास्त्वाय शोभना प्रजा यस्य स सुप्रजाः सुप्रजसो भावः सुप्रजस्त्वम् तस्मै दीर्घ-श्छान्दसः शोभनपुत्रादिनिष्पत्त्यै । सुवीर्याय शोभनसामर्थ्याय वीर्यं शक्तिः । किंच उकारोऽप्यर्थे देवता अपि मां सचन्तां सेवन्तां संगच्छन्ताम् उ एवार्थे वा देवता मामेव सचन्ताम् ॥ १ ॥

अपां पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानम् ।
वर्धमानो महाँ२॥ऽआ च पुष्करे दिवो मात्रया वरिम्णा प्रथस्व ॥ २ ॥

का° [१७. ४. १.] पुष्करपर्णमुपदधाति स्तम्बे पूर्ववत् । ततोऽध्वर्युः कुशस्तम्बोपरि कमलिनीपत्रमुपदधाति पूर्ववदित्युखासम्भरणवत् तेनापां पृष्ठमिति मन्त्रेण पुष्करऽइत्यन्तेनोपधानं दिवो मात्रयेति तस्य मार्जनमिति सूत्रार्थः ॥ व्याख्यातः [११. २९.] ॥ २ ॥

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ ३ ॥

का° [१७. ३. २९.] तस्मिन्रुक्ममधःपिण्डं ब्रह्म जज्ञानमिति । तस्मिन्पुष्करपर्णे पूर्वं कण्ठधृतं रुक्ममधःपिण्डमुपदधाति ॥ आदित्यदेवत्या त्रिष्टुप् । वीत्युपसर्ग आव इति (2.) क्रियापदेन सम्बध्यते व्यवहिताश्चेति [पा° १. ४. ८२.] पाणिनिस्मरणात् ब्रह्म बृहत् रुक्मरूपोऽयमादित्यः सीमतः सीमानं मर्यादां भूगोलमध्यभागमारभ्य सुरुचः सुष्ठु रोचन्ते शोभन्ते तान्सुरोचनानिमान् लोकान्वि आवः विवृतानकरोत्स्वप्रकाशेन । कीदृशं ब्रह्म प्रथममादौ पुरस्तात्पूर्वस्यां दिशि जज्ञानं जायमानं दृश्यमानं जनेः शानचि शपः श्लौ सति जज्ञानमिति रूपम् । किं

च वेनः कामनीयो मेधावी वा स आदित्यः बुध्न्या बुध्नमन्तरिक्षं तत्र भवा बुध्न्या दिशः विवः विवृणोति । सतो विद्यमानस्य मूर्तस्य घटपटादेर्योनिं स्थानमसतोऽमूर्तस्य वाय्वादेश्च योनिं प्रभवं विवः प्रकाशयति वृणोतेः शपि लुप्ते लङि गुणे च व इति रूपमडभाव आर्षः बहुलं छन्दस्यमाङ्योगेऽपीति [पा° ६. ४. ७५.] वचनात् । कीदृशीर्बुध्न्याः उपमाः उप समीपे मान्ति भूतानि यासु ता उपमाः सावकाशा इत्यर्थः । अत एवास्य जगतो विष्ठाः विविधस्थानभूताः विविधं तिष्ठन्ति यासु ताः अम्बाम्बगोभूमीत्यादिना [पा° ८. ३. ९७.] षत्वम् । आदित्य एव लोकान्दिशो भूतानि चाभिव्यनक्तीत्यर्थः ॥ ३ ॥

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ ४ ॥

का° [१७. ४. ३.] उत्तानं प्राञ्चं हिरण्यपुरुषं तस्मिन्हिरण्यगर्भ इति । तस्मिन्रुक्मे प्राञ्चमुत्तानं हिरण्यं पुरुषाकारमृग्द्वयेनोपदधाति ॥ हिरण्यगर्भदृष्टा प्रजापतिदेवत्या त्रिष्टुप् । हिरण्ये हिरण्यपुरुषरूपे ब्रह्माण्डे गर्भरूपेणावस्थितः प्रजापतिर्हिरण्यगर्भः भूतस्य प्राणिजातस्याग्रे समवर्तत प्राणिजातोत्पत्तेः पुरा स्वयं शरीरधारी बभूव । स च जातः उत्पन्नमात्र एक एवोत्पत्स्यमानस्य सर्वस्य जगतः पतिरीश्वर आसीत् । स एव पृथिवीमन्तरिक्षं द्यां द्युलोकमुतापि चेमां भूमिं लोकत्रयं दाधार धारयति तुजादीनां दीर्घोऽभ्यासस्येति [पा° ६. १. ७.] अभ्यासदीर्घः । पृथिवी भूः स्वयम्भूरित्यन्तरिक्षनामसु [निघ° १. ३.] पठितत्वात्पृथिवीशब्देनान्तरिक्षलोकोऽत्रोच्यते । कस्मै काय प्रजापतये देवाय वयं हविषा विधेम हविर्दद्मः विभक्तिव्यत्ययः ॥ ४ ॥

द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः ।
समानं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥ ५ ॥

देवश्रवोदृष्टादित्यदेवत्या त्रिष्टुप् । यः पूर्वः प्रथमो मुख्यो द्रप्स आदित्यः पृथिवीमन्तरिक्षमनुचस्कन्द अनुस्कन्दति गच्छति सिञ्चतीत्यर्थः मनुष्यादिधारणाय । द्यां द्युलोकं चानुसिञ्चति आहुतिपरिणामभूतेन रसेन देवादिधारणाय । य इमं

योनिं स्थानं भूलोकमनुस्कन्दति आगच्छति आहुतिग्रहणाय । एवं समानं योनिं सर्वेषां तुल्यं स्थानं लोकत्रयमनु संचरन्तं द्रप्समादित्यं सप्त होत्रा अनु जुहोमि विभक्तिव्यत्ययः सप्तसु होत्रासु दिक्षु स्थापयामि हिरण्यपुरुषरूपेण सर्वदिक्षु सूर्यमेव स्थापयामीत्यर्थः असौ वाऽआदित्यो द्रप्सो दिशः सप्त होत्रा अमुमादित्यं दिक्षु प्रतिष्ठापयतीति [७.४.१.२०.] श्रुतेः पूर्वादि चतस्रो दिशः अध एका उपर्येका मध्ये चैकेति सप्त दिशो ज्ञेयाः ॥५॥

नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ।
येऽअन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥६॥

का° [१७.४.६.] उपतिष्ठते यजमानो नमोऽस्त्विति । यजमानो हिरण्यपुरुषं पश्यन्नृक्त्रयं पठेत् ॥ सर्पदेवत्यास्तिस्रोऽनुष्टुभः । ये के च ये केचित् सर्पन्ति सर्पा लोकाः पृथिवीमनु गताः तेभ्यः सर्पेभ्यो नमोऽस्तु नमस्कारो भवतु । अन्तरिक्षे लोके ये वर्तमानाः सर्पाः ये च दिवि द्युलोके ये वर्तमानाः सर्पास्तेभ्यः सर्पेभ्यो नमोऽस्तु इमे वै लोकाः सर्पा इति [७.४.१.२५.] श्रुतेः सर्पशब्देन लोका उच्यन्ते ॥६॥

या इषवो यातुधानानां ये वा वनस्पतीँ॥रनु ।
ये वावटेषु शेरते तेभ्यः सर्पेभ्यो नमः ॥७॥

यातुं यातनां दुःखं दधति ते यातुधाना रक्षःप्रभृतयस्तेषां याः सर्पजातय इषवो बाणरूपेण वर्तन्ते ये वान्ये वनस्पतीन् चन्दनादिवृक्षाननुवेष्ट्य स्थिताः ये वा ये चान्ये अवटेषु बिलेषु शेरते स्वपन्ति तेभ्यः सर्पेभ्यो नमोऽस्तु ॥७॥

ये वामी रोचने दिवो ये वा सूर्यस्य रश्मिषु ।
येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमः ॥८॥

दिवो द्युलोकस्य रोचने दीप्तस्थाने ये वामी सर्पा अस्माभिरदृश्यमानाः सन्ति रोचनो ह नामैष लोको यत्रैष एतत्तपतीति श्रुतिः । तथा सूर्यस्य रश्मिषु किरणेषु ये च सर्पा वसन्ति । येषां सर्पाणामप्सु जलेषु सदः स्थानं कृतं तेभ्यः सर्पेभ्यो नमोऽस्तु ॥८॥

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ२॥ऽइभेन ।
तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥ ९॥

का° [१७.४.७.] उपविश्य पञ्चगृहीतं जुहोति पुरुषे कृणुष्व पाज इति प्रत्यृचं प्रतिदिशं परिसर्पम् । आज्यं संस्कृत्य पञ्चगृहीतमादायात्मानमारुह्य पुरुषान्तिके उपविश्य प्रतिदिशं परिसृप्य-परिसृप्य पुरुषोपरि पञ्चऽर्ग्भिर्जुहोतीति सूत्रार्थः ॥ वामदेवदृष्टा राक्षोघ्नाः प्रतिसराः अग्निदेवत्याः पञ्च त्रिष्टुभः । हे अग्ने पाजः बलं कृणुष्व कुरुष्व पाज इति बलनामसु [निघ° २.९.] पठितम् । तत्र दृष्टान्तः पृथ्वीं विशालां प्रसितिं न प्रसितिमिव प्रसितिर्जालं प्रसितिः प्रसयनात्तन्तुर्वा जालं वेति [निरु° ६.१२.] यास्कोक्तेः षिञ् बन्धने प्रकर्षेण सीयन्ते बध्यन्ते पक्षिणो यया सा प्रसितिः ताम् नकार इवार्थः पक्षिग्रहणाय प्रसारितं जालमिव शत्रुग्रहणाय बलं प्रसारयेत्यर्थः । ततो राजेव नृप इवामवान्सहायवानिभेन गजेन याहि शत्रून्प्रति गच्छ अम् गतौ भजने शब्दे अमन्ति भजन्ति स्वामिनऽइत्यमाः सेवकास्ते ऽस्य सन्तीत्यमवान् पचाद्यजन्तादमशब्दान्मतुप्प्रत्ययः । हे अग्ने अस्ता शत्रूणां क्षेप्तासि अतो रक्षसः राक्षसान्विध्य ताडय व्यध ताडने दिवादिर्ग्रह्यन् ग्रहादित्वात्सम्प्रसारणम् कैः तपिष्ठैः तापकतमैरायुधैः तपन्ति संतापयन्तीति तप्तृणि अतितप्तृणि तपिष्ठानि तैः तुरिष्ठेमेयःस्विति [पा° ६.४.१५४.] इष्ठनि परे तृचो लोपः । कीदृशस्त्वं तृष्वीं प्रसितिं विभक्तिव्यत्ययः तृष्व्या क्षिप्रया प्रसित्या जालेन अनु द्रूणानः शत्रून्मारयन् द्रू हिंसायां क्र्यादिः शानच्प्रत्ययः द्रूणीतिऽसौ द्रूणानः ॥ ९॥

तव भ्रमास आशुया पतन्त्यनुस्पृश धृषता शोशुचानः ।
तपूंष्यग्ने जुह्वा पतङ्गानसंदितो विसृज विष्वगुल्काः ॥ १०॥

हे अग्ने तव ये भ्रमासः भ्रमा वातोद्भूता ज्वालासमूहाः पतन्ति इतस्ततो गच्छन्ति कीदृशा भ्रमाः आशुया आशवः शीघ्रगमनाः आशुशब्दात्परस्य जसः सुपां सुलुगित्यादिना यादेशः । तैर्भ्रमैः तपूंषि तपन्ति संतापयन्ति तानि तपूंषि तापयितृणि रक्षांसि पतङ्गान् पतन्तः सन्तो गच्छन्तीति पतङ्गाः पिशाचास्तांश्चानुस्पृश ज्वालाभिस्तान्दहेत्यर्थः । कीदृशस्त्वं धृषता धृष्णोतीति धृषन् तेन धृषता प्रगल्भेन

धृष्टेन ज्वालौघेन शोशुचानः देदीप्यमानः अत्यन्तं शोचते शोशुच्यतऽइति शोशुचानः शुच दीप्तावित्यस्माद्यङ्लुगन्ताच्छानच्प्रत्ययः । तथा जुह्वा स्रुचा हूयमान इति शेषः । असंदितः अखण्डितः । ईदृशः सन्विषक् सर्वत्र (3.) तिर्यगूर्ध्वमधश्च उल्काः ज्वाला विसृज रक्षोघाताय मुञ्चेत्यर्थः ॥ १० ॥

प्रति स्पशो विसृज तूर्णितमो भवा पायुर्विशोऽअस्या अदब्धः ।
यो नो दूरेऽअघशꣳसो योऽअन्त्यग्ने मा किष्टे व्यथिरादधर्षीत् ॥ ११ ॥

नोऽस्माकं दूरे योऽघशंसः अघं पापं शंसतीच्छति अघशंसः अस्मद्द्रोही यो दूरे वसति यश्चान्ति समीपे अघशंसः हे अग्ने तं प्रति स्पशः स्पश बन्धने स्पशयन्ति बध्नन्तीति स्पशो बन्धनकृतः प्रणिधीन्विसृज प्रेरय । अस्या अस्मदीयायाः विशः प्रजायाः पायुः पातीति पायुः पालको भव । कीदृशस्त्वं तूर्णितमः तूर्णं वेगोऽस्यास्तीति तूर्णी अत्यन्तं तूर्णी तूर्णितमः वेगवत्तरः । अदब्धः अनुपहिंसितः । हे अग्ने एवमनुग्रहे प्रवृत्तस्य ते तव मा किः मा कश्चित् व्यथिः व्यथयतीति व्यथिः व्यथकः शत्रुरादधर्षीत् धार्ष्ट्यं मा करोतु । दूरसमीपस्थानस्मच्छत्रून्प्रति त्वरितो बन्धकान्प्रेरय केनाप्यहिंसितोऽस्मत्प्रजापालको भव राक्षसाश्च त्वां प्रति धृष्टा मा सन्त्वित्यर्थः । धृषो धातोर्लुङि द्विवमडभावश्च मायोगात् ॥ ११ ॥

उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्राँ२॥ ओषतात्तिग्महेते ।
यो नोऽअरातिꣳ समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥ १२ ॥

हे अग्ने त्वमुत्तिष्ठ ततः प्रत्यातनुष्व ज्वाला विस्तारय तिग्मा हेतयो यस्य स तिग्महेतिः तिग्मं तेजतिरुत्साहकर्मणः तत्सम्बोधनं हे तिग्महेते उत्साहवदायुध अमित्राञ्छत्रून् त्वं न्योषतात् नितरां दह उष दाहे तुह्योस्तातङ्ङिति [पा॰ ७.१.३५.] तातङादेशः । हे समिधान समिन्द्धे दीप्यतेऽसौ समिधानः तत्सम्बुद्धौ हे समिधान दीप्यमान नोऽस्माकं योऽरातिं चक्रे करोति दानं प्रतिषेधति तं नीचा नीचैः कृत्वा धक्षि दह दह भस्मीकरणे बहुलं छन्दसीति [पा॰ २.४.७३.] शपि लुप्ते लटि मध्यमैकवचने धक्षीति रूपम् । तत्र दृष्टान्तः शुष्कमतसं न न इवार्थः अतसो वृक्षः शुष्कं वृक्षमिवादातारं निर्दहेत्यर्थः ॥ १२ ॥

a. ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।
अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून् ॥
b. अग्नेष्ट्वा तेजसा सादयामि ॥ १३ ॥

हे अग्ने ऊर्ध्वो भव उद्युक्तो भव अस्मदधि अस्माकमुपरि वर्तमानान् शत्रून्प्रतिविध्य प्रतिताडय । दैव्यानि देवसम्बन्धीनि कर्माणि आविः कृणुष्व प्रकटय । किं च यातुजूनां यातुधानानां स्थिरा स्थिराणि धनूंषि अवतनुहि अवतारय । किं च जाम्यजामिशब्दौ पुनरुक्तापुनरुक्तवचनौ जामिमजामिं पुनरुक्तमपुनरुक्तं कृत्वा पुनः पुनस्ताडितमताडितं वा शत्रून् प्रमृणीहि मृणातिर्मारणार्थः रिपून्मारय ॥ का° [१७. ४. १२.] घृतपूर्णामग्नेष्ट्वेति । कार्ष्मर्यमयीं पादमात्रदीर्घां षडङ्गुलविपुलां घृतपूर्णां प्रागग्रां स्रुचमग्नेष्ट्वेति यजुषाग्निर्मूर्धेति ऋचा चोपदधाति ॥ अग्निर्यं यजुः । हे स्रुक् अग्नेः सम्बन्धिना तेजसा त्वा त्वां सादयामि ॥ १३ ॥

a. अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाᳬ रेताᳬसि जिन्वति ॥
b. इन्द्रस्य त्वौजसा सादयामि ॥ १४ ॥

अग्निर्मूर्धेति व्याख्याता [३. १२.] ॥ का° [१७. ४. १३.] एवमौडुम्बरीमुत्तरतो दधिपूर्णामिन्द्रस्य त्वेति । एवंविधमेवौडुम्बरीं दधिपूर्णां स्रुचमुत्तरे उपदधाति ॥ इन्द्रस्य त्वेति यजुषा भुव इति ऋचा च ॥ इन्द्रदेवत्यं यजुः । हे स्रुक् इन्द्रस्यौजसा तेजसा त्वां सादयामि स्थापयामि ॥ १४ ॥

भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः ।
दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम् ॥ १५ ॥

त्रिशिरोदृष्टाग्निदेवत्या त्रिष्टुप् । हे अग्ने त्वं यदा हव्यवाहं हव्यं वहतीति हव्यवाट् तां हविषो वोढ्रीं जिह्वां ज्वालां चकृषे करोषि लडर्थे लिट् । तदा यज्ञस्य द्रव्यदेवतात्यागात्मनो नेता भुवः भवसि रजसः यज्ञपरिणामरूपोदकस्य च नेता भवसि जगद्रक्षार्थम् भवतेर्लेटि मध्यमैकवचने सिपि इतश्च लोप इति [पा° ३. ४. ९७.] इकारलोपे लेटोऽडाटावित्यडागमे [पा° ३. ४. ९४.] अचि श्नुधाविति

[पा॰ ६. ४. ७७.] उवङादेशे च कृते भुव इति रूपम् । कुत्र नेता भवसीत्यत आह यत्र यस्मिन्स्थाने शिवाभिर्मङ्गलरूपाभिर्नियुद्भिरश्वाभिः त्वं सचसे सम्बन्धं प्राप्नोषि । नियुतो वायोरित्युक्तेर्नियुतो नाम वायोरश्वाः ताभिर्वायुर्लक्ष्यते वायुना चान्तरिक्षं लक्ष्यते । यत्र च दिवि मूर्धानमादित्यं दधिषे धारयसि लिड्डर्थे । किम्भूतं मूर्धानं स्वर्षां स्वः स्वर्गं सनोति ददाति स्वर्षाः षणु दाने विट्प्रत्ययः विड्वनोरनुनासिकस्यादिति [पा॰ ६. ४. ४१.] नकारस्याकारः यद्वा स्वः स्वर्गे स्यति तिष्ठतीति स्वर्षाः तम् षोऽन्तकर्मणि क्विप् । अन्तरिक्षे द्युलोके च यज्ञस्य रजसश्च नेता भवसीत्यर्थः । यत्रेत्यस्य संहितायां निपातस्य चेति [पा॰ ६. ३. १३६.] दीर्घः यस्य तवैतत्कर्म तं त्वां लुग्रूपेण सादयामीति शेषः ॥ १ ॥

II. ध्रुवासि धरुणास्तृता विश्वकर्मणा ।

मा त्वा समुद्र उद्वधीन्मा सुपर्णोऽव्यथमाना पृथिवीं दृंह ॥ १६ ॥

का॰ [१७. ४. १५.] स्वयमातृण्णां पुरुषे शर्करां छिद्रां ध्रुवासीति । पुरुषोपरि ध्रुवेत्यादिकण्डिकाचतुष्टयेन स्वयमातृण्णामुपदधाति कीदृशीं शर्करां पाषाणमयीं छिद्रां स्वाभाविकछिद्रयुतां सच्छिद्राश्ममयीष्टकैव स्वयमातृण्णोच्यतऽइति सूत्रार्थः ॥ ऊर्ध्वबृहती द्वादशाक्षरत्रिपादोर्ध्वबृहती अत्र प्रथमस्त्रयोदशार्णास्तृतीयो दशार्णः । हे स्वयमातृण्णे त्वं ध्रुवा स्थिरासि । कीदृशी त्वं धरुणा भूमिरूपेण विश्वस्य धारयित्री । विश्वं करोतीतिविश्वकर्मा तेन सर्वस्य कर्त्रा प्रजापतिना आस्तृता उपहिता । समुद्रो रुक्मः त्वा त्वां मा उद्वधीत् मा हन्तु । सुपर्णः पुरुषश्च त्वां मोद्वधीत् रुक्मो वै समुद्रः पुरुषः सुपर्ण इति [७. ४. २. ५.] श्रुतेः समुद्रसुपर्णशब्दाभ्यां रुक्मपुरुषावुच्येते । त्वं चाव्यथमाना अचलन्ती सती पृथिवीं दृंह भूमिं दृढीकुरु ॥ १६ ॥

प्रजापतिष्ट्वा सादयत्वपां पृष्ठे समुद्रस्येमन् ।

व्यचस्वतीं प्रथस्वतीं प्रथस्व पृथिव्यसि ॥ १७ ॥

अनुष्टुप् । हे स्वयमातृण्णे प्रजापतिः त्वा त्वां सादयतु स्थापयतु क्व अपां जलानां पृष्ठे उपरि । समुद्रस्य जलसंघातस्य इमन् इमनि अवस्थाने सादयतु इणो

धातोर्मनिन्प्रत्यये एमन्निति रूपम् सुपां सुलुगिति [पा° ७. १. ३९.] सप्तम्या लुक् । किम्भूतां त्वां व्यचस्वतीं व्यचनं व्यचस्तदस्या अस्तीति व्यचस्वती तामभिव्यक्तियुतां । प्रथस्वतीं प्रथनं प्रथः पृथुत्वं तदस्या अस्तीति प्रथस्वती तां विस्तारयुक्ताम् । त्वमपि प्रजापतिसादिता सती प्रथस्व अस्याश्चितेः प्रथनं कुरु यतस्त्वं पृथिव्यसि पृथिव्युत्पन्नत्वात् ॥ १७॥

भूर॑सि॒ भूमि॑र॒स्यदि॑तिरसि वि॒श्वधा॑या॒ विश्व॑स्य॒ भुव॑नस्य ध॒र्त्री ।
पृ॒थि॒वीं य॑च्छ पृ॒थि॒वीं दृ॑ꣳह पृ॒थि॒वीं मा हि॑ꣳसीः ॥ १८॥

प्रस्तारपङ्क्तिः आद्यौ चेत्प्रस्तारपङ्क्तिरित्युक्तेर्यत्राद्यौ द्वादशकावन्त्यावष्टकौ सा प्रस्तारपङ्क्तिः अत्र त्वाद्य एकादशको द्वितीयस्त्रयोदशकस्तृतीयतुर्यौ पञ्चकौ पञ्चमः षडक्षरः एवं पञ्च पादाः । हे स्वयमातृण्णे त्वं भूः सुखानां भावयित्र्यसि । भूमिः पृथिव्यसि भूम्यभिमानिनी देवतासीत्यर्थः । अदितिर्देवमातासि । विश्वधायाः विश्वं दधाति पुष्णातीति विश्वधायाः विश्वं निहितमस्यामिति वा । विश्वस्य भुवनस्य सर्वस्य भूतग्रामस्य धर्त्री धारयित्री तादृशी त्वं पृथिवीं यच्छ नियतां कुरु पृथिवीं दृंह दृढीकुरु पृथिवीं मा हिंसीः पृथिव्या हिंसां मा कुरु ॥ १८॥

विश्व॑स्मै प्रा॒णाया॑पा॒नाय॑ व्या॒नायो॑दा॒नाय॑ प्रति॒ष्ठायै॑ च॒रित्रा॑य ।
अ॒ग्निष्ट्वा॒भिपा॑तु म॒ह्या स्व॒स्त्या छ॒र्दिषा॒ शंत॑मेन॒ तया॑ दे॒वत॑याङ्गिर॒स्वद्ध्रु॒वा सी॑द ॥ १९॥

यजुः एकाधिकार्ष्यनुष्टुप् । हे स्वयमातृण्णे विश्वस्मै सर्वस्मै प्राणायापानाय व्यानायोदानाय प्राणापानव्यानोदानाख्यवायुवृत्तिलाभाय प्रतिष्ठायै कीर्त्यै चरित्राय शास्त्रीयाचरणाय च । प्राणिनामेतत्सर्वसिद्ध्यर्थं त्वां सादयामीति शेषः । किंच मह्या महत्या स्वस्त्या योगक्षेमसम्पत्त्या शंतमेनात्यन्तं सुखकारिणा छर्दिषा गृहेण चाग्निस्त्वा त्वामभिपातु सर्वतो रक्षतु । तया देवतयानुगृहीता त्वं ध्रुवा स्थिरा सती सीदोपविश अङ्गिरस्वदङ्गिरसां चयनानुष्ठाने यथा त्वं स्थिरस्थिता तद्वदिहोपविश ॥ १९॥

काण्डात्काण्डात्प्ररोहन्ती परुषः-परुषस्परि ।

एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥२०॥

का० [१७.४.१८.] मूलाग्रवतीं दूर्वां तस्यां पुरस्ताद्भूमिप्राप्तां काण्डात्काण्डादिति । तस्यां स्वयमातृण्णायां काण्डादिति ऋग्द्वयेन पुरस्ताद्भूमिगताग्रं मूलाग्रयुतां दूर्वामुपदधाति ॥ अग्निदृष्टे दूर्वेष्टकादेवत्ये द्वे अनुष्टुभौ । मूलैर्भूसम्बद्धं पर्व काण्डं भूम्यसम्बद्धं परुः । हे दूर्वे दूर्वेष्टके काण्डात्काण्डात्प्रतिकाण्डं परुषः-परुषः प्रतिपरुः भूमिसम्बद्धासम्बद्धेभ्यः सर्वपर्वभ्यः सकाशाद्यथा त्वं परि समन्तात्प्ररोहन्ती अङ्कुरवती वर्तसे नित्यवीप्सयोरिति [पा० ८.१.४.] वीप्सार्थे काण्डपरुषोर्द्विर्वम् । एवेत्यव्ययमेवमित्यर्थे निपातस्य चेति [पा० ६.३.१३६.] संहितायां दीर्घः हे दूर्वे एवं स्वाङ्कुरविस्तारवत् सहस्रेण शतेन च सहस्रशतशब्दावसंख्यार्थौ असंख्यैः पुत्रपौत्रनप्त्रादिभिर्नोऽस्मान्प्रतनु विस्तारय ॥२०॥

या शतेन प्रतनोषि सहस्रेण विरोहसि ।

तस्यास्ते देवीष्टके विधेम हविषा वयम् ॥२१॥

हे देवि दीप्यमाने हे इष्टके या त्वं शतेन काण्डानां प्रतनोषि विस्तारयसि सहस्रेण चाङ्कुराणां विरोहसि विविधं प्ररूढा भवसि वयं हविषा सह ते स्थानं विधेम परिचरेम ॥२१॥

यास्तेऽअग्ने सूर्ये रुचो दिवमातन्वन्ति रश्मिभिः ।

ताभिर्नोऽअद्य सर्वाभी रुचे जनाय नस्कृधि ॥२२॥

का० [१७.४.२०.] यास्तऽइति द्वियजुषं द्वितीये । दूर्वेष्टकापुरस्ताद्द्वितीये पश्चालोके यास्तऽइति ऋग्द्वयेन द्वियजुःसंज्ञां पद्येष्टकामुपदधातीति सूत्रार्थः ॥ इन्द्राग्निदृष्टे अग्निदेवत्ये द्वे अनुष्टुभौ । हे अग्ने याः ते तव रुचः दीप्तयः सूर्ये सूर्यमण्डले वर्तमानाः सत्यः दिवं द्युलोकमातन्वन्ति प्रकाशयन्ति रश्मिभिः स्वरूपभूतैः किरणैः । ताभिः सर्वाभिः रुग्भिः नोऽस्मान्रुचे रोचनाय शोभायै अद्यास्मिन्दिवि कृधि कुरु । जनाय पुत्रपौत्रादिकाय च कुरु । द्युलोकप्रकाशिकाः सर्वाः कान्तीः

पुत्रांश्चास्मभ्यं देहीत्यर्थः । यद्वा विभक्तिव्यत्ययः नोऽस्माकं जनाय जनं पुत्रादिकं ताभिः रुग्भिः रुचे शोभायै कुरु जगत्प्रसिद्धं पुत्रादिकं देहीत्यर्थः ॥ २२ ॥

या वो॑ दे॒वाः सूर्ये॒ रुचो॒ गोष्वश्वे॑षु॒ या रुचः॑ ।
इन्द्रा॑ग्नी॒ ताभि॒ः सर्वा॑भि॒ रुचं॑ नो धत्त बृहस्पते ॥ २३ ॥

हे देवाः हे इन्द्राग्नी हे बृहस्पते वो युष्माकं सम्बन्धिन्यो या रुचः दीप्तयः सूर्ये सूर्यमण्डले सन्ति गोषु धेनुषु अश्वेषु तुरगेषु च या युष्माकं रुचः सन्ति ताभिः सर्वाभिः रुग्भिः कृत्वा नोऽस्मभ्यं रुचं धत्त दत्त तत्समप्रभानस्मान्कुरुतेत्यर्थः ॥ २३ ॥

a. वि॒राड्ज्योति॑रधारयत् ॥ b. स्व॒राड्ज्योति॑रधारयत् ॥ c. प्र॒जाप॑तिष्ट्वा सादयतु पृ॒ष्ठे पृ॑थि॒व्या ज्योति॑ष्मतीम् । विश्व॑स्मै प्रा॒णाया॑पा॒नाय॑ व्या॒नाय॒ विश्वं॒ ज्योति॑र्यच्छ अ॒ग्निष्टेऽधि॑पति॒स्तया॑ दे॒वत॑याङ्गिर॒स्वद्ध्रु॒वा सी॑द ॥ २४ ॥

का॰ [१७.४.२२.] विराट् स्वराडिति रेतःसिचौ प्रतिमन्त्रम् । द्वियजुषः पूर्वे अव्यवहिते रेतःसिचौ द्वे पद्येष्टके प्राग्लक्षणे अनूकमभितो विराट् स्वराडिति प्रतिमन्त्रमुपदधाति विराडित्युत्तरां स्वराडिति दक्षिणामिति सूत्रार्थः ॥ द्वे यजुषी इदंलोकादोलोकदेवत्ये क्रमात् यजुरनुष्टुभौ । विशेषेण राजतऽइति विराट् अयं लोको ज्योतिरग्निलक्षणमधारयत् धारयति । स्वेनैव राजतऽइति स्वराट् असौ लोको ज्योतिरादित्यलक्षणमधारयत् धारयति । विराडयं लोकः स इममग्निं ज्योतिर्धारयत्यसौ वै लोकः स्वराट् सोऽमुमादित्यं ज्योतिर्धारयतीति [७.४.२.२३.] श्रुतेः ॥ का॰ [१७.४.२३.] प्रजापतिरिति विश्वज्योतिषम् । रेतःसिग्भ्यां पुरो यजमानकृतां प्रथमां विश्वज्योतिःसंज्ञामिष्टकां पद्यां प्राग्लक्षणामुदङ्मुखोऽनूके उपदधाति ॥ विश्वज्योतिर्दैवतं यजुः शक्करीछन्दस्कम् । पृथिव्याः पृष्ठे उपरि ज्योतिष्मतीं ज्योतिषोपेतां त्वा त्वामिष्टकां प्रजापतिः सादयतु स्थापयतु किमर्थं विश्वस्मै सर्वस्मै प्राणायापानाय व्यानाय प्राणादिसम्पत्त्यर्थम् किं च हे इष्टके त्वं विश्वं सर्वं ज्योतिर्यच्छ निगृह्णीष्व देहि वा अग्निश्च ते तवाधिपतिः स्वामी तया देवत-

FFF*

याग्निलक्षणया ध्रुवा स्थिरा सती सीद उपविश अङ्गिरस्वदङ्गिरसां चयने यथा स्थिरासीदः तद्वदत्रापीत्यर्थः ॥ २४ ॥

मधुश्च माधवश्च वासन्तिकावृतूऽअग्नेरन्तःश्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः । ये अग्नयः समनसोऽन्तरा द्यावापृथिवीऽइमे वासन्तिकावृतूऽअभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥ २५ ॥

का० [१७.४.२४.] ऋतव्ये मधुश्च माधवश्चेति । विश्वज्योतिषः पुरो द्वे पश्चे प्राग्लक्षणे ऋतव्येष्टके अनूकमभित उदङ्मुख उपदधाति ॥ ऋतुदेवतं यजुः अष्टोत्तरशताक्षरत्वाच्छन्दो नास्ति । मधुश्चैत्रो मासः माधवो वैशाखः तावुभौ वासन्तिकौ वसन्तसम्बन्धिनौ ऋतू अवयवौ यद्वा मधुमाधवौ वसन्त एव वासन्तिक ऋतुः द्विवचनमेकवचनार्थम् हे तादृश वसन्ताख्य ऋतो त्वं चीयमानस्याग्नेरन्तःश्लेषोऽसि अन्तर्मध्ये व्यवस्थितः सन् श्लेषकोऽसि यथा कुड्यस्यान्तर्दार्ढ्याय काष्ठपाषाणादयः श्लिष्यन्ते तद्वत् । ममाग्निं चिन्वतो यजमानस्य ज्यैष्ठ्याय ज्येष्ठत्वायोत्कर्षाय इमे द्यावापृथिवी द्यावापृथिव्यौ कल्पन्तां स्वोचितमुपकारं सम्पादयतां यद्वा ममेति तवस्थाने व्यत्ययः द्यावाभूमी तवोत्कर्षाय कल्पन्ताम् आपश्चौषधयश्च तव ज्यैष्ठ्याय कल्पन्ताम् समानं व्रतं कर्म येषां ते सव्रताः एकस्मिन् चयनाख्यकर्मण्यवस्थिताः पृथक् नानाभूताः अग्नयः स्वयमातृण्णाद्या इष्टकाः तव ज्यैष्ठ्याय कल्पन्ताम् अग्नयो हैते पृथग्यदेता इष्टका इति श्रुतेरग्निशब्देनेष्टका उच्यन्ते । किं च इमे द्यावापृथिवी अन्तरा अनयोर्द्यावापृथिव्योर्मध्ये वर्तमानाः समनसः एकमनस्का ये अग्नयः अन्यैरपि चिताः तेऽपि वासन्तिकावृतू वसन्तमृतुमभिकल्पमाना सम्पादयन्तः सन्त अभिसंविशन्तु एतत्कर्माश्रयन्तु । तत्र दृष्टान्तः इन्द्रमिव देवाः यथा देवा इन्द्रं परिचरणायाभिसंविशन्ति एवमन्येष्टका वसन्तं परिचरणायाभिसंविशन्तु ॥ सादयति तया देवतया सादिते हे ऋतव्येष्टके युवामङ्गिरसां कर्मणीव ध्रुवे स्थिरे सत्यौ सीदतमुपविशतम् ॥ २५ ॥

अषाढासि सहमाना सहस्वारातीः सहस्व पृतनायतः ।

सहस्वर्वीर्यासि सा मां जिन्व ॥२६॥

का॰ [१७.४.२५.] अषाढासीत्यषाढाम् । अषाढासंज्ञकामिष्टकां पत्नीकृतां पद्यां प्राग्लक्षणामृतव्याभ्यां पूर्वां संलग्नामनूके उपदधाति ॥ सवितृदृष्टेष्टकादेवत्या विराडनुष्टुप् । हे इष्टके त्वमषाढासि शत्रून्न सहते (4.) इत्यषाढा तथा च श्रुतिः [७.४.२.३३.] ते देवा एतामिष्टकामपश्यन्नषाढामिमामेव तामुपादधत तामुपधायासुरान्त्सपत्नान्भ्रातृव्यानस्मात्सर्वस्मादसहन्त तस्मादषाढेति । कीदृशी त्वं सहमाना सहन्त इति सहमाना अभिभवनशीला स्वभावतः अतोऽरातीः अदानशीलाः प्रजाः सहस्वाभिभव । पृतनां संग्राममिच्छन्ति ते पृतनायन्ति पृतनायन्तीति पृतनायन्तः क्यजन्ताच्छतृप्रत्ययः तान्पृतनायतः संग्रामेच्छून् शत्रून्सहस्व । किं च त्वं सहस्रवीर्या बहुसामर्थ्या यासि सा मा मां जिन्व प्रीणीहि ॥२६॥

III. मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥२७॥

का॰ [१७.४.२७.] कूर्मं दधिमधुघृतैरनक्ति मधु वाता इति । मिश्रितैर्दधिमधुघृतैर्ऋक्त्रयेण कच्छपमनक्ति ॥ गोतमदृष्टा विश्वेदेवदेवत्यास्तिस्रो गायत्र्यः ऋतं यज्ञमिच्छतीति ऋतयन् तस्मै ऋतयते यजमानाय वाता वायवो मधु मधुमन्तो रसवन्तो वान्त्विति शेषः । ऋतयतीत्यत्र क्यचि चेति [पा॰ ७.४.३३.] प्राप्तस्येत्वस्य न छन्दस्यपुत्रस्येति [पा॰ ७.४.३५.] अभावः अश्वाघस्यादिति [पा॰ ७.४.३७.] अश्वाघयोरेव क्यच्यात्वविधानादकृत्सार्वधातुकयोः [पा॰ ७.४.२५.] इत्यात्वमपि न । संहितायां तु छान्दसो दीर्घः । मधु मधुमानित्यग्रे [२८.] मतुप्प्रत्ययदर्शनात् सर्वत्र मधुशब्दाग्रे मतुब्ज्ञेयः । सिन्धवः स्यन्दमाना नद्यः समुद्रा वा मधु मधुमत् रसवत् उदकं क्षरन्ति स्रवन्त्वित्यर्थः तिङां तिङ इति [पा॰ ७.१.३९. वा॰ ३.] लोटो लडादेशः । ओषधीः ओषधयः नोऽस्माकं माध्वीः मधुररसोपेताः सन्तु ॥२७॥

मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः । मधु द्यौरस्तु नः पिता ॥२८॥

नक्तं रात्रिर्नोऽस्माकं मधु मधुमत् मधुररसोपेतमानन्दकरमस्तु । उतापि च उषसो दिवसा अपि मधुमन्तः सन्तु । पार्थिवं रजः पृथिवीलोको मातृभूतो मधुमत् मधुररसोपेतमस्तु। पिता पितृभूतो द्यौः द्युलोको मधु मधुमान्मधुररसोपेतोऽस्तु ॥२८॥

मधुमान्नो वनस्पतिर्मधुमाँ२॥ऽअस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥२९॥

वनस्पतिरश्वत्थादिर्नोऽस्माकं मधुमान् रसवान्यज्ञसाधनभूतोऽस्तु सूर्यो मधुमान्संतापराहित्यलक्षणमाधुर्यरसोपेतोऽस्तु गावः यज्ञसाधनभूता रश्मयः नोऽस्माकं माध्वीः मधुमत्यो रसवत्यो भवन्तु रसो वै मध्विति [७.५.१.४.] श्रुतेः वातादीनि रसवन्त्यस्माकं भोग्यानि भवन्त्विति सर्वोऽर्थः ॥२९॥

अपां गम्भन्त्सीद मा त्वा सूर्योऽभितांप्सीन्माग्निर्वैश्वानरः ।
अच्छिन्नपत्राः प्रजा अनुवीक्षस्वानु त्वा दिव्या वृष्टिः सचताम् ॥३०॥

का° [१७.४.२८.५.१.] अरत्निमात्रेऽषाढां दक्षिणेनावकासूपरिष्टाच्च पुरुषमभिमुखमपां गम्भन्निति तिसृभिः । अषाढादक्षिणदेशे हस्तमात्रे पद्मालोकद्वयमन्तराले मुक्त्वा तृतीये पद्मालोके पूर्वमेव स्थापितास्ववकासु शेवालेषु (5.) पुरुषसंमुखमृक्त्रयेण कूर्ममुपदधातीति सूत्रार्थः ॥ स्वराट्पङ्क्तिः दशाक्षरचतुष्पादा तृतीयो द्वादशाक्षरः कूर्मदेवत्या । कूर्मः प्रजापतिरादित्यो वा । तृतीया द्यावापृथिवीया । हे कूर्म अपां जलानां गम्भन् गम्भनि गम्भीरे स्थाने रविमण्डले त्वं सीद उपविश एतद्धापां गम्भिष्ठं यत्रैष एतत्तपतीति [७.५.१.८.] श्रुतेः । तत्रोपविष्टं त्वा त्वां सूर्यो माभिताप्सीत् अभितो मा संतापयतु । वैश्वानरः सर्वनरहितोऽग्निश्च मा संतापयतु । त्वं चात्र स्थितः सन् प्रजा इष्टकारूपा अनुवीक्षस्व निरन्तरं पश्य । कीदृशीः प्रजाः अच्छिन्नपत्राः अच्छिन्नान्यनवखण्डितानि पत्राणि अवयवा यासां ताः अखण्डिता इष्टकाः कुर्वित्यर्थः इमा वै सर्वाः प्रजा या इमा इष्टकास्ता अरिष्टा अनार्त्ता अनुवीक्षस्वेति [७.५.१.८.] श्रुतेः । किं च दिव्या दिवि भवा वृष्टिः त्वा त्वामनु सचतां सेवतामुदकेन नित्यं सिक्तो भवेत्यर्थः ॥३०॥

त्रीन्त्समुद्रान्त्समसृपत्स्वर्गानपां पतिर्वृषभ इष्टकानाम् ।
पुरीषं वसानः सुकृतस्य लोके तत्र गच्छ यत्र पूर्वे परेताः ॥३१॥

का° [१७.५.२.] घट्टयति मध्यमयेति । तिसृणां मध्यमया त्रीन्त्समुद्रानिति ऋचा हस्तस्थमेव कूर्मं कम्पयतीति सूत्रार्थः । कूर्मदेवत्या त्रिष्टुप् । हे कूर्म यो भवान् त्रीन् समुद्रान् लोकान् समसृपत् सम्यक् प्राप्तो भवति सृप्लृ गतौ पुषादीत्यादि-

ना [पा° ३. १. ५१.] च्लेरङ् । समुद्रवन्ति (6.) स्वकारणात्समुद्भवन्तीति समुद्रा लोकास्तान् कीदृशान् स्वर्गान् भोगसाधनभूतान् । कीदृशो भवान् अपां पतिः जलेशः इष्टकानां वृषभः वर्षिता । किं च यत्र यस्मिन्स्थाने पूर्वे पुरातनाः कूर्माः अन्येऽप्यग्निषूपहिताः परेताः परागताः सुकृतस्य शोभनकृतस्याग्नेस्तत्र तस्मिन् लोके स्थाने त्वं गच्छ किं कुर्वन् पुरीषं कृतान्यमूऽन्वसानः आच्छादयन् ॥ ३१ ॥

मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥ ३२ ॥

व्याख्याता [८. ३२.] ॥ ३२ ॥

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥ ३३ ॥

का° [१७. ५. ३.] उलूखलमुसले स्वयमातृणामुत्तरेणारत्निमात्रेऽऔदुम्बरे प्रादेशमात्रे चतुरस्रमुलूखलं मध्यसंगृहीतमूर्ध्वं वृत्तं मुसलं दक्षिणमुलूखलाद्विष्णोः कर्माणीति । चतुष्कोणं मध्यसंकुचितं खातहीनमुडुम्बरतरुजमूर्ध्वमुलूखलम् वृत्तं मुसलम् ते उभे स्वयमातृणोत्तरे देशे तन्मध्याद्धस्तमात्रे तृतीये लोके विष्णोरिति मन्त्रेण सकृदेवोपदधातीति सूत्रार्थः ॥ व्याख्याता [६. ४.] ॥ ३३ ॥

ध्रुवासि धरुणेतो जज्ञे प्रथममेभ्यो योनिभ्योऽअधि जातवेदाः ।
स गायत्र्या त्रिष्टुभानुष्टुभा च देवेभ्यो हव्यं वहतु प्रजानन् ॥ ३४ ॥

का° [१७. ५. ४.] उलूखलऽउखां कृत्वोपशयां पिष्ट्वा न्युप्य पुरस्ताद्ध्रुवासीत्युखाम् । पूर्वमुलूखलोपर्युखां तूष्णीं कृत्वा तत उपशयां मृदं पिष्ट्वोखापुरस्ताद्भूमौ प्रक्षिप्य तत्रोखां मन्त्रद्वयेनोपदध्यादिति सूत्रार्थः ॥ उखादेवत्या त्रिष्टुप् हे उखे धरुणा जगतो धारयित्री त्वं ध्रुवा स्थिरासि अथाग्निजनकत्वेनोखा स्तूयते । योऽग्निरितोऽस्याः उखायाः सकाशात् प्रथममादौ जातवेदाः जातप्रज्ञानोऽग्निरधिजज्ञे तत एभ्यो योनिभ्यः स्वकारणेभ्योऽरण्यादिभ्योऽधिजज्ञे जायते । सोऽग्निः प्रजानन् स्वाधिकारं प्रकर्षेण जानानः सन् गायत्र्या त्रिष्टुभानुष्टुभेति छन्दस्त्रयेण देवेभ्यो देवार्थं हव्यमस्मद्धविर्वहतु ॥ ३४ ॥

इषे राये रमस्व सहसे द्युम्नऽऊर्जेऽअपत्याय ।

64

सम्राडसि स्वराडसि सारस्वतौ त्वोत्सौ प्रावताम् ॥३५॥

उखादेवत्या बृहती । हे उखे त्वं रमस्व अत्र क्रीडां कुरु किमर्थम् इषे अन्नार्थं राये धनार्थं सहसे बलाय द्युम्ने द्युम्नाय यशोऽर्थं द्युम्नं द्योततेर्यशो वान्नं वेति [निरु० ५.५.] यास्कः ऊर्जे उपसेचनाय पयोदधिघृतादिकाय अपत्याय पुत्रपौत्रादिकाय । रमस्वेति सर्वत्र सम्बन्धः । किं च सम्यग्राजतऽइति सम्राडसि स्वेनैव राजतऽइति स्वराडसि । एवम्भूतां त्वां सारस्वतौ सरस्वतीसम्बन्धिनौ उत्सौ उत्स्यन्दनौ कूपौ प्रवाहौ वा त्वा त्वां प्रावतां प्रकर्षेण पालयतां । तौ चोत्सौ मनोवाचौ । शास्त्रज्ञानाय कूप-इवोत्स्यन्दतीति मनः कूपः तत्प्रतिपादनं कुर्वन्ती वागपि कूपः मनो वै सरस्वान्वाक् सरस्वत्येतौ सारस्वतावुत्साविति [७.५.१.३१.] श्रुतिः । यद्वा सारस्वतौ उत्सौ ऋग्वेदसामवेदौ त्वां रक्षताम् तथा च तित्तिरिश्रुतिः ऋक्साम वै सारस्वतावुत्साविति ॥३५॥

अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः । अरं वहन्ति मन्यवे ॥३६॥

का० [१७.५.५.] अग्ने युक्ष्वा हीति प्रत्यृच७ स्रुवाहुती जुहोत्युखायाम् । ऋग्द्वयेनोखामध्ये द्वे आहुती जुहोति ॥ अग्निदेवत्ये द्वे गायत्र्यौ आद्या भरद्वाजदृष्टा द्वितीया विरूपदृष्टा । हे देव दीप्यमान हे अग्ने ये साधवः दान्तास्ते तवाश्वासः हया अरमलमत्यर्थं मन्यवे यज्ञाय वहन्ति प्रापयन्ति देवानिति शेषः तानश्वान्युङ्क्ष्व हि योजय । हि पादपूरणः ॥३६॥

युक्ष्वा हि देवहूतमाँ२॥ऽअश्वाँ॥ऽअग्ने रथीरिव ।
नि होता पूर्व्यः सदः ॥३७॥

अग्ने त्वमश्वान्युङ्क्ष्व योजय हिशब्दः प्रसिद्धौ । कीदृशान् देवहूतमान् देवानाह्वयन्तीति देवहुवः अतिशयेन देवहुवो देवहूतमाः तान् देवानामतिशयेनाह्वातृन् ऋचोऽतस्तिङ इति [पा० ६.३.१३५.] संहितायां युक्ष्वेत्यस्य दीर्घः । दृष्टान्तमाह रथीरिव रथीः रथस्वामी यथाश्वान्योजयति तद्वत् रथोऽस्यास्तीति रथीः ईर् मत्वर्थे । किं च त्वं पूर्व्यः पूर्वम्भवः पुरातनो होता मानुषाद्धोतुः प्रथमोऽग्नी भूत्वा निसदः अस्मिन्यागे होतृषदने निषीद छन्दसीति [पा० ३.४.६.] लोडर्थे

लुङ् । देवह्रतमानश्चानित्यत्रातोऽटि नित्यमिति [पा॰ ८.३.३.] आकारस्यानुनासिकत्वम् दीर्घादटीति [पा॰ ८.३.९.] नस्य रुः ॥३७॥

IV. सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः ।
घृतस्य धारा अभिचाकशीमि हिरण्ययो वेतसो मध्येऽअग्नेः ॥३८॥

का॰ [१७.५.७.] मुखे करोति सम्यक् स्रवन्तीति । सम्यगिति मन्त्रेण पञ्चपशूनां मुखे एकैकं हिरण्यशकलं क्षिपतीति सूत्रार्थः ॥ लिङ्गोक्तदेवता त्रिष्टुप् । हिरण्मयपुरुषोद्देशेनायं मन्त्रः । अग्नेर्मध्ये चितिमध्ये हिरण्ययो वेतसः पुरुषो यो निहितोऽस्ति तं प्रति धेना अन्नानि सम्यक् स्रवन्ति क्षरन्ति हूयमानानि हवींषि तं प्रति गच्छन्तीत्यर्थः अन्नं वै धेना इति [७.५.२.११.] श्रुतेः । कीदृश्यो धेनाः मनसा पूयमानाः पवित्रीक्रियमाणाः कीदृशेन मनसा अन्तर्हृदा (7.) हृदयान्तर्वर्तमानेन हृत्प्रतिष्ठितेन विषयव्यावृत्तेनाव्याकुलेनेत्यर्थः । श्रद्धायुक्तेन मनसा दत्ता इत्यर्थः अन्तर्वै हृदयेन मनसा सतान्नं पूतं य ऋजुरिति [७.५.२.११.] श्रुतेः । तत्र दृष्टान्तः सरितो न नकार इवार्थः सरित इव यथा नद्यः समुद्रं प्रति स्रवन्ति गच्छन्ति तद्वत् । न केवलं धेनाः स्रवन्ति घृतस्य धारा अपि स्रवन्ति । ताश्च धेना घृतधाराश्च हिरण्मयं पुरुषं प्रति स्रवन्तीरहमभिचाकशीमि पश्यामि चाकशीतिः पश्यतिकर्मा यङ्लुगन्तः ॥३८॥

ऋचे त्वा रुचे त्वा भासे त्वा ज्योतिषे त्वा ।
अभूदिदं विश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्य च ॥३९॥

हिरण्यशकलदैवत्यार्षी बृहती पादार्णनियमाभावात् ॥ का॰ [१७.५.९.] नासिकयोर्ऋचे त्वेति । मन्त्राभ्यां पशूनां नसोः शकलप्रासनमित्यर्थः ॥ हे हिरण्यशकल ऋचे ऋग्वेदाय तदुक्तहौत्रादिसिद्धये त्वा त्वां वामनसि प्रास्यामि रुचे दीप्तये शोभाप्राप्त्यै त्वां दक्षिणनसि प्रास्यामि । शिराऽसि प्रत्यञ्चीति [का॰ १७.५.१३.] आदौ वामनसि ततो दक्षिणे ॥ का॰ [१७.५.१०.] अक्ष्योर्भासे त्वेति । भासे त्वेति मन्त्राभ्यां नेत्रयोस्तद्वद्धिरण्यशकलप्रासनम् ॥ भासे कान्त्यै त्वां वामनेत्रे प्रास्यामि ज्योतिषे तेजसे तत्प्राप्त्यै त्वां दक्षनेत्रे प्रास्यामि ॥ का॰ [१७.५.११.] श्रोत्रयोरभूदिदमि-

ति । कर्णयोः प्रास्यति अभूदिदमग्निर्ज्योतिषेति मन्त्राभ्याम् ॥ इदं श्रोत्रं विश्वस्य सर्वस्य भुवनस्य भूतजातस्य वैश्वानरस्य विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितस्याग्नेश्च वाजिनं वाचो ज्ञातृ अभूत् सर्वप्राणिशब्दा वह्नेश्च शब्दोऽपि श्रोत्रेणैव ज्ञायतेऽतः श्रोत्रे हिरण्यं प्रास्यामीति शेषः । वाचमेति जानाति वाजिनं वाच्यूर्वादितेरौणादिको नक्प्रत्ययः छान्दसः कुत्वाभावः कलां जशोऽन्तऽइति [पा° ८.२.३९.] जश्त्वम् । अयमग्निर्वैश्वानर इत्युपक्रम्य तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोतीति श्रुत्यनुवादकोऽयं मन्त्रः । यद्वायमर्थः इदं श्रोत्रेऽस्यमानं हिरण्यं विश्वस्य भुवनस्य वैश्वानरस्याग्नेश्च वाजिनं वीर्यं तेजोजनकमभूत् भवति अतोऽस्यामीति ॥३९॥

अ॒ग्निर्ज्योति॑षा॒ ज्योति॑ष्मान्रु॒क्मो वर्च॑सा॒ वर्च॑स्वान् ।
स॒ह॒स्र॒दा अ॑सि स॒हस्रा॑य त्वा ॥४०॥

हिरण्यशकलदेवत्योष्णिक् द्वौ पादावष्टार्णौ तृतीयो द्वादशको व्यूहेन । दक्षिणश्रोत्रे शकलं प्रास्यति । अयमग्निः ज्योतिषा पशुश्रोत्रस्थितहिरण्यतेजसा ज्योतिष्मान् तेजस्वी अस्तु रुक्मो रोचमानोऽग्निर्वर्चसा हिरण्यकान्त्या वर्चस्वान् कान्तिमानस्तु बाह्यप्रभा ज्योतिः शरीरगतकान्तिर्वर्च इति ज्योतिर्वर्चसोर्भेदः । यद्वा श्रोत्रमेव हिरण्यज्योतिषाग्निरिव ज्योतिष्मदस्तु हिरण्यवर्चसा च वर्चस्वदस्तु रुक्म-इव सुवर्णपुरुष-इव उभयत्रेवाध्याहारेण लिङ्गव्यत्ययेन च योजनेत्यर्थः ॥ का° [१७.५.१४.] सहस्रदा इति पुरुषशिर उद्धृत्य मध्ये । पुरुषशिर आदायोखामध्ये वक्ष्यमाणमन्त्रेणोपदधातीति सूत्रार्थः ॥ हे पुरुष त्वं सहस्रदाः सहस्रसंख्यस्य दातासि अतः सहस्राय सहस्रधनलाभाय त्वा त्वामुद्धरामीति शेषः । आदौ पुरुषशिरसि शकलप्रासनं ततोऽश्वगोऽव्यजानां क्रमेण । एकपशुपक्षे मुखादिषु प्रत्येकं सप्त-सप्त पञ्चकत्व (४.) एकैकमित्यन्ये [का° १७.५.११. शतपथ° ७.५.२.१०.] ॥४०॥

आ॒दि॒त्यं गर्भं॒ पय॑सा॒ सम॑ङ्ग्धि स॒हस्र॑स्य प्रति॒मां वि॒श्वरू॑पम् ।
परि॑वृङ्धि॒ हर॑सा॒ माभिम॑ꣳस्थाः श॒तायु॑षं कृणुहि ची॒यमा॑नः ॥४१॥

का॰ [१७.५.१७.] आदित्यं गर्भमिति प्रतिमन्त्रं क्रमेण । पुरुषादीनां शिरसि पञ्चमन्त्रक्रमेणैकैकमुपदधातीत्यर्थः ॥ पञ्च ऋचोऽग्निदेवत्यास्त्रिष्टुभः । आदौ पुरुषशिर उपदधाति मध्ये । हे पुरुषशिरः त्वमादित्यं चित्याग्निं पयसा समङ्धि संम्रक्षय अञ्जेर्लोटि मध्यमैकवचने रूपम् पयसि स्थाप्य इत्येवमुच्यते । आदत्ते पशूनादित्यवदीष्टे वा सर्वपशूनामित्यादित्यश्चित्योऽग्निः । कीदृशमादित्यं गर्भं गृह्णाति पशूनिति गर्भः पचाद्यच् हृग्रहोर्भश्छन्दसि तम् । सहस्रस्य प्रतिमां बहुधनस्य प्रतिमाभूतं बहुधनप्रदमित्यर्थः । विश्वरूपं सर्वरूपमादित्यत्वात्सर्वरूपप्रकाशकमित्यर्थः सर्वाणि रूपाणि यस्मात् । किं च हरसा सर्ववीर्यापहारकमग्नेर्ज्योतिर्हरस्तेनाग्नितेजसा यजमानं परिवृङ्धि परिवर्जय वृजी वर्जने रुधादिः लोट् । मा अभिमंस्थाः यजमानं मा हिंसीः मन्यतेर्लुङ् अभिपूर्वो मन्यतिर्हिंसार्थः । किं च चीयमानः उपधीयमानः सन्यजमानं शतायुषं शताब्दजीविनं कृणुहि कुरु ॥४१॥

वातस्य जूतिं वरुणस्य नाभिमश्वं जज्ञानꣳ सरिरस्य मध्ये ।
शिशुं नदीनाꣳ हरिमद्रिबुध्नमग्ने मा हिꣳसीः परमे व्योमन् ॥४२॥

अश्वशिर ईशाने उपदधाति । हे अग्ने चित्याग्ने त्वमश्वमिमं मा हिंसीः ज्वालया मा दह । कीदृशं वातस्य जूतिं जूतिर्गतिः प्रीतिर्वा वायोर्गतिस्वरूपं वायुवच्छीघ्रगतिमित्यर्थः वायोः प्रीतिं प्रेमपात्रं वरुणस्य नाभिं जलेशस्य नाभिमिव नाभिः अन्तरं यथा नरेण स्वनाभिर्वस्त्रावरणादिना पाल्यते तद्वद्वरुणेनातिप्रियत्वात्पाल्यम् । यतः सरिरस्य सलिलस्य जलस्य मध्ये समुद्रे जज्ञानं जायमानं जन् जनने ह्वादिः शानच् गमहनेत्युपधालोपः [पा॰ ६.४.९८.] अप्सुयोनिर्वाऽश्व इति श्रुत्यन्तरात् अत एव नदीनां शिशुं बालं नदीपतिः समुद्रः पितात एव नदीनां मातृत्वात्तच्छिशुम् । हरिं हरितवर्णं यद्वारूढं नरं हरतीति हरिस्तम् । अद्रिबुध्नमद्रिर्गिरिः बुध्नं मूलं कारणं यासां ता अद्रिबुध्ना आपस्तज्जातमद्रिबुध्नमपत्यप्रत्ययलोपः यद्वा बुध्नपदे नकारः उपजनश्छान्दसः अद्रिबुद्धमद्रिभिर्बुद्धं ज्ञातम् पथि तत्खुरैः क्षुण्णानद्रीन्पाषाणान्दृष्ट्वा नरैर्ज्ञातं यदत्राश्वो गत इति उत्कृष्टमित्यर्थः । परमे व्योमन् एषु लोकेषु निषीदन्तमिति शेषः इमे वै लोकाः परमं व्योमेति

[७.५.२.१८.] श्रुतेः यद्वा विविधमोम अवनं रक्षणम् परममुत्कृष्टं यद्योम नानोपद्रवेभ्यः पालनं तत्र स्थापितमिति शेषः ॥४२॥

अग्ने॑स्त्वमिन्दु॑मरु॒षं भु॑र॒ण्युम॒ग्निमी॑डे पू॒र्वचि॑त्तिं॒ नमो॑भिः ।
स पर्व॑भिर्ऋतु॒शः कल्प॑मानो॒ गां मा हि॑ꣳसी॒रदि॑तिं॒ वि॒राज॑म् ॥४३॥

गोशिर आग्नेय्यामुपदधाति अहमग्निमीडे स्तौमि ईड स्तुतौ । कीदृशमजस्रमनुपक्षीणाम् इन्दुमिदि परमैश्वर्ये इन्दतीतीन्दुः ऐश्वर्योपेतं यद्वा उन्दी क्लेदे उनत्ति क्लेदयति जनमनांसीतीन्दुः उन्देरिच्चादेरिति [उणा॰ १.१२.] कुप्रत्ययादीकारौ (9.) । अरुषं रोषरहितं यद्वा अरुर्मर्म मर्मस्थानीयं रहस्यम् आराध्यमित्यर्थः । पूर्वचित्तिं पूर्वैर्महर्षिभिः चित्तिं चेतव्यम् (10.) । नमोभिरन्नैर्भुरण्युं भर्तारं सर्वेषां पोष्टारम् । हे अग्ने एवं स्तूयमानः स त्वं गामुपधीयमानां मा हिंसीः मा जहि । कीदृशीमदितिमखण्डितामदीनां वा विराजं विविधं राजमानाम् दुग्धदानाद्गौर्विराट् तस्यै शृतं तस्यै शर इति [३.३.३.२.] दशवीर्याभिप्रायं विराट्त्वम् । कीदृशः त्वं पर्वभिः पश्विष्टकाभिरमावास्यादिपर्वभिर्वा ऋतुशः ऋतौ-ऋतौ कल्पमानः कर्माणि सम्पादयन् ॥४३॥

व॒रू॒त्रीं त्वष्टु॒र्वरु॑णस्य॒ नाभि॒मविं॑ जज्ञा॒नाꣳ रज॑सः॒ पर॑स्मात् ।
म॒हीꣳ सा॑ह॒स्रीमसु॑रस्य मा॒याम॑ग्ने मा हि॑ꣳसीः पर॒मे व्यो॑मन् ॥४४॥

वायव्येऽविशिर उपदधाति । हे अग्ने परमे व्योमन् उत्कृष्टे रक्षणस्थाने स्थापितामविं मा हिंसीः । कीदृशीं त्वष्टुः रूपाणां निर्मातुर्देवस्यानुग्रहाद्वरूत्रीं वृणोति कम्बलादिना छादयति लोकानिति वरूत्री ताम् । वरुणस्य नाभिं नाभिस्थानीयां नाभिवद्रक्षणीयाम् वारुणी त्वाष्ट्री चाविः । परस्माद्रजसः दिग्रूपाल्लोकाज्जज्ञानं जायमानम् श्रोत्रं वै परमꣳ रजो दिशो वै श्रोत्रं दिशः परमꣳ रज इति [७.५.२.२०.] श्रुतेः यद्वा परस्माद्रजसः (11.) प्रजापते रजोगुणाज्जायमानाम् । महीं महतीम् । साहस्रीं सहस्रमूल्यार्हां सहस्रोपकारक्षमां वा । असुरस्य मायामसवः प्राणा विद्यन्ते यस्य सोऽसुरः मत्वर्थे रः प्राणवतो मायां प्रज्ञां मीयते ज्ञायतेऽनया माया प्रज्ञा प्राणिनां प्रज्ञाप्रदामित्यर्थः ॥४४॥

योऽअग्निरग्नेरध्यजायत शोकात्पृथिव्या उत वा दिवस्परि ।
येन प्रजा विश्वकर्मा जजान तमग्ने हेडः परि ते वृणक्तु ॥४५॥

नैर्ऋत्येऽजमुपदधाति । योऽग्निरग्निरूपोऽजोऽग्नेः प्रजापतेः शोकादध्यजायत अग्निसंतापादुत्पन्नः अत्राग्निः प्रजापतिः । उत वा अपि च दिवः शोकात्पृथिव्याश्च शोकाद्योऽजः पर्यजायत उत्पन्नः अग्निपृथिवीदिवां शोकादजोत्पत्तिः श्रुत्योक्ता यद्वै प्रजापतेः शोकादजायत तद्दिवश्च पृथिव्यै च शोकादजायतेति [७.५.२.२१.] । विश्वकर्मा स एव प्रजापतिः येनाजेन वाग्रूपेण प्रजा जजान उत्पादितवान् अजस्य वाग्रूपत्वं ततः प्रजोत्पत्तिः श्रुत्योक्ता वाग्वाऽअजो वाचो वै प्रजा विश्वकर्मा जजानेति [७.५.२.२१.] । हे अग्ने चित्य ते तव हेडः क्रोधः तमजं परिवृणक्तु परित्यजतु त्वयाजे कोपो न कार्य इत्यर्थः ॥ माधवस्तु पृथिव्या उपरि स्थितादुत वा यद्वा दिवः परि द्युलोकोपरि स्थितात् शोकात् शुच दीप्तौ घञन्तः दीप्तियुक्तादग्नेः प्रजापतेः सकाशाद्योऽग्निरूपोऽजोऽध्यजायत विश्वकर्मा येनाजेन प्रजाः पशून् जजान । अजस्य पशुसाधनत्वं तैत्तिरीयश्रुत्योक्तम् ततोऽजस्तूपरः समभवत्ताꣳ स्वायै देवतायाऽआलभत ततो वै प्रजाः पशूनसृजतेति । शेषं पूर्ववत् ॥४५॥

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवीऽअन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च ॥४६॥

का० [१७.५.१८.] चित्रं देवानामित्यर्धर्चशः स्रुवाहुती मध्यमे । अर्धर्चद्वयेन पुरुषशिरस्याहुतिद्वयं जुहोतीत्यर्थः ॥ व्याख्याता [७.४२.] ॥४६॥

V. a. इमं मा हिꣳसीर्द्विपादं पशुꣳ सहस्राक्षो मेधाय चीयमानः ।
मयुं पशुं मेधमग्ने जुषस्व तेन चिन्वानस्तन्वो निषीद ॥
b. मयुं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ॥४७॥

का० [१७.५.१९.] बर्हिर्वेद्युदङ्ङतिष्ठन्नुपतिष्ठतऽउत्सर्गैरिमं मा हिꣳसीरिति प्रतिमन्त्रम् । अग्निरुत्तीर्य वेदेर्बर्हिर्दक्षिणे उदङ्मुखस्तिष्ठन्निमं मेत्युत्सर्गसंज्ञैः पञ्चमन्त्रैः पुरुषादिशिरांस्युपतिष्ठतेऽध्वर्युः एकपशुपक्षे तमेव पञ्चभिरित्यर्थः ॥ अग्निदेवत्याः

पञ्च त्रिष्टुभः आद्ययोरन्ते द्वे यजुषी तिसृणामन्ते त्रीणि-त्रीणि यजूंषि । हे अग्ने सहस्राक्षः सहस्रमक्षीणि यस्य सः हिरण्यशकलरूपसहस्रनेत्रो मेधाय यज्ञाय चीयमानः चयनेन संस्क्रियमाणः सन् त्वमिमं द्विपादं पशुं पुरुषरूपं मा हिंसीः मा दह हिरण्यशकलैर्वाऽएष सहस्राक्षः द्विपाद्वाऽएष पशुर्यत्पुरुष इति च [७.५.२.३१.] श्रुतेः । यदि वादनेच्छा तर्हि मेधं शुद्धं मयुं पशुं तुरङ्गवदनं किम्पुरुषं पशुं जुषस्व सेवस्व भक्षयेत्यर्थः किम्पुरुषो वै मयुरिति [७.५.२.३२.] श्रुतेः मयुं कृष्णमृगं वा जुषस्व मयुर्मृगेऽश्ववदनऽइति कोशोक्तेः । तेन मयुभक्षणेन तन्वः स्वाःलारूपास्तनूः चिन्वानः पोषयन्निह निषीद द्वितीयार्थे तन्व इति प्रथमा । इतो यजुः ते तव शुक् शोकः संतापो मयुं किंनरं मृगं वा ऋच्छतु प्राप्नोतु । किं च यं पुरुषं प्रति वयं द्विष्मः द्वेषं कुर्मः ते तव शुक् तमृच्छतु ॥४७॥

a. इ॒मं मा हि॑ꣳसी॒रेक॑शफं प॒शुं क॑निक्र॒दं वा॒जिनं॒ वाजि॑नेषु ।
गौ॒रमा॑र॒ण्यमनु॑ ते दिशामि॒ तेन॑ चिन्वा॒नस्त॒न्वो॒ निषी॑द ॥
b. गौ॒रं ते॒ शुगृ॑च्छतु॒ यं द्वि॒ष्मस्तं ते॒ शुगृ॑च्छतु ॥४८॥

अथाश्वस्य । हे अग्ने इममेकशफमेकखुरं पशुमश्वं मा हिंसीः एकशफो वाऽएष पशुर्यदश्व इति [७.५.२.३३.] श्रुतेः । कीदृशं कनिक्रदमत्यन्तं क्रन्दितारं हेषमाणम् क्रन्देर्दाधर्तीत्यादिना [पा° ७.४.६५.] यङ्लुकि निपातः । वाजो वेगो विद्यते येषां ते वाजिना वेगवन्तः मत्वर्थे इनप्रत्ययः तेषु मध्ये वाजिनं वेगवन्तम् । ते तुभ्यमारण्यं वनस्थं गौरं गौरवर्णं मृगं दिशामि ददामि तेन तन्वः चिन्वानो निषीदेति पूर्ववत् । ते तव शुग्गौरं गच्छतु ॥४८॥

a. इ॒मꣳ सा॑ह॒स्रꣳ श॒तधा॑र॒मुत्सं॑ व्य॒च्यमा॑नꣳ सरि॒रस्य॒ मध्ये॑ ।
घृ॒तं दुहा॑नामदि॑तिं॒ जना॑याग्ने॒ मा हि॑ꣳसीः पर॒मे व्यो॑मन् ॥
b. ग॒व॒यमा॑र॒ण्यमनु॑ ते दिशामि॒ तेन॑ चि° । c. ग॒व॒यं ते॒ शुगृ॑च्छ° ॥४९॥

अथ गोः । अत्र विशेषणद्वयं स्त्रीलिङ्गं शेषाणि पुंलिङ्गानि व्यत्ययेन उभाभ्यां गौरेव स्तूयते । हे अग्ने परमे व्योमन् उत्कृष्टे स्थाने स्थितमिमं गोरूपं पशुं त्वं

मा हिंसीः । कीदृशं साहस्रं सहस्रमूल्यार्हं सहस्रोपकारक्षमं वा । शतधारं शतसंख्याकक्षीरधारायुतमत एवोत्सम् उत्सः कूपः तत्सदृशम् उत्स-इवोत्सस्तं बहुस्रोतसमित्यर्थः । सरिरस्य मध्ये एषु लोकेषु ततः व्यच्यमानं जनैर्विविधमच्यमानमुपजीव्यमानम् इमे वै लोकाः सरिरमिति [७.५.२.३४.] श्रुतेः । जनाय सर्वलोकाय घृतं दुहानां घृतकारणं क्षीरं क्षरन्तीम् । अदितिमखण्डिताम् । ते तवारण्यं गवयं गोसदृशं पशुविशेषमनुदिशामि । शिष्टमुक्तम् ॥४९॥

a. इ॒ममू॒र्णायुं॑ वरु॑णस्य॒ नाभिं॒ त्वचं॑ पशू॒नां द्वि॒पदां॒ चतु॑ष्पदाम् ।
त्वष्टुः॑ प्र॒जानां॑ प्रथ॒मं ज॒नित्र॒मग्ने॒ मा हिंसीः परमे॒ व्यो॑मन् ॥
b. उष्ट्र॑मार॒ण्यमनु॑ ते दि° । c. उष्ट्रं॑ ते॒ शुग्गृ॑च्छ° ॥५०॥

अथाविः । हे अग्ने परमे व्योमन् स्थाने स्थितमिममविं मा हिंसीः । कीदृशमूर्णायुमूर्णावन्तमूर्णाया युस् । वरुणस्य नाभिं नाभिस्थानीयं प्रियमपत्यमित्यर्थः । द्विपदां नराणां चतुष्पदां गवादीनामुभयरूपाणां पशूनां त्वचम् त्वचमिव त्वचम् त्वग्रक्षकं कम्बलैः छादकत्वात् मनुष्याः शीतनिवृत्त्यै कम्बलं दधते अश्वगोखराद्या अपि मार्दवाय पृष्ठे कम्बलैराच्छादयन्ति । तथा त्वष्टुः प्रजापतेः प्रजानां मध्ये प्रथमं जनित्रं प्रथमोत्पन्नम् एतद्ध (11.) त्वष्टा प्रथमं रूपं विचकारेति [७.५.२.३५.] श्रुतेः । उष्ट्रं प्रसिद्धं ते ददामि । स्पष्टमन्यत् ॥५०॥

a. अ॒जो ह्य॒ग्नेरज॑निष्ट॒ शोका॒त्सो अ॑पश्यज्जनि॒तार॒मग्रे॑ ।
तेन॑ दे॒वा दे॒वता॒मग्र॑माय॒ꣳस्तेन॒ रोह॑माय॒न्नुप॒ मेध्या॑सः ॥
b. श॒र॒भमा॑र॒ण्यमनु॑ ते दि° । c. श॒र॒भं ते॒ शुग्गृ॑च्छ° ॥५१॥

अथाजस्य । हि पादपूरणः । योऽजोऽग्नेः प्रजापतेः शोकात्संतापादजनिष्ट उत्पन्नः शोकाद्दीप्यमानादग्नेः प्रजापतेरजनिष्टेति वा यद्वै प्रजापतेः शोकादजायत तदग्नेः शोकादजायतेति [७.५.२.३६.] श्रुतेः आत्मनो वपामुदखिदत्तामग्नौ प्रगृह्य ततोऽजस्तूपरः समभवदिति तैत्तिरीयेऽपि । स उत्पन्नोऽजोऽग्रे प्रथममुत्पन्नं नरमेव जनितारं स्वोत्पादकं प्रजापतिमपश्यद्दृष्टवान् । किं च एवं प्रशस्तोऽजस्त-

तो देवा इदानींतना अग्रे पूर्वजन्मनि तेनाजेन कर्म कृत्वेति शेषः देवतां देवभा-वमायन्प्राप्ताः तस्य भावस्त्वतलौ । किं च मेध्यासः मेध्या यज्ञयोग्या यजमाना रोहं रोहणीयं स्वर्गं तेनाजेनोपायन् उपगच्छन्ति छन्दसि परे ऽपि [पा° १.४.८१.] । शरभो ऽष्टापदो मृगविशेषः सिंहघाती । शेषमुक्तम् ॥५१॥

त्वं यविष्ठ दाशुषो नॄः पाहि शृणुधी गिरः । रक्षा तोकमुत त्मना ॥५२॥

का° [१७. ६. १.] एत्य च त्वं यविष्ठेति चित्योपस्थानम् । बहिर्वेदेरागत्याग्नि-समीपे ऽर्धचित्यमुपतिष्ठते ॥ उशनोदृष्टानिरुक्ताग्नेयी गायत्री । हे यविष्ठ युवतम यद्वा मिश्रयितृतम गिरो ऽस्मदीयाः स्तुतिवाचः शृणुधि शृणु श्रुशृणुपृकृवृभ्यश्छन्दसि इत्यादिना [पा° ६.४.१०२.] हेर्धिः अन्येषामपि दृश्यत ऽइति [पा° ६.३.१३७.] संहितायां दीर्घः । गिरः श्रुत्वा दाशुषो हविर्दत्तवतो यजमानान्नॄन्मनुष्यान्पाहि रक्ष दाशुष इति ष-ष्ठी वा यजमानस्य नॄन् (12.) पाहीति । दाश्वान्साह्वान्मीढ्वांश्चेति [पा° ६.१.१२.] निपातः । किं च उतापि च त्मना आत्मना तोकं यजमानापत्यं रक्ष द्व्यचो ऽत-स्तिङ इति [पा° ६.३.१३५.] संहितायां दीर्घः । मन्त्रेष्वाङ्यादेरात्मन इति [पा° ६.४.१४१.] आकारलोपः । तोकमपत्यमुतात्मानं च रक्षेति विभक्तिव्यत्ययो वा ॥५२॥

VI. a. अपां त्वेमन्त्सादयामि । b. अपां त्वोद्मन्त्सादयामि । c. अपां त्वा भस्मन्त्सादयामि । d. अपां त्वा ज्योतिषि सादयामि । e. अपां त्वायने सादयामि । f. अर्णवे त्वा सदने सा° । g. समुद्रे त्वा सदने सा° । h. सरिरे त्वा सदने सा° । i. अपां त्वा क्षये सा° । k. अपां त्वा स-धिषि सा° । l. अपां त्वा सदने सा° । m. अपां त्वा सधस्थे सा° । n. अपां त्वा योनौ सा° । o. अपां त्वा पुरीषे सा° । p. अपां त्वा पाथसि सा° । q. गायत्रेण त्वा छन्दसा सा° । r. त्रैष्टुभेन त्वा छन्द-सा सा° । s. जागतेन त्वा छन्दसा सा° । t. आनुष्टुभेन त्वा छन्दसा सा° । u. पाङ्क्तेन त्वा छन्दसा सादयामि ॥५३॥

का° [१७. ६. २.] अपरेण स्वयमातृणामित्यापस्याः पञ्च-पञ्चानूकान्तेष्वपां त्वेमन्निति प्रतिमन्त्रम् । तीर्थेनाग्निमारुह्य स्वयमातृणामपरेण पूर्वानूकान्तमेत्य चतुर्ष्वप्यनूकान्तेष्वपां त्वेमन्निति प्रतिमन्त्रं पञ्च-पञ्चापस्यासंज्ञा इष्टका उपदधातीति सूत्रार्थः ॥ विंशतिरिष्टकादेवत्यानि यजूंषि पञ्चदशापस्यादेवत्यानि पञ्च छन्दस्यादेवत्यानि । हे इष्टके अपस्ये अपामेमन् एमनि वायौ त्वा त्वां सादयामि स्थापयामि इण् गतौ मनिन्प्रत्ययः सप्तम्या लुक् त्वा इत्यस्य पररूपम् [पा° ६. १. ९४. वा° ६.] । अत्रापामिमन्नित्यादीनां श्रुत्योक्तोऽर्थो ग्राह्यः वायुर्वाऽअपामेम (13.) वायौ त्वा॰ सादयामीति [७. ५. २. ४६.] श्रुतेः ॥ अपामोद्मन् ओद्मनि ओषधिषु त्वां सादयामि उन्दी क्लेदे मन्नलोपश्च (14.) गुणः सप्तम्या लुक् ओषधयो वाऽअपामोद्म [७. ५. २. ४७. (15.)] एवमग्रेऽपि तुल्यम् ॥ भस्मन् भस्मनि भस भर्त्सनदीप्त्योः मन् अभ्रे अभ्रं वाऽअपां भस्म [७. ५. २. ४८.] ॥ अपां ज्योतिषि विद्युति विद्युद्वाऽअपां ज्योतिः [७. ५. २. ४९.] ॥ अपामयने भूमौ इयं पृथिव्यपामयनम् [७. ५. २. ५०. (16.)] ॥ अर्णवे सदने स्थाने प्राणरूपे सा° प्राणो वाऽअर्णवः [७. ५. २. ५१.] ॥ समुद्रे सदने सा° मनो वै समुद्रः [७. ५. २. ५२.] ॥ सरिरे सदने वाचि सा° वाग्वै सरिरम् [७. ५. २. ५३.] ॥ अपां क्षये चक्षुषि त्वां सा° चक्षुर्वाऽअपां क्षयो [७. ५. २. ५४.] निवासः ॥ अपां सधिषि श्रोत्रे त्वां सा° श्रोत्रं वाऽअपा॰ सधिः [७. ५. २. ५५.] ॥ अपां सदने दिवि त्वां सा° द्यौर्वाऽअपा॰ सदनम् [७. ५. २. ५६.] ॥ अपां सधस्थे अन्तरिक्षे त्वां सा° अन्तरिक्षं वाऽअपा॰ सधस्थम् [७. ५. २. ५७.] ॥ अपां योनौ समुद्रे त्वां सा° समुद्रो वाऽअपां योनिः [७. ५. २. ५८.] ॥ अपां पुरीषे सिकतासु त्वां सा° सिकता वाऽअपां पुरीषम् [७. ५. २. ५९.] ॥ अपां पाथसि अन्ने त्वां सा° अन्नं वाऽअपां पाथः [७. ५. २. ६०.] ॥ ॥ पञ्च छन्दस्या उपदधाति पञ्चयजुर्भिः । गायत्रेण गायत्र्येव गायत्रं तेन छन्दसा त्वामुपदधामि । त्रैष्टुभेन छन्दसा त्वां सा° । जागतेन छन्दसा त्वां सा° । आनुष्टुभेन छन्दसा त्वां सा° । पाङ्क्तेन छन्दसा त्वां सा° ॥५३॥

VII. a. अ॒यं पु॒रो भुवः॑ । b. तस्य॑ प्रा॒णो भौ॑वाय॒नः । c. व॒स॒न्तः प्रा॑णाय॒नः । d. गा॒य॒त्री वा॑स॒न्ती । e. गा॒य॒त्र्यै गा॑यत्र॒म् । f. गा॒य॒त्राद्उ-

पा॒ऽसुः । g. उ॒पा॒ꣳशो॒स्त्रि॒वृत् । h. त्रि॒वृतो॑ रथन्त॒रम् । i. वसि॑ष्ठ॒ ऋषि॑ः । k. प्र॒जाप॑तिगृहीतया॒ त्वया॑ प्रा॒णं गृ॑ह्णामि प्र॒जाभ्य॑ः ॥५४॥

का॰ [१७. ६. ३.] व्याघारणवत्प्राणभृतः कर्णसहिता दश-दशायं (17.) पुर इति प्रतिमन्त्रम् । प्राणभृत्संज्ञका इष्टका व्याघारणवद्दक्षिणे ऽंसे उत्तरश्रोण्यां दक्षिणश्रोण्यामुत्तरे ऽंसे कर्णसहिता अक्ष्णया संलग्नाः स्वयमातृण्णापर्यन्तं दश दशोपदधातीति सूत्रार्थः ॥ पञ्चाशद्यजूंषि प्राणभृदिष्टकादैवत्यानि प्रतिकण्डिकं दश-दश । प्रथमं दशकं दक्षिणे ऽंसे । कदाचिद्व्याधात्प्रजापतेः प्राणा देवा भूयोत्क्रान्ताः तदा तान्प्रजापतिरूचे किमित्युत्क्रम्यते मामुपगच्छतेति ततः प्राणास्तमूचुर्वयमन्नं विना स्थातुं न शक्नुमस्तदन्नं त्वया सृज्यते चेत्तिष्ठामस्ततः प्रजापतिनोक्तं वयमुभयेऽन्नं सृजामेति तथेत्युक्त्वा प्राणाः प्रजापतिश्चैतदन्नमसृजंस्तेन प्राणान्युपदधतीति इष्टकानां प्राणभृत्संज्ञेत्युक्तं श्रुत्या प्रजापतेर्विस्रस्तात्प्राणा उदक्रामन्नित्यादिकया [८. १. १. ३.] । अथ मन्त्रव्याख्या । योऽयं पुरो भुवश्चाग्निर्वर्तते हे इष्टके त्वं तद्रूपासि प्राण एवाग्निर्भूत्वा पुरस्तिष्ठति अतोऽग्निरूपां त्वामुपदधामीति शेषः एवमग्रेऽपि । पुरस्तादुपधीयते प्रागुद्ध्रियेत प्राङुपचर्यतऽइति पुरोऽग्निः । भवति सर्वरूपेणेति भवत्यस्मात्सर्वमिति वा भुवोऽग्निः तद्रूपेष्टका ध्येयेति भावः तदुक्तं श्रुत्या [८. १. १. ४.] अयं पुरो भुव इत्यग्निर्वै पुरस्तात्तमाह पुर इति प्राञ्चꣳ ह्यग्निमुद्धरन्ति प्राञ्चमुपचरन्त्यथ यद्भुव इत्याहाग्निर्वै भुवोऽग्नेर्हीदꣳ सर्वं भवति प्राणो ह्यग्निर्भूत्वा पुरस्तात्तस्थौ तदेव तद्रूपमुपदधातीति ॥ प्राणस्तस्याग्नेरपत्यमिति शेषः अत एव भौवायनः भुवस्याग्नेरपत्यं भौवायनः नडादित्वात्फक् । इष्टके प्राणरूपां त्वां सा॰ प्राणं तस्माद्रूपादग्नेर्निरमिमीतेति [८. १. १. ५.] श्रुतेः ॥ प्राणस्यापत्यं प्राणायनः फक् यो वसन्त ऋतुस्तद्रूपां सा॰ वसन्तमृतुं प्राणान्निरमिमीतेति [८. १. १. ५.] श्रुतेः ॥ वसन्तस्यापत्यं वासन्ती तस्यापत्यमिति [पा॰ ४. १. ९२.] अण् टिड्ढाणञित्यादिना [पा॰ ४. १. १५.] ङीप् या गायत्री छन्दस्तद्रूपां सा॰ गायत्रीं छन्दो वसन्तादृतोर्निरमिमीतेति [८. १. १. ५.] श्रुतेः ॥ गायत्र्यै गायत्रं चतुर्थी पञ्चम्यर्थे गायत्र्याः सकाशाद्गायत्रं सामोत्पन्नं तद्रूपां सा॰ गायत्र्यै छन्दसो गायत्रꣳ साम निरमिमीतेति [८. १. १. ५.] श्रुतेः ॥ गायत्रात्साम्नो य उपांशुग्रहो निर्मितस्तद्रूपां सा॰ गायत्रात्साम्न

उपाꣳशुं ग्रहं निरमिमीतेति [८.१.१.५.] श्रुतेः ॥ उपांशुग्रहान्निर्मितो यस्त्रिवृत्स्तोमस्तद्रूपां सा० उपाꣳशोर्ग्रहात्त्रिवृतꣳ स्तोमं निरमिमीतेति [८.१.१.५.] श्रुतेः ॥ त्रिवृतः स्तोमान्निर्मितं यद्रथन्तरं पृष्ठं तद्रूपां सा० त्रिवृतः स्तोमाद्रथन्तरं पृष्ठं निरमिमीतेति [८.१.१.५.] श्रुतेः ॥ वसत्यधितिष्ठति सर्वजन्तूनिति वस्तातिशयेन वस्ता वसिष्ठः तुरिष्ठेमेयःस्विति [पा० ६.४.१५४.] इष्ठनि तृचो लोपः सर्वाधार ऋषिः ज्ञाता प्राणस्तद्रूपां सा० प्राणो वै वसिष्ठ ऋषिर्यद्वै नु श्रेष्ठस्तेन वसिष्ठोऽथो यद्वस्तृतमो वसति तेनोऽएव वसिष्ठ इति [८.१.१.६.] श्रुतेः ॥ प्रजापतिगृहीतया गृह्णातिः सृष्ट्यर्थः प्रजापतिना सृष्टया त्वयेष्टकया स्थापितया प्रजाभ्यः सर्वप्रजार्थं प्राणं गृह्णामि प्रजानां प्राणसिद्ध्यै त्वामुपदधामीत्यर्थः । अयं पुर इत्यादिदशमन्त्रैः प्राणमेवैकं प्रजाभ्यः गृह्णामि । ये नानाकामाः प्राणे तांस्तद्दधाति सकृत्सादयत्येकं तत्प्राणं करोतीति [८.१.१.६.] श्रुतेः ॥५४॥

a. अयं दक्षिणा विश्वकर्मा । b. तस्य मनो वैश्वकर्मणम् । c. ग्रीष्मो मानसः । d. त्रिष्टुब्ग्रैष्मी । e. त्रिष्टुभः स्वारम् । f. स्वारादन्तर्यामः । g. अन्तर्यामात्पञ्चदशः । h. पञ्चदशाद्बृहत् । i. भरद्वाज ऋषिः । k. प्रजापतिगृहीतया त्वया मनो गृह्णामि प्रजाभ्यः ॥५५॥

एभिर्मन्त्रैस्तृतीयं दशकं दक्षिणश्रोणेरारभ्योपधेयम् । विश्वं करोति सर्वं सृजतीति विश्वकर्मा वायुरयं दक्षिणा दक्षिणस्यां दिशि आर्यावर्ताद्भूयो वाति तद्रूपां त्वां सा० अयं वै वायुर्विश्वकर्मा योऽयं पवत एष हीदꣳ सर्वं करोति तद्यत्तमाह दक्षिणेति तस्मादेष दक्षिणैव भूयिष्ठं वाति तद्रूपमुपदधातीति [८.१.१.७.] श्रुतेः ॥ तस्य विश्वकर्मणोऽपत्यं मनोऽत एव वैश्वकर्मणम् विश्वकर्मण इदम् तस्येदमिति [पा० ४.३.१२०.] अण् इनण्यनपत्यऽइति [पा० ६.४.१६४.] प्रकृत्या । मनोरूपां सा० मनस्तस्माद्रूपाद्वायोर्निरमिमीतेति [८.१.१.८.] श्रुतेः ॥ मनसोऽपत्यं ग्रीष्म सा० मनस्तस्माद्रूपाद्वायोर्निरमिमीतेति ऋतुस्तद्रूपां सा० ग्रीष्ममृतुं मनसो निरमिमीतेति [८.१.१.८.] श्रुतेः ॥ ग्रीष्मस्येयं ग्रैष्मी ग्रीष्मोत्पन्ना त्रिष्टुप् छन्दस्तद्रूपां सा० त्रिष्टुभं छन्दो ग्रीष्मादृतोर्निरमिमीतेति [८.१.१.८.] श्रुतेः ॥ त्रिष्टुभ उत्पन्नं यत्स्वारं साम तद्रूपां सा० त्रिष्टुभश्छन्दसः

स्वार७ साम निरमिमीतेति [८. १. १. ८.] श्रुतेः ॥ स्वारात्साम्न उत्पन्नो योऽन्तर्यामो ग्रहस्तद्रूपां सा° स्वारात्साम्नोऽन्तर्यामं ग्रहं निरमिमीतेति [८. १. १. ८.] श्रुतेः ॥ अन्तर्यामादुत्पन्नो यः पञ्चदश स्तोमस्तद्रूपां सा° अन्तर्यामाद्ग्रहात्पञ्चदश७ स्तोमं निरमितीतेति [८. १. १. ८.] श्रुतेः ॥ पञ्चदशात्स्तोमादुत्पन्नं यद्बृहत्पृष्ठं तद्रूपां सा° पञ्चदशात्स्तोमाद्बृहत्पृष्ठं निर° ॥ भरद्वाज ऋषिः बिभर्तीति भरन् (18.) वाजमन्नं यः स भरद्वाजोऽन्नधर्ता मनः मनसि स्वस्थे अन्नादनेच्छोत्पत्तेः ऋषिः सचेतनो मनोरूपस्तद्रूपां सा° मनो वै भरद्वाज ऋषिः अन्नं वाजो यो वै मनो बिभर्ति सोऽन्नं वाजं भरति तस्मान्मनो भरद्वाज ऋषिरिति [८. १. १. ९.] श्रुतेः ॥ प्रजापतिगृहीतया धातृसृष्टया त्वयेष्टकया कृत्वा प्रजाभ्यो मनो गृह्णामि एभिर्दशमन्त्रैर्मन एव गृह्णामीत्यर्थः ॥५५॥

a. अ॒यं प॒श्चाद्वि॒श्वव्य॑चाः । b. तस्य॒ चक्षु॑र्वैश्वव्यच॒सम् । c. व॒र्षाश्चा॑क्षु॒ष्याः॑ । d. जग॑ती वा॒र्षी । e. जग॑त्या॒ ऋक्स॑मम् । f. ऋक्स॑माच्छु॒क्रः । g. शुक्रात्स॑प्तद॒शः । h. स॒प्त॒द॒शाद्वै॑रू॒पम् । i. ज॒मद॑ग्नि॒र्ऋषिः॑ । k. प्र॒जाप॑तिगृहीतया॒ त्वया॒ चक्षु॑र्गृह्णामि प्र॒जाभ्यः॑ ॥५६॥

अयं पश्चादित्यादिमन्त्रैर्द्वितीयं दशकमुत्तरश्रोणिरारभ्योपदधाति । पश्चात् प्रतीचीं दिशमञ्चति गच्छतीति पश्चात् प्रतीचीगमनशीलो विश्वं विचति उदितः सन्प्रकाशयतीति विश्वव्यचा आदित्योऽयं प्रसिद्धस्तद्रूपां सा° असौ वाऽआदित्यो विश्वव्यचा यदा ह्येवैष उदेत्यथेद७ सर्वं व्यचो भवति तद्यत्तमाह पश्चादिति तस्मादेतं प्रत्यञ्चमेव यन्तं पश्यन्तीति [८. १. २. १.] श्रुतेः ॥ तस्यादित्यस्य सम्बन्धि चक्षुरत एव वैश्वव्यचसं विश्वव्यचसो रवेरुत्पन्नं तद्रूपां सा° चक्षुस्तस्माद्रूपादादित्यान्निरमिमीतेति [८. १. २. २.] श्रुतेः ॥ चाक्षुष्यः चक्षुष उत्पन्ना वर्षा ऋतुस्तद्रूपां सा° गर्गादित्वाद्यञ् वर्षा ऋतुं चक्षुषो निरमिमीतेति [८. १. २. २.] श्रुतेः ॥ वर्षाभ्य उत्पन्नं जगतीछन्दस्तद्रूपां सा° जगतीं छन्दो वर्षाभ्य ऋतोर्निरमि° ॥ जगतीछन्दस उत्पन्नमृक्समसंज्ञं यत्साम तद्रूपां सा° जगत्यै छन्दस ऋक्सम७ साम निरमि° ॥ ऋक्समादुत्पन्नो यः शुक्रग्रहस्तद्रूपां सा° ऋक्समात्साम्नः शुक्रं ग्रहं निर-

मि° ॥ शुक्रादुत्पन्नो यः सप्तदश स्तोमस्तद्रूपां त्वां सा° शुक्राद्ग्रहात्सप्तदशꣳ स्तोमं निरमि° ॥ सप्तदशात्स्तोमादुत्पन्नं यद्वैरूपं पृष्ठं तद्रूपां सा° सप्तदशात्स्तोमाद्वैरूपं पृष्ठं निरमि° ॥ जमदग्निर्ऋषिः जमति जगत्पश्यतीति जमन् अङ्गति सर्वत्र गच्छतीत्यग्निः ऋषति जानाति ऋषिः ईदृशं यच्चक्षुस्तद्रूपां सा° चक्षुर्वै जमदग्निर्ऋषिर्यदनेन जगत्पश्यत्यथो मनुते तस्माच्चक्षुर्जमदग्निर्ऋषिरिति [८.१.२.३.] श्रुतेः ॥ प्रजापतिसृष्टया त्वयेष्टकया प्रजार्थं चक्षुर्गृह्णामि दशमन्त्रैश्चक्षुरेव गृह्णामि । सकृत्सादयत्येतच्चक्षुः करोतीति [८.१.२.३.] श्रुतेः ॥५६॥

a. इ॒दमु॑त्त॒रात्स्वः॑ । b. तस्य॒ श्रोत्र॑ꣳ सौ॒वम् । c. श॒रच्छ्रौ॒त्री । d. अ॒नु॒ष्टुप्शा॑र॒दी । e. अ॒नु॒ष्टुभ॑ ऐ॒डम् । f. ऐ॒डान्म॒न्थी । g. म॒न्थिनं॑ एक॒विꣳशः । h. ए॒क॒वि॒ꣳशाद्वै॑रा॒जम् । i. वि॒श्वामि॑त्र॒ ऋषिः॑ । k. प्र॒जाप॑तिगृहीतया॒ त्वया॒ श्रोत्रं॑ गृह्णामि प्र॒जाभ्यः॑ ॥५७॥

दशमन्त्रैश्चतुर्थं दशकमुत्तरांसादारभ्योपदधाति ॥ उत्तरस्यामुत्तरात् उत्तराधरदक्षिणादातिरिति [पा° ५.३.३४.] आत्प्रत्ययः सर्वस्मादुत्तरभागस्था दिशः यदिदं स्वः स्वर्गो लोकः तां दिक्स्वर्गरूपां त्वां सा° क्रियाव्ययविशेषणानां नपुंसकत्वमेकत्वं चेति वचनादिदमुत्तरादित्युक्तम् दिशो वाऽउत्तरात्तद्यत्ता आहोत्तरादित्युत्तरा ह्यस्मात्सर्वस्माद्दिशोऽथ यत्स्वरित्याह स्वर्गो हि लोको दिशः श्रोत्रꣳ हि दिशो भूत्वोत्तरं तस्थौ (19.) तदेतद्रूपमुपदधातीति [८.१.२.४.] श्रुतेः ॥ तस्य स्वर्गस्य सम्बन्धि श्रोत्रं कीदृशं सौवम् स्वः इदं सौवं तस्येदमिति [पा° ४.३.१२०.] अण् द्वारादित्वादैजागमः [पा° ७.३.४.] अव्ययानां भमात्रे टिलोपः श्रोत्ररूपां त्वां सा° श्रोत्रं तस्माद्रूपाद्दिग्भ्यो निरमिमीतेति [८.१.२.५.] श्रुतेः ॥ श्रोत्रादुत्पन्ना या शरत्तद्रूपां सा° शरदमृतुꣳ श्रोत्रान्निरमिमीतेति [८.१.२.५.] श्रुतेः ॥ शरद उत्पन्नं यदनुष्टुप्छन्दस्तद्रूपां सा° अनुष्टुभं छन्दः शरद ऋतोर्निरमि° ॥ अनुष्टुभ उत्पन्नं यदैडं साम तद्रूपां सा° अनुष्टुभश्छन्दस ऐडꣳ साम निरमि° ॥ ऐडात्साम्न उत्पन्नो यो मन्थी ग्रहस्तद्रूपां सा° ऐडात्साम्नो मन्थिनं ग्रहं निरमि° ॥ मन्थिग्रहादुत्पन्नो य एकविंश स्तोमस्तद्रूपां सा° मन्थिनो ग्रहादेकविꣳशꣳ स्तोमं निरमि° ॥ एकविं-

शस्तोमादुत्पन्नं यद्वैराजं पृष्ठं तद्रूपां सा° एकविंशात्स्तोमाद्वैराजं पृष्ठं निरमि° ॥ विश्वामित्र ऋषिः विश्वं सर्वं मित्रं येन मित्रे चर्षाविति [पा° ६.३.१३०.] दीर्घः तादृश ऋषिः श्रोत्रं श्रद्धयान्यवाक्यश्रवणात्सर्वमित्रं (20.) भवति विश्वामित्रऽर्षिरूपं (21.) यत् श्रोत्रं तद्रूपां सा° श्रोत्रं वै विश्वामित्र ऋषिर्यदेनेन सर्वतः शृणोत्यथो यदस्मै सर्वतो मित्रं भवति तस्माच्छ्रोत्रं विश्वामित्र ऋषिरिति [८.१.२.६.] श्रुतेः ॥ प्रजापतिसृष्टया त्वयेष्टकया प्रजाभ्यः श्रोत्रं गृह्णामीति दशमन्त्रैः श्रोत्रमेव सादयति ये (22.) नानाकामाः श्रोत्रे तांस्तद्दधाति सकृत्सादयत्येकं तच्छ्रोत्रं करोतीति [८.१.२.६.] श्रुतेः ॥५७॥

a. इ॒यमु॒परि॑ म॒तिः । b. तस्यै॒ वाङ्मा॒त्या । c. हे॒म॒न्तो वा॒च्यः । d. प॒ङ्क्तिर्है॒म॒न्ती । e. प॒ङ्क्त्यै नि॒धन॑वत् । f. नि॒धन॑वत आग्रय॒णः । g. आ॒ग्र॒य॒णात्त्रि॑णवत्रयस्त्रि॒ꣳशौ । h. त्रि॒ण॒व॒त्र॒य॒स्त्रि॒ꣳशाभ्या॒ꣳ शाक्वररै॒व॒ते । i. वि॒श्वक॑र्म॒ऽऋषिः । k. प्र॒जाप॑तिगृहीतया॒ त्वया॒ वाचं॑ गृह्णा॒मि प्र॒जाभ्यः॑ । l. लो॒कं पृ॑ण° । m. ता अ॒स्य॒° । n. इन्द्रं॒ वि॒श्वा॑° ॥५८॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां त्रयोदशोऽध्यायः ॥१३॥

दशमन्त्रैः पञ्चमं दशकं रेतःसिग्भ्यामुत्तरां प्रथमां कृत्वा प्रादक्षिण्येनोपधेयम् । उपर्युपरिष्टादिति [पा° ५.३.३१.] निपातः उपरि ऊर्ध्वदेशस्थश्चन्द्र इयं मतिः वाक् मन्यते ज्ञायते यया सा मतिः वागेव चन्द्रो भूत्वोपरि यत्तिष्ठति तद्रूपां सा° चन्द्रमा वाऽउपरि तद्यत्तमाहोपरीत्युपरि हि चन्द्रमा अथ यन्मतिरित्याह वाग्वै मतिर्वाचा हीदꣳ सर्वं मनुते वागु चन्द्रमा भूत्वोपरिष्टात्तस्थौ तदेव तद्रूपमुपदधातीति [८.१.१.७.] श्रुतेः ॥ तस्यै चन्द्ररूपायास्तस्या मतेरुत्पन्नात एव मात्या मतेरियं मात्या या वाक् तद्रूपां सा° वाचं तस्माद्रूपाच्चन्द्रमसो निरमिमीतेति [८.१.२.८.] श्रुतेः ॥ वाचोऽपत्यं वाच्यः वाच उत्पन्नो यो हेमन्तस्तद्रूपां सा° हेमन्तमृतुं वाचो निरमि° ॥ हेमन्तस्येयं हैमन्ती या पङ्क्तिश्छन्दस्तद्रूपां सा° पङ्क्तिं छन्दो

हेमन्तादृतोर्निरमि° ॥ पङ्क्तेरुत्पन्नं यन्निधनवत्संज्ञं साम तद्रूपां सा° पङ्क्त्यै चतुर्थ्यो पञ्चम्यर्थे पङ्क्त्यै छन्दसो निधनवत्साम निरमि° ॥ निधनवतः साम्न उत्पन्नो य आग्रयणो ग्रहस्तद्रूपां सा° निधनवतः साम्न आग्रयणं ग्रहं निरमि° ॥ आग्रयणा-दुत्पन्नौ यौ त्रिणवत्रयस्त्रिंशौ द्वौ स्तोमौ तद्रूपां सा° आग्रयणाद्ग्रहात्त्रिणवत्रयस्त्रिꣳ-शौ स्तोमौ निरमि° ॥ त्रिणवत्रयस्त्रिंशाभ्यामुत्पन्ने ये द्वे शाक्वररैवते पृष्ठे त्वां त-द्रूपां सा° त्रिणवत्रयस्त्रिꣳशाभ्याꣳ स्तोमाभ्याꣳ शाक्वररैवते पृष्ठे निरमि° ॥ विश्व-कर्मा विश्वं सर्वं करोतीति विश्वकर्मा ऋषिः वागेव वाचा हि सर्वं कुरुते वाग्रूपां त्वां सा° वाग्वै विश्वकर्मऽऋषिर्वाचा (23.) हीदꣳ सर्वं कृतं तस्माद्वाग्विश्वकर्मऽऋ-षिरिति (23.) श्रुतेः [८.१.२.९.] ॥ प्रजापतिसृष्टया त्वयेष्टकया प्रजाभ्यः वाचं गृ-ह्णामि एभिर्दशमन्त्रैर्वाचमेव गृह्णाति । सकृत्सादयत्येकां तद्वाचं करोतीति [८.१.२.९.] श्रुतेः ॥ ॥ अथ पञ्चकण्डिकासु प्राणमनश्चक्षुःश्रोत्रवाचां प्रजाभ्यो ग्रहणमि-त्यस्यार्थद्वयम् । प्रजाभ्य इति चतुर्थीपक्षे प्रजार्थं प्राणादीनां ग्रहणं पञ्चाशदिष्टका-स्थापने प्रजानां यजमानापत्यपश्वादीनां प्राणादयः पुष्टा भवन्त्वित्यर्थः । प्रजाभ्य इति पञ्चमीपक्षे प्रजाभ्यो नानालोकेभ्यः सकाशात्प्राणादीन्गृह्णामि मद्वशगान्करो-मीति प्राणभृतामुपधानेन सर्वाः प्रजा मद्वशगा भवन्त्वित्यर्थः ॥ ॥ का° [१७.६.५.] लोकम्पृणा दक्षिणाꣳसादध्या मध्यात् । आत्मनो दक्षिणकोणादारभ्या मध्यात् अ-धि स्वयमातृण्णापर्यन्तं (24.) लोकम्पृणा उपदधाति तासां लोकं पृणेत्यभिमन्त्रणम् ता अस्येति सूददोहःसंज्ञमन्त्रेणाधिवदनम् स्पृष्ट्वा पठनमिति सूत्रार्थः ॥ का° [१७.६.९.] मध्ये पुरीषं निवपति पूर्ववत् । स्वयमातृण्णोपरीन्द्रं विश्वेति (25.) मन्त्रेण मृत्क्षेपः ॥ तिस्रः ऋचः प्रतीकोक्ताः पूर्वमुक्तत्वात् [१२.५४-५६.] ॥५८॥ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे । पुष्कराद्यादिचित्यन्तो रामेन्द्वध्याय ईरितः (26.) ॥१३॥ ॥

अथ काण्वशाखायां पाठविशेषः ॥ ॥

I. ॥ १-१३ a ॥१-१३॥ १३ b. १४ ॥१४॥ १५ ॥१५॥१५॥ ॥

II. ॥ १६-२३ ॥१-८॥ २४ विरा° - ड्योतिष्मतीम् ॥९॥ २४ विश्वस्मै

सीद ॥१०॥ २५ [- वासन्तिकावृतू -] ॥११॥ २६ [अषाल्हासि -] ॥१२॥२७॥ ॥

III. ॥ २७-३४ ॥१-८॥ ३५ [- सम्राळसि स्वराळसि ] ॥९॥ ३६ ॥१०॥ ३७ ॥११॥३८॥ ॥

IV. ॥ ३८-४२ ॥१-५॥ ४३ [- ॰ग्निर्मीळे -] ॥६॥ ४४ ॥७॥ ४५ [- ह्वेलः -] ॥८॥ ४६ ॥९॥४७॥ ॥

V. ॥ ४७ [- सहस्राद्ध मे॰ -] -५२ ॥१-६॥५३॥ ॥

VI. ॥ ५३ ॥१॥५४॥ ॥

VII. ॥ ५४ a-d ॥१॥ ५४ e-k ॥२॥ ५५ a-d ॥३॥ ५५ e-k ॥४॥ ५६ a-d ॥५॥ ५६ e-k ॥६॥ ५७ a-d ॥७॥ ५७ e [- ऐलम्]. f [ऐलान्म॰] -k ॥८॥ ५८ a-d ॥९॥ ५८ e-n ॥१०॥६४॥ सप्तानुवाकेषु चतुःषष्टिः ॥ ॥

इति काण्वशाखायां संहितापाठे चतुर्दशोऽध्यायः ॥१४॥ ॥

I. a. ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासि ध्रुवं योनिमासीद साधुया । उख्यस्य केतुं प्रथमं जुषाणा । b. अश्विनाध्वर्यू सादयतामिह त्वा ॥१॥

त्रयोदशेऽध्याये (1.) प्रथमा चितिरुक्ता सा भूर्लोकरूपा अयं वै लोकः प्रथमा चितिरिति [८.२.१.१.] श्रुतेः । चतुर्दशेऽध्याये द्वितीयादिचितित्रयं वक्ष्यते भूमेरूर्ध्वमन्तरिक्षादर्वाग्भागो द्वितीया चितिः एतां द्वितीयां चितिमपश्यन्यदूर्ध्वं पृथिव्या अर्वाचीनमन्तरिक्षात्तेषामेष लोकः इति [८.२.१.२.] श्रुतेः । देवैरश्विनौ प्रार्थितौ युवां भिषजौ ततो द्वितीयां चितिमुपधत्तमिति ताभ्यामुक्तं चित्युपधाने किमावयोः फलमिति देवैरुक्तं युवां चित्युपधाने देवानामध्वर्यू भविष्यथ इति ततस्ताभ्यां द्वितीया चितिरुपहितेति श्रुत्या तेऽश्विनावब्रुवन्नित्यादिकयोक्तम् [८.२.१.३.] । तत्रादौ पञ्चाश्विन्य इष्टकाः ॥ द्वितीयचितिमन्त्रा देवदेवत्याः ॥ का॰ [१७.८.१५.]

आश्विनीर्ध्रुवक्षितिरिति प्रतिमन्त्रम् । पञ्चकण्डिकाभिराश्विनीसंज्ञा इष्टका रेतःसिग्विलायामुपदधाति प्रतीष्टकं नित्येऽइति सूत्रार्थः ॥ पञ्चाश्विनीदेवत्याः प्रथमा विराट् चतस्रस्त्रिष्टुभो यजुरन्ताः । अश्विनाध्वर्यू इत्यादि यजुः । आदित्यास्त्वार्षी त्रिष्टुबेकाधिका पादानियमात् । हे इष्टके यतस्त्वं ध्रुवा स्थिरासि अतो ध्रुवं स्थिरं योनिं स्थानं रेतःसिग्विलालक्षणमासीद अधितिष्ठ । कीदृशं साधुया साधुं श्रेष्ठं सुपां सुलुगित्यमो यादेशः । कीदृशी त्वं ध्रुवक्षितिः ध्रुवा स्थिरा क्षितिर्निवासो यस्याः सा । ध्रुवा अचला योनिः कारणं यस्याः सा । तथा उख्यस्याग्नेः (2.) प्रथममाद्यं केतुं स्थानं प्रथमचितिरूपं जुषाणा सेवमाना अथ वाऽअग्निरुख्यस्तस्यैष प्रथमः केतुर्यत्प्रथमा चितिस्तां जुषाणेति [८.२.१.४.] श्रुतेः ॥ इतः परं यजुः किं च अश्विना देवानामध्वर्यू इह रेतःसिग्विलायां हे इष्टके त्वा त्वां सादयतामुपधत्ताम् । केचिदिदं यजुश्चतुर्थपादेन परिकल्प्य त्रिष्टुभं वदन्ति ॥१॥

a. कु॒ला॒यिनी॑ घृ॒तव॑ती॒ पुरं॑धिः स्यो॒ने सी॑द॒ सद॑ने पृथि॒व्याः ।
अ॒भि त्वा॑ रु॒द्रा वस॑वो गृणन्त्वि॒मा ब्रह्म॑ पीपिहि॒ सौभ॑गाय ॥

b. अ॒श्विना॑ध्व॒र्यू सा॑दयतामि॒ह त्वा॑ ॥२॥

हे इष्टके पृथिव्याः सदने प्रथमचितिरूपे स्थाने स्योने सुखरूपे त्वं सीद तिष्ठ पृथिवी वै प्रथमा चितिस्तस्यै शिवे स्योने सीद सदनऽइति [८.२.१.५.] श्रुतेः । कीदृशी त्वं कुलायिनी कुलायो नीडमस्त्रियाम् कुलायो नीडं गृहमस्या अस्तीति गृहाकारा । रेतःसिग्विलायामिष्टकोपचिता सा गृहाकारा भवति कुलायमिव वै द्वितीया चितिरिति [८.२.१.५.] श्रुतेः अत्र सादृश्यार्थ इनिः । तथा घृतवती होष्यमाणाज्ययुता वसोर्धारा ह्यत्र होष्यन्ति । पुरंधिः पुरं बहु इष्टकाजातं दधातीति पुरु बहुधा धीयते स्थाप्यतऽइति वा । किं च रुद्रा वसवश्चोपलक्षणं सर्वे देवाः त्वा त्वामभिगृणन्तु स्तुवन्तु । किं च सौभगाय ऐश्वर्याय इमा इमानि ब्रह्म ब्रह्माणि मन्त्रान्पीपिहि आप्यायस्व मन्त्रान्प्राप्नुहि अस्मन्मन्त्रोपहिता सौभाग्याय भवेति भावः । इमेति सुप आकारः । ब्रह्मेति सुपो लोपः । पि गतौ तुदादिः बहुलं छन्दसीति [पा॰ २.४.७६.] शपः श्लुः श्लाविति [पा॰ ६.१.१०.] द्वित्वं तुजा-

दीनां दीर्घोऽभ्यासस्येति [पा° ६. १. ७.] अभ्यासदीर्घः ॥ अश्विनेत्यादि पूर्ववत् ॥२॥

a. स्वैर्दक्षैर्दक्षपितेह सीद देवानाᳬ सुम्ने बृहते रणाय ।
पितेवैधि सूनवऽआ सुशेवा स्वावेशा तन्वा संविशस्व ॥
b. अश्विनाध्वर्यू सादयतामिह त्वा ॥३॥

हे इष्टके त्वमिह द्वितीयायां चितौ सीद तिष्ठ स्वैर्दक्षैः वीर्यैः सामर्थ्यैः सह दक्षशब्दोऽत्र वीर्यार्थः स्वेन वीर्येणेह सीदेति [८. २. १. ६. (3.)] श्रुतेः । कीदृशी दक्षपिता दक्षं वीर्यं पातीति वीर्यस्य पालयित्री । किमर्थं स्थातव्यं तत्राह र-णाय रमणीयाय बृहते महते सुम्ने सुम्नाय सुखाय सप्तमी चतुर्थ्यर्थे देवानाᳬ सु-म्नाय महते रणायेति [८. २. १. ६.] श्रुतेः देवाः सुखिनो भवन्त्विति तिष्ठेत्यर्थः । किं च आ समन्ताद्भावेन सुशेवा शोभनं शेवं सुखं यस्यास्तादृशी सर्वदा सुखयि-त्री एधि भव घ्वसोरेद्धाविति [पा° ६. ४. ११९.] एकारः । तत्र दृष्टान्तः पिता सू-नवऽइव यथा पिता जनकः सूनवे पुत्राय सुशेवः सुखयिता भवति तद्वत् । किं च स्वावेशा सुखेनाविशति स्वावेशा प्रथमा तृतीयार्थे स्वावेशया सुखप्रवेशवत्या तन्वा शरीरेण संविशस्व अवस्थानं कुरु स्वावेशेनात्मना संविशश्वेति [८. २. १. ६.] श्रुतेः ॥ अश्विनेत्युक्तम् ॥३॥

a. पृथिव्याः पुरीषमस्यप्सो नाम तां त्वा विश्वेऽअभिगृणन्तु देवाः ।
स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्व ॥
b. अश्विनाध्वर्यू सादयतामिह त्वा ॥४॥

हे इष्टके त्वं पृथिव्याः प्रथमचितेः पुरीषं पूरकं वस्त्वसि पृथिवी वै प्रथमा चितिस्तस्या एतत्पुरीषमिव यद्द्वितीयेति [८. २. १. ७.] श्रुतेः पृणाति पूरयति पुरी-षम् पृपृभ्यां किदिति [उणा° ४. २७.] पृणातेरीषन्प्रत्ययः किच्च कित्वादुदोष्ठ्यपूर्व-स्येति [पा° ७. १. १०२.] उदादेशो रपरत्वं च नित्वादाद्युदात्तः । अपः सनोति ददा-तीत्यप्सो नामापां कारणीभूतो रसश्च त्वमसि । तां तादृशीं प्रथमचितिपूरिकां जलदरसभूतां त्वा त्वां विश्वे सर्वे देवा अभिगृणन्तु सर्वतः स्तुवन्तु । किं च स्तो-

मपृष्ठाः स्तोमास्त्रिवृदादयः पृष्ठानि रथन्तरादीनि पठिष्यमाणानि यस्यां सा तादृशी स्तोमपृष्ठवती । घृतवती क्षोष्यमाणाज्ययुता सतीह द्वितीयचितौ सीद तिष्ठ । ततः प्रजावत्पुत्रपौत्रादिप्रजायुक्तं द्रविणा द्रविणं धनमस्मे अस्मभ्यमायजस्व समन्तादेहि यजतिरिह दानार्थः । अस्मे इति सुपां सुलुगिति विभक्तेः शेआदेशः ॥ व्याख्यातमन्यत् ॥४॥

a. अदि॑त्यास्त्वा पृ॒ष्ठे सा॑दयाम्य॒न्तरि॑क्षस्य ध॒र्त्रीं वि॒ष्टम्भ॑नीं दि॒शामधि॑पत्नीं भुव॑नानाम् ऊ॒र्मिर्द्र॒प्सोऽअ॒पाम॑सि वि॒श्वक॑र्मा त॒ऽऋषिः॑ । b = १b. ॥५॥

हे इष्टके अदित्याः प्रथमचितिरूपायाः पृथिव्याः पृष्ठे उपरि त्वा त्वां सादयामि स्थापयामि । किम्भूतां त्वां अन्तरिक्षस्य भुवर्लोकस्य धर्त्रीं धारयित्रीम् । दिशां पूर्वादीनां विष्टम्भनीं संस्तम्भनकर्त्रीं भुवनानां भूतजातानामधिपत्नीं स्वामिनीम् । किं च त्वमपां द्रप्सो रस ऊर्मिरसि रसेरूपः कल्लोलस्त्वमसि । विश्वकर्मा प्रजापतिस्ते तव ऋषिः द्रष्टा ॥ तं त्वामश्विनौ सादयतामित्युक्तम् ॥५॥

शु॒क्रश्च॒ शुचि॑श्च ग्रै॒ष्मा॑वृ॒तू॒ऽअ॒ग्नेर॑न्तःश्ले॒षोऽसि॒ कल्पे॑तां॒ द्यावा॑पृथि॒वी कल्प॑न्ता॒माप॒ ओष॑धयः॒ कल्प॑न्ताम॒ग्नयः॒ पृथ॒ङ्मम॒ ज्यैष्ठ्या॑य॒ सव्र॑ताः । येऽअ॒ग्नयः॒ सम॑नसोऽन्त॒रा द्यावा॑पृथि॒वीऽइ॒मे ग्रै॒ष्मा॑वृ॒तू॒ऽअ॒भि॒कल्प॑माना॒ इन्द्र॑मिव दे॒वा अ॑भि॒सं॑वि॑शन्तु॒ तया॑ दे॒वत॑याङ्गिर॒स्वद्ध्रु॒वे सी॑दतम् ॥६॥

का० [१७.८.१६.] शुक्रश्च शुचिश्चेत्यृतव्ये पूर्वयोरुपरि । प्रथमचित्युपहितयोर्ऋतव्ययोरुपरि द्वे ऋतव्ये पद्ये प्राग्लक्षणे अनूकमभित उदङ्मुख उपदधाति शुक्रश्च शुचिश्चेति प्रत्येकमुपधाय । ग्रैष्मावृतू इति मन्त्रशेषो (5.) द्वे अप्यालभ्य पद्य इति सूत्रार्थः ॥ उत्कृतिश्छन्दः । शुक्रो ज्येष्ठमासः (6.) शुचिरषाढः तौ ग्रैष्मावृतू ग्रीष्मसम्बन्धिनौ ऋत्ववयवौ । अन्यद्व्याख्यातम् [१३.२५.] ॥६॥

II. a. स॒जूर्ऋ॒तुभिः॑ स॒जूर्वि॒धाभिः॑ स॒जूर्दे॒वैः स॒जूर्दे॒वैर्व॑योना॒धैर॒ग्नये॑ त्वा वैश्वान॒राया॒श्विना॑ध्व॒र्यू सा॑दयतामि॒ह त्वा ॥

b. स॒जूर्ऋ॒तुभि॑ः स॒जूर्वि॒धाभि॑ः स॒जूर्वसु॑भिः स॒जूर्दे॒वैर्वयो॰ ॥

c. स॒जूर्ऋ॒तुभि॑ः स॒जूर्वि॒धाभि॑ः स॒जू रु॒द्रैः स॒जूर्दे॰ ॥

d. स॒जूर्ऋ॒तुभि॑ः स॒जूर्वि॒धाभि॑ः स॒जूरा॑दि॒त्यैः स॒जूर्दे॰ ॥

e. स॒जूर्ऋ॒तुभि॑ः स॒जूर्वि॒धाभि॑ः स॒जूर्विश्वै॑र्दे॒वैः स॒जूर्दे॰ ॥७॥

का॰ [१७. ८. १६.] वैश्वदेवीः सजूर्ऋतुभिरिति प्रतिमन्त्रम् । पञ्च मन्त्रैः पञ्च वैश्वदेवीसंज्ञा इष्टकाः पूर्वादिषूपदधातीत्यर्थः ॥ विश्वदेवदृष्टानि विश्वदेवदेवत्यानि पञ्च यजूंषि । हे इष्टके देवानामध्वर्यू अश्विना अश्विनौ तां त्वा त्वामिह स्थाने द्वितीयचितौ सादयताम् किमर्थं वैश्वानराय विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितायाग्नये ऽग्नितृप्तये अग्नये त्वेति त्वाशब्दो या इति प्रथमार्थे प्रातिपदिकसुपोर्व्यत्ययः (7.) तां कां या त्वमृतुभिः सजूः जोषणं जुट् प्रीतिः जुषी प्रीतिसेवनयोः सम्पदादित्वाद्भावे क्विप् समाना जूः प्रीतिर्यस्याः सा सजूः समानस्य (8.) छन्दस्यमूर्धेति [पा॰ ६. ३. ८४.] समानस्य सादेशः वसन्तादिभिर्या त्वं प्रीतिमती । तथा विधाभिः या त्वं सजूः असि विदधति सृजन्ति जगदिति विधा आपस्ताभिः आपो वै विधा अद्भिर्हीदऽ सर्वं विहितमिति श्रुतेः [८. २. २. ८.] अप एव ससर्जादाविति स्मृतेश्च । तथा देवैरिन्द्रादिभिश्च सजूः । तथा वयो बाल्यादि नह्यन्ति बध्नन्ति ते वयोनाधाः (9.) प्राणा देवा दीप्यमानास्तैश्च सजूः प्राणा वै वयोनाधाः (9.) प्राणैर्हीदऽ सर्वं वयुनं नद्धमिति [८. २. २. ८.] श्रुतेः (10.) । यद्वा वयोनाधैर्देवैश्छन्दोभिः सजूः अथो छन्दाऽसि वै देवा वयोनाधाश्छन्दोभिर्हीदऽ सर्वं (11.) वयुनं नद्धमिति [८. २. २. ८.] श्रुतेः एवमुत्तरमन्त्रेष्वपि । यद्वा ऋतुदेवप्राणान् जनयित्वा (12.) तैः सजूः सयुग्भूत्वा प्रजापतिर्यथा त्वामुपहितवानेवमहमप्यग्नये त्वामुपदधामीति शेषः अश्विनौ चेह त्वां सादयताम् तदृतून्प्राजनयदृतुभिर्वै सयुग्भूत्वेति [८. २. २. ८.] श्रुतेः ॥ उत्तरचतुर्मन्त्रेषु वसुभिः रुद्रैः आदित्यैर्विश्वैर्देवैः सजूरिति विशेषः शेषं पूर्वतुल्यम् ॥७॥

a. प्रा॒णं मे॑ पाहि । b. अ॒पा॒नं मे॑ पाहि । c. व्या॒नं मे॑ पाहि ।

d. चक्षु॑र्मऽउ॒र्व्या वि॑भाहि । e. श्रोत्रं॑ मे श्लोकय । f. अ॒पः पि॑न्व ।

g. ओषधीर्जिन्व । h. द्विपादव । i. चतुष्पात्पाहि । k. दिवो वृष्टिमेरय ॥ ८॥

का° [१७. ८. २०.] प्राणभृतः प्राणं मऽइति । पञ्चयजुर्भिः प्राणभृत्संज्ञका इष्टकाः पूर्वादिषूपदधाति ॥ पञ्च वायुदेवत्यानि यजूंषि । प्राणो वै वायुर्वायुमेवास्मिन्नेतद्दधातीति [८. २. ३. २.] श्रुतेः ॥ हे इष्टके त्वं मे मम प्राणं प्राणरूपं वायुं पाहि पालय । एवमपानं मम पाहि । व्यानं वायुं च मे मम पाहि । उर्व्या विस्तीर्णया दृष्ट्या मे चक्षुर्विभाहि विशेषेण प्रकाशय दर्शनसमर्थं (13.) कुर्वित्यर्थः । मम श्रोत्रं कर्णेन्द्रियं श्लोकय संघातं शक्तं कुरु श्लोकृ संघाते [धातु° ४. ३.] बहुशब्दश्रवणसमर्थं (14.) कुर्वित्यर्थः ॥ का° [१७. ८. २१.] अपः पिन्वेत्यपस्याः । पञ्चमन्त्रैरपस्यासंज्ञा इष्टका उपदधाति ॥ अब्देवत्यानि पञ्च यजूंषि । हे इष्टके त्वमपो जलानि पिन्व सिञ्च पिन्वतिः सेचनार्थः । ओषधीर्जिन्व प्रीणय जिन्वतिः प्रीतिकर्मा । द्विपान्मनुष्यशरीरमव रक्ष । चतुष्पात्पशुशरीरं पाहि पालय । दिवो द्युलोकाद्वृष्टिमेरय आ समन्तात्प्रवर्तय ॥ ८॥

III. a. मूर्धा वयः प्रजापतिश्छन्दः । b. क्षत्रं वयो मयन्दं छन्दः । c. विष्टम्भो वयोऽधिपतिश्छन्दः । d. विश्वकर्मा वयः परमेष्ठी छन्दः । e. वस्तो वयो विवलं छन्दः । f. वृष्णिर्वयो विशालं छन्दः । g. पुरुषो वयस्तन्द्रं छन्दः । h. व्याघ्रो वयोऽनाधृष्टं छन्दः । i. सिंहो वयश्छदिश्छन्दः । k. पष्ठवाड्वयो बृहती छन्दः । l. उक्षा वयः ककुप्छन्दः । m. ऋषभो वयः सतोबृहती छन्दः ॥ ९॥

का° [१७. ८. २२.] वयस्याः पञ्च-पञ्चानूकान्तेषु मूर्धा वय इति प्रतिमन्त्रं चतस्रः पुरस्तात् (15.) । दक्षिणोत्तरपश्चिमेष्वनूकान्तेषु पञ्च-पञ्च पूर्वे तु चतस्रो वयस्यासंज्ञका इष्टका उपदधात्येकोनविंशतिमन्त्रैरित्यर्थः ॥ एकोनविंशतिर्यजूंषि लिङ्गोक्तदेवतानि । वयःशब्दोपेतमन्त्रैरुपधेया इष्टकाः । अत्र श्रुत्युक्तं निदानम् पुरा सृष्टवतः प्रजापतेर्व्याकुलात्सकाशात्सृष्टाः पशवश्छन्दोरूपमास्थाय निरगच्छन् ततः

प्रजापतिरपि गायत्र्यादिछन्दोरूपं स्वीकृत्य पशुसम्बन्धिन्या तत्तद्वयोऽवस्थया तान्पशूनाप्नोत् तदभिधायका मन्त्राः प्रजापतेर्विस्रस्तात्पशव उदक्रामँश्छन्दाᳬसि भूत्वा तान्गायत्री छन्दो भूत्वा वयसाप्नोदिति [८. २. ३. ९.] श्रुतेः । तत्रादौ चतुर्भिर्मन्त्रैः प्रजापतिरष्टावयवात्मकं गायत्रीरूपं परिकल्प्यते । मूर्धा प्रधानः प्रजापतिश्छन्दो गायत्रीरूपो भूत्वा वयः विभक्तिव्यत्ययः वयसा कृत्वा पशूनाप्नोदिति शेषः । तद्रूपां त्वामिष्टके उपदधामीति सर्वत्र शेषः । अनेन मन्त्रेण प्रजापतेर्द्वाववयवौ कल्पितौ । प्रजापतिर्वै मूर्धा स वयोऽभवत्प्रजापतिश्छन्द इति प्रजापतिरेव छन्दोऽभवदिति श्रुतेः [८. २. ३. १०.] ॥ क्षतात्त्रायतऽइति क्षत्त्रं तादृशं वयः शरीरावस्था प्रजापतिरभवत् मयं सुखं ददातीति मयंदमनिरुक्तं छन्दोऽभवत् क्षत्रं वय इति प्रजापतिर्वै क्षत्रᳬ स वयोऽभवन्मयंदं छन्द इति यद्वाऽअनिरुक्तं तन्मयंदमनिरुक्तो वै प्रजापतिः प्रजापतिरेव छन्दोऽभवदिति श्रुतेः [८. २. ३. ११.] ॥ अधिपतिः अधिकं पालकः विष्टभ्नोति जगत्स्तम्भयतीति विष्टम्भः ईदृशः प्रजापतिः वयस्तत्पशुवयोऽवस्थावान् छन्दश्चाभवत् प्रजापतिर्वै विष्टम्भः स वयोऽभवदधिपतिश्छन्द इति प्रजापतिर्वाऽअधिपतिः प्रजापतिरेव छन्दोऽभवदिति श्रुतेः [१२.] ॥ परमे पदे तिष्ठतीति परमेष्ठी विश्वकर्मा सर्वस्रष्टा प्रजापतिर्वयश्छन्दश्चाभवत् प्रजापतिर्वै विश्वकर्मा स वयोऽभवत्परमेष्ठी छन्द इत्यापो वै प्रजापतिः परमेष्ठी ता हि परमे स्थाने तिष्ठन्ति प्रजापतिरेव परमेष्ठी छन्दोऽभवदिति श्रुतेः [१३.] ॥ एवं प्रतिमन्त्रं द्वौ-द्वाववयवावित्यष्टावयवः प्रजापतिर्गायत्रीरूपः परिकल्पितः तथा चाष्टसंख्योपेतत्वात्सर्वछन्दःप्रकृतिभूतं गायत्री छन्दो भूत्वा वयसा तृतीयाया लुक् वयोऽवस्थया वक्ष्यमाणान्पञ्चदश पशून्प्रजापतिरगृह्णात् तानि वाऽएतानि चत्वारि वयाᳬसि चत्वारि छन्दाᳬसि तदष्टावष्टाक्षरा गायत्र्येषा वै सा गायत्री या तद्भूत्वा प्रजापतिरेतान्पशून्वयसाप्नोदिति श्रुतेः [८. २. ३. १४.] ॥ वस्त अजः । द्वितीयैकवचनस्य (16.) सुपां स्विति सु-आदेशः । वय इति तृतीयालुक् । विवलं विविधं वरमुत्कृष्टं छन्दः एकपदाख्यं छन्दो भूत्वोत्क्रान्तं वस्तं पशुं वयसा तत्तद्वयोऽवस्थया जग्राह । एवमुत्तरमन्त्रेष्वपि विभक्तिपरिणामं कृत्वा तत्तच्छन्दोरूपमास्थाय प्रजापतिस्तत्तद्वयसा तं-तं पशुं गृहीतवानिति योज्यम् विशेषस्तु वक्ष्यते ।

वस्तो वय इति वस्तं वयसाप्नोद्विवलं छन्द इत्येकपदा विवलं छन्द एकपदा ह भूत्वाजा उच्चक्रमुरिति श्रुतेः [८.२.४.१.] ॥ विशालं द्विपदागायत्रीरूपं छन्दो भूत्वा वृष्णिं सेचनसमर्थं मेषं वयसा जग्राह । वृष्णिं वयसाप्नोद्विशालं छन्दः इति द्विपदा वै विशालं छन्दो द्विपदा ह भूत्वावय उच्चक्रमुरिति श्रुतेः [८.२.४.२.] ॥ तन्द्रं पङ्क्तिछन्दो भूत्वोत्क्रान्तं पुरुषं पशुं वयसाप्नोत् । पुरुषं वयसाप्नोत्तन्द्रं छन्द इति पङ्क्तिर्वै तन्द्रं छन्दः पङ्क्तिर्ह भूत्वा पुरुषा उच्चक्रमुरिति श्रुतेः [८.२.४.३.] ॥ अनाधृष्टं विराट्छन्दो भूत्वोत्क्रान्तं व्याघ्रं पशुं वयसाग्रहीत् । व्याघ्रं वयसाप्नोदनाधृष्टं छन्द इति विराड्वाऽअनाधृष्टं छन्दोऽन्नं वै विराडन्नमनाधृष्टं विराड्भूत्वा व्याघ्रा उच्च° [४.] ॥ छादयतीति छदिरतिछन्दाः छन्दो भूत्वोत्क्रान्तं सिंहं पशुं वयसाग्रहीत् । सिꣳहं वयसाप्नोच्छदिश्छन्द इत्यतिछन्दा वै छदिश्छन्दः सा हि सर्वाणि छन्दाꣳसि छादयत्यतिछन्दा ह भूत्वा सिꣳहा उच्च° [५.] ॥ अथातो निरुक्तानिव पशूनिरुक्तानि छन्दाꣳस्युपदधातीति [५.] श्रुतेः स्पष्टानि छन्दांसि दशोच्यन्ते । पष्ठे पृष्ठभागे वहतीति पष्ठवाट् पञ्चवर्षः पशुः बृहती छन्दो भूत्वोत्क्रान्तं पष्ठवाहं पशुं वयसाग्रहीत् । पष्ठवाहं वयसाप्नोद्बृहती छन्द इति बृहती ह भूत्वा पष्ठवाह उच्च° [६.] ॥ उक्षा सेचनसमर्थः पशुः आद्यन्तावष्टाक्षरौ पादौ मध्यमो द्वादशाक्षरः सा ककुप् ककुप्छन्दो भूत्वोत्क्रान्तमुक्षाणं पशुं वयसाग्रहीत् । उक्षाणं वयसाप्नोत्ककुप्छन्द इति ककुब्भ भूत्वोक्षाण उच्च° [७.] ॥ ऋषभः सेचनसमर्थोऽनड्वान् द्वादशाक्षरत्रिपादा सतोबृहती सा भूत्वोत्क्रान्तमृषभं वयसाग्रहीत् । ऋषभं वयसाप्नोत्सतोबृहती छन्द इति सतोबृहती भूत्वऽर्षभा उच्च° [८.] ॥ ९ ॥

a. अनड्वान्वयः पङ्क्तिश्छन्दः । b. धेनुर्वयो जगती छन्दः । c. त्र्यविर्वयस्त्रिष्टुप्छन्दः । d. दित्यवाड्वयो विराट् छन्दः । e. पञ्चाविर्वयो गायत्री छन्दः । f. त्रिवत्सो वय उष्णिक् छन्दः । g. तुर्यवाड्वयोऽनुष्टुप् छन्दः । h. लोकं पृण° । i. ता अस्य° । k. इन्द्रं विश्वा° ॥ १० ॥

अनः शकटं वहतीत्यनड्वान्बलीवर्दः पङ्क्तिश्छन्दो भूत्वोत्क्रान्तमनड्वाहं पशुं वयसाग्रहीत् । अनड्वाहं वयसाप्नोत्पङ्क्तिश्छन्द इति पङ्क्तिर्ह भूत्वानड्वाह उच्च° [१.] ॥

धेनुः नवप्रसूता सवत्सा गौः जगती छन्दो भूत्वोत्क्रान्तां धेनुं वयसाग्रहीत् । धेनुं वयसाप्नोज्जगती छन्द इति जगती ह भूत्वा धेनव उच्च° [१०.] ॥ षण्मासात्मकः कालोऽविः तिस्रोऽवयोऽस्य त्र्यविः अष्टादशमासः पशुः त्रिष्टुप्छन्दो भूत्वोत्क्रान्तं त्र्यविं पशुं वयसाग्रहीत् । त्र्यविं वयसाप्नोत्त्रिष्टुप् छन्द इति त्रिष्टुब्भ भूत्वा त्र्यघव उच्च° [११.] ॥ दोऽवखण्डने क्तिन्प्रत्ययः दितिं खण्डनमर्हति दित्यं धान्यं वहति दित्यवाट् यद्वा द्विवर्षः पशुर्दित्यवाट् विराट्छन्दो भूत्वोत्क्रान्तं दित्यवाहं पशुं वयसाग्रहीत् । दित्यवाहं वयसाप्नोद्विराट् छन्द इति विराड्भूत्वा दित्यवाह उच्च° [१२.] ॥ पञ्चाविः पञ्चावयो यस्य सः सार्धद्विवर्षः पशुः गायत्री भूत्वोत्क्रान्तं पञ्चाविं पशुमग्रहीत् (17.) । पञ्चाविं वयसाप्नोद्गायत्री छन्द इति गायत्री ह भूत्वा पञ्चावय उच्च° [१३.] ॥ त्रिवत्सः त्रयो वत्साः वत्सराः यस्य सः त्रिवर्षः पशुः उष्णिक् छन्दो भूत्वोत्क्रान्तं त्रिवत्सं जग्राह (17.) । त्रिवत्सं वयसाप्नोदुष्णिक् छन्द इत्युष्णिग्घ भूत्वा त्रिवत्सा उच्च° [१४.] ॥ तुर्यवाट् तुर्यं चतुर्थं वर्षं वहतीति चतुर्वर्षः पशुः अनुष्टुप् छन्दो भूत्वोत्क्रान्तं तुर्यवाहं पशुं प्रजापतिर्वयसाग्रहीत् । तुर्यवाहं वयसाप्नोदनुष्टुप् छन्द इत्यनुष्टुब्भूत्वा तुर्यवाह उच्चक्रमुरिति श्रुतेः [८.२.४.१५.] ॥ एवं श्रुत्यनुसारेण मन्त्रा व्याख्याताः (18.) ॥ का° [१७.८.२४.] दक्षिणश्रोणेरधि लोकम्पृणाः पूर्ववत् । दक्षिणश्रोणिमारभ्य लोकम्पृणा उपदधाति पुरीषनिर्वापः सप्तऽर्चोपस्थानं चेति सूत्रार्थः ॥ ॥ इति द्वितीया चितिः सम्पूर्णा ॥१०॥

IV. इन्द्रा॑ग्नी॒ऽअव्य॑थमाना॒मिष्ट॑कां दृꣳहतं यु॒वम् ।
पृ॒ष्ठेन॒ द्यावा॑पृथि॒वीऽअ॒न्तरि॑क्षं च॒ विबा॑धसे ॥११॥

अथ तृतीया चितिः । इन्द्राग्नी विश्वकर्मा च तन्मन्त्राणामृषिः । का° [१७.८.२५.] तृतीयायाꣳ स्वयमातृण्णामिन्द्राग्नी इति मध्ये । तृतीयायां चितावात्मनो मध्ये स्वयमातृण्णामुपदधाति ॥ अनुष्टुप् पूर्वोऽर्धर्च इन्द्राग्निदेवत्यः उत्तरः स्वयमातृण्णादेवतः । हे इन्द्राग्नी युवं युवामव्यथमानामचलन्तीं भङ्गरहितामिष्टकां स्वयमातृण्णाख्यां दृढीकुरुतम् । एवमिन्द्राग्नी प्रत्युक्त्वा इष्टकामाह । हे स्वयमातृण्णे

पृष्ठेन स्वोपरिभागेन द्यावापृथिवी अन्तरिक्षं च त्वं विबाधसे अभिभवसि लोकत्रयमत्येषि ॥११॥

विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्वतीमन्तरिक्षं यच्छान्तरिक्षं दृंहान्तरिक्षं मा हिंसीः ॥ विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय ॥ वायुष्ट्वाभिपातु मह्या स्वस्त्या छर्दिषा शंतमेन तया देवतयाङ्गिरस्वद्ध्रुवा सीद ॥१२॥

वायुदेवत्यं विकृतिछन्दस्कं यजुः स्वयमातृणोपधाने एव विनियुक्तम्[१]। हे स्वयमातृणे विश्वकर्मा प्रजापतिरन्तरिक्षस्य पृष्ठे उपरि त्वा त्वां सादयतु स्थापयतु । किम्भूतां त्वां व्यचस्वतीमभिव्यक्तियुक्तां प्रथस्वतीं प्रथनं प्रथो विस्तारस्तद्युक्ताम् । हे इष्टके त्वमन्तरिक्षं यच्छ गन्धर्वाप्सरोगणादिधारकतया नियमय । अन्तरिक्षं दृंह परोपद्रवाभावेन दृढीकुरु । तदन्तरिक्षं मा हिंसीः । किमर्थं विश्वस्मै सर्वस्मै प्राणापानव्यानोदानाख्यवायुवृत्तिलाभाय प्रतिष्ठायै स्वगृहस्थित्यै चरित्राय शास्त्रीयाचरणाय । प्राणिनामेतत्सर्वं लोकदार्ढ्ये सति भवतीति नभोनियमनादि प्रार्थ्यतऽइति भावः । किं च मह्या महत्या स्वस्त्या योगक्षेमसम्पत्त्या शंतमेनातिशुभकारिणा छर्दिषा तेजोविशेषेण च कृत्वा वायुः त्वा त्वामभिपातु सर्वतो रक्षतु । तवाधिष्ठात्री या देवता तया देवतयानुगृहीता ध्रुवा स्थिरा सती सीदोपविश अङ्गिरस्वत् अङ्गिरसां चयनानुष्ठाने यथा त्वं ध्रुवा स्थिता तद्वत् ॥१२॥

a. राज्ञ्यसि प्राची दिक् । b. विराडसि दक्षिणा दिक् ।
c. सम्राडसि प्रतीची दिक् । d. स्वराडस्युदीची दिक् ।
e. अधिपत्न्यसि बृहती दिक् ॥१३॥

का° [१७. ८. २६.] अनूकेषु पञ्च दिश्या वैश्वदेवीवद्राज्ञ्यसीति प्रतिमन्त्रम् । वैश्वदेवीवदिति प्रतिदिशं रेतःसिग्वेलायामनूकेषु पञ्च दिश्यासंज्ञका इष्टका उपदधाति पञ्चमीं दक्षिणामुत्तरेणेति सूत्रार्थः ॥ दिक्शब्दोपेतत्वान्मन्त्राणां दिश्या इष्टकाः । दिग्देवत्यानि पञ्च यजूंषि । हे इष्टके त्वं राज्ञी राजमाना सती प्राची

दिक् पूर्वा दिग्भवसि गायत्रीरूपासि ॥ विराट् विविधं राजमाना दक्षिणा दिक् असि त्रिष्टुब्रूपासि ॥ सम्राट् सम्यग्राजमाना प्रतीची दिक् जगत्यसि ॥ स्वराट् परनिरपेक्षं स्वयमेव राजमाना सती उदीची दिगनुष्टुबसि ॥ अधिकं पातीत्यधिपत्नी बृहती प्रोर्ध्वा दिक् पङ्क्तिरसि ॥ दिक्छन्दोरूपां तां त्वां सादयामीति सर्वत्र शेषः छन्दांसि वै दिशो गायत्री वै प्राची दिक् त्रिष्टुब्दक्षिणा जगती प्रतीच्यनुष्टुबुदीची पङ्क्तिरूर्ध्वेति श्रुतेः [८.३.१.१४.] ॥१३॥

विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीम् ॥
विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छ ॥
वायुष्टेऽधिपतिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद ॥१४॥

का° [१७.१.३.] विश्वकर्मेति विश्वज्योतिषमुपरि पूर्वस्याः । प्रथमोपहिताया विश्वज्योतिष उपरि विश्वज्योतिषमिष्टकामुपदधाति ॥ वायुदेवत्यं शक्वरीछन्दस्कं यजुः । हे इष्टके ज्योतिष्मतीं वायुरूपां त्वां विश्वकर्मान्तरिक्षस्य पृष्ठे त्वां सादयतु अन्तरिक्षस्य पृष्ठे ह्ययं (19.) ज्योतिष्मान्वायुरिति [८.३.२.३.] श्रुतेः । किं च सर्वप्राणादिलाभाय त्वं सर्वं ज्योतिर्यच्छ प्रयच्छ । वायुः तवाधिपतिः तया देवतया ध्रुवा सती सीद अङ्गिरसां चिताविव ॥१४॥

नभश्च नभस्यश्च वार्षिकावृतूऽअग्नेरन्तःश्लेषो॰ ॥१५॥

का° [१७.१.४.] ऋतव्ये नभश्च नभस्यश्चेति । पूर्वऽर्तव्ययोरुपरि (20.) द्वे ऋतव्येऽउपदधाति ॥ ऋतुदेवत्यमुत्कृतिछन्दस्कं यजुः । नभः श्रावणः नभस्यो भाद्रपादः । शेषं व्याख्यातम् [१३.२५.] ॥१५॥

इषश्चोर्जश्च शारदावृतूऽअग्नेरन्तःश्लेषो॰ ॥१६॥

का° [१७.१.५.] इषश्चोर्जश्चेत्यपरे । अपरे ऋतव्ये पूर्वयोरुपरि दधाति । ऋतव्यमुत्कृतियजुः । इषः आश्विनः ऊर्जः कार्त्तिकः शरदवयवौ । शिष्टं प्रोक्तम् [१३.२५.] ॥१६॥

V. a. आयुर्मे पाहि । b. प्राणं मे पाहि । c. अपानं मे पाहि ।

d. व्यानं मे पाहि । e. चक्षुर्मे पाहि । f. श्रोत्रं मे पाहि ।
g. वाचं मे पिन्व । h. मनो मे जिन्व । i. आत्मानं मे पाहि ।
k. ज्योतिर्मे यच्छ ॥१७॥

का° [१७. १. ६.] पूर्वार्धे प्राणभृतो दशायुर्मऽइति प्रतिमन्त्रम् । आत्मनः पूर्वभागे प्राणभृत्संज्ञा दशेष्टका उपदधातीति सूत्रार्थः ॥ दश यजूंषि लिङ्गोक्तदेवतानि । हे इष्टके मे ममायुः त्वं पाहि रक्ष एवं प्राणमपानं व्यानं चक्षुः श्रोत्रं मे रक्ष मे वाचं पिन्व सिञ्च कामैः पूरय मे मनो जिन्व प्रीणय ममात्मानं जीवं पाहि मह्यं ज्योतिस्तेजो यच्छ ॥१७॥

a. मा छन्दः । b. प्रमा छन्दः । c. प्रतिमा छन्दः । d. अस्रीवयश्छन्दः । e. पङ्क्तिश्छन्दः । f. उष्णिक् छन्दः । g. बृहती छन्दः । h. अनुष्टुप्छन्दः । i. विराट् छन्दः । k. गायत्री छन्दः । l. त्रिष्टुप्छन्दः । m. जगती छन्दः ॥१८॥

का° [१७. १. ८.] छन्दस्या द्वादश-द्वादशाप्ययेषु मा छन्द इति । अप्ययेषु (21.) पक्षपुच्छात्मसंधिषु त्रिषु द्वादश-द्वादश (22.) छन्दस्यासंज्ञा इष्टका उपदधातीति सूत्रार्थः ॥ षट्त्रिंशद्यजूंषि लिङ्गोक्तदेवत्यानि । मीयतऽइति मा मितश्छादनाच्छन्दो (23.) ऽयं लोकः हे इष्टके त्वं तद्रूपासि अयं वै लोको मायं लोको मित इवेति [८. ३. ३. ५.] श्रुतेः ॥ अस्माल्लोकात्प्रमीयतऽइति प्रमान्तरिक्षलोकरूपासि अन्तरिक्षलोको वै प्रमान्तरिक्षलोको ह्यस्माल्लोकात्प्रमित इवेति [८. ३. ३. ५.] श्रुतेः ॥ प्रतिमा द्यौः सा ह्यन्तरिक्षे प्रतिमिता असौ वै लोकः प्रतिमैष ह्यन्तरिक्षलोके प्रतिमित इवेति [८. ३. ३. ५.] श्रुतेः ॥ अस्रीवयः अस्यते क्षिप्यतऽइत्यस्रि अस्रि पतनशीलं वयोऽन्नं यस्मात्तदस्रिवयः दीर्घश्छान्दसः अस्रीवयः लोकत्रयरूपं छादनाच्छन्दस्तद्रूपासि (24.) यदेषु लोकेष्वन्नं तदस्रीवयोऽथो यदेभ्यो लोकेभ्योऽन्नꣳ स्रवति तदस्रीवय इति [८. ३. ३. ५.] श्रुतेः ॥ इतः स्पष्टान्येव छन्दांसि पङ्क्त्यादीन्यष्टौ अथो निरुक्तान्येव छन्दाꣳस्युपदधातीति [८. ३. ३. ५.] श्रुतेः इ-

ष्टके त्वं पङ्क्त्युष्णिग्बृहत्यनुष्टुब्विराड्गायत्रीत्रिष्टुब्जगतीछन्दोरूपासीत्यर्थः ॥ १८ ॥

a. पृथिवी छन्दः । b. अन्तरिक्षं छन्दः । c. द्यौश्छन्दः । d. समाश्छन्दः । e. नक्षत्राणि छन्दः । f. वाक् छन्दः । g. मनश्छन्दः । h. कृषिश्छन्दः । i. हिरण्यं छन्दः । k. गौश्छन्दः । l. अजा छन्दः । m. अश्वश्छन्दः ॥ १९ ॥

पृथिव्यादिदेवत्यानि यानि छन्दांसि तद्रूपासि । समाः संवत्सराः । स्पष्टमन्यत् । यान्येतद्देवत्यानि छन्दाꣳसि तान्येवैतदुपदधातीति श्रुतेः [८. ३. ३. ६.] ॥ १९ ॥

a. अग्निर्देवता । b. वातो देवता । c. सूर्यो देवता । d. चन्द्रमा देवता । e. वसवो देवता । f. रुद्रा देवता । g. आदित्या देवता । h. मरुतो देवता । i. विश्वे देवा देवता । k. बृहस्पतिर्देवता । l. इन्द्रो देवता । m. वरुणो देवता ॥ २० ॥

इष्टके त्वमग्न्यादिदेवतारूपासि तामुपदधामीति सर्वत्र शेषः । अग्न्यादीनां देवतात्वं प्रसिद्धम् । अग्निर्देवता वातो देवतेत्येता वै देवताश्छन्दाꣳसि तान्येवैतदुपदधातीति [८. ३. ३. ६.] श्रुतेः ॥ २० ॥

मूर्धासि राड्ध्रुवासि धरुणा धर्त्र्यसि धरणी । आयुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वा ॥ २१ ॥

का° [१७. ९. १०-१३.] वालखिल्याः सप्त पुरस्तात्प्राणभृद्भ्यो वापरा द्वादशभ्यो ऽपरास्तु मूर्धासि राडिति प्रतिमन्त्रम् । प्रागुक्तदशप्राणभृद्भ्यः पूर्वा अपरा वा सप्त वालखिल्यासंज्ञा इष्टका उपदधाति मूर्धासीत्यादिसप्तमन्त्रैः । तुर्विशेषे । अपराः सप्त वालखिल्यास्तु द्वादशछन्दस्याभ्यो ऽपरा एवोपधेयाः यन्त्रीति सप्तमन्त्रैः । वालमात्रेणापि खिला अभिन्ना इति वालखिल्याः प्राणास्ते च चतुर्दश सप्त पुरो हस्तौ बाहू (25.) शिरो ग्रीवा नाभेरूर्ध्वभागश्चेति ऊरू जानुनी पादौ नाभिरधोभागश्चेति सप्त पश्चादधोभागे एतेष्वङ्गेषु प्राणानां विद्यमानत्वात्तानेवोपदधाति त-

था च श्रुतिः [८, ३, ४, १.४.५.] प्राणा वै वालखिल्याः प्राणानेवैतदुपदधाति ता यद्वालखिल्या नाम यद्वाऽउर्वरयोरसम्भिन्नं भवति खिल इति वै तदाचक्षते वालमात्राडु हेमे प्राणा असम्भिन्नास्ते यद्वालमात्रादसम्भिन्नास्तस्माद्वालखिल्याः ॥१॥ सप्त वाऽइमे पुरस्तात्प्राणाश्चत्वारि दोर्बाहवाणि शिरो ग्रीवा यदूर्ध्वं नाभेस्तत्सप्तममङ्गेऽङ्गे हि प्राणाः ॥४॥ सप्त वाऽइमे पश्चात्प्राणाश्चत्वार्यूर्वष्ठीवानि द्वे प्रतिष्ठे यदवाङ्नाभेस्तत्सप्तममङ्गेऽङ्गे (26.) हि प्राणा एते वै सप्त पश्चात्प्राणास्तानस्मिन्नेतद्दधातीति ॥५॥ इति सूत्रार्थः ॥ मूर्धासि अनुष्टुप् यन्त्री परोष्णिक् । ऋग्द्वये चतुर्दश यजूंषि वालखिल्यादेवत्यानि । हे इष्टके त्वं मूर्धा मूर्धवदुत्तमा राट् राजमाना चासि । हे इष्टके त्वं ध्रुवा स्थिरा धरुणा धारणहेतुश्चासि । हे इष्टके त्वं धर्त्री धारणं कुर्वती धरणी भूमिरूपा चासि । एवमिष्टकात्रयस्य त्रिलोकरूपत्वम् तदुक्तं श्रुत्या [८.३.४.८.] मूर्धासि राडितीमं लोकमरोहन् ध्रुवासि धरुणेत्यन्तरिक्षलोकं धर्त्र्यसि धरणीत्यमुं लोकमिति ॥ आयुषे त्वा आयुर्वृद्ध्यर्थं त्वामुपदधामि । वर्चसे कान्त्यर्थं त्वामुपदधामि । कृष्यै सस्यनिष्पत्तये त्वामु° । क्षेमाय सम्पादितधनरक्षणाय त्वामु° । इष्टकाचतुष्टयस्य पशुसंस्तवः (27.) आयुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वेति चत्वारश्चतुष्पादाः पशव इति [८.३.४.८.] श्रुतेः ॥२१॥

a. यन्त्री राड्यन्त्र्यसि यमनी ध्रुवासि धरित्री । इषे त्वोर्जे त्वा रय्यै त्वा पोषाय त्वा । b. लोकं पृण° । c. ता अस्य° । d. इन्द्रं विश्वा° ॥२२॥

हे इष्टके त्वं यन्त्री नियमोपेता राट् राजमाना चासि । तथा यन्त्री स्वयमपि सती यमनी सर्वेषां नियमकारिण्यसि । ध्रुवा स्थिरा सती धरित्री भूमिरूपा चासि । तिसृणां त्रिलोकसंस्तवः यन्त्री राडित्यमुं लोकमरोहन् यन्त्र्यसि यमनीत्यन्तरिक्षलोकं ध्रुवासि धरित्रीतीमं लोकमिति [८.३.४.१०.] श्रुतेः ॥ हे इष्टके इषेऽन्नाय त्वामुपदधामि । ऊर्जे बलाय त्वामु° । रय्यै धनाय त्वामु° । पोषाय धनपुष्ट्यै त्वामु° । इषे त्वोर्जे त्वा रय्यै त्वा पोषाय त्वेति चतस्रश्चतुष्पादाः पशव इति [८.३.४.१०.] श्रुतेश्चतसृणां पशुसंस्तवः ॥ का° [१७.६.१५.] उत्तरश्रोणेरधि लोकम्पृणाः पूर्ववत् । उत्तरश्रोणेरारभ्य प्रथमचितिवदेव लोकम्पृणा उपदधाति । ततः पुरीषनिर्वापोपस्थाने ॥२२॥ ॥ इति तृतीया चितिः ॥ ॥

a. आशुस्त्रिवृत् । b. भान्तः पञ्चदशः । c. व्योमा सप्तदशः । d. धरुणं एकविꣳशः । e. प्रतूर्तिरष्टादशः । f. तपो नवदशः । g. अभीवर्तः सविꣳशः । h. वर्चो द्वाविꣳशः । i. सम्भरणस्त्रयोविꣳशः । k. योनिश्चतुर्विꣳशः । l. गर्भाः पञ्चविꣳशः । m. ओजस्त्रिणवः । n. क्रतुरेकत्रिꣳशः । o. प्रतिष्ठा त्रयस्त्रिꣳशः । p. ब्रध्नस्य विष्टपं चतुस्त्रिꣳशः । q. नाकः षट्त्रिꣳशः । r. विवर्तोऽष्टाचत्वारिꣳशः । s. धर्त्रं चतुष्टोमः ॥ २३ ॥

का॰ [१७. १०. ७.] उत्तरां पूर्वयोराशुस्त्रिवृदिति । पूर्वानूक्तान्तविहितयोर्दक्षिणोत्तरयोर्मध्ये उत्तरां जङ्घामात्रीमुदङ्मुख उपदधातीति सूत्रार्थः ॥ अस्यां कण्डिकायामष्टादश यजूंषि चतुर्णां मृत्युमोहिन्युपधाने विनियोगः प्रतूर्तिरित्यादीनां चतुर्दशार्धपञ्चोपधाने विनियोगः । हे इष्टके त्वं त्रिवृत्स्तोमरूपासि साम्नामावृत्तिविशेषाः स्तोमाः तेषां विशेषणान्याशुरित्यादीनि । कीदृशस्त्रिवृत् आशुः अशू व्याप्तौ अश्नुते व्याप्नोति सर्वान्स्तोमानित्याशुः । तद्रूपां त्वामुपदधामीति सर्वत्र शेषः । स्तोमानुपदधाति प्राणा वै स्तोमाः प्राणा उ वै ब्रह्म ब्रह्मैवैतदुपदधातीति [८. ४. १. ३.] श्रुतेः । यद्वा आशुः वायुः त्रिवृत् त्रिषु लोकेषु वर्तत इति त्रिवृत् क्विप् सर्वभूतव्यापकत्वादाशुर्वायुस्तद्रूपासि । एवं श्रुत्यनुसारेण सर्वत्र व्याख्यायते । तथा च श्रुतिः [८. ४. १. ९.] स पुरस्तादुपदधात्याशुस्त्रिवृदिति य एव त्रिवृत्स्तोमस्तमुपदधाति तद्यत्तमाहाशुरित्येष हि स्तोमानामाशिष्ठोऽथो वायुर्वा ऽआशुस्त्रिवृत्स एषु त्रिषु लोकेषु वर्तते तद्यत्तमाहाशुरित्येष हि सर्वेषां भूतानामाशिष्ठो वायुर्ह (28.) भूत्वा पुरस्तात्तस्थौ तदेव तद्रूपमुपदधातीति ॥ का॰ [१७. १०. ९.] दक्षिणां दक्षिणयोर्भान्तः पञ्चदश इति । दक्षिणानूक्तान्तविहितयोर्दक्षिणोत्तरपञ्चयोर्मध्ये भान्त इति मन्त्रेण दक्षिणां पञ्चां प्रत्यङ्मुख उपदधातीति सूत्रार्थः ॥ भान्तः वज्ररूपो यः पञ्चदशः स्तोमः यद्वा भान्तः चन्द्रः पञ्चदशाहानि पूर्यमाणत्वात्पञ्चदशाहं क्षीयमाणत्वात्पञ्चदशः भा कान्तिरिवान्तः स्वरूपं यस्य तद्रूपासि । य एव पञ्चदश स्तोमस्तं तदुपदधाति तद्यत्तमाह भान्त इति वज्रो वै भान्तो वज्रः पञ्चदशोऽथो

चन्द्रमा वै भान्तः पञ्चदशः सः पञ्चदशाहान्यापूर्यते पञ्चदशापक्षीयते तद्यत्तमाह भान्त इति भाति हि चन्द्रमाश्चन्द्रमा ह भूत्वा दक्षिणतस्तस्थौ तदेव तद्रूपमुपदधातीति [८. ४. १. १०.] श्रुतेः ॥ का° [१७. १०. १०.] दक्षिणामुत्तरयोर्व्योमा सप्तदश इति । उत्तरानूकान्तविहितयोर्दक्षिणोत्तरपक्षयोर्मध्ये दक्षिणां पक्ष्यां व्योमेति प्रत्यङ्मुख उपदधातीति सूत्रार्थः ॥ विविधमवतीति व्योमा प्रजापतिः सप्तदशः स्तोमः । संवत्सरो वा व्योमा सप्तदशः द्वादशमासपञ्चर्तुरूपसप्तदशावयवत्वात् (29.) तद्रूपासि । य एव सप्तदश स्तोमस्तं तदुपदधाति तद्यत्तमाह व्योमेति प्रजापतिर्वै व्योमा प्रजापतिः सप्तदशोऽथो संवत्सरो वा व्योमा सप्तदशस्तस्य द्वादश मासाः पञ्चऽर्तवस्तद्यत्तमाह व्योमेति व्योमा हि संवत्सरः संवत्सरो ह भूत्वोत्तरतस्तस्थौ तदेव तद्रूपमुपदधातीति [८. ४. १. ११.] श्रुतेः ॥ का° [१७. १०. ८.] दक्षिणामपरयोर्धरुण एकवि७श इति । अपरानूकान्तविहितयोर्दक्षिणोत्तरयोर्मध्ये दक्षिणां जङ्घामात्रीं धरुण इति दक्षिणामुख उपदधातीति सूत्रार्थः ॥ धरुणो धारकः प्रतिष्ठाभूत एकविंशः स्तोमः यद्वा धरुण आदित्यः स एकविंशावयवत्वादेकविंशः द्वादश मासाः पञ्चऽर्तवः त्रयो लोका आदित्य इत्यवयवांस्तद्रूपासि । य एवैकवि७श स्तोमस्तं तदुपदधाति तद्यत्तमाह धरुण इति प्रतिष्ठा वै धरुणः प्रतिष्ठैकवि७शोऽथोऽसौ वाऽआदित्यो धरुण एकवि७शस्तस्य द्वादश मासाः पञ्चऽर्तव इमे लोका असावेवादित्यो धरुण एकवि७शस्तद्यत्तमाह धरुण इति यदा ह्येवैषोऽस्तमेत्यथेद७ सर्वं ध्रियतऽआदित्यो ह भूत्वा पश्चात्तस्थौ तदेव रूपमुपदधातीति [८. १. १. १२.] श्रुतेः ॥ का° [१७. १०. ११.] चतुर्दश प्रतिमन्त्रं प्रतूर्तिरष्टादश इति । चतस्र उपधाय चतुर्दशार्धपक्ष्या उदङ्मुख उपदधाति चतुर्दशमन्त्रैरिति सूत्रार्थः ॥ अतः परं संवत्सररूपाण्युपदधाति । प्रकृष्टा तूर्तिस्त्वरा यस्य स प्रतूर्तिः अष्टादशः स्तोमः यद्वा संवत्सरः प्रतूर्तिरष्टादशावयवः द्वादश मासाः पञ्चऽर्तवः संवत्सरश्चेत्यवयवाः । य एवाष्टादश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव प्रतूर्तिरष्टादशस्तस्य द्वादश मासाः पञ्चऽर्तवः संवत्सर एव प्रतूर्तिरष्टादशस्तद्यत्तमाह प्रतूर्तिरिति संवत्सरो हि सर्वाणि भूतानि प्रतिरति तदेव तद्रूपमुपदधातीति श्रुतेः [८. ४. १. १३.] ॥ तपोरूपो नवदशः स्तोमः यद्वा संवत्सरस्तपः शीतोष्णवर्षैस्तपतीति स

नवदशः द्वादश मासाः षडृतवः संवत्सर इति तद्रूपासि । य एव नवदश स्तोम-स्तं तदुपदधात्ययो संवत्सरो वाव तपो नवदशस्तस्य द्वादश मासाः षडृतवः संवत्सर एव तपो नवदशस्तद्यत्तमाह तप इति संवत्सरो हि सर्वाणि भूतानि तपति तदेव तद्रूपमुपद° [१४.] ॥ अभिवर्त्यते आवर्त्यतऽइत्यभीवर्तः समावृत्तिरूपः सविंशः स्तोमः यद्वा अभिवर्तयत्यावर्तयति सर्वाणि भूतानीत्यभीवर्तः संवत्सरः उपसर्गस्य घञ्यमनुष्ये बहुलमिति [पा° ६. ३. १२२.] दीर्घः द्वादशमाससप्तऽर्तुसंवत्सररूपविंशतिसंख्यया सहितः सविंशः । य एव सविᳲशः स्तोमस्तं तदुपदधातीत्ययो संवत्सरो वाऽअभीवर्तः सविᳲशस्तस्य द्वादश मासाः (30.) सप्तऽर्तवः संवत्सर एवाभीवर्तः सविᳲशस्तद्यत्तमाहाभीवर्त इति संवत्सरो हि सर्वाणि भूतान्यभिवर्तते तदेतद्रूप° [१५.] ॥ वर्चः बलविशेषप्रदो द्वाविᳲशः स्तोमः यद्वा वर्चः संवत्सरः वर्चस्वितमः द्वादश मासाः सप्तऽर्तवः द्वे अहोरात्रे संवत्सरश्चेति द्वाविंशतिसंख्योपेतत्वाद्द्वाविंशः तद्रूपासि । य एव द्वाविᳲश स्तोमस्तं तदुपदधात्ययो संवत्सरो वाव वर्चो द्वाविᳲशस्तस्य द्वादश मासाः सप्तऽर्तवो द्वेऽअहोरात्रे संवत्सर एव वर्चो द्वाविᳲशस्तद्यत्तमाह वर्च इति संवत्सरो हि सर्वेषां भूतानां वर्चस्वितमस्तदेतद्रूप° [१६.] ॥ सम्बिभर्ति सम्भरणः सम्यक् पोषकस्त्रयोविंशः स्तोमस्त्वमसि यद्वा सम्भरत्युत्पादयति संहरति विनाशयति वा सम्भरणः संवत्सरः त्रयोदश (31.) मासाः सप्तऽर्तवो द्वेऽअहोरात्रे एकः संवत्सर इति त्रयोविंशावयवः तद्रूपासि । य एव त्रयोविᳲश स्तोमस्तं तदुपदधात्ययो संवत्सरो वाव सम्भरणस्त्रयोविᳲशस्तस्य त्रयोदश मासाः सप्तऽर्तवो द्वेऽअहोरात्रे संवत्सर एव सम्भरणस्त्रयोविᳲशस्तद्यत्तमाह सम्भरण इति संवत्सरो हि सर्वाणि भूतानि सम्भृतस्तदेव तद्रूप° [१७.] ॥ योनिः प्रजोत्पादकश्चतुर्विंशः स्तोमोऽसि यद्वा योनिः सर्वस्थानभूतः संवत्सरश्चतुर्विंशतिपक्षात्मकस्तद्रूपासि । य एव चतुर्विᳲश स्तोमस्तं तदुपदधात्ययो संवत्सरो वाव योनिश्चतुर्विᳲशस्तस्य चतुर्विᳲशतिरर्धमासास्तद्यत्तमाह योनिरिति संवत्सरो हि सर्वेषां भूतानां योनिस्तदेव तद्रूप° [१८.] ॥ गर्भाः व्यत्ययेन बहुत्वं सामगर्भः पञ्चविंश स्तोमोऽसि यद्वा गर्भः संवत्सरो भूतोत्पादकत्वाच्चतुर्विंशतिः पक्षा एकः संवत्सर इति अधिकमासो भूत्वा ऋतुषु गर्भो

भवतीति वा गर्भः । य एव पञ्चविꣳश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव गर्भाः पञ्चविꣳशस्तस्य चतुर्विꣳशतिरर्धमासाः संवत्सर एव गर्भाः पञ्चविꣳशस्तद्य- त्तमाह गर्भा इति संवत्सरो ह त्रयोदशो मासो गर्भो भूत्वऽर्तूनप्रविशति तदेव तद्रूप° [१९.] ॥ ओजः मतुब्लोपः ओजस्वी तेजस्वी वज्रो वाऽओजः तद्रूपस्त्रिणवः स्तोमोऽसि यद्वा ओजः संवत्सरश्चतुर्विंशतिपक्षाहोरात्रसंवत्सरात्मकत्वात्त्रिणवः त्रिगुणा नव यत्र । य एव त्रिणव स्तोमस्तं तदुपदधाति तद्यत्तमाहौज इति व- ज्रो वाऽओजो वज्रस्त्रिणवोऽथो संवत्सरो वाऽओजस्त्रिणवस्तस्य चतुर्विꣳशति- रर्धमासा द्वेऽअहोरात्रे संवत्सर एवौजस्त्रिणवस्तद्यत्तमाहौज इति संवत्सरो हि सर्वेषां भूतानामोजस्वितमस्तदेव तद्रूप° [२०.] ॥ क्रतुर्यज्ञोपयोगी एकत्रिंशः स्तो- मोऽसि यद्वा संवत्सर एव करोतीति क्रतुः पक्षऽर्तुसंवत्सरात्मकत्वादेकत्रिंशः । य एवैकत्रिꣳश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव क्रतुरेकत्रिꣳशस्तस्य च- तुर्विꣳशतिरर्धमासाः षडृतवः संवत्सर एव क्रतुरेकविꣳशस्तद्यत्तमाह क्रतुरिति संवत्सरो हि सर्वाणि भूतानि करोतीति [८.४.१.२१.] श्रुतेः ॥ प्रतिष्ठा स्थिति- हेतुस्त्रयस्त्रिꣳशः स्तोमोऽसि यद्वा संवत्सरः प्रतिष्ठा संवत्सरे सर्वस्य प्रतिष्ठितत्वा- त्पक्षऽर्त्वहोरात्रसंवत्सरात्मकत्वात्त्रयस्त्रिंशः । य एव त्रयस्त्रिꣳश स्तोमस्तं तदुपद- धात्यथो संवत्सरो वाव प्रतिष्ठा त्रयस्त्रिꣳशस्तस्य चतुर्विꣳशतिरर्धमासाः षडृतवो द्वेऽअहोरात्रे संवत्सर एव प्रतिष्ठा त्रयस्त्रिꣳशस्तद्यत्तमाह प्रतिष्ठेति संवत्सरो हि सर्वेषां भूतानां प्रतिष्ठा तदेतद्रूप° [२२.] ॥ ब्रध्नः सूर्यः असौ वाऽआदित्यो ब्रध्न इति श्रुतेः विष्टपं निवासस्थानं भुवनं विष्टपं लोक इति कोशात् ब्रध्नस्य विष्टपं स्वाराज्यं स्वतन्त्रत्वं तद्रूपस्तत्प्रदो यश्चतुस्त्रिꣳश स्तोमस्तद्रूपासि यद्वा संवत्सरो ब्रध्नस्य विष्टपं रविणेव कालनिर्माणत्वात् चतुर्विंशतिपक्षसप्तऽर्त्वहोरात्रसंवत्स- रात्मकत्वाच्चतुस्त्रिंशः । य एव चतुस्त्रिꣳश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव ब्रध्नस्य विष्टपं चतुस्त्रिꣳशस्तस्य चतुर्विꣳशतिरर्धमासाः सप्तऽर्तवो द्वेऽअहोरात्रे सं- वत्सर एव ब्रध्नस्य विष्टपं चतुस्त्रिꣳशस्तद्यत्तमाह ब्रध्नस्य विष्टपमिति स्वाराज्यं वै ब्रध्नस्य विष्टपं तदेतद्रूप° [२३.] ॥ नाकः स्वर्गप्रदः षट्त्रिंशः स्तोमोऽसि संव- त्सरो वा नाकः काम्यतऽइति कं सुखं न कमकं दुःखं तन्नास्ति यत्र स नाकः

षट्त्रिंशः पञ्चमासात्मकत्वात् । य एव षट्त्रिꣳश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव नाकः षट्त्रिꣳशस्तस्य चतुर्विꣳशतिरर्धमासा द्वादश मासास्तद्यत्तमाह नाक इति न हि तत्र गताय कस्मै चनाकं भवत्यथो संवत्सरो वाव नाकः संवत्सरः स्वर्गो लोकस्तदेव तद्रूप° [२४.] ॥ विवर्त्यन्ते आवर्त्यन्ते सामानि यत्रेति विवर्तः अष्टाचत्वारिंशः स्तोमस्तद्रूपासि यद्वा विविधं वर्तन्ते भूतानि यत्रेति विवर्तः संवत्सरः अधिमासत्वेन षड्विंशतिः पक्षाः सप्तऽर्तवः त्रयोदश मासाः द्वे अहोरात्रे इत्यष्टाचत्वारिंशः । य एवाष्टाचत्वारिꣳश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव विवर्तोऽष्टाचत्वारिꣳशस्तस्य षड्विꣳशतिरहोरात्राणि त्रयोदश मासाः सप्तऽर्तवो द्वेऽअहोरात्रे तद्यत्तमाह विवर्त इति संवत्सराद्धि सर्वाणि भूतानि विवर्तन्ते तदेतद्रूप° [२५.] ॥ धर्त्रं धारकश्चतुरुत्तरस्तोमश्चतुष्टोमः मध्यपदलोपी समासः त्रिवृत्पञ्चदशसप्तदशैकविंशानां समूहस्तद्रूपासि । वायुर्वा धर्त्रं जगदाधारत्वात् चतुर्दिग्भिः स्तूयमानत्वाच्चतुष्टोमः । य एव चतुष्टोमस्तं तदुपदधाति तद्यत्तमाह धर्त्रमिति प्रतिष्ठा वै धर्त्रं प्रतिष्ठा चतुष्टोमोऽथो वायुर्वाव धर्त्रं चतुष्टोमः स आभिश्चतसृभिर्दिग्भिः स्तुते वायुर्वै सर्वेषां भूतानां प्रतिष्ठा तदेतद्रूपमुपदधातीति [८.४.१.२६.] श्रुतेः ॥ आदावन्ते च वायूपधानेन वायुना सर्वभूतानि वशीकरोतीति भावः तदुक्तं श्रुत्या [८.४.१.२६.] स वै वायुमेव प्रथममुपदधाति वायुमुत्तमं वायुनैव तदेतानि सर्वाणि भूतान्युभयतः परिगृह्णातीति ॥ एतैरष्टादशमन्त्रैः स्तोमवादिभिः स्तोमरूपत्वं नीता अष्टादशेष्टका उपधेया इत्यर्थः ॥२३॥

VII. a. अग्नेर्भागोऽसि दीक्षाया आधिपत्यं ब्रह्म स्पृतं त्रिवृत्स्तोमः ।

b. इन्द्रस्य भागोऽसि विष्णोराधिपत्यं क्षत्रꣳ स्पृतं पञ्चदशः स्तोमः ।

c. नृचक्षसां भागोऽसि धातुराधिपत्यं जनित्रꣳ स्पृतꣳ सप्तदशः स्तोमः ।

d. मित्रस्य भागोऽसि वरुणस्याधिपत्यं दिवो वृष्टिर्वात स्पृत एकविꣳश स्तोमः ॥२४॥

का° [१७.१०.१२.] दक्षिणां पूर्वयोरग्नेर्भाग इति । पूर्वानूकान्ते विहितयोर्नङ्गामात्र्योर्मध्ये दक्षिणामुपदधात्युदङ्मुखः उत्तरा पूर्वमुपहिता ॥ दश यजूंषि चतुर्भिर्मृ-

त्युमोक्षिन्युपधानं षड्भिः षट्पद्योपधानं दशेष्टकाः स्पृत्संज्ञाश्च तत्रार्थवादः श्रुत्युक्तः। उत्पन्नेन सृष्ट्यादौ प्रजापतिना सर्वाणि भूतानि स्रष्टुं गर्भे कृतानि गर्भस्थान्येव भूतानि पाप्मा मृत्युरगृह्णात् ततः प्रजापतिर्देवानुवाच युष्माभिः सहाहमिमानि भूतानि पापरूपान्मृत्योर्मोचयामीति देवैरुक्तं तत्रास्माकं को लाभः प्रजापतिनोक्तं वृणुत तैः कैश्चिदुक्तमस्माकं भागोऽस्तु अन्यैरुक्तमस्माकमाधिपत्यमस्त्विति तथेत्युक्त्वैकेभ्यो भागमपरेभ्य आधिपत्यं दत्त्वा तैः सह भूतानि मृत्योरस्पृणोत्ततः स्पृत इष्टका इति। तथा च श्रुतिः [८, ४, २, १.२.] अथ स्पृत उपदधात्येतद्वै प्रजापतिरेतस्मिन्नात्मनः प्रतिहिते सर्वाणि भूतानि गर्भ्यभवत्तान्यस्य गर्भऽएव सन्ति पाप्मा मृत्युरगृह्णात् ॥१॥ स देवानब्रवीद्युष्माभिः सहेमानि सर्वाणि भूतानि पाप्मनो मृत्यो स्पृणवानीति किं नस्ततो भविष्यतीति वृणीध्वमित्यब्रवीत्तं भागो नोऽस्त्वित्येकेऽब्रुवन्नाधिपत्यं नोऽस्त्वित्येके स भागमेकेभ्यः कृत्वाधिपत्यमेकेभ्यः सर्वाणि भूतानि पाप्मनो मृत्योरस्पृणोद्यदस्पृणोत्तस्मात्स्पृतस्तथैवैतद्यजमानो भागमेकेभ्यः कृत्वाधिपत्यमेकेभ्यः सर्वाणि भूतानि पाप्मनो मृत्यो स्पृणोतीति ॥ अथ मन्त्रार्थः। हे इष्टके या त्वमग्नेर्भागो विभागोऽसि यस्यां च त्वयि दीक्षाया वाच आधिपत्यं स्वामित्वं यया च त्वया त्रिवृत्स्तोमः विभक्तिव्यत्ययः त्रिवृता स्तोमेन ब्रह्म ब्राह्मण्यं स्पृतं पाप्मनो मृत्योरपनीतं रक्षितं यस्यां त्वयि त्रिवृत्स्तोम इति वा तां त्वामुपदधामीति शेषः। एवं सर्वत्र व्याख्येयम् स्पृ प्रीतिरक्षाप्राणनेषु स्वादिः। वाग्वै दीक्षेति [८.४.२.३.] श्रुतेः ॥ का° [१७.१०.१५.] उत्तरामुत्तरयोरिन्द्रस्य भाग इति। उदगनूकान्तविहितयोर्दक्षिणोत्तरयोः पद्ययोर्मध्ये उत्तरामुपदधाति दक्षिणा तूपहितेति सूत्रार्थः ॥ हे इष्टके त्वमिन्द्रस्य भागोऽसि यस्यां त्वयि विष्णोराधिपत्यं पञ्चदशेन क्षत्रं क्षत्रजातिः स्पृतं मृत्योर्मोचितम् इन्द्राय भागं कृत्वा विष्णवऽआधिपत्यमकरोदिति [८.४.२.४.] श्रुतेः ॥ का° [१७.१०.१४.] उत्तरां दक्षिणयोर्नृचक्षसां भाग इति। दक्षिणानूकान्तविहितयोर्दक्षिणोत्तरयोः पद्ययोरुत्तरां निदधाति दक्षिणोपहिता ॥ नॄन् शुभाशुभकर्तॄन् चक्षते जानन्ति ते नृचक्षसो देवास्तेषां भागोऽसि त्वयि धातुराधिपत्यं त्वया सप्तदशस्तोमेन जनित्रं वैश्यजातिः स्पृतम् देवा वै नृचक्षसो देवेभ्यो भागं कृत्वा धात्रऽआधिपत्यमकरोदिद्वै

जनित्रमिति [८.४.२.५.] श्रुतिः ॥ का० [१७.१०.१३.] उत्तरामपरयोर्मित्रस्य भाग इति । अपरानूकान्तविहितयोर्दक्षिणोत्तरयोर्जङ्घामात्र्योर्मध्ये उत्तरां जङ्घामात्रीं दक्षिणामुख उपदधाति दक्षिणा तूपहितेति सूत्रार्थः ॥ हे इष्टके त्वं मित्रस्य प्राणस्य भागोऽसि त्वयि वरुणस्यापानस्याधिपत्यं यया त्वयैकविंशेन स्तोमेन दिवः सम्बन्धिनी वृष्टिर्वातश्च स्पृतस्तां सादयामि । प्राणो वै मित्रोऽपानो वरुणः प्राणाय भागं कृत्वापानायाधिपत्यमकरोदिति [८.४.२.६.] श्रुतिः ॥ २४ ॥

a. वसूनां भागोऽसि रुद्राणामाधिपत्यं चतुष्पात्स्पृतं चतुर्विꣳश स्तोमः ।

b. आदित्यानां भागोऽसि मरुतामाधिपत्यं गर्भा स्पृताः पञ्चविꣳश स्तोमः ।

c. अदित्यै भागोऽसि पूष्ण आधिपत्यमोज स्पृतं त्रिणव स्तोमः ।

d. देवस्य सवितुर्भागोऽसि बृहस्पतेराधिपत्यꣳ समीचीर्दिश स्पृताश्चतुष्टोम स्तोमः ॥ २५ ॥

का० [१७.१०.१६.] षट् प्रतिमन्त्रं वसूनां भाग इति । चतुर्दशभ्योऽपराः षण्मन्त्रैः षट् पश्चा उपदध्यादिति सूत्रार्थः ॥ इष्टके त्वं वसूनां भागोऽसि त्वयि रुद्राणामाधिपत्यं त्वया चतुर्विंशेन स्तोमेन प्रजानां चतुष्पात् गवाश्वादिकं स्पृतं पापान्मोचितम् वसुभ्यो भागं कृत्वा रुद्रेभ्य आधिपत्यमकरोदित्ति [८.४.२.७.] श्रुतिः ॥ आदित्यानां या त्वं भागोऽसि त्वयि मरुतामाधिपत्यं त्वया पञ्चविंशेन स्तोमेन प्रजानां गर्भाः मृत्योः रक्षिताः आदित्येभ्यो भागं कृत्वा मरुद्भ्य आधिपत्यमकरोदिति [८.४.२.८.] श्रुतिः । त्वमदित्यै अदित्या भूमेर्भागोऽसि पूष्ण आधिपत्यं त्वयि त्वया त्रिणवेन स्तोमेन प्रजानामोजः बलमष्टमो धातुर्वा स्पृतम् इयं वाऽअदितिरस्यै भागं कृत्वा पूष्ण आधिपत्य० [९.] ॥ त्वं देवस्य सवितुर्भागोऽसि त्वयि बृहस्पतेराधिपत्यं त्वया चतुष्टोमेन स्तोमेन समीचीः समीच्यः सम्यगञ्चन्ति जना (32.) यासु ता दिशः स्पृताः । देवाय सवित्रे भागं कृत्वा बृहस्पतयऽआधिप० [१०.] ॥ २५ ॥

a. यवानां भागोऽस्ययवानामाधिपत्यं प्रजा स्पृताश्चतुश्चत्वारिꣳश स्तोमः ।

b. ऋभूणां भागोऽसि विश्वेषां देवानामाधिपत्यं भूतꣳ स्पृतं त्रयस्त्रिꣳश स्तोमः ॥ २६ ॥

यवानां पूर्वपक्षाणां त्वं भागोऽसि अयवानामपरपक्षाणां त्वमाधिपत्यं चतुश्चत्वारिंशेन स्तोमेन त्वया प्रजाः स्पृताः रक्षिताः । पूर्वपक्षा वै यवा अपरपक्षा अयवास्ते हीदꣳ सर्वं युवते चायुवते च पूर्वपक्षेभ्यो भागं कृत्वापरपक्षेभ्य आधिप° [११.] ॥ ऋभूणां देवविशेषाणां त्वं भागोऽसि त्वयि विश्वेषां देवानामाधिपत्यं त्रयस्त्रिंशेन स्तोमेन त्वया भूतं प्राणिमात्रमनुक्तं स्पृतं पाप्मनो मृत्योः रक्षितम् तथा यजमानोऽपि सर्वभूतानि मृत्योः स्पृणोति । ऋभुभ्यो भागं कृत्वा विश्वेभ्यो देवेभ्य आधिपत्यमकरोदिति [८. ४. २. १२.] श्रुतेः ॥ २६ ॥

सहश्च सहस्यश्च हैमन्तिकावृतूऽअग्नेरन्तःश्ले° ॥ २७ ॥

का° [१७. १०. १७.] ऋतव्ये सहश्च सहस्यश्चेति । अनूकमभितो द्वे पश्चे उपदधाति ॥ ऋतुदेवत्यं यजुः । सहो मार्गशीर्षः सहस्यः पौषः एतौ हैमन्तिकौ हेमन्तावयवौ । शिष्टं पूर्वतुल्यम् [१३. २५.] ॥ २७ ॥

VIII. a. एकयास्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीत् ।

b. तिसृभिरस्तुवत ब्रह्मासृज्यत ब्रह्मणस्पतिरधिपतिरासीत् ।

c. पञ्चभिरस्तुवत भूतान्यसृज्यन्त भूतानां पतिरधिपतिरासीत् ।

d. सप्तभिरस्तुवत सप्तऽऋषयोऽसृज्यन्त धाताधिपतिरासीत् ॥ २८ ॥

का° [१७. १०. १८.] रेतःसिग्वेलायां च सप्तदश सर्वतो नव दक्षिणेनानूकꣳ सृष्टीरेकयास्तुवतेति प्रतिमन्त्रम् । सर्वासु दिक्षु रेतःसिग्वेलायां सृष्टिसंज्ञाः सप्तदशेष्टका उपदधाति तन्मध्ये प्रागनूकं दक्षिणेन नव अर्थादष्टावुत्तरेणेति सूत्रार्थः ॥ सप्तदश यजूंषि सृष्टीष्टकादेवत्यानि । अत्र निदानम् प्रजापतिर्भूतानि मृत्योरेवं मुक्त्वा प्रजाः सृजेय प्रजायेयेति विचिन्त्य प्राणाधिष्ठातृदेवान्दिगादीनूचे युष्माभिः सह परमात्मानं स्तुत्वेमाः प्रजा जनयामीति देवा ऊचुः केन स्तोष्यामः स ऊचे मया युष्माभिश्चेति तथेत्युक्त्वा प्राणैः प्रजापतिना चास्तुवतेति । तथा च श्रुतिः [८. ४. ३. १. २.] तद्वै (33.) प्रजापतिः सर्वाणि भूतानि पाप्मनो मृत्योर्मुक्त्वाकामयत प्रजाः सृजेय प्रजायेयेति ॥ १ ॥ स प्राणानब्रवीद्युष्माभिः सहेमाः प्रजाः प्रजनयानीति ते

वै केन स्तोष्यामहऽइति मया चैव युष्माभिश्चेति तथेति ते प्राणैश्चैव प्रजापतिना चास्तुवतेति ॥ प्रजापतिरेकया वाचा सहात्मानमस्तुवत स्तुतवान् वचनव्यत्ययः । वाग्वाऽएका वाचैव तदस्तुवतेति [८.४.३.३.] श्रुतेः । प्रजा अधीयन्त उद्पाद्यन्त प्रजापत्यर्थमस्थाप्यन्तेति वा । सृष्टानां प्रजानां प्रजापतिरेवाधिपतिरासीत्स्वाम्यभूत् । एवं षोडश मन्त्रा व्याख्येयाः ॥ तिसृभिः प्राणोदानव्यानैरस्तौत् ब्रह्म ब्राह्मणजातिः सृष्टा ब्रह्मणस्पतिर्ब्राह्मणजातेः (34.) स्वाम्यभूत् । त्रयो वै प्राणाः प्राणोदानव्यानास्तैरिति [८.४.३.४.] श्रुतेः ॥ पञ्चभिः प्राणैरस्तुवत (35.) पञ्च भूतानि सृष्टानि भूतानां पतिर्देवस्तेषां स्वाम्यभूत् य एवेमे मनःपञ्चमाः (36.) प्राणास्तैरेव तदस्तुवतेति [८.४.३.५.] श्रुतेः ॥ सप्तभिः श्रोत्रचक्षुर्नासावाग्रूपैः सप्तशीर्षण्यप्राणैरस्तुवत ततः सप्तऽऋषयो सृष्टाः धाता जगत्स्रष्टाद्यो देवः स्वाम्यभूत् । य एवेमे सप्त शीर्षन्प्राणास्तैरेवेति [८.४.३.६.] श्रुतेः ॥२८॥

a. नवभिरस्तुवत पितरोऽसृज्यन्तादितिरधिपत्न्यासीत् ।

b. एकादशभिरस्तुवतऽऋतवोऽसृज्यन्तार्तवा अधिपतय आसन् ।

c. त्रयोदशभिरस्तुवत मासा असृज्यन्त संवत्सरोऽधिपतिरासीत् ।

d. पञ्चदशभिरस्तुवत क्षत्रमसृज्यतेन्द्रोऽधिपतिरासीत् ।

e. सप्तदशभिरस्तुवत ग्राम्याः पशवोऽसृज्यन्त बृहस्पतिरधिपतिरासीत् ॥२९॥

नवभिः सप्त शिरःप्राणा द्वावध इति नवप्राणैः प्रजापतिरस्तौत् ततः पितरः अग्निष्वात्तादयः सृष्टाः अदितिः अखण्डिता प्रजापतिशक्तिः सृष्टानां पितृणामधिपत्नी स्वामित्वेनाधिकं पालयित्र्यासीत् नव वै प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ तैरिति [८.४.३.७.] श्रुतेः ॥ एकादशभिः दश प्राणा आत्मैकादशस्तैरस्तुवत (35.) । ऋतवः वसन्ताद्याः सृष्टाः आर्तवाः ऋतुपालका देवविशेषाः स्वामिनोऽभुवन् दश प्राणा आत्मैकादश इति [८.४.३.८.] श्रुतेः ॥ त्रयोदशभिः दश प्राणाः द्वौ पादौ एक आत्मेति तैरस्तौत् ततो मासाः चैत्रादयः सृष्टाः मासाभिमान्ययनद्वयात्मकः संवत्सरः तेषामधिपतिरासीत् । दश प्राणा द्वे प्रतिष्ठेऽआत्मा त्रयोदश इति [९.] श्रुतेः ॥ पञ्चदशभिः दश हस्ताङ्गुलयः करौ बाहू नाभेरूर्ध्वभागश्च तैरस्तुवत (35.)

ततः क्षत्रं क्षत्रियजातिः सृष्टा इन्द्रः ऐश्वर्यशाली तदभिमानी देवः स्वाम्यभूत् । दश हस्त्या अङ्गुलयश्चत्वारि दोर्बाहवाणि यदूर्ध्वं नाभेस्तत्पञ्चदशमिति [१०.] श्रुतेः ॥ सप्तदशभिः दश पादाङ्गुलयः ऊरू जानुनी पादौ नाभिरधोभागश्चेति तैरस्तौत् तदा ग्राम्याः पशवः गवादयः सृष्टाः बृहस्पतिस्तेषां स्वाम्यभूत् । दश पाद्या अङ्गुलयश्चत्वार्यूर्वष्ठीवानि द्वे प्रतिष्ठे यदवाङ्नाभेस्तत्सप्तदशमिति [११.] श्रुतेः ॥ २९ ॥

a. नवदशभिरस्तुवत शूद्रार्यावसृज्येतामहोरात्रे अधिपत्नीऽआस्ताम् ।

b. एकविꣳशत्यास्तुवतैकशफाः पशवोऽसृज्यन्त वरुणोऽधिपतिरासीत् ।

c. त्रयोविꣳशत्यास्तुवत क्षुद्राः पशवोऽसृज्यन्त पूषाधिपतिरासीत् ।

d. पञ्चविꣳशत्यास्तुवतारण्याः पशवोऽसृज्यन्त वायुरधिपतिरासीत् ।

e. सप्तविꣳशत्यास्तुवत द्यावापृथिवी व्यैतां वसवो रुद्रा आदित्या अनुव्यायँस्तऽएवाधिपतय आसन् ॥ ३० ॥

नवदशभिः दश हस्ताङ्गुलयः ऊर्ध्वाधःस्थच्छिद्ररूपा नव प्राणास्तैरस्तौत् । ततः शूद्रार्यौ शूद्रवैश्यावसृज्येतां सृष्टौ अर्यः स्वामिवैश्ययोः । अहोरात्रे तयोः स्वामित्वेनास्ताम् । दश हस्त्या अङ्गुलयो नव प्राणा इति [८.४.३.१२.] श्रुतेः ॥ एकविंशत्या विंशतिः करपादाङ्गुलयः आत्मा चेति एकविंशत्यास्तौत् । ततः एकशफाः पशवोऽश्वादयः सृष्टाः एकं शफं खुरः प्रतिपादं येषां ते एकशफाः शफं (37.) क्लीबे खुरः पुमानित्यमरः [२.८.४९.] वरुणस्तेषामधिपतिरासीत् । दश हस्त्या अङ्गुलयो दश पाद्या आत्मैकविꣳश इति [१३.] श्रुतेः ॥ त्रयोविंशत्या विंशतिः करपादाङ्गुलयः पादावात्मा चेति तैः स्तुते क्षुद्राः पशवोऽजादयः सृष्टाः तेषां पूषा स्वाम्यभूत् । दश हस्त्या अङ्गुलयो दश पाद्या द्वे प्रतिष्ठेऽआत्मा त्रयोविꣳश इति [१४.] श्रुतेः ॥ पञ्चविंशत्या विंशतिः करपादाङ्गुलयः करौ पादावात्मेति तैरस्तुवत (38.) तदारण्याः वनस्थाः पशवः कृष्णमृगादयः सृष्टास्तेषां वायुः स्वाम्यभूत् । दश हस्त्या अङ्गुलयो दश पाद्याश्चत्वार्यङ्गान्यात्मा पञ्चविꣳश इति [१५.] श्रुतेः ॥ सप्तविंशत्या करपादाङ्गुलयः द्वौ भुजावूरू चात्मेति तैरस्तुवत (38.) ततो

द्यावापृथिवी द्युभूलोकौ व्यैतां विशेषेणागच्छतामित्यर्थः विपूर्वादिण् गताविति धातोर्लङि प्रथमद्विवचनम् वसवोऽष्टौ रुद्रा एकादश आदित्या द्वादशानुव्यायन् अन्वगच्छन् अनुगताः तऽएव स्वामिनोऽभूवन् । दश हस्त्या अङ्गुलयो दश पाद्याश्चत्वार्यङ्गानि द्वे प्रतिष्ठेऽआत्मा सप्तविꣳश इति [१६.] श्रुतेः ॥ ३० ॥

a. नवविꣳशत्यास्तुवत वनस्पतयोऽसृज्यन्त सोमोऽधिपतिरासीत् ।

b. एकत्रिꣳशतास्तुवत प्रजा असृज्यन्त यवाश्चायवाश्चाधिपतय आसन् ।

c. त्रयस्त्रिꣳशतास्तुवत भूतान्यशाम्यन्प्रजापतिः परमेष्ठ्यधिपतिरासीत् ।

d. लोकं पृण° । e. ता अस्य° । d. इन्द्रं विश्वा° ॥ ३१ ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां चतुर्दशोऽध्यायः ॥

नवविंशत्या करपादाङ्गुलयो नव छिद्ररूपाः प्राणास्तैरस्तुवत (38.) ततो वनस्पतयोऽश्वत्थवटाद्याः सृष्टाः तेषां स्वामी सोमोऽभूत् । दश हस्त्या अङ्गुलयो दश पाद्या नव प्राणा इति [८. ४. ३. १७.] श्रुतेः ॥ एकत्रिंशता करपादाङ्गुलयः दशेन्द्रियाणि आत्मेति तैरस्तौत् ततः प्रजाः सृष्टाः यवाः पूर्वपक्षा अयवाः अपरपक्षास्तासां प्रजानां स्वामिनोऽभूवन् दश हस्त्या अङ्गुलयो दश पाद्या दश प्राणा आत्मैकत्रिꣳश इति [१८.] श्रुतेः पूर्वपक्षापरपक्षा एवात्राधिपतय आसन्निति [१८.] च ॥ त्रयस्त्रिंशता अङ्गुलयः इन्द्रियाणि पादौ आत्मेति तैरस्तुवत स्तौति स्म प्रजापतिर्देवैः सह । ततो भूतानि अशाम्यन् सर्वे प्राणिनः शान्ताः सुखिनोऽभूवन् । परमे सत्यलोके तिष्ठतीति परमेष्ठाः प्रजापतिः प्रजापालकः सर्वेषां भूतानामधिपतिः स्वाम्यासीत् दश हस्त्या अङ्गुलयो दश पाद्या दश प्राणा द्वे प्रतिष्ठेऽआत्मा त्रयस्त्रिꣳश इति [१९.] श्रुतेः ॥ अत्र या-येष्टका येन मन्त्रेणोपधेया सा-सा तत्तन्मन्त्रोक्तदेवतारूपेण ध्यातव्येत्यर्थः ॥ का° [१७. १०. ११.] उत्तराꣳसादधि लोकम्पृणाः पूर्ववत् । उत्तरांसादारभ्य प्रथमचितिवल्लोकम्पृणा उपदधातीति सूत्रार्थः ॥ ततः पुरीषनिर्वापः सप्तर्चोपस्थानं च बोध्यम् । तन्मन्त्रप्रतीकानि लोकं पृण ता अस्य इन्द्रं विश्वा इति तास्तिस्रोऽपि व्याख्याताः [१२. १४-१६.] ॥ ३१ ॥

इतिं चतुर्थी चितिः पूर्णा ॥ ॥ इति श्रीमन्महीधरकृते वेददीपे मनोहरे । वेद-
चन्द्रमितोऽध्यायो वर्ण्यद्वित्रिचतुश्चितिः (39.) ॥

अथ काण्वशाखायां पाठविशेषः ॥

I. ॥ १-४ ॥१-४॥ ५. ६ [ग्रैष्मा॑ऽऋ॒तू] ॥५॥५॥ ॥

II. ॥ ७ ॥१॥ ८a-e ॥२॥ ८f-k ॥३॥८॥ ॥

III. ॥ ९a-d ॥१॥ e-h ॥२॥ i-m ॥३॥ १०a-d ॥४॥ e-k ॥५॥
१३॥ ॥

IV. ॥ ११ ॥१॥ १२ ॥२॥ १३ [°शा॒लं॑सि - °शा॒लं॑सि - °शा॒ल॒स्यु°]. १४. १५
[वार्षिका॑ऽऋ॒तू]. १६ [शा॒र॒दा॑ऽऋ॒तू] ॥३॥१६॥ ॥

V. ॥ १७ ॥१॥ १८a-f ॥२॥ g-m ॥३॥ १९a-f ॥४॥ g-m ॥५॥
२० ॥६॥२३॥ ॥

VI. ॥ २१ ॥१॥ २२ ॥२॥२४॥ ॥

VII. ॥ २३ a-k ॥१॥ l-s ॥२॥२६॥ ॥

VIII. ॥ २४ a. b ॥१॥ c. d ॥२॥ २५ a. b ॥३॥ c [अ॒दि॑ति॒र्भा°] d ॥४॥
२६. २७ [°न्तिका॑ऽऋ॒तू] ॥५॥३१॥ ॥

IX. ॥ २८ ॥१॥ २९a-d ॥२॥ २९e. ३०a [शू॒द्रार्या॑ऽअ॒सृ°. b. c ॥३॥
३० d. e. ३१ ॥४॥३५॥ ॥ नवानुवाकेषु पञ्चत्रिंशत् ॥ ॥

इति काण्वशाखायां संहितापाठे पञ्चदशोऽध्यायः ॥ ॥

I. अ॒ग्ने॑ जा॒तान्प्र णु॑द नः स॒पत्ना॒न्प्रत्यजा॑ताननुद जातवेदः ।
अधि॑ नो ब्रूहि सु॒मना॒ अहे॑डँस्तव॑ स्याम॒ शर्म॑स्त्रिवरू॑थऽउद्भौ ॥१॥

चतुर्दशेऽध्याये (1.) द्वितीयतृतीयचतुर्थचितिमन्त्रानुक्त्वा पञ्चदशे पञ्चमचितिम-
न्त्रा वाच्याः ॥ का° [१७.११.१.३.] पञ्चम्यामन्तेष्वाग्निनीवदसपत्ना अग्ने जातानिति

प्रतिमन्त्रम् । पञ्चम्यां चितावाश्विनीवत् असपत्नासंज्ञा इष्टका अन्तेषूपदधाति अग्ने जातान् सहसा जातान् षोडशी चतुश्चत्वारिंशः अग्नेः पुरीषम् इति पञ्चमन्त्रैः प्रत्येकमिति सूत्रार्थः ॥ पञ्चमचितिमन्त्राणां परमेष्ठी ऋषिः । तत्र द्वे अग्निदेवत्ये त्रिष्टुभौ । हे अग्ने जातान् पूर्वमुत्पन्नान्नोऽस्माकं सपत्नान् शत्रून् त्वं प्रणुद प्रकर्षेण नाशय । किं च हे जातवेदः जातप्रज्ञान अजातानननुत्पन्नांश्च शत्रून्प्रतिनुद निवर्तय उत्पत्तिप्रतिबन्धं कुर्वित्यर्थः उपसर्गव्यवधानमार्षम् । किं च नोऽस्माकमधिब्रूहि (2.) अधिवद उपदिश यज्ञसम्बन्धिनीमितिकर्तव्यतामिति शेषः । किं कुर्वन् अहेडन् अक्रुध्यन् । सुमनाः शोभनमनस्कः सन्नुपदिशेत्यर्थः । किं च अग्ने तव त्वत्सम्बन्धिनी त्रिवरूथे वरूथं गृहं त्रयाणां वरूथानां समाहारे यज्ञगृहत्रये सदोहविर्धानाग्नीध्ररूपे वयं स्याम भवेम सदा यज्ञान्कुर्म इत्यर्थः । कीदृशे त्रिवरूथे शर्मन् शर्मणि सुखाश्रये । तथा उद्भौ द्विपदचतुष्पदधनधान्यादिभिरुद्भवति समृध्यत इत्युद्भिः तस्मिन् भवतेर्डिप्रत्ययः ॥ अनेन मन्त्रेण पुरस्तादिष्टकामुपदधाति ॥ १॥

सह॑सा जा॒तान्प्रणु॑दा नः स॒पत्ना॒न्प्रत्यजा॑ताञ्जातवेदो नुदस्व ।
अधि॑ नो ब्रूहि सुमन॒स्यमा॑नो व॒यꣳ स्याम॒ प्रणु॑दा नः स॒पत्ना॑न् ॥ २॥

अथ पश्चादुपदधाति । सहसा बलेन जातानुत्पन्नान्नोऽस्माकं सपत्नान्प्रणुद नाशय । हे जातवेदः अजातान् उत्पत्स्यमानानपि (3.) प्रतिनुदस्व आत्मनेपदमार्षम् । किं च सुमनस्यमानोऽस्मासु शुभचित्तः सन्नोऽस्मानधिब्रूहि शत्रुभ्योऽधिकान्वद । वयमपि तत्प्रसादादधिकाः स्याम भवेम । नोऽस्माकं सपत्नान्प्रणुद पुनरुक्तिरादरार्था । शोभनं मनो यस्य सुमनाः असुमनाः सुमना भवति सुमनस्यमानः भृशादिभ्य इति [पा॰ ३. १. १२.] क्यङ् ततः शानच् ॥ २॥

a. षो॒ड॒शी स्तोम॒ ओजो॒ द्रवि॑णम् ।
b. च॒तु॒श्च॒त्वा॒रि॒ꣳश स्तोमो॒ वर्चो॒ द्रवि॑णम् ।
c. अ॒ग्नेः पुरी॑षम॒स्यप्सो॒ नाम॒ तां त्वा॒ विश्वे॑ऽअ॒भिगृ॑णन्तु दे॒वाः ।
स्तोम॑पृष्ठा घृ॒तव॑ती॒ह सी॑द प्र॒जाव॑द॒स्मे द्रवि॒णाय॑जस्व ॥ ३॥

अथ दक्षिणतः । इष्टकादैवत्यं यजुः । पञ्चदशकलस्य पक्षस्य भर्ता य आदित्यरूप स्तोमः षोडशावृत्त्युपेतो वा यः स्तोमः यच्च ओजो बलरूपं द्रविणं धनम् हे इष्टके त्वं तदुभयरूपासि तां त्वामुपदधामि ॥ अथोत्तरतः । इष्टकादैवत्यं यजुः । चतुश्चत्वारिंशदावृत्त्या सम्पन्नो यः स्तोमस्त्रिष्टुब्रूपो वा यच्च बलरूपं धनम् तदुभयरूपां त्वामुपदधामि ॥ अथ मध्ये पञ्चमी । त्रिष्टुप् । प्सा भक्षणे न प्साति भक्षयति विनाशयतीत्यप्सो रक्षको नाम योऽग्निस्तस्याग्नेश्चन्द्ररूपस्य पञ्चदशकलस्य (4.) पुरीषमसि पूरयित्री भवसि हे इष्टके या त्वं तां त्वां विश्वे देवा अभिगृणन्तु स्तुवन्तु स्तोमैः पृष्ठैश्च युता ह्रोष्यमाणघृतयुता च सती सा त्वमिह चतुर्थ्यां चितौ सीद उपविश अस्मे अस्मासु प्रजावत्पुत्रयुतं द्रविणा द्रविणं धनं यजस्व (5.) देहि ॥३॥

a. एवश्छन्दः । b. वरिवश्छन्दः । c. शम्भूश्छन्दः । d. परिभूश्छन्दः । e. आच्छच्छन्दः । f. मनश्छन्दः । g. व्यचश्छन्दः । h. सिन्धुश्छन्दः । i. समुद्रश्छन्दः । k. सरिरं छन्दः । l. ककुप्छन्दः । m. त्रिककुप्छन्दः । n. काव्यं छन्दः । o. अङ्कुपं छन्दः । p. अक्षरपङ्क्तिश्छन्दः । q. पदपङ्क्तिश्छन्दः । r. विष्टारपङ्क्तिश्छन्दः । s. क्षुरो भ्राजश्छन्दः ॥४॥

का॰ [१७.११.५.] विराजो दश-दश प्रतिदिशं पुरस्तात्प्रथममेवश्छन्द इति प्रतिमन्त्रम् । प्रतिदिशं दश-दश (6.) विराट्संज्ञा इष्टका उपदधाति ताश्चत्वारिंशत्यचा एवेति सूत्रार्थः ॥ चत्वारिंशद्यजूंषि इष्टकादैवत्यानि । एति गच्छति सर्वो जन्तुसमूहोऽस्मिन्नित्येवः पृथिवीलोकः स एव छन्दोरूपेण स्थितत्वात् छादकत्वाद्वा छन्दः हे इष्टके त्वं तद्रूपासि तां त्वामुपदधामि एवमुत्तरमन्त्रेषु व्याख्या श्रुत्युक्ता (7.) ज्ञेया अयं वै लोक एवश्छन्द इति [८.५.२.३.] श्रुतेः ॥ वरिवः प्रभामण्डलेन (8.) व्रियतऽआव्रियतऽइति (9.) वरिवोऽन्तरिक्षं तदेव छन्दः अन्तरिक्षं वै वरिवश्छन्द इति [८.५.२.३.] श्रुतेः ॥ शम्भूः शं सुखं भवत्यस्मादिति शम्भूः द्युलोकः द्यौर्वै शम्भूश्छन्द इति [३.] श्रुतेः ॥ परितो भवति व्याप्य वर्ततऽइति प-

रिभूर्दिग्वाचकः शब्दः दिशो वै परिभूश्छन्द इति [३.] श्रुतेः ॥ श्राछत् । श्राछाद-यति स्वरसेन सर्वं शरीरमित्याछत् अन्नम् अन्नं वाऽश्राछच्छन्द इति [३.] श्रुतेः ॥ मनः । प्रथमसृष्टं प्रजापत्यात्मकं यन्मनः तदेव छन्दः तद्रूपासि प्रजापतिर्वै मन-श्छन्द इति [३.] श्रुतेः ॥ व्यचः । व्यचतिर्व्याप्तिकर्मा (10.) विचति व्याप्नोति सर्वं जगदिति व्यचः श्रादित्यः श्रसौ वाऽश्रादित्यो व्यचश्छन्द इति [३.] श्रुतेः ॥ सि-न्धुः । स्यन्दति नाडीभिः शरीरं व्याप्नोति सिन्धुः प्राणवायुः प्राणो वै सिन्धुश्छन्द इति [८.५.२.४.] श्रुतेः ॥ समुद्रम् । समुद्रवत्यस्माद्विकल्पसमूहा (11.) इति स-मुद्रं मनः यद्वा समुद्रसाम्याद्गाम्भीर्येण समुद्रं मनः मनो वै समुद्र (12.) इति [४.] श्रुतेः ॥ सरिरं सलिलं रलयोरैक्यं सरति वदनगह्वरान्निर्गच्छतीति सरिरं वाक् वाग्वै सरिरं छन्द इति [४.] श्रुतेः ॥ ककुप् कं सुखं शरीरे स्कुभ्नाति धारयतीति ककुप् कं सुखं कोपयति दीपयतीति वा (13.) कुप् (14.) दीप्तौ चरादिः क्विप् पूर्वत्रपत्ने सलोपश्छान्दसः ककुप् प्राणः प्राणो वै ककुप्छन्द इति [४.] श्रुतेः ॥ त्रिककुप् त्रेधा कं पीतमुदकं (15.) स्कुभ्नातीति त्रिककुप् उदानः उदानो वै त्रि-ककुप्छन्द इति [४.] श्रुतेः ॥ काव्यम् कवेः परमात्मन इदं काव्यं वेदत्रयीरूपः शब्दः त्रयी विद्या काव्यं छन्द इति [४.] श्रुतेः ॥ श्रङ्कुपम् श्रङ्क कुटिलगतौ श्रङ्केन कुटिलगत्या श्राप्नोतीत्यङ्कुपमुदकम् श्रापो वाऽश्रङ्कुपं छन्द इति [४.] श्रुतेः ॥ श्र-क्षरपङ्क्तिः न क्षरतीत्यक्षरा नाशरहिता पङ्क्तिरावलिर्यस्याः (16.) साक्षरपङ्क्तिर्द्यौः श्रसौ वै लोकोऽक्षरपङ्क्तिश्छन्द इति [४.] श्रुतेः ॥ पदपङ्क्तिः पदानां चरणन्यासा-नां पङ्क्त्यो यस्मिन् सा पदपङ्क्तिर्भूर्लोकः श्रयं वै लोकः पदपङ्क्तिश्छन्द इति [४.] श्रुतेः ॥ विष्टारपङ्क्तिः विस्तारा विस्तार्यतऽइति विस्तारा विस्तारिता प्रसारिता वस्तूनां पङ्क्त्यो यत्रेति विष्टारपङ्क्तिर्दिक् दिशो वै विष्टारपङ्क्तिश्छन्द इति [४.] श्रुतेः ॥ क्षुरः क्षुर विलेखनखननयोः (17.) क्षुरति विलिखति व्याप्नोति सर्व-मिति क्षुरः तीव्रः । भ्राजते दीप्यतऽइति भ्रजः ह्रस्वश्छान्दसः क्षुरो भ्रज श्रादित्यः श्रसौ वा श्रादित्यः क्षुरो भ्रजश्छन्द इति [८.५.२.४.] श्रुतेः ॥४॥

a. श्राछच्छन्दः । b. प्रच्छच्छन्दः । c. संयच्छन्दः । d. वियच्छन्दः । e. बृहच्छन्दः । f. रथन्तरं छन्दः । g. निकायश्छन्दः । h. विवध-

श्छन्दः । i. गिरश्छन्दः । k. भ्रजश्छन्दः । l. सꣳस्तुप्छन्दः । m. अनुष्टुप्छन्दः । n. एवश्छन्दः । o. वरिवश्छन्दः । p. वयश्छन्दः । q. वयस्कृच्छन्दः । r. विष्पर्धाश्छन्दः । s. विशालं छन्दः । t. छदिश्छन्दः । u. दूरोहणं छन्दः । v. तन्द्रं छन्दः । w. अङ्काङ्कं छन्दः ॥५॥

आछत् आछादयति शरीरमित्याछदन्नम् प्रछत् प्रछादयतीति प्रछदन्नम् अन्नं वाऽआछच्छन्दोऽन्नं प्रछच्छन्द इति [४.] श्रुतेः ॥ संयत् संयछति व्यापारान्निवर्तयति जन्तूनिति संयत् रात्रिः रात्रिर्वै संयच्छन्द इति [८.५.२.५.] श्रुतेः ॥ वियत् विशेषेण यछन्ति गछन्ति व्यापारायेतस्ततो जना यत्रेति वियद्दिनम् अहर्वै वियच्छन्द इति [५.] श्रुतेः ॥ बृहत् विस्तीर्णं स्वः असौ वै लोको बृहच्छन्द इति [५.] श्रुतेः ॥ रथन्तरम् रथैः तीर्यते गम्यते यत्रेति रथन्तरं भूमण्डलम् अयं वै लोको रथन्तरं छन्द इति [५.] श्रुतेः ॥ निकायः नितरां कायति शब्दं करोति वृक्षादीनुन्मूलयन्निति निकायो वायुः कै शब्दे वायुर्वै निकायश्छन्द इति [५.] श्रुतेः ॥ विवधः विविधं वध्यन्ते हन्यन्ते पापफलानि भोज्यन्ते (18.) भूतप्रेतादिरूपेण प्राणिनो यत्रेति विवधोऽन्तरिक्षम् अन्तरिक्षं (19.) वै विवधश्छन्द इति [५.] श्रुतेः ॥ गिरः गीर्यते भक्ष्यतऽइति गिरोऽन्नम् अन्नं वै गिर (20.) इति [५.] श्रुतेः ॥ भ्रजः (21.) भ्राजते दीप्यतऽइति भ्रजोऽग्निः अग्निर्वै भ्रजश्छन्द इति [५.] श्रुतेः ॥ संस्तुप् अनुष्टुप् सम्यक् स्तुभ्यते रुध्यते वशीक्रियते अनु निरन्तरं स्तुभ्यतेऽनया सा संस्तुप् अनुष्टुप् वाक् वागेव सꣳस्तुप्छन्दो वागनुष्टुप्छन्द इति [५.] श्रुतेः ॥ एवः वरिवः इति पदद्वयं व्याख्यातम् ॥ वयः बाल्यादिवयोहेतुभूतमन्नम् अन्नं वै वयश्छन्द इति [६.] श्रुतेः ॥ वयस्कृत् वयांसि बाल्यादीनि करोतीति वयस्कृत् जठराग्निः अग्निर्वै वयस्कृच्छन्द इति [६.] श्रुतेः ॥ विष्पर्धाः विविधं स्पर्धन्ते ऐश्वर्याधिक्यदर्शनेन जना यत्रेति विष्पर्धाः स्वर्गः स्पर्ध संघर्षे असुन् (22.) असौ वै लोको विष्पर्धाश्छन्द इति [६.] श्रुतेः ॥ विशालम् विविधं शालन्ते शोभन्ते जना यत्रेति विशालं भूतलम् अयं वै लोको विशालं छन्द इति [६.] श्रुतेः ॥ छदिः

छाद्यतेऽर्करश्मिभिरिति (23.) हृदिरन्तरिक्षम् अन्तरिक्षं वै हृदिश्छन्द इति [६.] श्रुतेः ॥ दूरोहणम् दुःखेन रोढुमारोढुं (24.) कर्तुं शक्यं निष्कामज्योतिष्टोमादियज्ञप्रयासजातज्ञानसाध्यत्वादिति (25.) दूरोहणं रविः असौ वाऽआदित्यो दूरोहणं छन्द इति [६.] श्रुतेः ॥ तन्द्रम् तन्द्रि (26.) सादि मोहे तन्द्रति सीदति स्थानसंकोचेनेति तन्द्रं अणी पङ्क्तिर्वै तन्द्रं छन्द इति [६.] श्रुतेः ॥ अङ्काङ्कम् अङ्कि स्थले (27.) अङ्कानि गर्तपाषाणादिचिह्नानि यत्रेत्यङ्काङ्कं जलम् आपो वा ऽअङ्काङ्कं छन्द इति [६.] श्रुतेः ॥ अत्रेष्टकानां भूलोकादिरूपेण स्तुतिरिति भावः ॥५॥

II. a. र॒श्मिना॑ स॒त्याय॑ स॒त्यं जि॑न्व । b. प्रेति॑ना॒ धर्म॑णा॒ धर्मं॑ जिन्व । c. अन्वि॑त्या दि॒वा दिवं॑ जिन्व । d. सं॒धिना॒न्तरि॑क्षेणा॒न्तरि॑क्षं जिन्व । e. प्र॒ति॒धिना॑ पृथि॒व्या पृ॑थि॒वीं जि॑न्व । f. वि॒ष्ट॒म्भेन॒ वृष्ट्या॒ वृष्टिं॑ जिन्व । g. प्र॒वया॒ह्नाह॑र्जिन्व । h. अ॒नु॒या रात्र्या॒ रात्रीं॑ जिन्व । i. उ॒शिजा॒ वसु॑भ्यो॒ वसू॑ञ्जिन्व । k. प्र॒के॒तेना॑दि॒त्येभ्य॑ आ॒दि॒त्याञ्जि॑न्व ॥ ६॥

का° [१७.११.१.१०.] सर्वतोऽषाढविलायाऽ स्तोमभागा रश्मिना सत्यायेति प्रतिमन्त्रं पञ्चदश दक्षिणेनानूकम् । अषाढविलायां सर्वदिक्षु स्तोमभागासंज्ञा इष्टका उपदधाति रश्मिनेत्याद्यैकोनत्रिंशन्मन्त्रैः तन्मध्ये पञ्चदश प्रागनूकं दक्षिणेन अर्थाच्चतुर्दश प्रागनूकमुत्तरेणोपधेया इति सूत्रार्थः ॥ एकोनत्रिंशद्यजूंषीष्टकादेवत्यानि । इमे मन्त्राः श्रुत्या त्रिधा व्याख्याताः कण्डिकाद्वयपर्यन्तममुनोपहिता सत्यदो जिन्वेति प्रथमः अदोऽस्यमुष्मै त्वामुपदधामीति द्वितीयः अधिपतिनोर्जोर्जं जिन्वेति तृतीयः प्रकारः । तथा च श्रुतिः [८.५.३.३.] अमुनादो जिन्वादोऽस्यमुष्मै त्वाधिपतिनोर्जोर्जं जिन्वेति त्रेधा विहितास्त्रेधा विहितऽ ह्यन्नमिति ॥ अथ वाक्यार्थः (28.) । हे इष्टके त्वं रश्मिनान्नेन सत्यायोपहिता सती सत्यं सत्यवचो जिन्व तर्पय तेजोवृद्धिप्रदत्वादन्नं रश्मिः रश्मिरन्नमिति [८.५.३.३.] श्रुतेः ॥ प्रकर्षेण देहे इतिर्गतिर्यस्येति प्रेतिरन्नम् तेन । धर्मणा विभक्तिव्यत्ययः धर्मणे धर्मायोपहिता सती धर्मं जिन्व प्रीणय प्रेतिरन्नमिति [६.] श्रुतेः । सर्वमन्त्रेषु द्वितीयं

(29.) पदं चतुर्थ्यन्तं कार्यम् ॥ अन्वेति देहमनुगच्छतीत्यन्वितिरन्नम् (30.) तया दिवे ऽर्थायोपहिता सती दिवं द्युलोकं जिन्व अन्वितिरन्नमिति [३.] श्रुतेः ॥ संधिना सम्यग्बलादिकं धीयते ऽस्मिन्निति संधिरन्नं तेन अन्तरिक्षेण अन्तरिक्षार्थमुपहितान्तरिक्षं जिन्व ॥ प्रतिधीयते ऽस्मिन्निति प्रतिधिरन्नं तेन पृथिव्यै उपहिता सती पृथिवीं जिन्व ॥ विष्टम्भेन देहं विष्टम्भयतीति विष्टम्भो ऽन्नं तेन वृष्ट्यै उपहिता वृष्टिं जिन्व ॥ प्रवया प्रकर्षेण वाति देहं गच्छतीति प्रवान्नम् तेनाह्नाह्ने उपहिताहर्दिनं जिन्व ॥ अनुया देहान्तर्गतद्वासप्ततिनाडीभिरनुयाति आप्नोति देहमित्यनुयान्नं तया तृतीयैकवचने आतो धातोरित्यालोपः [पा॰ ६.४.१४०.] । रात्र्यै उपहिता रात्रीं (31.) जिन्व ॥ उशिजा वश कान्तौ उश्यते सर्वैः काम्यत ऽइत्युशिगन्नम् तेन वसुभ्यो ऽर्थायोपहिता वसूञ्जिन्व ॥ प्रकेतेन प्रकर्षेण कं सुखमीयते ऽनेनेति प्रकेतमन्नं तेनादित्येभ्यो ऽर्थायोपहितादित्याञ्जिन्व ॥ ६ ॥

a. तन्तुना रायस्पोषेण रायस्पोषं जिन्व । b. स॒ꣳसर्पेण श्रुताय श्रुतं जिन्व । c. ऐ॒डेनौषधीभि॒रोषधीर्जिन्व । d. उ॒त्त॒मेन त॒नूभिस्तनू॒र्जिन्व । e. व॒यो॒धसाधीतेनाधीतं जिन्व । f. अ॒भि॒जि॒ता तेज॒सा तेजो जिन्व ॥ ७ ॥

तन्तुना तन्यते विस्तार्यत ऽइति तन्तुरन्नं तेन । रायस्पोषेण धनपुष्ट्यै उपहिता रायस्पोषं जिन्व ॥ संसर्पेण सम्यक् सर्पति प्रसरति देहे इति संसर्पो ऽन्नम् तेन श्रुताय शास्त्रायोपहिता श्रुतं जिन्व ॥ इडान्नम् इडैवैडम् स्वार्थे ऽण् तेनौषधीभिः ओषध्यर्थमुपहिता ओषधीर्जिन्व ॥ उत्तमेन उद्गतं तमो यस्मात् यद्वोत्तमेनोत्कृष्टेनान्नेन तनूभिः शरीरार्थमुपहिता तनूः शरीराणि जिन्व ॥ वयोधसा वयो दधाति पुष्णाति वयोधा अन्नं तेनाधीतेनाध्ययनायोपहिताधीतं (32.) जिन्व ॥ अभि सर्वतो जीयते येनेत्यभिजित्सर्वजयहेतुरन्नं तेन तेजसा तेजो ऽर्थमुपहिता तेजो जिन्व ॥ ७ ॥

a. प्र॒ति॒पद॑सि प्रति॒पदे॑ त्वा । b. अ॒नु॒पद॑स्यनु॒पदे॑ त्वा । c. स॒म्पद॑सि स॒म्पदे॑ त्वा । d. तेजो॑ ऽसि॒ तेज॑से त्वा ॥ ८ ॥

अदो ऽस्यमुष्मै त्वेति व्याख्यातमन्नानाह । प्रतिपद्यते जीवनमनेनेति प्रतिप-

दन्नम् हे इष्टके त्वं प्रतिपदन्नरूपासि प्रतिपदेऽन्नाय त्वामुपदधामीति शेषः एवं सर्वत्र ॥ प्रतिदिनमनुपद्यतेऽनुपदन्नमसि अनुपदेऽन्नाय त्वामुपदधामि ॥ हे इष्टके त्वं सम्पदन्नमसि सम्पदेऽर्थाय त्वामुपदधामि ॥ तेजसः कारणत्वात्तेजोऽन्नम् तेजसे त्वामुपदधामि ॥८॥

a. त्रिवृदसि त्रिवृते त्वा । b. प्रवृदसि प्रवृते त्वा । c. विवृदसि विवृते त्वा । d. सवृदसि सवृते त्वा । e. आक्रमोऽस्याक्रमाय त्वा । f. संक्रमोऽसि संक्रमाय त्वा । g. उत्क्रमोऽस्युत्क्रमाय त्वा । h. उत्क्रान्तिरस्युत्क्रान्त्यै त्वा । i. अधिपतिनोर्जोर्जं जिन्व ॥९॥

कृषिवृष्टिर्बीजरूपेण त्रिगुणत्वात्त्रिधा वर्ततऽइति त्रिवृदन्नम् तद्रूपां त्वां त्रिवृते उपदधामि ॥ प्रवृणोति भूतानीति प्रवृदन्नम् यतस्त्वं प्रवृदसि अतः प्रवृतेऽर्थाय त्वामुपदधामि ॥ विशेषेण वर्तते भूतेषु इति विवृदन्नम् त्वं विवृदसि विवृतेऽर्थाय त्वामुपदधामि ॥ सह वर्तते सवृदसि सवृतेऽन्नाय त्वामुप° ॥ आक्रामति पराभवति क्षुधामित्याक्रमोऽन्नं त्वमाक्रमोऽसि आक्रमाय त्वामुप° ॥ देहे संक्रामतीति संक्रमो ऽन्नं त्वं संक्रमोऽसि संक्रामाय त्वामुप° ॥ संतानोत्पत्त्यै बीजरूपेण परिणम्योत्क्रामतीत्युत्क्रमोऽन्नं त्वं तद्रूपासि उत्क्रमाय त्वामुप° ॥ उत्कृष्टा क्रान्तिर्गमनं यस्येत्युत्क्रान्तिरन्नम् (33.) हे इष्टके त्वमुत्क्रान्तिरसि उत्क्रान्त्यै अर्थाय (34.) त्वामुपदधामि ॥ अथ तृतीयो व्याख्याभेदः । अधिकं पातीत्यधिपतिः अधिकपालकेन ऊर्जा अन्नरसेन ऊर्जमन्नरसं (35.) जिन्व तर्पय ॥ एवं मन्त्रेष्वभिधेयानुसारेण व्युत्पत्तिः कार्या ॥९॥

III. राज्ञ्यसि प्राची दिग्वसवस्ते देवा अधिपतयोऽग्निर्हेतीनां प्रतिधर्ता त्रिवृत्त्वा स्तोमः पृथिव्याᳬ श्रयत्वाज्यमुक्थमव्यथायै स्तभ्नातु रथन्तरᳬ साम प्रतिष्ठित्याऽअन्तरिक्षऽऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥१०॥

का° [१७. १२. १.] नाकसदोऽनूकेषु पूर्ववर्जमृतव्याविलायामाश्विनीवद्राज्ञ्यसीति प्रतिमन्त्रम् । पूर्वानूके स्थानाभावात्पूर्वानूकवर्जं त्रिदिक्ष्वनूकेषु ऋतव्याविलायामनूकोपरि राज्ञीत्यादिपञ्चकण्डिकाभिराश्विनीवन्नाकसत्संज्ञेष्टका उपदधातीति सूत्रार्थः ॥ पुरस्तादुपदधाति । राज्ञ्यसि । पञ्च यजूंषि लिङ्गोक्तदेवतानि । हे इष्टके राज्ञी राजमाना प्राची पूर्वा दिक् त्वमसि । वसवोऽष्टौ देवास्ते तवाधिपतयोऽधिकं पालयितारः । अग्निर्हेतीनामुपद्रवकारिणीनां परायुधानां प्रतिधर्ता निराकर्ता । किं च त्रिवृत्स्तोमः त्वा त्वां पृथिव्यां श्रयतु उत्थापयतु । आज्यमाज्यनामकमुक्थं शस्त्रं प्र वो देवायाग्नये इत्यादिकम् [ऐतरेयब्रा° २. ४०.] अव्यथायै न व्यथा अव्यथा तस्यै चलनाभावाय त्वां स्तभ्नातु दृढीकरोतु । रथन्तरं साम अन्तरिक्षे लोके प्रतिष्ठित्यै प्रतिष्ठानाय त्वां स्तभ्नातु । प्रथमजाः प्रथमोत्पन्ना ऋषयः प्राणा देवेषु द्युलोकमध्ये दिवः आकाशस्य मात्रया परिमाणेन वरिम्णा उरुत्वेन त्वां प्रथन्तु प्रथयन्तु छन्दस्युभयथेति [पा° ३. ४. ११७.] शप आर्धधातुकत्वाण्णिलोपः प्राणा वाऽऋषयः प्रथमजा इति श्रुतेः [८. ६. १. ५.] आकाशस्य यादृशं विशालत्वं तादृग्विशालां त्वां कुर्वन्त्वित्यर्थः । विधर्ता इष्टकानिष्पादयिता च पुनरयमधिपतिरिष्टकापालकश्च त्वां प्रथयताम् यद्वा विधर्ता विशेषेण धारयिता वागभिमानी देवः अयमधिपतिः प्रधानभूतो देवो मनोऽभिमानी तौ च त्वां प्रथयताम् विधर्ता चायमधिपतिश्चेति वाक्च तौ मनश्चतौ हीदꣳ सर्वं विधारयत इति [८. ६. १. ५.] श्रुतेः । किं च ते सर्वे यथोक्ता वस्वादयः संविदानाः ऐकमत्येनावस्थिताः सन्तो नाकस्य पृष्ठे न अकं दुःखं नाकं सुखं तस्य पृष्ठे स्वरूपे सुखरूपे स्वर्गे लोके यजमानम् इष्टके चकारात्त्वां च सादयन्तु स्थापयन्तु ॥ स्तोमाः सामानि च राजसूयप्रकरणे दशमेऽध्याये प्राचीमारोहेत्यादिकण्डिकासु [१०. १०-१४.] व्याख्यातानि ॥ १० ॥

विराडसि दक्षिणा दिग्रुद्रास्ते देवा अधिपतय इन्द्रो हेतीनां प्रतिधर्ता पञ्चदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु प्रउगमुक्थमव्यथायै स्तभ्नातु बृहत्साम प्रतिष्ठि° — सादयन्तु ॥ ११ ॥

अथ दक्षिणतः । चतसृषु कण्डिकासु देवाः हेतीनां प्रतिधर्तारः स्तोमाः उक्थानि सामानि चान्यानि समानमन्यत् । वायुरग्रेगा इति [अध्या° २७.३१.] प्रउगं शस्त्रम् ॥ ११॥

सम्राडसि प्रतीची दिगादित्यास्ते देवा अधिपतयो वरुणो हेतीनां प्रतिधर्ता सप्तदशस्त्वा स्तोमः पृथिव्याᳪ श्रयतु मरुत्वतीयमुक्थमव्यथायै स्तभ्नातु वैरूपᳪ साम प्रतिष्ठि° — सादयन्तु ॥ १२॥

अथ पश्चात् । सम्यग्राजते सम्राट् । आ त्वा रथं यथोतये इति [ऋक्सं° म° ८.७.६.१.] मरुत्वतीयं शस्त्रम् ॥ १२॥

स्वराडस्युदीची दिङ्मरुतस्ते देवा अधिपतयः सोमो हेतीनां प्रतिधर्तैकविᳪशस्त्वा स्तोमः पृथिव्याᳪ श्रयतु निष्केवल्यमुक्थमव्यथायै स्तभ्नातु वैराजᳪ साम प्रतिष्ठि° — सादयन्तु ॥ १३॥

अथोत्तरतः । स्वेनैव राजते स्वराट् । अभि त्वा शूर नोनुम इत्यादिकं [ऋक्सं° म° ७.२.१५.२२.] निष्केवल्यं शस्त्रम् ॥ १३॥

अधिपत्न्यसि बृहती दिग्विश्वे ते देवा अधिपतयो बृहस्पतिर्हेतीनां प्रतिधर्ता त्रिणवत्रयस्त्रिᳪशौ त्वा स्तोमौ पृथिव्याᳪ श्रयतां वैश्वदेवाग्निमारुते ऽउक्थे अव्यथायै स्तभ्नीताᳪ शाक्वररैवते सामनी प्रतिष्ठि° — सादयन्तु ॥ १४॥

अथ मध्ये । द्वे इष्टके अधिकं पालयित्री बृहती प्रौढोर्ध्वा दिगसि । त्रिणवत्रयस्त्रिंशौ स्तोमौ त्वां पृथिव्यां श्रयताम् । वैश्वदेवाग्निमारुते शस्त्रे अचलनाय स्तभ्नीताम् । शाक्वररैवते सामनी चान्तरिक्षे स्थित्यै त्वां स्तभ्नीताम् । द्विवचने विशेषः । तत्सवितुर्वृणीमहे इत्यादि [ऋक्सं° म° ५.६.१०.१.] वैश्वदेवं शस्त्रम् वैश्वानराय पृथुपाजसे इत्यादिकमाग्निमारुतं शस्त्रम् [ऋक्सं° म° ३.१.१३.१.] ॥ उक्तमन्यत् ॥ १४॥

अयं पुरो हरिकेशः सूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानीग्रामण्यौ ।
पुञ्जिकस्थला च क्रतुस्थला चाप्सरसौ दङ्क्ष्णवः पशवो हेतिः पौरुषेयो
वधः प्रहेतिस्तेभ्यो नमोऽअस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यं द्विष्मो
यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥१५॥

का० [१७. १२. २. ३.] पुरीषमोप्योपर्ययं पुर इति पञ्चचूडाः प्रतिमन्त्रं प्रतिदिशं यथालिङ्गम् ॥ नाकसत्सु तूष्णीं चात्वालमृदं प्रक्षिप्य नाकसदामुपरि सर्वदिक्षु यथालिङ्गं लिङ्गानतिक्रमेण यल्लिङ्गको मन्त्रस्तद्दिशि तन्मन्त्रेण पञ्चचूडासंज्ञकाः पञ्चेष्टका उपदधातीति सूत्रार्थः ॥ पञ्च यजूंषि लिङ्गोक्तदेवत्यानि । योऽयं पुरोऽग्निः इष्टकारूपः पुरस्तादुपधीयमानत्वात्पुरोऽग्निः अग्निर्वै पुरस्तद्यत्तमाह पुर इति प्राञ्चꣳ ह्यग्निमुद्धरन्ति प्राञ्चमुपचरन्तीति श्रुतेः [८. ६. १. १६.] । कीदृशः । हरिकेशः हरयो हरितवर्णाः कनकवर्णाः केशाः केशसमा ज्वाला यस्य हरिः पिङ्गे हरिद्वर्णेऽइत्यभिधानात् । सूर्यरश्मिः सूर्यस्येव रश्मयः इति [८. ६. १. १६.] श्रुतेः ॥ तस्याग्नेः रथगृत्सः रथौजाः च सेनानीग्रामण्यौ रथे गृत्सो मेधावी कुशलो रथगृत्सः गृत्सो मेधावी गृणातेः स्तुतिकर्मण इति यास्कोक्तेः [निरु° ९. ५. (36.)] । सेनां (37.) नयतीति सेनानीः । चौ समुच्चयार्थौ । रथे ओजस्तेजो यस्य स रथौजाः रथयुद्धकुशल इत्यर्थः । स ग्रामं (38.) नयतीति ग्रामणीः । एतन्नामकौ सेनानीग्रामण्यौ परिचारकौ (39.) तौ च वासन्तिकावृतू इत्यर्थः वासन्तिकौ तावृतू इति [१६.] श्रुतेः ॥ तथा पुञ्जिकस्थला क्रतुस्थला चेत्यप्सरसौ दिगुपदिग्रूपे यस्य परिचारिके । पुञ्जिकस्य पुञ्जीकृतस्य (40.) रूपलावण्यसौभाग्यादिगुणसमूहस्य स्थलाधारभूता पुञ्जिकस्थला । क्रतूनां संकल्पानां रूपादिज्ञानानां स्थला स्थानभूता क्रतुस्थला । पुञ्जिकस्य क्रतूनां च स्थलं यस्यामिति बहुव्रीहिर्वा । पुञ्जिकस्थला च क्रतुस्थला चाप्सरसाविति दिक्चोपदिशा चेति ह स्माह माहित्थिरिति (41.) श्रुतेः [१६.] ॥ दङ्क्ष्णवो दशनशीलाः पशवः व्याघ्रादयो हेतिरायुधं वज्रः ॥ पौरुषेयः पुरुषसम्बन्धी वधः हननं वधः प्रहेतिः प्रकृष्टमायुधम् यस्मिन्नस्त्रे मुक्ते (42.) रावणसेनेव परस्परं रिपवो घ्नन्ति स पौरुषेयो वधः यदन्योऽन्यं घ्नन्ति स पौरु-

षेयो वधः प्रहेतिरिति [१६.] श्रुतेः ॥ यस्याग्नेरियं सामग्री हे इष्टके (43.) त्वं तदग्निस्वरूपासीत्यर्थः । योऽयमग्निर्यौ च तस्य सेनानीग्रामण्यौ ये चाप्सरसौ ये च हेतिप्रहेती तेभ्यः सर्वेभ्यः सर्वदा नमो नमस्कारोऽस्तु ते सर्वे नोऽस्मान्मृडयन्तु सुखयन्तु ते नोऽस्मानवन्तु रक्षन्तु यं नरं वयं द्विष्मः यस्यानिष्टं चिन्तयामः यश्च नरो नोऽस्मान्द्वेष्टि अस्मास्वप्रीतिं करोति तं नरमेषां पूर्वोक्तानां जम्भे दंष्ट्राकराले मुखे वयं दध्मः प्रक्षिपामः जभि नाशने जम्भयति नाशयति जम्भा दंष्ट्रा यस्मिन्नस्तीति जम्भं मुखम् ॥ १५॥

अ॒यं द॑क्षि॒णा वि॒श्वक॑र्मा॒ तस्य॑ रथस्व॒नश्च॒ रथे॑चित्रश्च सेनानीग्राम॒ण्यौ॑ ॥
मे॒न॒का च॑ सहज॒न्या चा॑प्स॒रसौ॑ यातु॒धाना हे॒ती रक्षा॑ᳪसि॒ प्रहे॑तिस्ते॒भ्यो॒
— दध्मः ॥ १६॥

अथ दक्षिणतः । दक्षिणस्यां दिशीति दक्षिणा दक्षिणादाजिति [पा° ५.३.३६.] सप्तम्यन्ताद्दक्षिणशब्दादाच्प्रत्ययः दक्षिणा दक्षिणतः (44.) अयं विश्वकर्मा विश्वं सर्वं कर्म यस्य विश्वं करोतीति वा विश्वकर्मा वायुः अयं वै वायुर्विश्वकर्मा यो ऽयं पवतऽएष हीदᳪ सर्वं करोति तद्यत्तमाह दक्षिणेति तस्मादेष दक्षिणैव भूयिष्ठं वातीति [८.६.१.१७.] श्रुतेः ॥ तस्य वायोः रथस्वनः सेनानीः रथे स्थितः स्वनति शूरशब्दं करोतीति रथस्वनः । रथे स्थितः चित्र आश्चर्यकारी रथेचित्रो ग्रामणीः हलदन्तादिति [पा° ६.३.९.] सप्तम्या अलुक् तौ ग्रैष्मावृतू ग्रैष्मौ तावृतूऽइति [१७.] श्रुतेः ॥ मानयन्त्येनां मेनका । जनैः सर्वैः सह स्थिता सहजन्या । अप्सरसो हि सर्वसाधारणाः । एते अप्सरसौ ॥ यातुधाना रक्षसामवान्तरजातिभिदो बोध्यः हेतिप्रहेती अप्यायुधविशेषौ । क्रूरा यातुधानास्तीक्ष्णहेतिरूपाः अतिक्रूराणि रक्षांस्यतितीक्ष्णप्रहेतिस्वरूपाणि ॥ हे इष्टके यस्य वायोरिदं सर्वं त्वं तद्रूपासि ॥ व्याख्यातमन्यत् ॥ १६॥

अ॒यं प॒श्चाद्वि॒श्वव्य॑चा॒स्तस्य॒ रथ॑प्रोत॒श्चास॑मरथश्च सेनानीग्राम॒ण्यौ॑ । प्र॒म्लोच॑न्ती
चानु॒म्लोच॑न्ती चाप्स॒रसौ॑ व्या॒घ्रा हे॒तिः स॒र्पा प्रहे॑तिस्ते॒भ्यो॒ — दध्मः ॥ १७॥

अथ पश्चात् । अवरस्मिन्प्रदेशे इत्यर्थे पश्चादिति [पा° ५. ३. ३२.] सूत्रेण निपातः पश्चात्पश्चिमदेशेऽयं विश्वव्यचाः आदित्यः विश्वं सर्वमुदयेन विचति प्रकाशयति व्याप्नोति वा विश्वव्यचाः असुन् (45.) पश्चिमायां स्पष्टं दृश्यतऽइति पश्चात् असौ वाऽआदित्यो विश्वव्यचा यदा ह्येवैष उदेत्यथेद७ सर्वं व्यचो भवति तद्यत्तमाह पश्चादिति तस्मादेतं प्रत्यञ्चमेव यन्तं पश्यन्तीति [८. ६. १. १८.] श्रुतेः ॥ तस्यादित्यस्य रथे स्थितः प्रोत-इव स्थिरो रथप्रोतः सेनानीः । असमोऽन्यै रथैस्तुल्यो रथो यस्य सोऽसमरथो नाम ग्रामणीः तौ च वार्षिकावृतू वार्षिकौ तावृतूऽइति [१८.] श्रुतेः ॥ प्रम्लोचति नरं प्रत्यात्मानं दर्शयतीति प्रम्लोचन्ती ॥ अनु वारं-वारं म्लोचतीत्यनुम्लोचन्तीत्यप्सरसौ ॥ व्याघ्राः प्रसिद्धाः यस्य हेतिः सर्पाः प्रहेतिर्यस्य तद्रूपासि । उक्तमन्यत् ॥ १७ ॥

अयमुत्तरात्संयद्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानीग्रामण्यौ ॥ विश्वाची च घृताची चाप्सरसावापो हेतिर्वातः प्रहेतिस्तेभ्यो — दध्मः ॥ १८ ॥

अथोत्तरतः । उत्तरस्मिन्नित्युत्तरात् उत्तराधरेत्यादिना [पा° ५. ३. ३४.] आत्प्रत्ययः अयमुत्तरतः संयद्वसुः यज्ञः सम्यक् यन्ति गच्छन्ति वसुने धनाय यं प्रति जनाः स सम्यद्वसुः यज्ञं गतेभ्यो हि दानमावश्यकम् यज्ञस्योत्तरोपचारत्वादुत्तरात् तथा च श्रुतिः [८. ६. १. १९.] यज्ञो वाऽउत्तरात्तद्यत्तमाहोत्तरादित्युत्तरतउपचारो हि यज्ञोऽथ यत्संयद्वसुरित्याह यज्ञ७ हि संयन्तीतीदं वस्विति ॥ तीक्ष्णोऽन्तरिक्षे निपतति पक्षाविति तार्क्ष्यः अरिष्टानुपहिंसिता नेमिरायुधं यस्य सोऽरिष्टनेमिः एतन्नामकौ सेनानीग्रामण्यौ तौ शारदावृतू शारदौ तावृतूऽइति [१९.] श्रुतेः ॥ विश्वाची घृताची चाप्सरसौ ते च दिशोपदिशे । विश्वं सर्वं प्रत्यञ्चतीति विश्वाची सर्वसाधारणत्वात् । घृतमञ्चति भुङ्क्ते घृताची घृतं ह्यप्सरसामन्नम् घृतस्य स्तोकं सकृदह्न आश्नामीत्युर्वशीवचनात् ॥ आपोऽपां समूहो हेतिः तस्य समूह इत्यण् [पा° ४. २. ३७.] वातः वायुः प्रहेतिः ॥ तेभ्य इत्याद्युक्तम् ॥ १८ ॥

अयमुपर्यर्वाग्वसुस्तस्य सेनजिच्च सुषेणश्च सेनानीग्रामण्यौ ॥ उर्वशी च पूर्वचित्तिश्चाप्सरसाववस्फूर्जन्हेतिर्विद्युत्प्रहेतिस्तेभ्यो — दध्मः ॥ १९ ॥

अथ मध्ये । उपरि ऊर्ध्वदेशेऽयमर्वाग्वसुः पर्जन्यः उपर्युपरिष्टादिति [पा° ५.३.३१.] निपात ऊर्ध्वप्रदेशे इत्यर्थे अर्वागधोमुखं यद्वसु धनं जलरूपं यस्मात्सोऽर्वाग्वसुः अधो जलं प्रजाभ्यो ददातीत्यर्थः तथा च श्रुतिः [८.६.१.२०.] पर्जन्यो वाऽउपरि तद्यत्तमाहोपरीत्युपरि हि पर्जन्योऽथ यदर्वाग्वसुरित्याहातो ह्यर्वाग्वसु वृष्टिरन्नं प्रजाभ्यः प्रदीयतऽइति ॥ तस्य पर्जन्यस्य सेनां जयतीति सेनजित् शोभना सेना यस्येति सुषेणः पूर्वपदादिति [पा° ८.३.१०६.] षत्वम् ततो णत्वम् तौ सेनानीग्रामण्यौ तौ हैमन्तिकावृतू हैमन्तिकौ तावृतूऽइति [२०.] श्रुतेः ॥ उरुः पृथुः कामो वशो यस्याः सोर्वशी । रूपातिशयात्पूर्वमेव पुंसां चित्तमुपैतीति पूर्वचित्तिः । एते दिगुपदिग्रूपे अप्सरसौ ॥ स्फुर्जा (46.) वज्रनिर्घोषे अवस्फूर्जतीत्यवस्फूर्जन् भयहेतुशब्दं कुर्वन् हेतिः । विद्युच्चपला प्रहेतिः ॥ शिष्टं व्याख्यातम् ॥१९॥

V. अ॒ग्निर्मू॒र्धा दि॒वः क॒कुत्पतिः॑ पृथि॒व्या अ॒यम् । अ॒पाᳬं रेताᳬंसि जिन्वति ॥२०॥

का° [१७.१२.५.] छन्दस्यास्तिस्रस्तिस्रोऽनूकान्तेषु पुरस्ताद्गायत्रीरग्निर्मूर्धेति प्रत्यृचम् । वक्ष्यमाणा गायत्र्याद्याश्छन्दस्या एकैकस्मिन्स्थाने तिस्र उपदधाति तासां मध्यमा पद्यानूके तामभितो द्वेऽअर्धपद्ये अत्र पूर्वदिश्यनूकान्ते तिस्रो गायत्रीरग्निर्मूर्धेति प्रत्यृचम् एवं वक्ष्यमाणा अपीति सूत्रार्थः ॥ तिस्र ऋचोऽग्निदेवत्या गायत्र्यः । आद्या व्याख्याता [३.१२.] ॥२०॥

अ॒यम॒ग्निः स॑ह॒स्रिणो॒ वाज॑स्य श॒तिन॒स्पतिः॑ । मू॒र्धा क॒वी र॑यी॒णाम् ॥२१॥

अयमग्निरीदृशस्तं स्तुम इति शेषः । कीदृशः सहस्रं संख्यास्यास्तीति सहस्री तस्य । शतिनः शतसंख्यावतो वाजस्यान्नस्य पतिः स्वामी अनेकान्नप्रद इत्यर्थः । तथा रयीणां धनानां मूर्धा शिरोवदुत्तमः अग्निर्हि सर्वधनानां प्रधानधनं दृष्टादृष्टसाधनत्वात् कविः क्रान्तदर्शनः ॥२१॥

त्वाम॑ग्ने॒ पुष्क॑रा॒दध्यथ॑र्वा॒ निर॑मन्थत । मू॒र्ध्नो विश्व॑स्य वा॒घतः॑ ॥२२॥

व्याख्यातैकादशे द्वात्रिंशत्तमकण्डिकायाम् ॥२२॥

भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः ।
दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम् ॥ २३ ॥

का° [१७. १२. ७.] पुरस्तात्त्रिष्टुभो रेतःसिग्वेलायां भुवो यज्ञस्येति । पूर्वदिशि रेतःसिग्वेलायां त्रिष्टुप्संज्ञा इष्टका उपदधाति तृचेन तिस्रः त्रिष्टुप्छन्दस्काभिर्ऋग्भिरुपधेया इष्टकास्त्रिष्टुभः एवमग्रेऽपि ॥ तिस्रस्त्रिष्टुभ आग्नेय्यः । प्रथमा व्याख्याता त्रयोदशेऽध्याये [१३. १५.] ॥ २३ ॥

अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।
यह्वा-इव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छ ॥ २४ ॥

जनानां ज्ञानश्रद्धाद्विजतर्पणसत्यादिसम्पन्नानामग्निहोत्रिणां समिधा समिन्धनेनाग्निः प्रत्यबोधि प्रतिबुध्यते कर्मणि स्वमधिकारं जानातीत्यर्थः दीपजनेत्यादिना [पा° ३. १. ६१.] लुङि कर्तरि चिण् । तत्र दृष्टान्तः आयतीमागच्छन्तीं धेनुं यथा वत्सः प्रतिबुध्यते यथा चोषसमागच्छन्तीं प्रति मनुष्याः प्रतिबुध्यन्ते ॥ दीप्तस्य तस्याग्नेर्भानवो रश्मयो नाकमच्छ स्वर्गमभितः प्रसिस्रते प्रसरन्ति अच्छाभेराप्तुमिति शाकपूणिः [निरु° ५. २८.] । दृष्टान्तमाह यह्व इति महन्नाम [निघ° ३. ३.] यह्वाः महान्तो जातपक्षाः पक्षिणो वयां वृक्षशाखां प्रोज्जिहानाः प्रोद्गच्छन्तो (47.) नाकमाकाशं प्रति प्रसरन्ति तद्वत् ॥ ऋचोऽर्थान्तरं वा । जनानामृत्विजां सम्बन्धिन्या समिधाग्निरबोधि प्रतिबोधितः प्रज्वलितः आयतीमुषसं प्रातःकालं प्रति धेनुं यथा प्रतिबोधयन्ति उत्थापयन्ति । तस्य भानवः प्रोज्जिहाना नाकमभि प्रसिस्रते । दृष्टान्तः वयां पक्षिणां मध्ये यह्वाः महान्तः पक्षिणो यथा प्रोद्गच्छन्तः प्रसरन्ति । विः पक्षी तस्यामि (48.) छान्दसे गुणे वयामिति रूपम् एकः प्रशब्दः उज्जिहाना इत्यत्र सम्बध्यते द्वितीयः सिस्रते इत्यत्र । सृ गतौ ह्वादिः लट् । ओहाङ् गतौ शानच् जिहानाः । उषासमिति संहितायां दीर्घः ॥ २४ ॥

अवोचाम कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे ।
गविष्ठिरो नमसा स्तोममग्नौ दिवीव रुक्ममुरुव्यञ्चमश्रेत् ॥ २५ ॥

उद्गातारो वदन्ति । वयं कवये क्रान्तदर्शिनेऽग्नये वचोऽवोचाम स्तुतिरूपं वाक्यमुक्तवन्तः । कीदृशाय कवये मेध्याय मेधे यज्ञे योग्याय । वृषभाय श्रेष्ठाय कामानां वर्षयित्रे । वृष्णि सेक्तृ पूने परिणामरहिताय । कीदृशं वचः वन्दारु वन्दनशीलं स्तुतितत्परम् शृवन्द्योरारुः [पा॰ ३. २. १७३.] । इदानीं गविष्ठिरः गवि वाचि स्थिरोऽप्रच्याव्यो होता नमसान्नेन युतं स्तोमं स्तुतिमग्नौ आहवनीये अश्रेत् । अन्तर्भूतण्यर्थः श्रयतिः लङर्थे छन्दसि लुङ्लङ्लिट इति [पा॰ ३. ४. ६.] वचनात् बहुलं छन्दसीति [पा॰ २. ४. ७३.] शपो लुक् गुणः । होताग्नौ स्तोममापयिष्यति आसञ्जयिष्यति याज्यानुवाक्याभिरन्नमग्निसम्बद्धं करिष्यतीत्यर्थः । तत्र दृष्टान्तः दिवीव रुक्मभुत्प्रेक्षते दिवि द्युलोके रुक्मं रोचमानमादित्यम् संध्यावन्दनसूर्योपस्थानादिषु विप्रयुक्ताः (49.) उरवो बहवो व्यञ्चाः स्तुतयो गतयो वा यस्येति (50.) तमिवेत्युत्प्रेक्षा । स्तोमः सूर्येणोपमीयते । गवियुधिभ्यां स्थिर इति [पा॰ ८. ३. ९५.] षत्वम् ॥ २५ ॥

अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठोऽअध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे-विशे ॥ २६ ॥

पा॰ [१७. १२. ८.] जगतीश्च पश्चादयमिहेति । तिसृभिः पश्चाद्रेतःसिग्वेलायां तिस्रो जगतीसंज्ञिष्टका दक्षिणामुख उपदधातीति सूत्रार्थः ॥ तिस्रो जगत्य आग्नेय्यः । आद्या व्याख्याता [३. १५.] ॥ २६ ॥

जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे ।
घृतप्रतीको बृहता दिविस्पृशा द्युमद्विभाति भरतेभ्यः शुचिः ॥ २७ ॥

योऽग्निर्भरतेभ्यः ऋत्विग्भ्यः सकाशादजनिष्ट जातः तैर्मथितवद्भ्यो जात इत्युच्यते । भरता इति ऋत्विङ्नामसु पठितम् [निघ॰ ३. १८.] । किमर्थं जातः नव्यसे नवीयसे नवतराय सुविताय सूताय प्रसूताय (51.) कर्मणे यागाय सूतेरिडागम (52.) आर्षः अभिनवं नवीयस्तस्मै ईलोप (53.) आर्षः । सोऽग्निर्दिविस्पृशा द्युलोकस्पर्शिना बृहता ज्वालासमूहेन द्युमत्कान्तिमद्यथा तथा विभाति विविधं दीप्यते । कीदृशोऽग्निः जनस्य यजमानस्य गोपाः गोपायति रक्षतीति गोपाः

क्विप् लोपो व्योर्वलि [पा° ६. १. ६६.] यलोपः । जागृविः जागरणशीलः कर्मणि सावधानः । सुदक्षः शोभनो दक्ष उत्साहो यस्य अतिकुशलो वा । घृतप्रतीकः घृतं प्रतीके मुखे यस्य । शुचिः शुद्धः बहूनि हवींषि भक्षयन्नपि उच्छिष्टो न स्यात् शोधको वा ॥ २७ ॥

त्वाम॑ग्ने॒ऽअङ्गि॑रसो॒ गुहा॑ हि॒तमन्व॑विन्दञ्छिश्रिया॒णं वने॑-वने ।
स जा॑यसे म॒थ्यमा॑नः॒ सहो॑ म॒हत्वाम॑हुः॒ सह॑सस्पु॒त्रम॑ङ्गिरः ॥ २८ ॥

हे अग्ने अङ्गिरसः अङ्गिरोवंशोद्भवा ऋषयस्त्वामन्वविन्दन् लेभिरे अन्विष्य प्रापुरित्यर्थः । किम्भूतं त्वां गुहा गुहायां निगूढे प्रदेशे हितं स्थितमप्सु प्रविष्टमित्यर्थः अग्निर्देवेभ्य उदक्रामत्सोऽप आविशदित्यादिश्रुतेः (54.) सुपां सुलुगिति [पा° ७. १. ३९.] गुहाशब्दात्सप्तमीलोपः । हे अग्ने पुनर्नष्टं त्वां वने-वने शिश्रियाणं नानावनस्पतिषु श्रितमङ्गिरसोऽन्वविन्दन् नित्यवीप्सयोरिति [पा° ८. १. ४.] वनेपदस्य द्वित्वम् । श्रयतेः शानचि बहुलं छन्दसीति [पा° २. ४. ७६.] शपः श्लुः द्वित्वं च । यं त्वामङ्गिरसोऽलभन्त स त्वं जायसेऽधुनाप्यरणिभ्य उत्पद्यसे । कीदृशः महत्सहः महता बहुना सहसा बलेन मथ्यमानः महत्सहःशब्दाभ्यां तृतीयालोपः । मथ्यमानो जायसऽइत्यर्थः । हे अङ्गिरः अग्ने अत एव सहसो बलस्य पुत्रं त्वामाहुः वदन्ति मुनयः बलेन मन्थनाज्जायमानत्वाद्बलपुत्रं (55.) वदन्तीत्यर्थः ॥ २८ ॥

सखा॑यः॒ सं वः॑ स॒म्यञ्च॒मिष॒ꣳ स्तोमं॑ चा॒ग्नये॑ ।
वर्षि॑ष्ठाय क्षिती॒नामू॒र्जो नप्त्रे॒ सह॑स्वते ॥ २९ ॥

का° [१७. १२. १.] अपरास्ताभ्योऽनुष्टुभः सखायः समिति । जगतीभ्योऽपरास्तिस्रोऽनुष्टुप्संज्ञेष्टकाः प्राङ्मुख उपदधाति सखाय इत्यृक्त्रयेणेति सूत्रार्थः ॥ तिस्रोऽनुष्टुभः । ऋत्विजः प्रति यजमानो ब्रूते हे सखायः ऋत्विजः सम्यञ्चं समीचीनमिषं हविर्लक्षणमन्नं समीचीनं स्तोमं चाग्नये वः यूयं सम्पादयत अग्न्यर्थं हविः कुरुत त्रिवृत्पञ्चदशादिस्तोमं च वदतेत्यर्थः । व्यत्ययेन प्रथमास्थाने द्वितीयाबहुवचनं कृत्वा वसादेशे व इति । समित्युपसर्गस्यापेक्षितः क्रियाशेषोऽध्याहर्तव्यः । कीदृ-

शायाग्नये क्षितीनां मनुष्याणां वर्षिष्ठाय श्रेष्ठाय वृद्धतमाय प्रियस्थिरेत्यादिना [पा० ६.४.१५७.] वृद्धस्य वर्षादेश इष्ठनि। क्षियन्ति निवसन्ति भूमाविति क्षितयो नराः कर्तरि क्तिन्। सर्वपूज्यायेत्यर्थः। तथा ऊर्जो जलस्य नप्त्रे पौत्राय अद्भ्यो वनस्पतयो जायन्ते तेभ्योऽग्निरित्यपां पौत्रोऽग्निः। तथा सहस्वते बलवते सहो बलमस्यास्तीति ॥२९॥

स७-समिद्युवसे वृषन्नग्ने विश्वान्यर्य आ।

इडस्पदे समिध्यसे स नो वसून्याभर ॥३०॥

हे वृषन् वर्षितः सेक्तः हे अग्ने अर्यः स्वामी त्वं विश्वानि सर्वाणि फलानि आ समन्तात्संयुवसे संयौषि यजमानेन संगमयसि यौतेर्विकरणपदव्यत्ययः अर्यः स्वामिवैश्ययोरिति [पा० ३.१.१०३.] निपातः। इडः इडायाः गोः पृथिव्या वा पदे स्थाने उत्तरवेद्यां समिध्यसे कर्मार्थं दीप्यसे स ईदृशस्त्वं नोऽस्मभ्यं वसूनि धनानि आभर आहर देहीत्यर्थः हरतेर्भकारः ॥३०॥

त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः।

शोचिष्केशं पुरुप्रियाग्ने हव्याय वोढवे ॥३१॥

चित्रं नानाविधं श्रवो धनं कीर्तिर्वा यस्य स चित्रश्रवाः अतिशयेन चित्रश्रवाश्चित्रश्रवस्तमस्तत्सम्बुद्धिः। हे पुरुप्रिय पुरूणां बहूनां यजमानानां प्रियः यद्वा पुरवः प्रिया यस्य पुरु बहु हविः प्रियं यस्येति वा हे पुरुप्रिय हे अग्ने विक्षु प्रजासु ऋत्विग्यजमानाः त्वां हवन्ते आह्वयन्ति ह्वेञ् आह्वाने ह्वः सम्प्रसारणमिति [पा० ६.१.३२.] शपि सम्प्रसारणं गुणश्च। किं कर्तुम् हव्याय वोढवे विभक्तिव्यत्ययः हव्यं वोढुं प्राप्तुम् तुमर्थे सेसेनिति [पा० ३.४.९.] तुमर्थे तवेप्रत्ययः ॥३१॥

एना वोऽअग्निं नमसोर्जो नपातमाहुवे।

प्रियं चेतिष्ठमरतिꣳ स्वध्वरं विश्वस्य दूतममृतम् ॥३२॥

विश्वस्य दूतममृतं विश्वस्य दूतममृतम्।

स योजतेऽअरुषा विश्वभोजसा स दुद्रवत्स्वाहुतः ॥३३॥

स ई॒द्रव॑त्स्वाकृ॑तः स ई॒द्रव॑त्स्वाकृ॑तः ।
सु॒ब्रह्मा॑ य॒ज्ञः सु॒शमी॑ वसू॑नां दे॒वᳬ राधो॒ जना॑नाम् ॥३४॥

का॰ [१७.१२.१०.] अषाढविलायाः पुरस्ताद्बृहतीरेना व इति । अषाढविलायाः पुरस्तात्तिस्रो बृहतीष्टका एना व इति तिसृभिरुपदधातीत्यर्थः ॥ तिस्रो बृहत्यः प्रगाथः ऋग्द्वयग्रन्थनेन ऋक्त्रयसम्पादनं प्रगाथः तत्र बृहतीसतोबृहतीभ्यां तिस्रो बृहत्यः कृताः यस्यास्तृतीयो द्वादशाक्षरोऽन्ये त्रयोऽष्टार्णाः सा बृहती एना वोऽग्निं नमसोर्जो नपातमाहुवे । प्रियं चेतिष्ठमरतिᳬ स्वध्वरं विश्वस्य दूतममृतमिति ॥ यस्याः प्रथमद्वितीयौ द्वादशार्णौ द्वितीयतुर्यावष्टार्णौ सा सतोबृहती स योजतेऽअरुषा विश्वभोजसा स दुद्रवत्स्वाहुतः । सुब्रह्मा यज्ञः सुशमी वसूनां देवᳬ राधो जनानामिति ॥ तत्र बृहत्यास्तुरीयं पादं द्विरावर्त्य सतोबृहत्याः पूर्वार्धेन सह द्वितीया बृहती कृता सतोबृहत्या द्वितीयपादं द्विरावर्त्य तस्या एवोत्तरार्धेन सह तृतीया बृहती कृता एवं तिस्रो बृहत्यः संहितायां पठिताः तत्रावर्तितपादानामर्थान्तराभावाद्द्वे ऋचौ व्याख्यायेते ॥ एना वः । विभक्तेराकारः हे ऋत्विग्यजमाना वो युष्माकं सम्बन्धिना एना एनेन नमसान्नेन हविर्लक्षणेनाग्निमहमाहुवे आह्वयामि । वो युष्माकमेनमग्निं नमसाहुवऽइति वा । कीदृशमग्निमूर्जो नपातमपां पौत्रम् प्रियं यजमानानां प्रीतिहेतुम् चेतिष्ठमतिशयेन चेतयितारम् तुरिष्ठेमेयःस्विति [पा॰ ६.४.१५४.] इष्ठनि परे तृचो लोपः । अरतिमलमतिं पर्याप्तमतिं यद्वा रतिरुपरमस्तद्रहितम् सदोद्यमयुतमित्यर्थः । स्वध्वरं शोभना अध्वरा यज्ञा यस्य तम् । विश्वस्य दूतं सर्वस्य यजमानजनस्य सर्वस्य जगतो वा दूतवत्कार्यकारिणम् सर्वस्य हि गृहे दाहपाकादिकार्यकरत्वात् । अमृतं मरणरहितम् ॥ अथ सतोबृहती व्याख्यायते । स योजते । यमग्निमाह्वयामि सोऽग्निः अरुषा अरुषौ रोषरहितौ साधू विश्वभोजसा विश्वं भुञ्जते तौ विश्वभोजसौ सर्वस्य भोक्तारौ द्वितीयाद्विवचनस्थाने आकारः भुजेरसुन् एवंविधावश्वौ रथे योजते युनक्ति विशेषणाभ्यां विशेष्यमश्वपदं रथपदं चाध्याहार्यम् । स एवाग्निः रथारूढः सन् स्वाहुतः शोभनप्रकारेणाहुतः सन् दुद्रवत् द्रवति गच्छति द्रु गतौ णिश्रिद्रुस्रुभ्य इति [पा॰ ३.१.४८.] लुङि चङ् द्वित्वम् अडभावगुणाभावावार्षौ । कुत्र

गच्छतीत्यत आह सुब्रह्मेति वसूनामिति वसुशब्दो (56.) रुद्रादित्ययोरुपलक्षकः वसूनां रुद्राणामादित्यानां सवनत्रयदेवानां यत्र यज्ञः यत्र च जनानां यजमानानां देवं दीप्यमानं राधो धनं हविर्लक्षणं चास्ति तत्राग्निर्गच्छतीत्यर्थः । सुब्रह्मा ब्रह्मपदं सर्वऽर्त्विगुपलक्षणं शोभनो ब्रह्मा ऋत्विग्यत्र शुभऽर्त्विग्युक्तः । सुशमी शमीति कर्मनाम [निघ॰ २. १.] शोभनानि कर्माणि यत्रेति सुशमी शोभनकर्मवान् । अग्निराहूतो रथेऽश्वान्नियुज्य यज्ञे हविर्भोक्तुमाश्वागच्छतीति (57.) सर्वार्थः ॥ ३२॥ ३३ ॥ ३४ ॥ ॥

अग्ने वाजस्य गोमत ईशानः सहसो यहो । अस्मे धेहि जातवेदो महि श्रवः ॥ ३५॥

का॰ [१७. १२. १३.] अपरा गायत्रीभ्य उष्णिहोऽग्ने वाजस्येति । गायत्रीभ्योऽपरास्तिस्र उष्णिक्संज्ञा इष्टका अग्नऽइति ऋक्त्रयेणोपदधातीति सूत्रार्थः ॥ तिस्र उष्णिहः । हे अग्ने हे सहसो यहो बलस्य पुत्र सह इति बलनाम [निघ॰ २. ९.] यहुरिति पुत्रनाम [निघ॰ २. २.] मन्थनाज्जायमानत्वाद्बलस्य पुत्रत्वम् सहस्पुत्रमित्युक्तं (58.) च । हे जातवेदः उत्पन्नज्ञान अस्मे अस्मभ्यं महि महत् श्रवः धनं धेहि देहि । कीदृशस्त्वं गोमतः धेनुयुक्तस्य वाजस्यान्नस्येशानः ईश्वरः अत एव धनं गाश्च देहीत्यर्थः ॥ ३५॥

स इधानो वसुष्कविरग्निरीडेन्यो गिरा । रेवदस्मभ्यं पुर्वणीक दीदिहि ॥ ३६॥

हे पुर्वणीक पुरु बहु अनीकं मुखं यस्य तत्सम्बुद्धिः सर्वदाहकत्वात् यतो होव कुतश्चाग्नावभ्यादधाति तत एव प्रदहतीति श्रुतिः । हे बहुमुखाग्ने अस्मभ्यमस्मदर्थे रेवत् रयिमत् धनवद्यथा तथा स त्वं दीदिहि दीप्यस्व । दिवेः शपः श्लुः द्विवम् तुजादीनां दीर्घोऽभ्यासस्येति [पा॰ ६. १. ७.] अभ्यासदीर्घः लोपो व्योर्वलीति [पा॰ ६. १. ६६.] वलोपः । रयिर्विद्यते यत्र कर्मणि रेवत् रयेर्मताविति [पा॰ ६. १. ३७. वा॰ ४.] सम्प्रसारणम् । तथा त्वया (59.) हविर्ग्राह्यं यथास्माकं धनाप्तिर्भवतीत्यर्थः । स पूर्वोक्तः कीदृशस्त्वमिधानः दीप्यमानः । वसुः निवासहेतुः (60.) । कविः क्रान्तदर्शी । अग्निः अग्रे नयतीत्यग्रणीः प्रथमं यज्ञप्रवर्तक इत्यर्थः । गिरा त्रयीलक्षणया वाचा ईडेन्यः ईडितुं योग्यः स्तुत्यः औणादिक एन्यः (61.) ॥ ३६॥

क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः । स तिग्मजम्भ रक्षसो दह प्रति ॥३७॥

हे राजन्दीप्यमान हे तिग्मजम्भ तिग्मा तीक्ष्णा जम्भा दंष्ट्रा यस्य यद्वा तिग्ममिति वज्रनाम [निघ° २.२०.] हे वज्रदंष्ट्र अग्ने वस्तोः अहःसम्बन्धिन उतापि उषसः उषःकालसम्बन्धिनो रक्षसो रक्षांसि राक्षसान् स त्वं प्रतिदह प्रत्येकं भस्मीकुरु लिङ्गव्यत्ययेन रक्षःशब्दस्य पुंस्त्वम् छन्दसि परेऽपीति [पा° १.४.८१.] प्रत्युपसर्गस्य क्रियापदात्परत्वम् । कीदृशस्त्वम् त्मना उप आत्मनापि स्वभावतोऽपि क्षपः क्षपयतीति क्षपः क्षप क्षेपे चुरादिः पचाद्यच् स्वभावतो रक्षसां क्षपयिता । मन्त्रेष्वाङ्यादेरात्मन इति [पा° ६.४.१४१.] आत्मन आकारलोपस्तृतीयैकवचने ॥३७॥

भद्रो नोऽअग्निराहुतो भद्रा रातिः सुभग भद्रोऽअध्वरः । भद्रा उत प्रशस्तयः ॥३८॥

भद्रा उत प्रशस्तयो भद्रं मनः कृणुष्व वृत्रतूर्ये । येना समत्सु सासहः ॥३९॥

येना समत्सु सासहोऽव स्थिरा तनुहि भूरि शर्धताम् । वनेमा तेऽअभिष्टिभिः ॥४०॥

का° [१७.१२.११.] भद्रो न इति ककुभस्ताभ्यः । बृहतीभ्यः पुरस्तात्तिस्रः ककुबिष्टका भद्रो न इत्यृक्त्रयेणोपदधातीति सूत्रार्थः ॥ प्रगाथः ककुप्सतोबृहतीभ्यां तिस्रः ककुभः पादावृत्त्या कृताः आवृत्तस्य नार्थान्तरम् । भद्रो नोऽअग्निरा° — प्रशस्तय इति ककुप् मध्यः पादो द्वादशक आद्यतृतीयावष्टकाविति तल्लक्षणम् । भद्रं मनः कृणुष्व वृत्रतूर्ये येना समत्सु सासहोऽव स्थिरा तनुहि भूरि शर्धतां वनेमा तेऽअभिष्टिभिरिति सतोबृहती आद्यतृतीयौ द्वादशकौ द्वितीयतुर्यावष्टकाविति तल्लक्षणम् ॥ तत्र ककुब्व्याख्यायते । यजमानश्चित्यमग्निं सम्बोध्य प्रार्थयते । हे सुभग शोभनभग शोभनं भगमैश्वर्यं यस्य । ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणेत्युक्तेः हे षड्विधैश्वर्ययुक्त आहुतः ऋत्विग्भिराहुतोऽग्निर्नोऽस्माकं भद्रः भन्दनीयः कल्याणो (62.) भवत्विति शेषः । किंच रातिः त्वदीयं दानं भद्रास्तु कल्याणकार्यस्तु । अध्वरः यज्ञो भद्रः श्रेयस्कार्यस्तु । उतापि च प्रशस्तयः कीर्तयो भद्रा सुखदायिन्यः सन्तु ॥ अथ द्वितीया । हे अग्ने येन मनसा समत्सु संग्रामेषु त्वं ससहः अभिभवसि शत्रून् षह मर्षणे छन्दस्यभि-

भवे च लङ् द्विवाडभावौ छान्दसौ संहितायामभ्यासदीर्घः । तन्मनः वृत्रतूर्ये पापनाशाय भद्रं कल्याणं कुरुष्व तूर्यतिर्बधकर्मा वृत्रः पापम् पाप्मा वै वृत्र इति श्रुतेः । किं च भूरि बहु शर्धतां बलं कुर्वतां सम्बन्धीनि स्थिरा स्थिराणि धनूंषि अवतनुहि अवतारय ज्यारहितानि कुरु शर्ध इति [निघ° २. ९.] बलनाम शर्ध बलं कुर्वन्ति शर्धन्ति सुपः क्विप् ततः शतृप्रत्ययः शर्धन्तीति शर्धन्तस्तेषाम् । किं च ते तवाभिष्टिभिर्मार्गैर्वयं वनेम सम्भजेम भोग्यानि वसूनि सेवेमहि । वनेमा येनेति पदयोः संहितायां दीर्घः ॥ ३८ ॥ ३९ ॥ ४० ॥ ॥

अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।

अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिन इषं स्तोतृभ्य आभर ॥ ४१ ॥

का° [१७. १२. १४.] अनूकान्ते दक्षिणे पङ्क्तीरग्निं तमिति । दक्षिणेऽनूकान्ते तिस्रः पङ्क्तिसंज्ञा इष्टका अग्निं तमिति तिसृभिरुपदधातीति सूत्रार्थः ॥ तिस्रः पङ्क्तयः यस्य द्वौ पादावष्टकौ द्वौ द्वादशकौ सा पङ्क्तिः । यो वसुः तापपाकप्रकाशैरुपकुर्वन् (63.) धनरूपो वसुरित्युच्यते वसुर्वासयिता वा यः तमग्निं मन्ये (64.) जानामि । धेनवो गावो यमग्निमुद्धृतं ज्ञात्वा अस्तं गृहं यन्ति गच्छन्ति दोहकालोऽस्माकं होमार्थं प्राप्त इति । आशवः शीघ्रगामिनोऽर्वन्तोऽश्वा यं दृष्ट्वास्तं यजमानगृहं यन्ति गच्छन्ति । नित्यासः नित्याः शाश्वताः सर्वकालभाविनो वाजिनो बलवन्तो ऽश्वाः सैन्धवाश्वाभिप्रायेण पुनर्वचनम् यं दृष्ट्वास्तं यन्ति । यमुपास्य गवाश्वादिकं लभ्यते इत्यर्थः तादृश हे अग्ने स्तोतृभ्यः स्तुतिकारिभ्यो यजमानेभ्य इषमन्नमाभर आहर देहि ॥ ४१ ॥

सोऽअग्निर्यो वसुर्गृणे सं यमायन्ति धेनवः ।

समर्वन्तो रघुद्रुवः सं सुजातासः सूरय इषं स्तोतृभ्य आभर ॥ ४२ ॥

योऽग्निर्वसुर्वासयिता स अग्निः विभक्तिव्यत्ययः तमग्निं गृणे स्तौमि गृ शब्दे स्वादिः लटि तङुत्तमैकवचनम् (65.) ष्वादित्वाद्ध्रस्वः [पा° ७. ३. ८०.] । यद्वा सोऽग्निः गृणे स्तूयतेऽस्माभिः कर्तृप्रत्ययस्य कर्मत्वं विधेयम् । धेनवो यमग्निं समायन्ति समागच्छन्ति । अर्वन्तोऽश्वा यं समायन्ति कीदृशा अर्वन्तः रघुद्रुवः रलयोरै-

क्यम् लघु क्षिप्रमरं द्रुतम् लघु शीघ्रं द्रुणाति (66.) गच्छन्ति लघुद्रुवः द्रू बधगत्योः स्वादिः क्र्यादिश्च क्विप्। सूरयः विद्वांसो योग्या ऋत्विजो यं समायन्ति यदुपासकं सर्वे भवन्तीऽइत्यर्थः। कीदृशाः सूरयः सुजातासः शोभनं जातं जन्म येषां ते सुजातासः सुजाताः आज्जसेरिति [पा॰ ७.१.५०.] असुक् तादृश हे अग्ने त्वं स्तोतृभ्य इषमन्नमाभर ॥४२॥

उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीषऽआसनि।
उतो न उत्पुपूर्या उक्थेषु शवसस्पतऽइषं स्तोतृभ्य आभर ॥४३॥

चन्द्रे सु (67.) शकारेणेति संहितायां चन्द्रे परे सुशब्दस्य शागमः (68.) हे सुचन्द्र चन्द्रमिति हिरण्यनाम [निघ॰ १.२.] शोभनं चन्द्रं हिरण्यं यस्मात् यद्वा शोभनश्चन्द्र-इव चन्द्रो धनदाता शोभने चन्द्रे धनप्राप्तिर्भवतीति ज्योतिःशास्त्रे उक्तम् यद्वा शोभनं चन्दत्याह्लादयति सुचन्द्रः हे सुचन्द्र आसनि आस्ये मुखे सर्पिषः पानायेति शेषः घृतस्य पानाय उभे दर्वी दर्व्याकारौ हस्तौ श्रीणीषे आश्रयसि सेवसे श्री पाके क्र्यादिः अत्राश्रयार्थः। उतो अपि च हे शवसः पते बलस्याधिपते उक्थ्येषु शास्त्रवत्सु यज्ञेषु नोऽस्मानुत्पुपूर्याः उत्कर्षेण पूरय धनैरिति शेषः। स्तोतृभ्यः इषमन्नमाहर ॥४३॥

अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृशम्। ऋध्यामा तऽओहैः ॥४४॥

का॰ [१७.१२.१५.] उत्तरे पदपङ्क्तीरग्ने तमिति। उत्तरानूकान्ते तिस्रः पदपङ्क्तीष्टका अग्ने तमिति तिसृभिरुपदधातीति सूत्रार्थः॥ तिस्रः पदपङ्क्तयः। यस्याः पञ्चाक्षराश्चत्वारः पादा एकः षडर्णाः सा पदपङ्क्तिः यद्वा त्रयः पञ्चार्णाश्चतुर्थश्चतुरर्णः पञ्चमः षडर्ण इति। तत्राद्यायां चतुर्थश्चतुष्कः। हे अग्ने ते तव तं क्रतुं तावकं प्रसिद्धं यज्ञमद्यास्मिन्दिने वयमृध्याम समर्धयाम समृद्धं करवामेत्यर्थः आशिषि लोट् संहितायां दीर्घः। कैः स्तोमैः स्तुतिभिः सामसमूहैः। कीदृशैः स्तोमैः ओहैः वहे रूपं वहन्ति फलं प्रापयन्तीत्योहाः तैः वहन्ति प्रतिपादयन्ति त्वत्कर्मरूपनामानीति वा। तत्रैको दृष्टान्तः अश्वं न स्तोमैः न इवार्थे यथा स्तोमैः स्तुतिभिः अश्वमाश्वमेधिकं विप्राः समर्धयन्ति। द्वितीयो दृष्टान्तः क्रतुं न हृदिस्पृशं हृदि स्पृशति

हृदिस्पृक् हलदन्तादित्यलुक् [पा॰ ६.३.९.] अतिप्रियं चिरं मनसि स्थितं भद्रं कल्याणं क्रतुं संकल्पं यथा समर्धयन्ति । क्रतुर्यज्ञः संकल्पश्चेति दृष्टान्तदार्ष्टान्तिकयोरस्य सम्बन्धः । चिराभिलषितं यथा सन्तः सम्पादयन्तीत्यर्थः ॥ ४४ ॥

अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः । रथीर्ऋतस्य बृहतो बभूथ ॥ ४५ ॥

अधेत्यर्थेऽधेत्यव्ययम् निपातस्य चेति [पा॰ ६.३.१३६.] संहितायां दीर्घः । हि पादपूरणः । हे अग्ने अथ समनन्तरमेव क्रतोः अस्मद्यज्ञस्य रथीः सारथिरिव बभूथ भव बभूथाततन्थेत्यादिना [पा॰ ७.२.६४.] इडभावः । रथोऽस्यास्तीति रथीः रथादीरन्नीरचावित्यस्त्यर्थे ईरच्प्रत्ययः (69.) सारथिर्यथा रथनिर्वाहं करोति तथा यज्ञनिर्वाहकी भवेत्यर्थः । कीदृशस्य क्रतोः भद्रस्य कल्याणरूपस्य । दक्षस्य समृद्धस्य स्वफलदानसमर्थस्येति वा । साधोः साध्यते निष्पाद्यतऽइति साधुस्तस्यातिशययुक्तस्येत्यर्थः । ऋतस्य अमोघफलस्य । बृहतः महतो प्रौढस्य ॥ ४५ ॥

एभिर्नोऽअर्कैर्भवा नोऽअर्वाङ् स्वर्ण ज्योतिः ।
अग्ने विश्वेभिः सुमना अनीकैः ॥ ४६ ॥

हे अग्ने विश्वेभिः विश्वैः सर्वैरनीकैः मुखैः कृत्वा नोऽस्मान्प्रति अर्वाङ् अभिमुखो भव । अवरं समीपदेशमञ्चतीत्यर्वाङ् । अनुगृह्णाणेत्यर्थः । कीदृशः एभिरस्मत्पठितैरर्कैरर्चनीयैर्मन्त्रैः कृत्वा सुमनाः शोभनमनस्कः । प्रसन्नः सन्नस्मत्संमुखो भवेत्यर्थः । तत्र दृष्टान्तः स्वः न ज्योतिः स्वःशब्देन सूर्यः न इवार्थे यथा स्वरादित्यरूपं ज्योतिः अर्कैः स्तुतमुदयादारभ्य सर्वप्राणिसंमुखं भवति । द्व्यचोऽतस्तिङ इति [पा॰ ६.३.१३५.] भवेत्यस्य दीर्घः ॥ ४६ ॥

अग्निँ होतारं मन्ये दास्वन्तं वसुँ सूनुँ सहसो जातवेदसं विप्रं न जातवेदसम् ॥ य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ॥ घृतस्य विभ्राष्टिमनुवष्टि शोचिषाजुह्वानस्य सर्पिषः ॥ ४७ ॥

का॰ [१७.१२.१६.] पुरीषवत्याः पूर्वामतिछन्दसं प्राच्यौ पुरीषसंहिते भद्रा रातिर्वृत्रतूर्येऽवस्थिराग्निँ होतारमिति । अग्नेः पुरीषमसीति पुरीषशब्दवता मन्त्रे-

णोपहिता पञ्चम्यसपत्ना पुरीषवती [१५.३.] तस्याः पूर्वामतिछन्दसमिष्टकामुपदधाति भद्रा रातिः वृत्रतूर्ये अवस्थिरेति ककुभां [१५.३८-४०.] चतुश्चतुरुत्तरसहितयाग्निँ होतारमित्यृचा । पुरीषवत्यतिछन्दइष्टके प्राग्लक्षणे पुरीषयुक्ते च भवतः अनयोरन्तः पुरीषावापः कार्य इति सूत्रार्थः । अतिछन्दाः अवसानत्रिकोपेता । छन्दांसि गायत्र्यादीनि सप्तातिक्रान्तातिछन्दाः । चतुःषष्ट्यक्षरत्वादष्टिः ककुभामन्तरैः सहातिधृतिः ॥ यो देवः दानादिगुणयुक्तोऽग्निरूर्ध्वयोन्नतया देवाच्या देवान्प्रत्यञ्चति गच्छति देवाची तया देवान्प्रति गतया कृपा कृप्यतऽइति कृप् तया क्लृप्तया समर्थया शोचिषा ज्वालया घृतस्य विभ्राष्टिं विभ्रंशपातमनुवष्टि अन्विच्छति । शोचिःशब्दस्य स्त्रीत्वमार्षम् । किम्भूतस्य घृतस्य आजुह्वानस्य समन्ताद्धूयमानस्य सर्पिषः सर्पतीति सर्पिस्तस्य अग्न्यङ्गेषु प्रसरणशीलस्य । य एतादृशः (70.) तमग्निं मन्ये जानामि । कीदृशं होतारं देवानामाह्वातारम् दास्वन्तं दासृ दाने दातारम् वसुं वासयितारम् सहसो बलस्य सूनुं पुत्रम् बलेन मथ्यमानत्वात् जातवेदसमुत्पन्नप्रज्ञम् न इवार्थे जातवेदसं जातसर्वशास्त्रज्ञानं विप्रं ब्राह्मणमिव स्थितम् ॥४७॥

a. अग्ने त्वं नोऽअन्तम उत त्राता शिवो भव वरूथ्यः ॥

b. वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमँ रयिं दाः ॥

c. तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥४८॥

का° [१७.१२.१७.] अग्ने त्वमित्यनूकान्तेऽपरे द्विपदाः । अग्ने त्वम् वसुरग्निः तं त्वा इति तिसृभिरपरेऽनूकान्ते द्विपदेष्टका उपदधातीत्यर्थः ॥ तिस्रो द्विपदा अग्निप्यः ॥ व्याख्याताः [३.२५.२६.] ॥४८॥

VI. येन ऋषयस्तपसा सत्रमायन्निन्धाना अग्निँ स्वराभरन्तः ।

तस्मिन्नहं नि दधे नाकेऽअग्निं यमाहुर्मनव स्तीर्णबर्हिषम् ॥४९॥

का° [१७.१२.१९.] पुनश्चितिं चोपरि तद्वचेन ऋषय इति प्रत्यृचम् । मध्योपहितस्याष्टेष्टकस्य गार्हपत्यस्योपरि गार्हपत्यवदेव पुनश्चितिमुपदधाति येने-

त्यष्टऽर्चेन प्रत्यृचमित्यर्थः ॥ अग्निग्व्योऽष्टौ षट् त्रिष्टुभः द्वे अनुष्टुभौ । ऋषयः मुनयो येन तपसा चित्तैकाग्र्येण सत्रं यज्ञमायन्नागताः यज्ञं कर्तुमुद्यता इत्यर्थः । कीदृशाः अग्निमिन्धानाः दीपयन्तः । तथा स्वः स्वर्गलोकमाभरन्तः आहरन्तः स्वीकुर्वाणाः । मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तप इत्युक्तेः । तस्मिन् तपसि सति नाके स्वर्गलोकनिमित्तमग्निमहं निदधे स्थापयामि । मनवः मननप्रधाना विद्वांसो यमग्निं स्तीर्णबर्हिषमाहुर्वदन्ति स्तीर्णमाछादितं बर्हिर्यत्र तम् बर्हिर्यज्ञसाधनोपलक्षकम् यज्ञसाधनसहितमित्यर्थः ये विद्वा७सस्ते मनव इति [८. ६. ३. १८.] श्रुतेः ॥४९॥

तं पत्नीभिरनुगच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः ।

नाकं गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठेऽअधि रोचने दिवः ॥५०॥

हे देवाः दीप्यमाना ऋत्विजः पत्नीभिः कलत्रैः सह पुत्रैरुत पुत्रैरपि सह भ्रातृभिर्वा भ्रातृभिश्च हिरण्यैः सुवर्णादिद्रव्यैश्च सह तमग्निमनुगच्छेम वयमनुसरेम सेवेमेत्यर्थः । कीदृशा वयम् तृतीये भूमिमारभ्य त्रिसंख्यापूरके दिवः पृष्ठे रविमण्डले नाकं दुःखहीनं स्थानमधिगृभ्णाना (71.) अधिकं सुखस्थानं स्वीकुर्वन्तः । कीदृशे दिवः पृष्ठे सुकृतस्य लोके शुभकर्मणः फलभूते रोचने दीप्यमाने एतद्ध तृतीयं पृष्ठ७ रोचनं दिवो यत्रैष एतत्तपतीति [८. ६. ३. १९.] श्रुतेः ॥५०॥

आ वाचो मध्यमरुहद्भुरण्युरयमग्निः सत्पतिश्चेकितानः ।

पृष्ठे पृथिव्या निहितो दविद्युतदधस्पदं कृणुतां ये पृतन्यवः ॥५१॥

अयमग्निः वाचो मध्यं चयनस्थानमारुहत् चयनोपर्यारूढः एतद्ध वाचो मध्यं यत्रैष एतच्चीयतऽइति [८. ६. ३. २०.] श्रुतेः । सोऽयमग्निः ये पृतन्यवः युद्धेप्सवः पाप्मानस्तानधस्पदं कृणुतां पादयोरधः करोतु पादयोरधोऽधस्पदम् कस्कादित्वात्सः [पा॰ ८. ३. ४८.] । पृतनां सेनां युद्धं वा इच्छन्ति पृतन्यन्ति सुप आत्मनः क्यच् [पा॰ ३. १. ८.] कव्यध्वरेत्यादिना [पा॰ ७. ४. ३९.] पृतनायाष्टिलोपः ततः क्याच्छन्दसीति [पा॰ ३. २. १७०.] उप्रत्ययः । अधस्पदं कुरुता७ सर्वान्पाप्मन इति [२०.] श्रुतेः । कीदृशोऽग्निः भुरण्युः जगद्भर्ता भुरण्युरिति भर्तेत्येतदिति [२०.] श्रुतेः ।

सत्पतिः सतां पालकः । चेकितानः चेतयमानः । पृथिव्याः पृष्ठे भूम्युपरि निहितः स्थापितः । दविद्युतद्द्योतमानः दाधर्तीत्यादिना [पा॰ ७.४.६५.] यङ्लुकि शत्रन्तो निपातः ॥५१॥

अयमग्निर्वीरतमो वयोधाः सहस्रियो द्योततामप्रयुच्छन् ।
विभ्राजमानः सरिरस्य मध्यऽउप प्रयाहि दिव्यानि धाम ॥५२॥

अयमग्निर्द्योततां दीप्यतां दिव्यानि धाम धामानि स्थानानि उप प्रयाहि उपप्रयातु च स्वर्गं लोकं गच्छतु पुरुषव्यत्ययः उपप्रयाहि दिव्यानि धामेत्युपप्रयाहि स्वर्गं लोकमित्येतदिति [८.६.३.२१.] श्रुतेः । कीदृशोऽग्निः वीरतमः अतिशयेन वीरः शूरः वयोधाः वयोऽन्नं हविर्लक्षणं दधातीति वयोधाः । सहस्रियः इष्टकानां सहस्रेण संमितः सहस्रेण संमितौ घ इति [पा॰ ४.४.१३५.] घप्रत्ययः । अप्रयुच्छन् कर्मण्यप्रमाद्यन् सरिरस्य मध्ये लोकत्रयान्तर्विभ्राजमानः दीप्यमानः इमे वै लोकाः सरिरमिति [२१.] श्रुतेः ॥५२॥

सम्प्रच्यवध्वमुप सम्प्रयाताग्ने पथो देवयानान्कृणुध्वम् ।
पुनः कृण्वाना पितरा युवानान्वाताꣳसीत्त्वयि तन्तुमेतम् ॥५३॥

मन्त्रदृगृषीनाह । हे ऋषय एनमग्निं यूयं सम्प्रच्यवधमग्निं प्रत्यागच्छत उप सम्प्रयात च आगत्य सम्यक् प्राप्नुत । सम्प्रच्यवधमुप सम्प्रयातेत्यमूनेतदृषीनाह समेनं प्रच्यवध्वमुप चैनꣳ सम्प्रयातेति [८.६.३.२२.] श्रुतेः । एवमृषीनुक्त्वाग्निमाह हे अग्ने देवयानान्पथः कृणुध्वं कुरु वचनव्यत्ययः । देवा यायन्ते प्राप्यन्ते यैस्ते देवयानास्तान् करणाधिकरणयोश्चेति [पा॰ ३.३.११७.] ल्युट् देवलोकप्राप्तिहेतून्मार्गान्कुर्वित्यर्थः । हे अग्ने यत ऋषय एतं तन्तुं यज्ञं त्वयि अन्वाताꣳसीत् अतानिषुः अनुक्रमेण विस्तारितवन्तः वचनव्यत्ययः । कीदृशा ऋषयः पुनः भूयः पितरा वाङ्मनसे युवाना तरुणौ अयातयामावन्योऽन्यसंगतौ कृण्वानाः कुर्वाणाः । स्वादेः कृञः शानच् । विभक्तेराकारः । संयताभ्यां वाङ्मनसाभ्यामेव यज्ञसाधनात् ते संयते कुर्वाणाः ज्ञितेन्द्रिया इत्यर्थः पुनः कुर्वाणाः पितरा युवानेति वाक्चैव मनश्च पितरा युवानेति [२२.] श्रुतेः ॥५३॥

PPP

उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सꣳसृजेथामयं च ।
अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदत ॥५४॥

हे अग्ने त्वमुद्बुध्यस्व उद्बुद्धो भव सावधानो भव । एनं यजमानं प्रतिजागृहि प्रतिदिनं यजमानं जागरूकं सावधानं कुरु । तत इष्टापूर्ते श्रौतस्मार्ते कर्मणी संसृजेथां यजमानेन सह संसृष्टे भवतां त्वत्प्रसादात् अयं च यजमान इष्टापूर्ताभ्यां संसृज्यताम् पुरुषव्यत्ययः । किं च हे विश्वे देवाः यूयम् कृतेष्टपूर्तो निष्पापो यजमानश्च सधस्थे देवैः सहस्थितियोग्ये अस्मिन्नुत्तरस्मिन्सर्वोत्कृष्टे रविलोके द्युलोके सीदत तिष्ठत अधि अधिकं चिरं तिष्ठतेत्यर्थः द्यौर्वाऽउत्तरꣳ सधस्थमिति [८.६.३.२३.] श्रुतेः । विश्वैर्देवैः सालोक्यं यजमानस्य प्रार्थ्यतऽइति भावः ॥५४॥

येन वहसि सहस्रं येनाग्ने सर्ववेदसम् ।
तेनेमं यज्ञं नो नय स्वर्देवेषु गन्तवे ॥५५॥

हे अग्ने येन सामर्थ्येन सहस्रं सहस्रदक्षिणाकं यज्ञं त्वं वहसि प्रापयसि येन च सर्ववेदसं सर्वं वेदो धनं दक्षिणा यत्र तं सर्वस्वदक्षिणाकं यज्ञं वहसि तेन सामर्थ्येन नोऽस्माकमिमं यज्ञं देवेषु गन्तवे देवान्प्रति गन्तुं स्वः स्वर्गं नय प्रापय । तुमर्थे गमेः तवेप्रत्ययः । यज्ञे स्वर्गं गतेऽस्माकमपि तत्र गमनं स्यात् । सोऽस्यैष यज्ञो देवलोकमेवाभिप्रैति तदनूची दक्षिणा यां ददाति प्रैति [१२.] दक्षिणामन्वारभ्य यजमान इति श्रुतेः । अतो यज्ञस्य स्वर्गमनं प्रार्थ्यते ॥५५॥

अयं ते योनिर्ऋत्वियो यतो जातोऽअरोचथाः ।
तं जानन्नग्नऽआरोहाथा नो वर्धया रयिम् ॥५६॥

इयं व्याख्याता [३, १४. १२, ५२.] ॥५६॥

VII. तपश्च तपस्यश्च शैशिरावृतूऽअग्नेरन्तःश्लेषो॰ ॥५७॥

एवं पुनश्चित्युपधानमुक्त्वा पञ्चमचितिशेषभूतेष्टकोपधाने मन्त्रा उच्यन्ते ॥ का॰ [१७. १२. २२.] ऋतव्ये तपश्च तपस्यश्चेति । ऋतव्ये द्वे पञ्चेष्टके उपदधाति ॥ ऋतु-

देवत्यं यजुः उत्कृतिश्छन्दः (73.)। तपो माघः तपस्यः फाल्गुनः शैशिरौ ऋतू शिशिरर्त्तोरवयवौ (74.) शिष्टं व्याख्यातम् [१३. २५.] ॥५७॥

परमेष्ठी त्वा सादयतु दिवस्पृष्ठे ज्योतिष्मतीम् ॥
विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय ॥
सूर्यस्तेऽधिपतिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद ॥५८॥

का° [१७. १२. २३.] विश्वज्योतिषं परमेष्ठी त्वेति। यजमानकृतां पश्चां विश्वज्योतिषं (75.) तृतीयोपहितायाः विश्वज्योतिष उपर्युपदधातीति सूत्रार्थः ॥ सूर्यदेवत्यं यजुः शक्करीछन्दः। परमेष्ठी त्वां दिवः पृष्ठे उपरि सादयतु। सूर्यस्ते तवाधिपतिः पालक इति विशेषः अन्यद्व्याख्यातम् [१४, १४.] ॥५८॥

लोकं पृण छि° ॥५९॥ ता अस्य सू° ॥६०॥ इन्द्रं विश्वा अ° ॥६१॥

का° [१७. १२. २४.] दक्षिणाऽसात्प्रत्यगरत्निमात्रादधि लोकम्पृणाः पूर्ववत्। आत्मनो दक्षिणादाग्नेयकोणादपरस्यां दिश्यरत्निमात्रादधि पश्चाल्लोकद्वयं परित्यज्य तृतीयलोकादारभ्य प्रथमचितिवल्लोकम्पृणा उपदधातीति सूत्रार्थः ॥ तिस्रोऽपि द्वादशे [१२. ५४-५६.] व्याख्याताः ॥६१॥

प्रोथदश्वो न यवसेऽविष्यन्यदा महः संवरणाद्व्यस्थात्।
आदस्य वातोऽअनुवाति शोचिरध स्म ते व्रजनं कृष्णमस्ति ॥६२॥

का° [१७. १२. २५.] प्रच्छाद्य पुरीषेण विकर्णीस्वियमातृष्णे शर्करे सऽस्पृष्टे छिद्रे प्रोथदश्व इत्युत्तरां विकर्णीम्। पञ्चमीं चितिं पुरीषेण पूर्ववत्प्रच्छाद्य शर्करामय्यौ परस्परसंलग्ने सच्छिद्रे विकर्णीस्वियमातृष्णासंज्ञे द्वे इष्टके उपधेये। तयोर्मध्ये उत्तरदिश्यनूकरेखामध्ये प्रोथदश्व इति विकर्णीष्टिकामुपदधातीति सूत्रार्थः ॥ वसिष्ठदृष्टाग्नेयी त्रिष्टुप्। मथ्यमानोऽग्निः कथ्यते। यदा यस्मिन्काले महः महतः संवरणात् संव्रियतेऽस्मिन्नग्निरिति संवरणमरणिकाष्ठं तस्मात् व्यस्थात् वितिष्ठते प्रकाशो भवति तदा प्रोथत् प्रोथयति शब्दायते प्रोथतिः शब्दार्थः इतश्च लोपः परस्मैपदेष्विति [पा° ३. ४. ९७.] तिप इकारलोपः। तत्र दृष्टान्तः अश्वो न न इ-

वार्ये अश्व-इव यथा यवसे अविष्यन् यवसं घासं भक्षयिष्यन्नश्वः प्रोथति । आत् अस्य अनन्तरं वह्निज्वलनशब्दानन्तरं वातो वायुरस्याग्नेरनुवाति अग्निमनुलक्ष्य प्रसरति वाय्वग्न्योः सख्यादिति भावः । कीदृशो वायुः शोचिः शोचयति ज्वलयति शोचिः अग्नेः संदीपनः शोचिरिति ज्वलन्नामसु [निघ° १. १७.] पठितम् । यद्वास्य शोचिर्ज्वालामनुलक्ष्य वातो वाति । अधेति निपातोऽथार्थः अथ वातेनाग्नौ ज्वलिते सति ते एतस्याग्नेः व्रजनम् व्रजत्यत्रेति व्रजनं गमनस्थानं कृष्णमस्ति श्यामं भवति कृष्णवर्त्मा हुताशन इत्युक्तेः । स्मेति निपातः पादपूरणः । श्रुत्या ते इति पदमेतस्येति व्याख्यातं परोऽक्षत्वान्मन्त्रस्य अथैतस्य व्रजनं कृष्णं भवतीति [८. ७. ३. १२.] श्रुतेः । अविष्यन्नित्यत्तिकर्मसु [(76.) निघ° २. ८.] पठितम् ॥ ६२॥

आयोष्ट्वा सदने सादयाम्यवतश्छायायाᳬं समुद्रस्य हृदये ।
रश्मीवतीं भास्वतीमा या द्यां भास्या पृथिवीमोर्वन्तरिक्षम् ॥ ६३॥

का° [१७. १२. २५.] आयोष्ट्वेति स्वयमातृण्णाम् । आयोरिति कण्डिकाद्वयेन विकर्णीदक्षिणां स्वयमातृण्णामुपदधातीत्यर्थः ॥ आयोः परमेष्ठीति द्वे यजुषी स्वयमातृण्णादेवत्ये आद्यं ब्राह्म्युष्णिक् द्वितीयमाकृतिश्छन्दः । हे स्वयमातृण्णे आयोः आदित्यस्य सदने स्थाने तां त्वा त्वां सादयामि स्थापयामि । एति निरन्तरं गच्छतीत्यायुरादित्यः । कीदृशस्यायोः अवतः जगत्पालयितुः दीप्यमानस्य वा । तथा समुद्रस्य समुनत्तीति समुद्रस्तस्य आदित्यो वृष्ट्या जगदार्द्रीकुर्वन्समुद्र उच्यते । किम्भूते सदने छायायामाश्रयभूते हृदये प्रधानभूते । कीदृशीं त्वां रश्मिवतीं किरणयुतामत एव भास्वतीं शोभमानां । तां काम् या त्वं द्यां द्युलोकमाभासि प्रकाशयसि पृथिवीमाभासि उरु विस्तीर्णमन्तरिक्षं चाभासि । रश्मिपदस्य संहितायां दीर्घः ॥ ६३॥

परमेष्ठी त्वा सादयतु दिवस्पृष्ठे व्यचस्वतीं प्रथस्वतीं दिवं यच्छ दिवं दृᳬंह दिवं मा हिᳬंसीः ॥ विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय ॥ सूर्यस्त्वाभिपातु मह्या स्वस्त्या छर्दिषा शंतमेन तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥ ६४॥

व्याख्यातम् [१४, १२. १५, ५८.] ॥ ६४ ॥

a. सहस्रस्य प्रमासि । b. सहस्रस्य प्रतिमासि । c. सहस्रस्योन्मासि ।
d. साहस्रोऽसि । e. सहस्राय त्वा ॥ ६५ ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां पञ्चदशोऽध्यायः ॥ ॥

का° [१७. १२. २७.] तिष्ठन्नग्निं प्रोक्षति हिरण्यशकलसहस्रेण शते द्वे-द्वे प्रकिरति सहस्रस्येति प्रतिमन्त्रम् । इष्टकाचितं सपक्षपुच्छमग्निं (77.) पश्चादुत्तरपूर्वदक्षिणपश्चिमेषु शतद्वयं द्वयं सोदकस्तिष्ठन्प्रकिरतीत्यर्थः (78.) ॥ पञ्चाग्नेयानि यजूंषि । हे अग्ने सहस्रस्येष्टकानां प्रमा प्रमाणं त्वमसि । सहस्रस्य प्रतिमा प्रतिनिधिरसि । सहस्रस्योन्मोन्मानं तुलासि । साहस्रः सहस्रार्होऽसि । सहस्रायानन्तफलाप्त्यै त्वा त्वां प्रोक्षामि ॥ ६५ ॥

श्रीमन्महीधरकृते वेददीपे मनोरमे (79.) । अस्मिन्पञ्चदशाध्याये कथिता पञ्चमी चितिः (80.) ॥

अथ काण्वशाखायां पाठविशेषः ॥

I. ॥ १ [°ज्ञातान्जातवेदो नुदस्व - अहेलँस्त्वं -] ॥ १ ॥ २ [°ज्ञातानुद जातवेदः -]. ३ a [षोलशी]. b ॥ २ ॥ ३ c ॥ ३ ॥ ४ a-g ॥ ४ ॥ ४ h-o ॥ ५ ॥ ४ p-s. ५ a-d ॥ ६ ॥ ५ e-m ॥ ७ ॥ ५ n-w ॥ ८ ॥

II. ॥ ६ a-d ॥ १ ॥ ६ e-h ॥ २ ॥ ६ i. k. ७ a. b ॥ ३ ॥ ७ c [ऐलेनौ°] - f ॥ ४ ॥ ८ ॥ ५ ॥ ९ a-d ॥ ६ ॥ ९ e-i [जिन्व वेषश्रीः क्षत्राय क्षत्रं जिन्व] ॥ ७ ॥ १५ ॥ ॥

III. ॥ १० राज्ञ्य° - °धर्ता ॥ १ ॥ १० त्रिवृत्वा - °त्तरिंने ॥ २ ॥ १० ऋषय° - सादयन्तु ॥ ३ ॥ ११ विराल्° - °धर्ता ॥ ४ ॥ ११ पञ्चद° - °त्तरिंने ॥ ५ ॥ ११ ऋषय° - सादयन्तु ॥ ६ ॥ १२ सम्राल्° - °धर्ता ॥ ७ ॥ १२ सप्तद° - °त्तरिंदे ॥ ८ ॥ १२ ऋषय° - सादयन्तु ॥ ९ ॥ १३ स्वराल्° - °धर्ता ॥ १० ॥

१३ एकवि° - °न्तरिंते ॥११॥ १३ ऋषय° - सादयन्तु ॥१२॥ १४ अधिपत्य° - °धर्ता ॥१३॥ १४ त्रिणवत्र° - °न्तरिंते ॥१४॥ १४ ऋषय° - सादयन्तु ॥१५॥३०॥ ॥

IV. ॥ १५ - प्रहेतिः ॥१॥ १५ तेभ्यो नमोऽअस्तु ते नो मृलयन्तु ते नोऽवन्तु ते यं - दध्मः ॥२॥ १६ - प्रहेतिः ॥३॥ १६ तेभ्यो - दध्मः ॥४॥ १७ - प्रहेतिः ॥५॥ १७ तेभ्यो - दध्मः ॥६॥ १८ [°प्सरसाऽ] प्रहेतिः ॥७॥ १८ तेभ्यो - दध्मः ॥८॥ १९ [°प्सरसाऽ] - प्रहेतिः ॥९॥ १९ तेभ्यो - दध्मः ॥१०॥४०॥ ॥

V. ॥ २०-३० [इलस्पदे] ॥१-११॥ त्वामग्ने हविष्मन्तो देवं मर्तास ईलते । मन्ये त्वा जातवेदसꣳ स हव्या वक्ष्यानुषक् ॥१२॥ ३१ [वोल्हवे] - ३६ [ईलेन्यो] - ४२ [रघुद्रुवः (81.)] - ४८ ॥१३-३०॥७०॥ ॥

VI. ॥ ४९-५६ ॥१-८॥७८॥ ॥

VII. ॥ ५७ [शैशिराऽऋतू]. ५८ ॥१॥ ५९ [°न्योनाऽअसी°] - ६२ ॥२-५॥ ६३. ६४ ॥६॥ ६५ ॥७॥८५॥ ॥ सप्तानुवाकेषु पञ्चाशीतिः ॥ ॥

इति काण्वशाखायां संहितापाठे षोलशोऽध्यायः ॥ ॥

I. नमस्ते रुद्र मन्यवऽउतो तऽइषवे नमः । बाहुभ्यामुत ते नमः ॥१॥

पञ्चदशेऽध्याये (1.) चयनमन्त्रान्समाप्य षोडशे शतरुद्रियाख्यहोममन्त्रा (2.) उच्यन्ते ॥ ॥ का° [१८. १. १-५.] शतरुद्रियहोम उत्तरपक्षस्यापरस्याꣳ स्त्रक्त्यां परिश्रितस्वर्कपर्णेनार्ककाष्ठेन शातयन्संततं जर्तिलमिश्रान्गवेधुकासक्तूनजाक्षीरमेके तिष्ठन्नुदङ्मस्तऽइत्यध्यायेन त्र्यनुवाकान्ते स्वाहाकारो जानुमात्रे पश्चान्ते च नाभिमात्रे प्राङ्क प्रत्यवरोहेभ्यो मुखमात्रे प्रतिलोमं प्रत्यवरोहान्जुहोति प्रमाणेषु नमोऽस्त्विति प्रतिमन्त्रम् ॥ अस्यार्थः । हिरण्यशकलैरग्निप्रोक्षणानन्तरं शतरुद्रियसंज्ञो होमः । तस्याहवनीये प्राप्तावपवादमाह । उत्तरपक्षपश्चिमकोणे याः परि-

श्रितो जङ्घामात्र्यादयः पूर्वं निखातास्तासु होमः । तत्र विधिः । जर्तिलैरारण्यतिलैर्मिश्रान्गवेधुकासक्तूनर्कपत्रेण जुहोति । किं कुर्वन् । अर्ककाष्ठेन संततं धारयन् परिश्रित्सु पातयन् अर्कपत्रं दक्षकरेणादायार्ककाष्ठं वामेनादाय तेन पातनीयम् । सक्तुस्थाने अजादुग्धमिति केचित् । उदङ्मुखो नमस्तऽइत्यध्यायेन । तत्रानुवाकत्रयान्ते (3.) ऽर्भकेभ्यश्च वो नम इत्यत्र [क° २६.] जानुमात्रे परिश्रिति स्वाहाकारो विधेयः पञ्चानुवाकान्ते सुधन्वने चेत्यत्र [क° ३६.] नाभिमात्रे परिश्रिति स्वाहाकारः । नमोऽस्तु रुद्रेभ्य इति [क° ६४.] प्रत्यवरोहमन्त्राः तेभ्यः प्राक् मुखमात्रपरिश्रिति स्वाहाकारः । नमोऽस्त्विति कण्डिकात्रयेण प्रतिलोमं होमः ये दिवीति [क° ६४.] मुखमात्रे येऽन्तरिक्षमिति [क° ६५.] नाभिमात्रे ये पृथिव्यामिति [क° ६६.] जानुमात्रे । इति सूत्रार्थः ॥ नमस्ते । षोडशर्चोऽनुवाकः एकरुद्रदैवत्यः आद्या गायत्री तिस्रोऽनुष्टुभः तिस्रः पङ्क्तयः सप्तानुष्टुभः द्वे जगत्यौ । अध्यायस्य परमेष्ठिदेवप्रजापतय ऋषयः मा न इति द्वयोः [क° १५-१६.] कुत्सोऽपि ऋषिः ॥ हे रुद्र रुत् दुःखं द्रावयति रुद्रः यद्वा रु गतौ ये गत्यर्थास्ते ज्ञानार्थाः एवणां रुत् ज्ञानम् भावे क्विप् तुगागमः रुत् ज्ञानं राति ददाति रुद्रः ज्ञानप्रदः यद्वा पापिनो नरान्दुःखभोगेन रोदयति रुद्रः । हे रुद्र ते तव मन्यवे क्रोधाय नमः नमो नमस्कारोऽस्तु उतो अपि च ते तवेषवे बाणाय नमः उतापि च ते तव बाहुभ्यां नमः । तव क्रोधबाणहस्ता अस्मदरिष्वेव प्रसरन्तु नास्मास्वित्यर्थः ॥ १ ॥

या ते॑ रुद्र शि॒वा त॒नूर॒घोराऽपा॑पकाशिनी ।
तया॑ नस्त॒न्वा॒ शंत॑मया॒ गिरि॑शन्ता॒भिचा॑कशीहि ॥ २ ॥

हे रुद्र या ते तवेदृशी तनूः शरीरं हे गिरिशन्त तया तन्वा नोऽस्मानभिचाकशीहि अभिपश्य । चाकशीतिः पश्यतिकर्मा । कीदृशी तनूः शिवा शान्ता मङ्गलरूपा । यतोऽघोरा अविषमा सौम्या अत एवापापकाशिनी पापमसुखं काशयति प्रकाशयति पापकाशिनी न पापकाशिनी अपापकाशिनी या पुण्यफलमेव ददाति न पापफलमित्यर्थः । गिरौ कैलाशे (4.) स्थितः शं सुखं प्राणिनां त-

नोति विस्तारयति गिरिशंतः गिरि वाचि स्थितः शं तनोतीति वा गिरौ मेघे स्थितो वृष्टिद्वारेण शं तनोतीति वा गिरौ शेते गिरिशः अमति गच्छति जानातीत्यंतः सर्वज्ञः अम गतौ भजने शब्दे कर्तरि क्तः गिरिशश्चासावंतश्च गिरिशंतस्तत्सम्बुद्धिः शकन्ध्वादित्वात्पररूपम् [पा° ६.१.९४. वा° २.]। कीदृश्या तन्वा शंतमया सुखतमया ॥२॥

यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ।

शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् ॥३॥

हे गिरिशंत त्वं यामिषुं बाणं हस्ते बिभर्षि धारयसि किं कर्तुम् अस्तवे असु क्षेपणे तुमर्थे तवेप्रत्ययः असितुं शत्रून् क्षेप्तुमित्यर्थः। हे गिरित्र गिरौ कैलाशे (4.) स्थितो भूतानि त्रायतऽइति गिरित्रः तामिषुं शिवां कल्याणकारिणीं कुरु। किं च पुरुषं पुत्रपौत्रादिकं जगत् जङ्गममन्यदपि गवाश्वादिकं मा हिंसीः मा वधीः ॥३॥

शिवेन वचसा त्वा गिरिशाच्छा वदामसि ।

यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत् ॥४॥

गिरौ कैलाशे शेते गिरिशः हे गिरिश शिवेन वचसा मङ्गलेन स्तुतिरूपेण वचनेन त्वा अच्छ त्वां प्राप्तुं वयं वदामसि वदामः प्रार्थयामहे अच्छाभेराप्तुमिति शाकपूणिः [निरु° ५.२८.] संहितायां निपातस्य चेति [पा° ६.३.१३६.] दीर्घः। इदन्तो मसि [पा° ७.१.४६.]। किं वदाम इत्यत आह नोऽस्माकं सर्वमित् सर्वमेव जगत् जङ्गमं नराः पश्वादि यथा येन प्रकारेण अयक्ष्मं नीरोगं सुमनाः शोभनमनस्कं च असत् भवति तथा कुर्विति शेषः सुमनःशब्दे पुंस्त्वमार्षं जगद्विशेषणत्वात्। असदित्यत्र लेटोऽडाटावित्यट् [पा° ३.४.९४.] इलोपः ॥४॥

अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ।

अहींश्च सर्वान्जम्भयन्त्सर्वाश्च यातुधान्योऽधराचीः परासुव ॥५॥

रुद्रो मामध्यवोचत् अधिवक्तु मां सर्वाधिकं वदतु तेनोक्ते मम सर्वाधिक्यं भ-

वत्वित्यर्थः । कीदृशः अधिवक्ता अधिकवदनशीलः प्रथमः सर्वेषां मुख्यः पूज्यत्वात् । दैव्यः देवेभ्यो हितः । भिषक् रोगनाशकः स्मरणेनैव रोगनाशाद्भिषक्त्वम् । एवं परोक्षमुक्त्वा प्रत्यक्षमाह हे रुद्र सर्वा यातुधान्यः यातुधानी राक्षसीः त्वं परासुव पराक्षिप अस्मभ्यो दूरीकुरु । किं कुर्वन् सर्वानहीन्सर्पव्याघ्रादीञ्जम्भयन् विनाशयन् । कीदृशीर्यातुधान्यः अधराचीः अधरेऽधोदिशेऽञ्चन्ति ता अधराच्यः ताः अधोऽधोगमनशीलाः । चौ समुच्चये सर्पनाशराक्षसीक्षेपौ सहैव कुर्वित्यर्थः ॥५॥

अ॒सौ यस्ता॒म्रोऽअ॑रु॒ण उ॒त ब॒भ्रुः सु॑म॒ङ्गलः॑ ।
ये चै॑नꣳ रु॒द्रा अ॒भितो॑ दि॒क्षु श्रि॒ताः स॑हस्र॒शोऽवै॑षाꣳ हेड॑ ईमहे ॥६॥

आदित्यरूपेणात्र रुद्रः स्तूयते । योऽसौ प्रत्यक्षो रुद्रो रविरूपः च पुनर्ये रुद्रा एनमभितो दिक्षु प्राच्यादिषु श्रिताः किरणरूपेण सहस्रशोऽसंख्याः एषां हेडः क्रोधमस्मदपराधजं वयमव ईमहे निवारयामः भक्त्या निराकुर्मः । हेड इति [निघ॰ २. १३.] क्रोधनाम । अभिसर्वतसोरिति [पा॰ २. ३. २. वा॰ १. २.] द्वितीया । कीदृशोऽसौ ताम्रः उदयेऽत्यन्तं रक्तः । अरुणः रक्तोऽस्तकाले । उतापि च बभ्रुः पिङ्गवर्णोऽन्यदा । सुमङ्गलः शोभनानि मङ्गलानि यस्य मङ्गलरूपः रव्युदये सर्वमङ्गलप्रवर्तनात् ॥६॥

अ॒सौ यो॑ऽव॒सर्प॑ति॒ नील॑ग्रीवो॒ विलो॑हितः ।
उ॒तैनं॑ गो॒पा अ॑दृश्र॒न्नदृ॑श्रन्नुदहा॒र्यः स दृ॒ष्टो मृ॑डयाति नः ॥७॥

योऽसावादित्यरूपोऽवसर्पति उदयास्तमयौ कुर्वन्निरन्तरं गच्छति । एनं गोपा उत गोपाला अपि वेदोक्तसंस्कारहीनाः अदृश्रन्पश्यन्ति । उदहार्यः उदकं हरन्ति ता उदहार्यः मन्थौदनेत्यादिना [पा॰ ६. ३. ६०.] उदकस्योदादेशः जलहारिण्यो योषितोऽप्येनमदृश्रन्पश्यन्ति । आगोपालाङ्गनादिप्रसिद्ध इत्यर्थः । दृशेर्लुङि इरितो वेति [पा॰ ३. १. ५७.] च्लेरङ् रुगागमश्छान्दसः । कीदृशः नीलग्रीवः विषधारणेन नीला ग्रीवा कण्ठो यस्य अस्तमये नीलकण्ठ इव लक्ष्यः । विलोहितः विशेषेण रक्तः । स रुद्रो दृष्टः सन्नोऽस्मान्मृडयाति सुखयतु असौ मण्डलवर्ती रुद्र एव तपतीति ज्ञातः सुखं करोत्वित्यर्थः ॥७॥

नमोऽस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ।
अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः ॥ ८॥

नीलग्रीवाय नीलकण्ठाय रुद्राय नमोऽस्तु नमस्कारो भवतु । कीदृशाय सहस्राक्षाय सहस्रमक्षीणि यस्य इन्द्रस्वरूपिणे । मीढुषे मिमेहेति मीढ्वान् तस्मै मिहि सेचने दाश्वान्साह्वान्मीढ्वाँश्चेति [पा॰ ६. १. १२.] क्वसन्तो निपातः सेक्त्रे वृष्टिकर्त्रे पर्जन्यरूपायेत्यर्थः तरुणाय वा । अथो अपि चास्य रुद्रस्य ये सत्वानः प्राणिनो भृत्यास्तेभ्योऽहं नमो नमस्कारमकरं करोमि कृञ् कृतौ शप् लङि उत्तमैकवचनम् ॥ ८॥

प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् ।
याश्च ते हस्तऽइषवः परा ता भगवो वप ॥ ९॥

हे भगवः भगं षड्विधमैश्वर्यमस्यास्तीति भगवान् मतुवसो रुः सम्बुद्धौ छन्दसीति [पा॰ ८. ३. १.] रुत्वम् ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणेत्युक्तेः हे भगवन्धन्वनः धनुष उभयोरार्त्न्योः द्वयोः कोट्योः स्थितां ज्यां मौर्वीं त्वं प्रमुञ्च दूरीकुरु याश्च ते तव हस्ते इषवः बाणाः ता इषूः परावप पराक्षिप ॥ ९॥

विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ२॥ऽउत ।
अनेशन्नस्य या इषव आभुरस्य निषङ्गधिः ॥ १०॥

कपर्दी जटाजूटोऽस्यास्तीति कपर्दी रुद्रस्तस्य धनुः विज्यं मौर्वीरहितमस्तु विगता ज्या यस्य तत् । उतापि बाणवान् बाणा अस्मिन्सन्तीति बाणवान् इषुधिः (5.) विशल्यो विफलोऽस्तु बाणाग्रगतो लोहभागः शल्यम् इषुधिर्निरग्रबाणोऽस्तु । अस्य रुद्रस्य या इषवः ता अनेशन् नश्यन्तु णश अदर्शने नशेरत एत्वम् अङि वेत्येवम् (6.) पुषादित्वाच्चिरङ् । अस्य रुद्रस्य निषङ्गधिः निषज्यतऽइति निषङ्गः खड्गः स धीयतेऽस्मिन्निति निषङ्गधिः कोशः स आभुः रिक्तः खड्गरहितोऽस्तु । रुद्र अस्मान्प्रति न्यस्तसर्वशस्त्रोऽस्त्वित्यर्थः ॥ १०॥

या ते॑ हे॒तिर्मी॑ढुष्टम॒ हस्ते॑ ब॒भूव॑ ते॒ धनुः॑ ।

तया॒स्मान्वि॒श्वत॒स्त्वम॑य॒क्ष्मया॒ परि॑ भुज ॥११॥

अतिशयेन मीढ्वान्मीढुष्टमः तसौ मत्वर्थे इति [पा° १.४.१९.] भसंज्ञायां वसोः सम्प्रसारणम् [पा° ६.४.१३१.] षत्वष्टुत्वे हे मीढुष्टम सेक्तृतम वर्षुक ते तव हस्ते या धनुः हेतिः धनूरूपमायुधं (7.) बभूव अस्ति एकं ते-पदं पादपूरणाय । तया धनूरूपया हेत्या विश्वतः सर्वतोऽस्मान्परिभुज परिपालय भुजेर्विकरणव्यत्यये (8.) शप्रत्ययः । कीदृश्या तया अयक्ष्मया नास्ति यक्ष्मा रोगो यस्यास्तया निरुपद्रवया दृढया अनुपद्रवकारिण्या वा ॥११॥

परि॑ ते॒ धन्व॑नो हे॒तिर॒स्मान्वृ॑णक्तु वि॒श्वतः॑ ।

अथो॒ य इ॑षु॒धिस्तवा॒रे॑ऽअ॒स्मन्नि धे॑हि॒ तम् ॥१२॥

हे रुद्र ते तव धन्वनो हेतिः धनुःसम्बन्धि आयुधं विश्वतः सर्वतोऽस्मान्परिवृणक्तु त्यजतु मा हन्त्वित्यर्थः वृजी वर्जने रुधादित्वात् श्नम् अथो अपि च यस्तव इषुधिस्तमस्मत्सकाशात् आरे दूरे निधेहि अस्मत्तो दूरे स्थापय ॥१२॥

अ॒व॒त॒त्य धनु॒ष्ट्वꣳ सह॑स्राक्ष॒ शते॑षुधे ।

नि॒शीर्य॑ श॒ल्याना॒ं मुखा॑ शि॒वो नः॑ सु॒मना॑ भव ॥१३॥

सहस्रमक्षीणि यस्य शतमिषुधयो यस्य हे सहस्राक्ष हे शतेषुधे त्वं नोऽस्मान्प्रति शिवः शान्तः सुमनाः शोभनचित्तश्च भव अनुगृहाणेत्यर्थः किं कृत्वा धनुरवतत्य अपज्याकं कृत्वा शल्यानां मुखा मुखानि बाणफलाग्राणि निशीर्य शीर्णानि कृत्वा शॄ हिंसायाम् समासेऽनञ्पूर्वे क्त्वो ल्यप् ॠत इद्धातोः [पा° ७.१.१००.] ॥१३॥

नम॑स्त॒ऽआयु॑धा॒याना॑तताय धृ॒ष्णवे॑ ।

उ॒भाभ्या॑मु॒त ते॒ नमो॑ बा॒हुभ्या॒ं तव॒ धन्व॑ने ॥१४॥

हे रुद्र ते तवायुधाय नमोऽस्तु बाणाय नतिरस्तु कीदृशाय अनातताय धनुष्यनारोपिताय । धृष्णवे धर्षणशीलाय धृषेः क्नुप्रत्ययः रिपून्हन्तुं प्रगल्भाय । उ-

तापि च ते तवोभाभ्यां बाहुभ्यां नमः । तव धन्वने धनुषेऽपि नमोऽस्तु तस्यापि विशेषणम् अनाततायं अवतारितमौर्वीकाय ॥ १४ ॥

मा नो॑ म॒हान्त॑मु॒त मा नो॑ऽअर्भ॒कं मा न॒ उक्ष॑न्तमु॒त मा न॑ उक्षि॒तम् ।
मा नो॑ वधीः पि॒तरं॒ मोत मा॒तरं॒ मा नः॑ प्रि॒यास्त॒न्वो॑ रुद्र रीरिषः ॥ १५ ॥

हे रुद्र नोऽस्माकं महान्तं वृद्धं गुरुपितृव्यादिकं मा वधीः मा हिंसीः उतापि नोऽस्माकमर्भकं बालं मा वधीः नोऽस्माकमुक्षन्तं सिञ्चन्तं तरुणं मा वधीः उतापि नोऽस्माकमुक्षितं सिक्तं गर्भस्थं च मा वधीः नः पितरं जनकं मा वधीः उतापि नो मातरं जननीं मा वधीः महान्तमित्यनेन सिद्धयोर्मातापित्रोः पुनरादानमादरार्थम् । नोऽस्माकं प्रियाः वल्लभाः तन्वः तनूः शरीराणि पुत्रपौत्ररूपाणि मा रीरिषः मा हिंसीः रिषतिर्हिंसाकर्मा ॥ १५ ॥

मा न॑स्तो॒के तन॑ये॒ मा न॒ आयु॑षि॒ मा नो॒ गोषु॒ मा नो॒ऽअश्वे॑षु रीरिषः ।
मा नो॑ वी॒रान्रु॑द्र भा॒मिनो॑ वधीर्ह॒विष्म॑न्तः॒ सद॒मित्त्वा॑ हवामहे ॥ १६ ॥

हे रुद्र नोऽस्माकं तोके पुत्रे तनये पौत्रे मा रीरिषः मा हिंसीः न आयुषि जीवने मा हिंसीः नो गोषु धेनुषु मा रीरिषः नोऽश्वेषु तुरगेषु मा रीरिषः विभक्तिव्यत्ययो वा तोकं तनयमायुर्गा अश्वान्मा हिंसीः भाम क्रोधे भामिनः क्रोधयुतानपि नोऽस्माकं वीरान् भृत्यान्मा वधीः । क उपकार इति चेत् हविष्मन्तः हविर्युक्ताः सदमित् सदैव त्वां वयं हवामहे यागायाह्वयामः त्वदेकशरणा वयमिति भावः ॥ १६ ॥

II. नमो॒ हिर॑ण्यबाहवे सेना॒न्ये॒ दि॒शां च॒ पत॑ये॒ नमो॒ नमो॑ वृ॒क्षेभ्यो॒ हरि॑केशेभ्यः पशू॒नां पत॑ये॒ नमो॒ नमः॑ शष्पि॒ञ्ज॑राय॒ त्विषी॑मते पथी॒नां पत॑ये॒ नमो॒ नमो॒ हरि॑केशायोपवी॒तिने॑ पु॒ष्टानां॒ पत॑ये॒ नमः॑ ॥ १७ ॥

नमो हिरण्यबाहवऽइत्युत्तरं द्रापे इति [क° ४७.] ऋक्पर्यन्तं सर्वाणि यजूंषि । तत्र नमो हिरण्यबाहवऽइत्यादीनां धनुष्कृद्भ्यश्च वो नम इत्यन्तानां [क° ४६.] चत्वारिंशदधिकद्विशतसंख्याकानां यजुषां तावन्तो रुद्रा देवताः नमो वः

विमुखमन्त्रोऽपि प्रसङ्गाद्याख्यायते (52.)। उग्र उत्कृष्टः। बिभेत्यस्मादसौ भीमः भीमादयोऽपादाने इति [पा° ३.४.७४.] निपातः। ध्वान्तयति शत्रूनन्धीकरोति ध्वान्तः ध्वान्तशब्दात्तत्करोतीति णिजन्तात्पचाद्यच्। धूनयति कम्पयति शत्रूनिति धुनिः। सहतेऽभिभवते शत्रूनिति सासह्वान् सहेः क्वसुः अभ्यासदीर्घः। अभियुनक्ति अभियुग्वा अन्येभ्योऽपि दृश्यन्तऽइति [पा° ३.२.७५.] इति अभिपूर्वायुजेः क्वनिप् भक्तानां सुखयोक्ता। विक्षिपति प्रेरयति शत्रूनिति विक्षिपः शत्रुक्षेप्ता। चकाराः समुच्चयार्थाः। स्वाहा एतेभ्यो मरुद्भ्यः सुहुताः पुरोडाशाः सन्तु॥॥

का° [१८.४.२५.] इन्द्रं दैवीरिति जपति। कर्मापवर्गान्ते यजुर्जपतीत्यर्थः॥ मरुद्देवत्यं यजुः शक्करी षट्पञ्चाशदक्षरत्वात्। दैवीः दैव्यः देवानामिमा देवसम्बन्धिन्यो विशः प्रजाः मरुतो मरुद्रूपा इन्द्रमनुवर्त्मानोऽभवन् अनु पश्चाद्वर्त्म वर्तनं यासां ताः इन्द्रानुगामिन्योऽभवन्निति स्वरूपाख्यानम्। दैवीर्विशो मरुतः यथा इन्द्रमनुवर्त्मानः इन्द्रमनुसृत्य वर्तमाना अभवन् उपमानमेतत् दैवीर्मानुषीश्च देवसम्बन्धिन्यो मनुष्यसम्बन्धिन्यश्च विशः एवमिन्द्रवत् इमं यजमानमनुवर्त्मानः अनुसृत्य वर्तमाना भवन्त्विति प्रार्थना॥८६॥

IX. इमꣳ स्तनमूर्जस्वन्तं धयापां प्रपीनमग्ने सरिरस्य मध्ये।
उत्सं जुषस्व मधुमन्तमर्वन्त्समुद्रियꣳ सदनमाविशस्व॥८७॥

का° [१८.४.२६.] इमꣳ स्तनमिति वाचयति वा। इमं स्तनमिति मन्त्रगणमध्यायसमाप्तिपर्यन्तं यजमानेनाध्वर्युर्वाचयति स्वयं जपति वेत्यर्थः॥ त्रयोदशर्च आग्नेयस्त्रिष्टुप्छन्दस्कोऽनुवाको यज्ञस्तुतिर्वसोर्धाराभिवादिनी घृतस्तुतिर्वा। हे अग्ने सरिरस्य लोकस्य मध्ये वर्तमानः त्वमिमं स्रुग्लक्षणं स्तनं (53.) स्रुचः पतन्तीं घृतधारां वा त्वं धय पिब धेट् पाने-लोट्। इमे वै लोकाः सरिरमिति [७.५.२.३४.] श्रुतेः सरिरशब्देन लोका उच्यन्ते। वसोर्धारा स्रुचा हूयते सा स्रुगत्र रूपककल्पनया स्तन उच्यते कीदृशं स्तनम् ऊर्जस्वन्तमूर्जो रसोऽस्यास्ति ऊर्जस्वान् तम् विशिष्टरसवन्तम्। तथा अपां प्रपीनम् अप्शब्देन लक्षणया घृतमुच्यते अद्भिः घृतैः प्रपीनं पूर्णं तृप्त्यर्थानां करणे षष्ठीति (54.) तृतीयार्थे अपामिति षष्ठी।

प्रप्याय्यते पूर्यते प्रपीनम् ओप्यायी वृद्धौ प्यायः पीति [पा° ६.१.२८.] च । हे अर्वन् इयर्तीति अर्वा सर्वतो गन्तः उत्समुत्स्यन्दनं स्रुग्लक्षणं कूपं जुषस्व सेवस्व कीदृशमुत्सम् मधुमन्तं मधुस्वादेन घृतेन युक्तं किं च समुद्रियं समुद्रसम्बन्धि चयनयागसम्बन्धि सदनं गृहमाविशस्व तृप्तः सन्यज्ञगृहं सेवस्व त्रयो ह वै समुद्रा अग्निर्यजुषां महाव्रतꣳ साम्नां महदुक्थमृचामित्यभिप्रायः समुद्रशब्दः समुद्राभ्राद्घ इति [पा° ४.४.११८.] घप्रत्ययः तस्येयादेशः ॥ ८७ ॥

घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम ।
अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् ॥ ८८ ॥

गृत्समददृष्टा । अहं घृतं मिमिक्षे सेक्तुमिच्छामि अग्निमुखे मेढुमिच्छति मिमिक्षते मिह सेचने सनन्ताल्लट् उत्तमैकवचनम् । यतोऽस्याग्नेर्घृतं योनिरुत्पत्तिस्थानम् अग्निर्यस्यै योनिरसृज्यत तस्यै घृतमुल्वमासीदिति श्रुतेः गर्भाधारोदकमुल्वम् । योऽग्निर्घृते श्रितः घृतमाश्रितः ।-अस्याग्नेर्घृतमेव धाम स्थानं तेजःकरं वा उ अवधारणे । अतो हे अध्वर्यो अनुष्वधं स्वधामन्नमुपलक्ष्य तमग्निमावह पूर्वमन्नमुपकल्प्य पश्चादाह्वय आहूय च मादयस्व तर्पय तर्पयित्वा चैव ब्रूहि हे वृषभ कामानामभिवर्षुक स्वाहाकृतं स्वाहाकारेण हुतं हव्यं त्वं वक्षि वह देवान्प्रापय वहतेः शपि लुप्ते ढत्वकत्वादौ कृते वक्षीति रूपम् । यद्वा यं प्रत्यहं मिमिक्षे यस्य घृतं योनिर्यो घृते श्रितः यस्य च घृतं धाम स त्वमनुष्वधं देवानावह मादय हव्यं च वक्षि इत्यग्निं प्रत्येवोक्तिः यतो वह्नेः कर्मद्वयं देवानामावाहनं हविर्वहनं च ॥ ८८ ॥

समुद्रादूर्मिर्मधुमाँ२॥ऽउदारदुपाꣳशुना सममृतत्वमानट् ।
घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥ ८९ ॥

वामदेवदृष्टा । अत्रान्नाध्यासेन घृतं स्तूयते प्राणाध्यासेन चाग्निः । समुद्रात् घृतमयात् मधुमान् रसवानूर्मिः कल्लोल उदारत् उदगच्छत् ऋ गतौ च्लेरङ् ऋदृशोऽङि गुणः [पा° ७.४.१६.] अक्षीणत्वाद्घृतस्य समुद्रेणोपमानम् अन्नदेवताभिप्रायं वा सा ह्यक्षीणैव । उद्गत्य च स ऊर्मिः अंशुना प्राणेन जगत्प्राणभूतेनाग्निना सं संगत्य-

कीभूय अमृतत्वममरणधर्मित्वमुपानट् उपव्याप्नोतु नश अदर्शने लुङि मन्त्रे घसेत्यादिना [पा° २.४.८०.] च्लेर्लुक् हल्ङ्याबिति [पा° ६.१.६८.] तिपो लोपः वि-आङुपसर्गाभ्यां व्याप्त्यर्थः । प्राणश्चान्नं च एकीभूयामृतत्वं प्राप्नुत इत्यर्थः । तस्य घृतस्य गुह्यमविज्ञातं नामाविद्वद्भिरज्ञेयं श्रुतिमन्त्रपठितं यदस्ति तत्कथ्यतऽइति शेषः । किं तदाह देवानां जिह्वा अत्यभिलाषद्देवानां जिह्वोत्थाननिमित्तम् अग्नेर्जिह्वासीत्युक्तेः यदा वाऽएतदग्नौ जुह्वत्यथाग्निर्जिह्वा इवोत्तिष्ठन्तीति श्रुतेः । यच्च सर्वप्रकाशं नाम तदप्युच्यते अमृतस्य नाभिः अमरणधर्मस्य नहनं बन्धनम् यो हि घृतमश्नाति स दीर्घायुर्भवति ॥ यद्वा ऋगर्धेन मन्त्रः स्तूयते अर्धेन घृतम् । समुद्रात् आग्निकाद्यजुःसमुद्रादस्माद्यज्ञात् य ऊर्मिः शब्दसंघातो नानाख्यातोपसर्गनिपातरूप उपमोत्प्रेक्षारूपकाद्यलंकाररूप मधुमान् रसवान्वाक्यार्थगुणैर्युक्त उदारत् मुखादुदगात् स एव उपांशुना (55.) सवनेन क्रियमाणः सन्नमृतत्वमाप्नोत् तदेतद्यजुरुपांश्वनिरुक्तमिति श्रुतेः अतोऽग्निचिद्भिः स ऊर्मिः प्रकाशनीयः । घृतस्य गुह्यं नाम यदस्ति तदपि देवानां जिह्वोत्थाननिमित्तं किं पुनर्होमः अथास्य घृतकीर्तावेवाग्निर्वैश्वानरो मुखादुज्जज्वालेति [१.४.१.१३.] श्रुतेः । अमृतस्य नाभिः नहनं यजमानानाममृतत्वप्रापकं घृतं यजनेनेत्यर्थः । अतोऽग्निचिद्भिर्हूयते स्तूयते च घृतमिति भावः ॥ ८९ ॥

वयं नाम प्रब्रवामा घृतस्यास्मिन्यज्ञे धारयामा नमोभिः ।
उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत् ॥ ९० ॥

यतो घृतनामोच्चारणमपि देवानां प्रियमतो वयं घृतस्य नाम प्रब्रवाम अस्मिन्यज्ञे घृतनाम स्तुमः । नमोभिरन्नैः धारयाम यज्ञमिति शेषः । किं च ब्रह्मा ऋत्विक् शस्यमानं स्तूयमानमेतद्घृतनाम उपशृणवत् उपशृणोतु लेटोऽडाटाविति [पा° ३.४.९४.] अडागमः । यथा गौरः गौरवर्णः शुद्धो यज्ञः एतत् घृतयज्ञफलरूपमवमीद्गिरति यज्ञपरिणामाभिप्रायम् । कीदृशो गौरः चतुःशृङ्गः चत्वार ऋत्विजः शृङ्गभूता यस्य सः ॥ ९० ॥

चत्वारि शृङ्गा त्रयोऽअस्य पादा द्वे शीर्षे सप्त हस्तासोऽअस्य ।

त्रिधा ब॒द्धो वृ॑ष॒भो रो॑रवीति म॒हो दे॒वो मर्त्याँ॒२॥ऽआ वि॑वेश ॥ ९१ ॥

यज्ञपुरुषदेवत्य ऋषभो मन्त्रः । चतुःशृङ्गोऽवमीदित्युक्त्वा चतुःशृङ्गं यज्ञं वृषभरूपेण प्रतिपादयितुमाह । यो वृषभः कामानां वर्षिता रोरवीति रु शब्दे यङ्लुगन्तम् अत्यर्थं शब्दं करोति सोऽयं महो देवः महति पूजयति मह्यते वा जनैरिति महो महान्देवः ब्रह्मादिस्तम्बपर्यन्तानां प्राणिनामुपजीव्यो ज्ञानकर्मसमुच्चयकारिणां विदुषां शरीरभूतो मर्त्यान्मनुष्यानाविवेश आविशति मनुष्यान्व्याप्य तिष्ठति । यस्य वृषभस्य यज्ञस्य चत्वारि शृङ्गा शृङ्गाणि ब्रह्मोद्गातृहोत्रध्वर्युलक्षणानि त्रयः पादाः ऋग्यजुःसामरूपाः द्वे शीर्षे शिरसी हविर्धानप्रवर्ग्याख्ये शिर एवास्य हविर्धानं ग्रीवा वै यज्ञस्योपसदः शिरः प्रवर्ग्य इति श्रुतेः । अस्य वृषभस्य सप्त हस्तासः सप्त होतारो हस्ताः हस्ता-इव व्याप्रियन्ते सप्त छन्दांसि वा हस्ताः । यश्च त्रिधा त्रिप्रकारैर्बद्धः प्रातःसवनमाध्यन्दिनसवनतृतीयसवनैर्बद्धः ॥ यद्वा चत्वारो वेदाः शृङ्गाणि त्रयः पादाः सवनानि द्वे शीर्षे प्रायणीयोदयनीये सप्त हस्तासः छन्दांसि त्रिधा बद्धः मन्त्रब्राह्मणकल्पैर्बद्धः ॥ शब्दग्रामो वा व्याख्येयः चत्वारि शृङ्गाणि नामाख्यातोपसर्गनिपाताः त्रयः पादाः प्रथमपुरुषमध्यमपुरुषोत्तमपुरुषाः त्रयः काला वा द्वे शीर्षे कार्यताव्यञ्जते सप्त हस्ताः विभक्तिरूपाः त्रिधा बद्धः एकवचनद्विवचनबहुवचनैर्बद्धः । वृषभ-इवायमन्यशास्त्राणि अधः कृत्वा रोरवीति सोऽयं महान्देवो मर्त्यानाविवेश आविशति प्रतिपादयति मनुष्येष्विति मनुष्याधिकारत्वाच्छास्त्रस्येति न्यायात् ॥ ९१ ॥

त्रिधा॑ हि॒तं प॒णिभि॑र्गु॒ह्यमा॑नं॒ गवि॑ दे॒वासो॑ घृ॒तमन्व॑विन्दन् ।

इन्द्र॒ एक॒ꣳ सूर्य॒ एकं॑ जजान वे॒नादेक॒ꣳ स्वधया॒ निष्ट॑तक्षुः ॥ ९२ ॥

त्रिधा त्रिप्रकारैरेषु लोकेषु हितं स्थापितं घृतं यज्ञपरिणामभूतं पणिभिरसुरैर्गुह्यमानं गुप्यमानं सत् देवासो गवि अन्वविन्दन् धेनौ आनुपूर्व्याल्लब्धवन्तः । तस्य एकं भागमिन्द्रो जजान जनयति ते वाऽएतेऽआहुती हुतेऽउत्क्रामतस्तेऽन्तरिक्षमाविशत इत्यादिश्रुतिरिन्द्रस्य जनकत्वं दर्शयति । सूर्य एकं भागं जजान जनी प्रादुर्भावे लिट् परस्मैपदमार्षम् ते तत उत्क्रामतस्ते दिवमाविशत इत्या-

दिश्रुतिः सूर्यस्य घृतभागजनकत्वं दर्शयति । वेनाख्ययज्ञसाधनभूतादग्नेः एकं स्वधया अन्नेन त्रैताङ्कतिलक्षणेन (56.) निष्टतक्षुः निष्कर्षितवन्तो द्विजातयः यस्ततः पुत्रो जायते स लोकप्रत्युत्थायीत्येतदुक्तं भवति ॥ १२॥

एता अर्षन्ति हृद्यात्समुद्राच्छतव्रजा रिपुणा नावचक्षे ।
घृतस्य धारा अभिचाकशीमि हिरण्ययो वेतसो मध्य आसाम् ॥ १३॥

एता वाच अर्षन्ति उद्गच्छन्ति कस्मात् हृद्यात्समुद्रात् अच्छोदकप्लुतात् देवतायाथात्म्यचिन्तनसंतानरूपात्समुद्रात् निगमनिरुक्तनिघण्टुव्याकरणशिक्षाछन्दोभिः पावनैः पूतात् । कीदृश्यो वाचः शतव्रजाः शतं व्रजं व्रजा गतयो यासां ताः बहुगतयः बह्वर्थ्या (57.) इत्यर्थः । याश्च अर्षन्त्यो रिपुणा कुतार्किकवृन्दशत्रुणा न अवचक्षे न अवचक्ष्यन्ते पुरुषवचनव्यत्ययः नापवदितुं खण्डयितुं शक्यन्ते ता घृतस्य धारा इवाभिचाकशीमि लुप्तोपमानम् अहं पश्यामि । आसां वाचां मध्ये यो हिरण्ययो हिरण्मयो दीप्यमानो वेतसोऽग्निः तं चाभिचाकशीमि अग्निर्हि वाचामधिष्ठात्री देवता ॥ यद्वा घृतधारा एवोच्यन्ते या एता हृद्यात्समुद्रात् घृतधारा अर्षन्ति गच्छन्ति हृदयेन संकल्प्य यजनाद्धृदयादुद्गतिरुच्यते । शतव्रजा नानागतयः याश्च रिपुणा नावचक्षे यज्ञपरिपन्थिना द्रष्टुं न शक्यन्ते ता घृतधाराः पश्यामि । यश्चायं हिरण्ययो वेतसोऽग्निराहवनीय आसां धाराणां मध्ये स्थितस्तं च पश्यामि द्रव्यदेवतांश्च याथात्म्येनाहं पश्यामीत्यर्थः ॥ १३॥

सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः ।
एतेऽअर्षन्त्यूर्मयो घृतस्य मृगा-इव क्षिपणोरीषमाणाः ॥ १४॥

या धेनाः वाचः सरितो न सरितऽइव नद्य इवानवच्छिन्नप्रवाहाः सम्यक् स्रवन्ति प्रसरन्ति धेना इति वाङ्नामसु [निघ° १.११.] पठितम् । कीदृश्यो धेनाः अन्तः हृदा मनसा पूयमानाः शरीरान्तर्व्यवस्थितेन हृदा पावनस्थानीयेन मनसा च पूयमानाः शब्ददोषेभ्यो विविच्यमानाः । ता अग्निमेव स्तुवन्तीति शेषः । ये च एते घृतस्य ऊर्मयः कल्लोलाः अर्षन्ति स्रुक्परिभ्रष्टाः गच्छन्ति ऋष गतौ तेऽप्यग्निं

तर्पयन्तीति शेषः । तत्र दृष्टान्तः क्षिपणोः क्षिपति हिनस्ति क्षिपणुर्व्याधः क्षिपणोरीषमाणाः पलायमाना मृगा-इव । व्याधाद्भीता मृगा इव ये घृतोर्मयो गच्छन्ति तेऽग्निं तर्पयन्तीत्यर्थः । श्रुतिर्द्रव्यं चाग्न्यर्थमेवेति भावः ॥ १४ ॥

सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः ।
घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः ॥ १५ ॥

घृतस्य धाराः पतयन्ति सुखसुखात्पतन्ति पत ऐश्वर्ये गतौ च चुरादिरदन्तः । कीदृश्यो धाराः यह्वाः महत्यः यह्व इति महन्नामसु [निघ° ३.३.] पठितम् । तत्र दृष्टान्तद्वयम् प्राध्वने सिन्धोर्वातप्रमिय-इव प्रगतोऽध्वनः प्राध्वनः विषमप्रदेशः वातेन प्रमीयन्ते नश्यन्ति वातप्रमियस्तरङ्गाः मीङ् हिंसायां दिवादिः अस्मात्क्विप् यथा सिन्धोर्नद्याः वातप्रमियः तरङ्गाः प्राध्वने विषमप्रदेशे पतन्ति तद्वत् । कीदृशा वातप्रमियः शूघनासः शु इति क्षिप्रनाम [निघ° २.१५.] हन्तेर्गत्यर्थस्य घनमिति रूपं शु क्षिप्रं घनं गमनं येषां ते शुघनाः शीघ्रगमनाः आज्जसेरसुक् । अन्यो दृष्टान्तः वाजी न न इवार्थे वाजीव यथा वाजी अश्वः पतति । कीदृशो वाजी अरुषः रुष क्रोधे रोषति क्रुध्यति रुषः इगुपधेति [पा° ३.१.१३५.] कप्रत्ययः न रुषः अरोषणः जात्यादिभिरुत्कृष्ट इत्यर्थः । तथा काष्ठाः आज्यन्तान्संग्रामप्रदेशान्भिन्दन्विदारयन् ऊर्मिभिः काष्ठभिदनोत्थश्रमस्वेदोदकैः पिन्वमानः भूमिं सिञ्चन् पिवि सेचने शानच् इदित्वान्नुम् स वाजी यथा पतित्वान्नान्यश्नाति एवं पतन्तीर्घृतधारा अग्निरश्नातीत्यर्थः ॥ १५ ॥

अभिप्रवन्त समनेव योषाः कल्याण्यः स्मयमानासोऽअग्निम् ।
घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः ॥ १६ ॥

घृतस्य धाराः अग्निमभिप्रवन्त प्रुङ्गतौ अग्निं प्रतिगच्छन्ति लङ् अडभाव आर्षः । तत्र दृष्टान्तः योषा इव यथा योषाः स्त्रियः पतिं प्रतिप्रवन्ते । कीदृश्यो योषाः समना समानं मनो यासां ताः समनसः विभक्तेर्डादेशः कल्याण्यः रूपयौवनसम्पन्नाः स्मयमानाः ईषद्धसन्त्यः स्मिङ् ईषद्धसने । ता धारा अग्निं नसन्त हरन्ति

नस हरणे लङ् अडभाव आर्षः नसतिराप्नोतिकर्मा वा अग्निं व्याप्नुवन्ति। कीदृश्यो धाराः समिधः समिन्धते दीपयन्त्यग्निमिति समिधः। किं च जातवेदाः जातप्रज्ञानोऽग्निर्जुषाणः प्रीतियुक्तः सन् ता घृतधारा हर्यति प्राप्नोति हर्य क्लमे गतौ हर्यतिः प्रेप्साकर्मा वा ता धारा प्रेप्सति कामयते नास्य ग्रहणशक्तिपरिहरणमस्तीति भावः ॥ १६॥

कन्या-इव वहतुमेतवाऽउ अञ्ज्यञ्जाना अभिचाकशीमि।
यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभि तत्पवन्ते ॥ १७॥

घृतस्य धाराः तत्तत्र अभिपवन्ते अभिगच्छन्ति पव गतौ। तत्र कुत्र यत्र स्थाने सोमः लताविशेषः सूयते अभिषूयते यत्र च यज्ञः सौत्रामण्याख्यः क्रियते तत्र गच्छन्तीर्घृतस्य धारा अभिचाकशीमि पश्यामि। तत्र गमने दृष्टान्तः कन्या वहतुमिव वहति परिणयति वहतुर्भर्ता यथा वहतुं पतिमेतवै प्राप्तुं कन्या अभिप्रवन्ते इण् गतौ तुमर्थे तवेप्रत्ययः। कीदृश्यः कन्याः अञ्जि भगमञ्जानाः व्यक्तं योग्यं कुर्वाणाः अज्यते व्यक्तीक्रियते स्त्रीपुंव्यक्तिर्येन तत् तदञ्जानाः कन्या यथा पतिं गच्छन्ति तथा यज्ञं घृतधारा गच्छन्ति ता यज्ञसहिता घृतधाराः पश्यामीत्यर्थः ॥ १७॥

अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त।
इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते ॥ १८॥

हे देवा यूयं सुष्टुतिं शोभनां स्तुतिमाजिं यज्ञं च अभ्यर्षत अभ्यागच्छत अज्यते प्राप्यते स्वर्गो येन स आजिर्यज्ञः। कीदृशमाजिं गव्यं गव्यं घृतं विद्यते यस्मिन्स गव्यस्तम् घृतयुतम् अर्शआदित्वादच्प्रत्ययः। आगत्य चास्मासु भद्रा भद्राणि कल्याणानि द्रविणानि धनानि धत्त स्थापयत दत्त वा डुधाञ् धारणपोषणयोः दाने चेति वचनात्। कि च नोऽस्माकमिमं यज्ञं सौत्रामणीं देवता देवतासु देवलोके नयत प्रापयत देवताशब्दात्सुपां सुलुगिति [पा० ७. १. ३९.] विभक्तिलोपः। किं च याश्चैना घृतस्य धारा मधुमत् रसवद्यथा तथा पवन्ते प्रसरन्ति ता अपि देवतासु नयत यज्ञे यज्ञद्रव्ये स्वर्गं गते यजमानो गच्छत्येवेत्यर्थः ॥ १८॥

धामन्ते विश्वं भुवनमधि श्रितमन्तः समुद्रे हृद्यन्तरायुषि ।
अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं तऽऊर्मिम् ॥ ९९ ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां सप्तदशोऽध्यायः ॥ ॥

ब्रह्मादिस्तम्बपर्यन्तं निखिलं जगदाकृतिपरिणामभूतं मन्यमानो मुनिराह । हे अग्ने विश्वं भुवनं सर्वं भूतजातं ते तव धामन् धाम्नि विभूत्यामधिश्रितं (58.) आश्रितं स्थितं त्वन्महिमोत्थमित्यर्थः । यच्चान्तः समुद्रे समुद्रमध्ये तथा हृदि हृन्मध्ये तथा अन्तरायुषि आयुर्मध्ये ब्रह्मणो जीवनपर्यन्तं यद्भूतजातं तदपि ते धामनि श्रितं धामन्निति विभक्तिलोपः । अतोऽहं प्रार्थये मधुमन्तं रसवन्तं तमूर्मिं घृतकल्लोलं ते त्वदीयं वयमश्याम भक्षयामो व्याप्नुयामो वा तं कम् अपामनीके मुखे वर्तमानो य ऊर्मिः समिथे पणिभिः सह युद्धे आभृतः आहृत आनीतः त्रिधा हितं पणिभिर्गुह्यमानमिति [क° ९२.] उक्तत्वात् । अश्यामेति अश्नातेरश्नुतेर्वा विकरणाव्यत्ययेन श्यनि प्रत्यये लोटि रूपम् हविः परिणामिनो रसस्य वयं भोक्तारो भवेमेति भावः देवत्वं प्राप्नुयामेति वक्रोक्त्या प्रार्थ्यते ॥ यद्वास्या ऋचोऽर्थान्तरमुच्यते । हे अग्ने इदं विश्वं भुवनं तव धाम्नि अधिश्रितं (58.) तत्ते धाम कुत्र कुत्रेति तदुच्यते अन्तः समुद्रे अन्तरिक्षमध्ये सूर्यरूपेण समुद्र इत्यन्तरिक्षनाम [निघ° १.३.] हृदि अन्तः सर्वप्राणिनां हृदये जठराग्निरूपेण आयुषि अन्ने सर्वप्राण्याहारत्वेन अपामनीके उदकानां संघाते वैद्युताग्निरूपेण समिथे संग्रामे शौर्याग्निरूपेण एवं सर्वेषु स्थानेषु आभृतः स्थापितो यस्तव धामरूप ऊर्मिः घृतरूप उदकरूपो वा तं तव रसं मधुमन्तं माधुर्योपेतं वयमश्याम प्राप्नुयाम सर्वरसभोक्तारः स्यामेति भावः ॥ ९९ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे । सेकादिजपपर्यन्तोऽध्यायः सप्तदशोऽगमत् ॥ १७ ॥

अथ काण्वशाखायां पाठविशेषः ॥

I. ॥ १ ॥ १ ॥ २ इमा मे - नियुतं च ॥ २ ॥ २ अर्बुदं च - °लोके ॥ ३ ॥
३-१० ॥ ४-११ ॥ ११. १२ ॥ १२ ॥ १३-१५ ॥ १३-१५ ॥ १५ ॥ ॥

II. ॥ १६ [वनुते] - २१. २३. २२. २४ [°णारयुध्यम्] ॥ १-६ ॥ २४ ॥ ॥

III. ॥ २५-३२ ॥ १-८ ॥ ३२ ॥ ॥

IV. ॥ ३६-३९ [°षालयु°] - ४१ ॥ १-१७ ॥ ४१ ॥ ॥

V. ॥ ५०-५५ [ऽअग्नाऽअधि]. ५६ [अीर्मणाः] - ६४ ॥ १-१५ ॥ ६४ ॥ ॥

VI. ॥ ६५-६१ [इयंद्यमा°] - ७१ ॥ १-१५ ॥ ७१ ॥ ॥

VII. ॥ ८०-८५ [क्रीली]. ८६ [- भूयासुः]. ॥ १-७ ॥ ८६ ॥ ॥ सप्तानुवाकेषु षडशीतिः ॥ ॥

इति काण्वशाखायां संहितापाठेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥

I. वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रवश्च मे श्रुतिश्च मे ज्योतिश्च मे स्वश्च मे यज्ञेन कल्पन्ताम् ॥ १ ॥

सप्तदशेऽध्याये (1.) चित्यारोहणादिमन्त्रा उक्ताः इदानीमष्टादशेऽध्याये वसोर्धारादिमन्त्रा उच्यन्ते ॥ ॥ का° [१८.५.१.] वसोर्धारां जुहोत्यौदुम्बर्या पञ्चगृहीतं संततं यजमानोऽरण्येऽनूच्येऽग्निप्राप्ति वाजश्च मऽइत्यष्टानुवाकेन । अस्यार्थः । ततो यजमान आज्यं संस्कृत्यार्थपरिमाणाया महत्यौदुम्बर्या स्रुचा महता स्रुवेण पञ्चवारं गृहीतमाज्यमरण्येऽनूच्ये पुरोडाशेऽधिकरणे तदुपरि संततमविच्छिन्नधारं यथा तथा वसोर्धारासंज्ञामाहुतिं जुहोति । घृतेऽग्निप्राप्ते सति वाजश्चेत्यादिहोममन्त्रारम्भः कार्योऽष्टाभिरनुवाकैर्वाजश्चेत्यादिवेट्स्वाहान्तैरेकोनत्रिंशत्कण्डिकात्मकैः ॥ वाजश्च मे । चकाराः समुच्चयार्थाः । यज्ञेनानेन मया कृतेन वाजादयः पदार्थाः कल्पन्तां क्लृप्ताः सम्पन्ना भवन्तु स यज्ञो वाजादीनां दातास्मभ्यं भवत्वित्यर्थः अथोऽइदं च मे देहीदं च मऽइति [१.३.२.५.] श्रुतेः । यद्वा वाजादयः पदार्था मे मम यज्ञेन कल्पन्तां विभक्तिव्यत्ययः यज्ञेऽग्निं तर्पयन्तु अभिषिञ्चन्तु वा अनेन च त्वा प्रीणाम्यनेन च त्वाभिषिञ्चामीत्यादिश्रुतिः [१.३.३.५.] । द्वौ-द्वौ कामावनुपन्नयाय संयुङ्क्याच्चकारेण कन्याकुमाराविव तथा च श्रुतिः [१.३.२.६.] द्वौ-द्वौ का-

मावभिन्नूपौ संयुनक्तयव्यवहेदाय यथा व्योकसौ संयुञ्ज्यादिति । अथ पदार्था व्याख्यायन्ते । वाजश्चेत्यादियजुषां देवा ऋषयः अग्निर्देवता छन्दांसि पिङ्गलोक्तान्यक्षरसंख्यया ज्ञेयानि । एतैर्यजुर्भिर्यजमानोऽग्नेः कामान्याचते वाजो मेऽस्त्वित्यादि ॥ तत्रैकाधिकानि चतुःशतं यजूंषि कामास्तु पञ्चदशोत्तरं शतम् (2.) । तद्यथा । वाजश्चेत्याद्यासु ज्यैष्ठ्यं च मे [४.] वसु च मे [१५.] इति कण्डिकाद्वयवर्जितासु एकोनविंशतिकण्डिकासु त्रयोदश-त्रयोदश यजूंषि सन्ति ज्यैष्ठ्यं च मऽइत्यस्यां [४.] पञ्चदश वसु च मऽइत्यस्यां [१५.] नव । अग्निश्च मे घर्मश्च मऽइत्यस्यां [२२.] द्वादश कामास्तु त्रयोदश अङ्गुलयः शक्वरयो दिशश्च मऽइत्येकं यजुः कामास्त्वत्र त्रयः । व्रतं च मऽइत्यस्यां [२३.] षट् कामास्तु दश अहोरात्रेऽऊर्वष्ठीवे बृहद्रथन्तरे च मऽइत्येकं यजुः षट्कामाः । एका च मऽइत्यस्यां [२४.] त्रयस्त्रिंशत् । चतस्रश्च मे [२५.] अत्र त्रयोविंशतिः । त्र्यविश्च मे [२६.] ऽत्रैकादश । पष्ठवाट् मे [२७.] इत्यत्र नव । वाजाय स्वाहेति [२८.] अत्र चतुर्दश । आयुर्यज्ञेनेति [२९.] अत्रैकविंशतिः कल्पन्तामन्तानि १२ स्तोमश्चेति षट् १८ स्वर्देवाः १९ प्रजापतेः २० वेट्स्वाहा २१ । एवमेकाधिका चतुःशती ॥ अथ यजुषामर्थाः । वाजोऽन्नम् चशब्दाः समुच्चयार्थाः । प्रसवोऽन्नदानाभ्यनुज्ञा दीयतां भुज्यतामिति । प्रयतिः शुद्धिः । प्रसितिः बन्धनमन्नविषयौत्सुक्यम् । धीतिः ध्यानम् ध्यै चिन्तायां छान्दसं सम्प्रसारणम् । क्रतुः संकल्पो यज्ञो वा । स्वरः साधुशब्दः । श्लोकः पद्यबन्धः स्तुतिर्वा । श्रवः वेदमन्त्राः श्रवणसामर्थ्यं वा । श्रुतिः ब्राह्मणं श्रवणसामर्थ्यं वा । ज्योतिः प्रकाशः । स्वः स्वर्गः । एते मे मम यज्ञेन कल्पन्ताम् । कल्पन्तामिति कण्डिकान्तस्य समुदायापेक्षया (3.) बहुत्वम् । मे-पदानामावृत्तिः प्रत्येकं प्राप्त्यर्था । एवं सर्वत्र ॥१॥

प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसुश्च मे चित्तं च मऽआधीतं च मे वाक् च मे मनश्च मे चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च मे यज्ञेन कल्पन्ताम् ॥२॥

प्राणः ऊर्ध्वसंचारी शरीरवायुः । अपानः अधोवृत्तिर्वायुः । व्यानः सर्वशरीर-

चरः । असुः प्रवृत्तिमान्वायुः (4.) । चित्तं मानसः संकल्पः । आधीतं वाह्यविषयज्ञानम् । वाक् वागिन्द्रियम् । मनः प्रसिद्धम् । चक्षुरिन्द्रियम् । श्रोत्रं श्रवणेन्द्रियम् । दक्षः ज्ञानेन्द्रियकौशलम् । बलं कर्मेन्द्रियकौशलम् । एतानि यज्ञेन मे कल्पन्ताम् ॥२॥

ओजश्च मे सहश्च मऽआत्मा च मे तनूश्च मे शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थीनि च मे परूꣳषि च मे शरीराणि च मऽआयुश्च मे जरा च मे यज्ञेन कल्पन्ताम् ॥३॥

ओजो बलहेतुरष्टमो धातुः । सहः शारीरं बलं सपत्नाभिभवितृत्वं वा । आत्मा परमात्मा । तनूः रम्यं वपुः । शर्म सुखम् । वर्म कवचम् । अङ्गानि हस्ताद्यवयवाः । अस्थीनि शरीरगतानि । परूंषि अङ्गुल्यादिपर्वाणि । शरीराणि पूर्वानुक्ताः शरीरावयवाः । आयुर्जीवनम् । जरा वार्धकान्तमायुः । एते यज्ञेन सम्पद्यन्ताम् ॥३॥

ज्यैष्ठ्यं च मऽआधिपत्यं च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्षिमा च मे द्राघिमा च मे वृद्धं च मे वृद्धिश्च मे यज्ञेन कल्पन्ताम् ॥४॥

ज्येष्ठस्य भावो ज्यैष्ठ्यं प्रशस्तत्वम् । अधिपतेर्भाव आधिपत्यम् स्वामित्वम् । मन्युः मानसः कोपः । भामोऽधिक्षेपादिलिङ्गको वाह्यः कोपः । न मीयतऽइत्यमः अपरिमेयत्वमन्यैरियत्तया परिच्छेत्तुमशक्यत्वम् । अम्भः शीतमधुरं जलम् । जेमा जयस्य भावो जयसामर्थ्यम् । महतो भावो महिमा महत्त्वं सम्पत्त्यादिना । उरोर्भावो वरिमा प्रज्ञादिविशालता । पृथोर्भावः प्रथिमा गृहक्षेत्रादिविस्तारः । वृद्धस्य भावो वर्षिमा दीर्घजीवित्वम् । दीर्घस्य भावो द्राघिमा अविच्छिन्नवंशत्वम् । वृद्धं प्रभूतमन्नधनादि । वृद्धिः विद्यादिगुणैरुत्कर्षः । एते मे कल्पन्ताम् ॥४॥

II. सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे विश्वं च मे महश्च मे क्रीडा

च मे मोदश्च मे जातं च मे जनिष्यमाणं च मे सूक्तं च मे सुकृतं च मे यज्ञेन कल्पन्ताम् ॥५॥

सत्यं यथार्थभाषित्वम् । श्रद्धापरलोकविश्वासः । जगत् जङ्गमं गवादि । धनं कनकादि । विश्वं स्थावरम् । महो दीप्तिः । क्रीडा अक्षद्यूतादिः । मोदः क्रीडादर्शनजो हर्षः । जातं पुत्रोत्पन्नमपत्यम् । जनिष्यमाणं भविष्यदपत्यम् । सूक्तमृक्समूहः । सुकृतमृक्पाठजन्यं शुभादृष्टम् । एते कल्पन्ताम् ॥५॥

ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे सुखं च मे शयनं च मे सूषाश्च मे सुदिनं च मे यज्ञेन कल्पन्ताम् ॥६॥

ऋतं यज्ञादिकर्म । अमृतं तत्फलभूतं स्वर्गादि । यक्ष्मणोऽभावोऽयक्ष्मं धातुक्षयादिरोगाभावः । अनामयत् आमयति पीडयतीत्यामयत् न आमयत् अनामयत् सामान्यव्याध्यादिराहित्यम् (5.) । जीवयतीति जीवातुः व्याधिनाशकमौषधम् । दीर्घायुषो भावो दीर्घायुत्वं बहुकालमायुः पृषोदरादित्वात्सलोपः आयुरुदन्तो वा । अमित्राणामभावोऽनमित्रं शत्रुराहित्यम् । भयाभावोऽभयं भीतिराहित्यम् । सुखमानन्दः । शयनं संस्कृता शय्या । सूषाः शोभन उषाः स्नानसंध्यादियुक्तः प्रातःकालः । सुदिनं यज्ञदानाध्ययनादियुक्तं सर्वं दिनम् । एते मे यज्ञेन सिध्यन्तु ॥६॥

यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वं च मे महश्च मे संविच्च मे ज्ञात्रं च मे सूश्च मे प्रसूश्च मे सीरं च मे लयश्च मे यज्ञेन कल्पन्ताम् ॥७॥

यन्ताश्वादेर्नियन्ता । धर्ता पोषकः पित्रादिः । क्षेमः विद्यमानधनस्य रक्षणाशक्तिः । धृतिः धैर्यमापत्स्वपि स्थिरचित्तत्वम् । विश्वं सर्वानुकूल्यम् । महः पूजा । संविद्वेदशास्त्रादिज्ञानम् । ज्ञातुर्भावो ज्ञात्रम् विज्ञानसामर्थ्यम् । सूः पुत्रादिप्रेरणासामर्थ्यम् । प्रसूः पुत्रोत्पत्त्यादिसामर्थ्यम् । सीरं हलादि कृषिकृतधान्यनिष्पत्तिः । लयः कृषिप्रतिबन्धनिवृत्तिः ॥७॥

शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भगश्च मे द्रविणं च मे भद्रं च मे श्रेयश्च मे वसीयश्च मे यशश्च मे यज्ञेन कल्पन्ताम् ॥८॥

शमैहिकं सुखम् । मयः आमुष्मिकं सुखम् । प्रियं प्रीत्युत्पादकं वस्तु । अनुकाम्यतऽइत्यनुकामः अनुकूलयत्नसाध्यः पदार्थः । कामः विषयभोगजनितं सुखम् । सुमनसो भावः सौमनसः मनःस्वास्थ्यकरो बन्धुवर्गः । भगः सौभाग्यम् । द्रविणं धनम् । भद्रमैहिकं कल्याणम् । श्रेयः पारलौकिकम् । वसतीति वस्तृ अतिशयेन वस्तृ वसीयः तुरिष्ठेमेयःस्विति [पा° ६.४.१५४.] तृचो लोपः निवासयोग्यो वसुमान्गृहादिः । यशः कीर्तिः । एते कल्पन्ताम् ॥८॥

III. ऊर्क् मे सूनृता च मे पयश्च मे रसश्च मे घृतं च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रं च मऽऔद्भिद्यं च मे यज्ञेन कल्पन्ताम् ॥९॥

ऊर्क् अन्नम् । सूनृता प्रिया सत्या वाक् । पयः दुग्धम् । रसः तत्रत्यः सारः । घृतमाज्यम् । मधु क्षौद्रम् । समाना ग्धिर्भोजनं सग्धिः अदेः क्तिनि घस्लादेशः घसिभसोर्हलीति [पा° ६.४.१००.] घस उपधालोपे (6.) कृते कलो कलीति [पा° ८.२.२६.] सलोपे कृते कषस्तथोर्धोऽधः [पा° ८.२.४०.] जश्त्वं ग्धिः बन्धुभिः सह भोजनमित्यर्थः । सपीतिः बन्धुभिः सह पानम् । कृषिः तत्कृतधान्यसिद्धिः । वृष्टिः धान्यनिष्पादिकानुकूला । जेतुर्भावो (7.) जैत्रम् जयसामर्थ्यम् । उद्भिदो भाव औद्भिद्यम् चूतादितरोरुत्पत्तिः । एते यज्ञेन कल्पन्ताम् ॥९॥

रयिश्च मे रायश्च मे पुष्टं च मे पुष्टिश्च विभु च मे प्रभु च मे पूर्णं च मे पूर्णतरं च मे कुयवं च मेऽक्षितं च मेऽन्नं च मेऽक्षुच्च मे यज्ञेन कल्पन्ताम् ॥१०॥

रयिः सुवर्णम् । रायो मुक्तादिमणयः । पुष्टं धनपोषः । पुष्टिः शरीरपोषकः ।

विभु व्याप्तिसामर्थ्यम् । प्रभु ऐश्वर्यम् । पूर्णं धनपुत्रादिबाहुल्यम् । अत्यन्तं पूर्णं पूर्णतरं गजतुरगादिबाहुल्यम् । कुयवं कुत्सितधान्यमपि । अक्षितं क्षयहीनं धान्यादि । अन्नमोदनादि । क्षुत् (8.) भुक्तान्नपरिपाकः । एते कल्पन्ताम् ॥ १० ॥

वित्तं च मे वेद्यं च मे भूतं च मे भविष्यच्च मे सुगं च मे सुपथ्यं च म ऽऋद्धं च म ऽऋद्धिश्च मे कॢप्तं च मे कॢप्तिश्च मे मतिश्च मे सुमतिश्च मे यज्ञेन कल्पन्ताम् ॥ ११ ॥

विद्लृ लाभे पूर्वलब्धं वित्तम् । वेद्यं लब्धव्यम् । भूतं पूर्वसिद्धं क्षेत्रादि । भविष्यत् सम्पत्स्यमानं क्षेत्रादि । सुखेन गम्यते यत्र तत्सुगम् सुदुरोरधिकरणे इति [पा° ३.२.४८. वा° ३.] गमेर्डः सुखगम्यो देशः । सुपथ्यं शोभनं हितम् । ऋद्धं समृद्धं यज्ञफलम् ऋद्धिः यज्ञादिसमृद्धिः । कॢप्तं कार्यक्षमं द्रव्यादि । कॢप्तिः स्वकार्यसामर्थ्यम् । मतिः पदार्थमात्रनिश्चयः । सुमतिः दुर्घटकार्यादिषु निश्चयः एते यज्ञेन कल्पन्ताम् ॥ ११ ॥

व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे प्रियङ्गवश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे गोधूमाश्च मे मसूराश्च मे यज्ञेन कल्पन्ताम् ॥ १२ ॥

व्रीहियवमाषतिलमुद्गगोधूममसूराः प्रसिद्धाः । खल्वाः चणकाः लङ्गाश्च । प्रियङ्गवः कङ्गवः प्रसिद्धाः (9.) । अणवश्चीनकाः (10.) । श्यामाकास्तृणधान्यानि ग्राम्याणि कोद्रवत्वेन प्रसिद्धानि । नीवारास्तृणधान्यान्यारण्यानि । एते धान्यविशेषा मे यज्ञेन कल्पन्ताम् ॥ १२ ॥

IV. अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मेऽयश्च मे श्यामं च मे लोहं च मे सीसं च मे त्रपु च मे यज्ञेन कल्पन्ताम् ॥ १३ ॥

अश्मा पाषाणः । मृत्तिका प्रशस्ता मृत् मृदस्तिकन् । गिरयः क्षुद्रपर्वताः गो-

वर्धनार्बुदरैवतिकादयः । पर्वताः महान्तो मन्दरहिमाचलादयः । सिकताः शर्कराः । वनस्पतयः पुष्पं विना फलवन्तः पनसोदुम्बरादयः । हिरण्यं सुवर्णं रजतं वा द्रविणाकुप्ययोश्चेत्यभिधानात् । अयो लोहम् । श्यामं ताम्रलोहं कांस्यं रजतं कनकं वा । लोहं कालायसे सर्वतैजसे जोङ्गकेऽपि चेत्यभिधानात् । सीसं प्रसिद्धम् । त्रपु रङ्गम् । एते कार्यविशेषेषु मे कल्पन्ताम् ॥ १३ ॥

अ॒ग्निश्च॑ म॒ऽआप॑श्च मे वी॒रुध॑श्च म॒ऽओष॑धयश्च मे कृष्टप॒च्याश्च॑ मेऽकृष्टप॒च्याश्च॑ मे ग्रा॒म्याश्च॑ मे प॒शव॑ आर॒ण्याश्च॑ मे वि॒त्तं च॑ मे॒ वित्ति॑श्च मे भू॒तं च॑ मे॒ भूति॑श्च मे य॒ज्ञेन॑ कल्पन्ताम् ॥ १४ ॥

अग्निः पृथिवीस्थो वह्निः । आपोऽन्तरिक्षस्थानि जलानि । वीरुधः गुल्माः । ओषधयः फलपाकान्ताः । कृष्टपच्याः कृष्टे पच्यन्तऽइति कृष्टपच्याः राजसूयसूर्येत्यादिना [पा॰ ३. १. ११४.] क्यबन्तो निपातः भूमिकर्षणवीजवापादिकर्मभिर्निष्पाद्या ओषधयः । तद्विपरीता अकृष्टपच्याः स्वयमेवोत्पाद्यमाना नीवारगवेधुकादयः । ग्राम्याः ग्रामे भवाः पशवः गोऽश्वमहिषाजाविगर्दभोष्ट्रादयः । आरण्याः अरण्ये भवाः पशवः हस्तिसिंहशरभमृगगवयमर्कटादयः । वित्तं पूर्वलब्धम् । वित्तिः भाविलाभः । भूतं जातपुत्रादिकम् । भूतिरैश्वर्यं स्वार्जितम् । एतानि यज्ञेन मम सम्पद्यन्ताम् ॥ १४ ॥

वसु॑ च मे वस॒तिश्च॑ मे॒ कर्म॑ च मे॒ शक्ति॑श्च॒ मेऽर्थ॑श्च म॒ऽएम॑श्च मऽइ॒त्या च॑ मे॒ गति॑श्च मे य॒ज्ञेन॑ कल्पन्ताम् ॥ १५ ॥

वसु धनं गवादिकम् । वसतिर्वासस्थानं गृहम् । कर्माग्निहोत्रादि । शक्तिस्तदनुष्ठानसामर्थ्यम् । अर्थोऽभिलषितः पदार्थः । एमः ईयतऽइत्येमः एतेर्मप्रत्ययः प्राप्तव्योऽर्थः । इत्या भावे क्यप् अयनमिष्टप्राप्त्युपायः । गतिरिष्टप्राप्तिः । एते कल्पन्ताम् ॥ १५ ॥

V. अ॒ग्निश्च॑ म॒ऽइन्द्र॑श्च मे॒ सोम॑श्च म॒ऽइन्द्र॑श्च मे सवि॒ता च॑ म॒ऽइन्द्र॑श्च मे॒

सर॑स्वती च मऽइन्द्र॑श्च मे पू॒षा च॑ मऽइन्द्र॑श्च मे॒ बृह॒स्पति॑श्च मऽइन्द्र॑श्च मे य॒ज्ञेन॑ कल्पन्ताम् ॥ १६॥

अथार्धेन्द्राणि जुहोति [१.३.२.९.] अर्धस्येन्द्रदेवत्यत्वादर्धस्य नानादेवत्यत्वात् । अग्निसोमसवितृसरस्वतीपूषबृहस्पतयः प्रसिद्धाः तैः समानभागत्वादिन्द्र एकैकया सह पठ्यते । यास्कोक्ता इन्द्रशब्दस्य नानार्थाः कार्याः एवमग्रेऽपि कण्डिकाद्वये । एते कल्पन्ताम् ॥ १६॥

मि॒त्रश्च॑ मऽइन्द्र॑श्च मे॒ वरु॑णश्च मऽइन्द्र॑श्च मे धा॒ता च॑ मऽइन्द्र॑श्च मे॒ त्वष्टा॑ च म॒ इन्द्र॑श्च मे म॒रुत॑श्च मऽइन्द्र॑श्च मे॒ विश्वे॑ च मे दे॒वा इन्द्र॑श्च मे य॒ज्ञेन॑ कल्पन्ताम् ॥ १७॥

मित्रवरुणधातृत्वष्टमरुद्विश्वेदेवाः प्रसिद्धाः । प्रत्येकमिन्द्रः । एते कल्पन्ताम् ॥ १७॥

पृ॒थि॒वी च॑ मऽइन्द्र॑श्च मे॒ऽन्तरि॑क्षं च मऽइन्द्र॑श्च मे॒ द्यौश्च॑ मऽइन्द्र॑श्च मे॒ समा॑श्च मऽइन्द्र॑श्च मे॒ नक्ष॑त्राणि च म॒ इन्द्र॑श्च मे॒ दिश॑श्च मऽइन्द्र॑श्च मे य॒ज्ञेन॑ कल्पन्ताम् ॥ १८॥

पृथिव्यन्तरिक्षदिवस्त्रैलोक्यम् । समा वर्षाधिष्ठात्र्यो देवताः । नक्षत्राणि अश्विन्यादीनि । दिशः प्रागाद्याः । एते कल्पन्ताम् ॥ १८॥

VI. अ॒ꣳशुश्च॑ मे र॒श्मिश्च॒ मेऽदा॑भ्यश्च॒ मेऽधि॑पतिश्च मऽउपा॒ꣳशुश्च॑ मेऽन्तर्या॒मश्च॑ मऽऐन्द्रवाय॒वश्च॑ मे मैत्रावरु॒णश्च॑ मऽआश्वि॒नश्च॑ मे प्रतिप्र॒स्थान॑श्च मे शु॒क्रश्च॑ मे म॒न्थी च॑ मे य॒ज्ञेन॑ कल्पन्ताम् ॥ १९॥

अथ ग्रहान्जुहोति [९.३.२.१०.] कण्डिकात्रये ग्रहहोममन्त्राः । अंश्वादयः सोमग्रहविशेषाः (11.) सोमप्रकरणे प्रसिद्धाः । अदाभ्यस्यैव गृह्यमाणत्वदशायां (12.) पृथक्कृत्य ग्रहणे रश्मिशब्देन निर्देशः रश्मीनां तद्ग्रहणे (13.) साधनत्वात् अह्नो रूपे सूर्यस्य रश्मिषु इति [८. ४८.] मन्त्रलिङ्गात् । अधिपतिशब्देन निग्राह्यो

विवक्षितः तस्य ज्येष्ठत्वादाधिपत्यम् ज्येष्ठो वाऽएष ग्रहाणामिति श्रुतेः । प्रतिप्रस्थानशब्देन निग्राह्यो विवक्षितः द्विदेवत्यैः सह पाठात् । अन्ये प्रसिद्धाः ॥१९॥

आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च मऽऐन्द्राग्नश्च मे महावैश्वदेवश्च मे मरुत्वतीयाश्च मे निष्केवल्यश्च मे सावित्रश्च मे सारस्वतश्च मे पात्नीवतश्च मे हारियोजनश्च मे यज्ञेन कल्पन्ताम् ॥२०॥

आद्यो वैश्वदेवः प्रातःसवनगतः महावैश्वदेवस्तु तृतीयसवनगतः । ध्रुवाख्यस्यैव ग्रहस्य श्रवणादशायां वैश्वानरसूक्तपाठात्तद्दशापन्नो (15.) ध्रुवो वैश्वानरशब्देनोच्यते । मरुत्वतीया इति बहुवचनं त्रित्वात् मरुत्वतीयो महामरुत्वतीयः कुण्ठमरुत्वतीयश्चेति । अभिषिचनीये सारस्वतीनामपां ग्रहणमेव सारस्वतो ग्रहः सारस्वतं ग्रहं गृह्णातीति तत्राम्नानात् ॥२०॥

स्रुचश्च मे चमसाश्च मे वायव्यानि च मे द्रोणकलशश्च मे ग्रावाणश्च मेऽधिषवणे च मे पूतभृच्च मऽआधवनीयश्च मे वेदिश्च मे बर्हिश्च मेऽवभृथश्च मे स्वगाकारश्च मे यज्ञेन कल्पन्ताम् ॥२१॥

स्रुचो जुह्वादयः । चमसानि ग्रहपात्राणि । वायव्यानि पात्रविशेषाः । अधिषवणे काष्ठफलके । पूतभृदाधवनीयौ सोमपात्रविशेषौ । स्वगाकारः शम्युवाकः तेन यथास्वं देवतानां हविरङ्गीकारात् । प्रसिद्धमन्यत् । एते मम यज्ञेन निमित्तेन कल्पन्ताम् ॥२१॥

अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मेऽङ्गुलयः शक्वरयो दिशश्च मे यज्ञेन कल्पन्ताम् ॥२२॥

कण्डिकाद्वयेन यज्ञक्रतुहोमः अथैतान्यज्ञक्रतूञ्जुहोत्यग्निश्च मऽइति [९.३.३.१.] श्रुतेः । अग्निः चीयमानो वह्निरग्निष्टोमो वा । घर्मः प्रवर्ग्यः । इन्द्रायार्कवते पुरोडाशमिति विहितो यागोऽर्कः । सौर्यं चरुमिति विहितः सूर्यः । प्राणो गवा-

मयनम् । अश्वमेधः प्रसिद्धः । पृथिव्यदितिदितिदिवो देवताविशेषाः । अङ्गुलयः विराट्पुरुषावयवाः । शक्वरयः शक्तयः । दिशः प्राच्याद्याः । एते यज्ञेन कल्पन्ताम् ॥ २२ ॥

व्रतं च मऽऋतवश्च मे तपश्च मे संवत्सरश्च मेऽहोरात्रेऽऊर्वष्ठीवे बृहद्रथन्तरे च मे यज्ञेन कल्पन्ताम् ॥ २३ ॥

व्रतं नियमः । ऋतवो वसन्तादयः । तपः कृच्छ्रं चान्द्रायणादि । संवत्सरः प्रभवादिः । अहश्च रात्रिश्चाहोरात्रे दिननिशे । ऊरू (16.) चाष्ठीवन्तौ जानुनी (17.) च ऊर्वष्ठीवे अवयवविशेषौ अचतुरेति [पा° ५. ४. ७७.] निपातः । बृहद्रथन्तरे एतन्नामके सामनी । एतानि कल्पन्ताम् ॥ २३ ॥

VII. एका च मे तिस्रश्च मे तिस्रश्च मे पञ्च च मे पञ्च च मे सप्त च मे सप्त च मे नव च मे नव च मऽएकादश च मऽएकादश च मे त्रयोदश च मे त्रयोदश च मे पञ्चदश च मे पञ्चदश च मे सप्तदश च मे सप्तदश च मे नवदश च मे नवदश च मऽएकविꣳशतिश्च मऽएकविꣳशतिश्च मे त्रयोविꣳशतिश्च मे त्रयोविꣳशतिश्च मे पञ्चविꣳशतिश्च मे पञ्चविꣳशतिश्च मे सप्तविꣳशतिश्च मे सप्तविꣳशतिश्च मे नवविꣳशतिश्च मे नवविꣳशतिश्च मऽएकत्रिꣳशच्च मऽएकत्रिꣳशच्च मे त्रयस्त्रिꣳशच्च मे यज्ञेन कल्पन्ताम् ॥ २४ ॥

अयुग्मस्तोमहोमार्था मन्त्राः अथायुज स्तोमानुहोतीति [९. ३. ३. २.] श्रुतेः । एकामादाय द्वितीयां विहाय तृतीयामादाय चतुर्थीं विहाय परित्यक्तसमसङ्ख्याकेनात्तविषमसङ्ख्याकेन मन्त्रेणायुग्मान्स्तोमानुहुयादित्यर्थः । आदरातिशयद्योतनार्था सर्वत्र पुनरुक्तिः । अयुग्मस्तोमहोमैः सर्वकामावाप्तिः तथा श्रुतिः [९. ३. ३. २.] एतद्वै देवाः सर्वान्कामानाप्नुवयुग्भि स्तोमैः स्वर्गं लोकमायँस्तथैवैतद्यजमानः सर्वान्कामानाप्नुवयुग्भि स्तोमैः स्वर्गं लोकमेतीत्यादि ॥ २४ ॥

चतस्रश्च मेऽष्टौ च मेऽष्टौ च मे द्वादश च मे द्वादश च मे षोडश च मे

षोडश च मे विꣳशतिश्च मे विꣳशतिश्च मे चतुर्विꣳशतिश्च मे चतुर्विꣳशतिश्च मेऽष्टाविꣳशतिश्च मेऽष्टाविꣳशतिश्च मे द्वात्रिꣳशच्च मे द्वात्रिꣳशच्च मे षट्त्रिꣳशच्च मे षट्त्रिꣳशच्च मे चत्वारिꣳशच्च मे चत्वारिꣳशच्च मे चतुश्चत्वारिꣳशच्च मे चतुश्चत्वारिꣳशच्च मेऽष्टाचत्वारिꣳशच्च मे यज्ञेन कल्पन्ताम् ॥ २५ ॥

एककण्डिकया (18.) युग्मस्तोमान्जुहोति अथ युग्मतो जुहोति चतस्रश्च मऽइति [९.३.३.४.] प्रथमं चतस्र इत्येतां संख्यामादाय चतुरुत्तरत्वेन स्थितान्युग्मास्तोमानष्टाचत्वारिंशत्पर्यन्तान्जुहुयादित्यर्थः । तत्फलं स्वर्गप्राप्तिः एतद्वै इन्द्राꣳस्यब्रुवन्यातयामा वाऽअयुजः स्तोमा युग्मभिर्वयꣳ स्तोमैः स्वर्गं लोकमयामेति तथैतद्यजमानो युग्मभिः स्तोमैः स्वर्गं लोकमेतीति [९.३.३.५.] श्रुतेः । पूर्व-पूर्वमुत्तरेण सम्बध्नाति वृक्षारोहणवत् तथा च श्रुतिः [९.३.३.६.] पूर्व-पूर्वमुत्तरेणोत्तरेण (19.) संयुनक्ति यथा वृक्षं रोहन्नुत्तरामुत्तराꣳ शाखाꣳ समालम्भꣳ रोहेत्तादृक्तदिति (20.) । अत्रोक्ता संख्या संख्येयनिष्ठा । एते यज्ञेन कल्पन्ताम् ॥२५॥

त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्यवाट् च मे तुर्यौही च मे यज्ञेन कल्पन्ताम् ॥ २६ ॥

कण्डिकाद्वयं वयोहोमे विनियुक्तम् । तथा च श्रुतिः [९.३.३.७.] अथ वयाꣳसि जुहोति त्र्यविश्च मऽइति पशवो वै वयाꣳसि पशुभिरेवैनमेतदन्नेन प्रीणात्यथो पशुभिरेवैनमेतदन्नेनाभिषिञ्चतीति । अविः षण्मासात्मकः कालः त्रयोऽवयो यस्य स त्र्यविः सार्धसंवत्सरो वृषः तादृशी गौस्त्र्यवी । द्विसंवत्सरो वृषो दित्यवाट् तादृशी गौर्दित्यौही । पञ्चावयो यस्य स पञ्चाविः सार्धद्विसंवत्सरो वृषः तादृशी गौः पञ्चावी । वत्सो वत्सरः त्रयो वत्सा यस्य स त्रिवत्सः त्रिवर्षो वृषः तादृशी गौस्त्रिवत्सा । तुर्यं वर्षं वहतीति तुर्यवाट् सार्धत्रिवर्षो वृषः तादृशी गौस्तुर्यौही । एते यज्ञेन कल्पन्ताम् ॥ २६ ॥

CCCC

पष्ठवाट् मे पष्ठौही च मऽउक्षा च मे वशा च मऽऋषभश्च मे वेहच्च मेऽनड्वांश्च मे धेनुश्च मे यज्ञेन कल्पन्ताम् ॥ २७॥

पष्ठं वर्षचतुष्कं वहतीति पष्ठवाट् चतुर्वर्षो वृषः तादृशी गौः पष्ठौही । उक्षा सेचनक्षमो वृषः । वशा वन्ध्या गौः । अतियुवा वृष ऋषभः (21.) । वेहद्गर्भघातिनी (22.) गौः । अनः शकटं वहतीत्यनड्वान् शकटवहनक्षमो वृषः वहेः क्विपि सम्प्रसारणमनसो डकारः चतुरनडुहोरामुदात्त इति [पा॰ ७. १. ९८.] आमागमः । धेनुर्नवप्रसूता गौः । एते मम यज्ञेन निमित्तेन कल्पन्तां स्वस्वव्यापारसमर्था भवन्तु यद्वा एते यज्ञेन मम कल्पन्तां मह्यमुपभोगक्षमा (23.) भवन्त्विति त्यर्थः एवं पूर्वत्र ॥ २७॥

VIII. वाजाय स्वाहा प्रसवाय स्वाहापिजाय स्वाहा क्रतवे स्वाहा वसवे स्वाहाहर्पतये स्वाहाह्ने मुग्धाय स्वाहा मुग्धाय वैनꣳशिनाय स्वाहा विनꣳशिनऽआन्त्यायनाय स्वाहान्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहा प्रजापतये स्वाहा । इयं ते राण्मित्राय यन्तासि यमन ऊर्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाधिपत्याय ॥ २८॥

अथ नामग्राहहोमः तथा च श्रुतिः [९. ३. ३. ८.] अथ नामग्राहं जुहोति वाजाय स्वाहेत्येतद्वै देवाः सर्वान्कामानाप्त्वाथैतमेव प्रत्यक्षमप्रीणँस्तथैवैतद्यजमानः सर्वान्कामानाप्त्वाथैतमेव प्रत्यक्षं प्रीणातीति । वाजोऽन्नं तस्मै स्वाहेति होममन्त्रः वाजादीनि चैत्रादिमासानां नामानि तन्नाम गृहीत्वा होतव्यमित्यर्थः अन्नप्राचुर्याच्चैत्रोऽन्नरूपः । प्रसवायानुज्ञारूपाय जलक्रीडादौ अभ्यनुज्ञादानात्प्रसवो वैशाखः । अपिजाय (24.) अप्सु जायतऽइत्यपिजः सप्तम्या अलुक् जलक्रीडारतत्वादपिजो ज्येष्ठः । क्रतवे यागरूपाय चातुर्मास्यादियागप्राचुर्यात्क्रतुराषाढः । वसवे वासयति वसुः चातुर्मास्ये यात्रानिषेधाद्वसुः श्रावणः । अहर्पतये दिनस्वामिने सूर्यरूपाय तापकरत्वाद्भाद्रपदस्याहर्पतित्वम् । मुग्धायाह्ने तुषारादिना मोहरूपाय दिवसाय तुषारबाकुल्यान्मुग्धमह आश्विनः । अमुग्धाय (25.) वैनशिनाय विनश्यतीति वि-

नंशी मस्त्रिनशोर्कल्लीति [पा° ७. १. ६०.] बाहुलकादकल्यपि नशेर्नुमागमः (26.) विनंश्येव वैनशिनः स्वार्थे अण् अल्पघटिकावत्त्वेन विनाशशीलाय कार्त्तिकाय स्नाननियमादिना पापनाशकत्वादमुग्धाय मोहनिवर्तकाय कार्त्तिकाय (27.)। अविनंशिने (28.) आन्त्यायनाय न विनश्यतीत्यविनंशी तस्मै विनाशरहिताय अन्ते सर्वेषां नाशे भवमन्त्यं तदयनं चेत्यन्त्यायनं तत्र भव आन्त्यायनस्तस्मै सर्वनाशेऽप्यवशिष्टायात एवाविनंशिने विष्णुरूपाय (29.) मार्गशीर्षाय मासानां मार्गशीर्षोऽस्मीति (30.) स्मृतेः [भगवद्गीता° १०. ३५.]। आन्त्याय भौवनाय भुवनानामयं भौवनः अन्ते स्वरूपे भव आन्त्यस्तस्मै लोकस्वरूपपुष्टिकरत्वात्तत्रभवत्वम् जाठराग्निर्दीप्तिकरत्वेन पुष्टिकरत्वं पौषस्य। भुवनस्य भूतजातस्य पतये पालकाय माघाय स्नानादिना (31.) पुण्यजनकत्वेन पालकत्वं माघस्य। अधिपतये अधिकपालकाय फाल्गुनाय वर्षान्तत्वात्। प्रजापतये एवं द्वादशमासाधिष्ठात्रे प्रजापतिनामकाय देवाय। स्वाहेति होमार्थ सर्वत्र॥ हे अग्ने इयं ते तव राट् इदं राज्यं यत्र-यत्र यागाः क्रियन्ते तत्तत्तवैव राज्यम्। किं च हे अग्ने त्वं मित्रस्य सख्युर्यजमानस्य यन्ता नियामकोऽसि षष्ठ्यर्थे चतुर्थी मित्रायेति। कीदृशस्त्वं यमनो यमयतीति यमनः अग्निष्टोमादिकर्मसु सर्वान्नियमयन्। अत ऊर्जे विशिष्टान्नरसाय त्वा त्वामभिषिञ्चामीति शेषः। तथा वृष्ट्यै वर्षणाय त्वाभिषिञ्चामि अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति स्मृतेः। ततः प्रजानामाधिपत्याय प्रजास्वामित्वाप्त्यै त्वाभिषिञ्चामि वसोर्धारया। तथा च श्रुतिः [९, ३, ३, १०. ११.] प्रजानामाधिपत्यायेत्यन्नं वाऽऊर्गन्नं वृष्टिरन्नेनैवैनमेतत्प्रीणाति यद्देवाहेयं ते राण्मित्राय यन्तासि यमन ऊर्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाधिपत्यायेतीदं ते राज्यमभिषिक्तोऽसीत्येतन्मित्रस्य त्वं यन्तासीति॥२८॥

आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताᳬ श्रोत्रं यज्ञेन कल्पतां वाग्यज्ञेन कल्पतां मनो यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां ब्रह्मा यज्ञेन कल्पतां ज्योतिर्यज्ञेन कल्पताᳬ स्वर्यज्ञेन कल्पतां पृष्ठं यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम्। स्तोमश्च यजुश्चऽऋक्च साम च बृ-

द्वृच्चं रथन्तरं च । स्वर्देवा अगन्मामृता अभूम प्रजापतेः प्रजा अभूम वेट् स्वाहा ॥ २१ ॥

कल्पहोमः कल्पतामिति लिङ्गात् (32.) अथ कल्पान्जुहोतीति [९. ३. ३. १२.] श्रुतेः । यज्ञेन निमित्तेनायुर्जीवनकालः कल्पतां साध्यतां प्राप्यताम् । प्राणचक्षुःश्रोत्रवाङ्मनांसि मम यज्ञेन क्लृप्तानि भवन्तु । आत्मा देहः आत्मेन्द्रियमनोयुक्तो भोक्तेत्याहुर्मनीषिण इति स्मृतेः । ब्रह्मा (33.) वेदो यज्ञेन कल्पताम् । ज्योतिः स्वयंप्रकाशः परमात्मा यज्ञेन साध्यताम् पुण्यकर्मानुष्ठानं परमात्मज्ञाने कारणम् ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेनेति श्रुतेः [१४. ७. २. २४.] कर्मणैव हि संसिद्धिमास्थिता जनकादय इति स्मृतेश्च [भगवद्गी° ३. २०.] । स्वः स्वर्गः । पृष्ठं स्तोत्रं स्वर्गस्थानं वा कल्पताम् । यज्ञो यज्ञेनैव क्लृप्तो भवतु नाहं यज्ञक्लृप्तौ समर्थः यज्ञेन यज्ञमयजन्त देवा इति श्रुतेः [३१. १६.] । किं च स्तोमयजुर्ऋक्सामबृहद्रथन्तराणि च यज्ञेन क्लृप्तानि भवन्त्वित्यनुषङ्गः । स्तोमस्त्रिवृत्पञ्चदशादिः यजुरनियतपादो मन्त्रः ऋक् नियतपादा साम गीतिप्रधानम् बृहद्रथन्तरे तद्विशेषौ ॥ वसोर्धारयैवमग्निमभिषिच्यात्मानं यजमानः प्रशंसति वयं यजमाना देवा (34.) भूत्वा स्वः स्वर्गमगन्म गतवन्तः गमेर्लङि शब्लोपे मस्य नत्वे (35.) रूपम् । गत्वा चामृता अमरणधर्मिणोऽभूम भूताः भवतेर्लुङि रूपम् ततः प्रजापतेर्हिरण्यगर्भस्य प्रजा अभूमेति फलवचनम् । अनेन वसोर्धारायाः सर्वकामप्राप्तिहेतुत्वमुक्तम् । वेट् स्वाहेति वसोर्धाराहोमार्थौ मन्त्रः वेडिति वषट्कारः । वषट्कारो ह्येष परोऽक्षं यद्वेट्कारो वषट्कारेण वा वै स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयतऽइति [९. ३. ३. १४.] श्रुतेः ॥ इति वसोर्धाराहोममन्त्राः समाप्ताः ॥ २१ ॥

IX. वाजस्य नु प्रसवे मा° ॥ ३० ॥

का° [१८. ५. ४. ५.] वप्रावत्सम्भृत्य चमसवत्स्रुवेण वाजपेयिकानि वाजस्येममिति आग्निकानि च वाजस्य न्विति । क्षेत्रवपनवत्सर्वौषधमौदुम्बरे चमसे सम्भृत्य तस्मात्सर्वौषधाच्चमसवत्स्रुवेणेत्यौदुम्बरेण चतुष्कोणपुष्करेण स्रुवेण वाजस्येमं प्रसवऽइति सप्तमन्त्रैः [९. २३-३०.] सप्त वाजपेयसम्बन्धीनि वाजप्रसवीयानि

हुत्वा वाजस्य नु प्रसवे इत्यादिसप्तमन्त्रैः प्रतिमन्त्रमाग्निकानि सप्त वाजप्रसवीयानि तस्मादेव सर्वौषधात्तेनैव स्रुवेण जुहोतीति सूत्रार्थः ॥ व्याख्याता [९.५.] ॥३०॥

विश्वेऽअ॒द्य म॒रुतो॒ विश्वऽऊ॒ती विश्वे॑ भवन्त्व॒ग्नयः॒ समि॑द्धाः ।
विश्वे॑ नो दे॒वा अव॒सागम॑न्तु॒ विश्व॑मस्तु॒ द्रवि॑णं॒ वाजो॑ऽअ॒स्मे ॥३१॥

लुशोधानाकदृष्टा वैश्वदेवी त्रिष्टुप् । अद्यास्मिन्दिने विश्वे सर्वे मरुतः सप्तकगणा आगमन्तु आगच्छन्तु छन्दोभावे रूपम् । विश्वे अन्ये च सर्वे गणदेवता वसवो रुद्रा आदित्याश्च ऊती ऊत्या पूर्वसवर्णः अनेन तर्पणेन निमित्तेनागमन्तु तृप्त्यर्थमागच्छन्त्वित्यर्थः । विश्वे देवा च गणदेवता नोऽस्माकमवसान्नेन हविषा निमित्तेन हविर्ग्रहणायागमन्तु तदागमनेन च विश्वे सर्वेऽग्नयः गार्हपत्यादयः समिद्धाः सम्यग्दीप्ता भवन्तु तदर्थं होमेनेत्यर्थः । तेषां देवानां तुष्ट्या विश्वं सर्वं द्रविणं धनं गोभूहिरण्यादि वाजोऽन्नं चास्मेऽस्माकमस्तु विभक्तेः शे-आदेशः ॥३१॥

वाजो॑ नः स॒प्त प्र॒दिश॒श्चत॑स्रो वा परा॒वतः॑ ।
वाजो॑ नो॒ विश्वै॑र्दे॒वैर्धन॑साताव॒िहाव॑तु ॥३२॥

तिस्रोऽन्नदेवत्याः तत्राद्यानुष्टुप् द्वे त्रिष्टुभौ । नोऽस्माकं वाजोऽन्नं सप्त प्रदिशः भूरादिलोकत्रयं प्राच्यादिदिक्चतुष्कम् परावतः दूरस्थाश्चतस्रश्च महर्जनतपःसत्याख्याश्चापूरयत्विति शेषः वाशब्दश्चार्थः यद्वा अस्माकं वाजोऽन्नं सप्त प्रदिशश्चतस्रो महराद्याश्चावतु प्रीणातु प्रशब्देन प्रकृष्टं लोकत्रयं दिशः प्राच्याद्याः परावच्छब्दो दूरार्थः महरादयो हि लोकत्रयमतीत्य वर्तन्ते अस्मद्दत्तान्नेन सप्त लोका दिक्चतुष्कं च तृप्यत्वित्यर्थः । किं च धनसातौ षन्सम्भक्तौ क्तिनन्तो निपातः धनस्य सातौ सम्भजनकाले प्राप्ते वाजोऽन्नं नोऽस्मान्विश्वैर्देवैः सहावतु पालयतु इहास्मिन् लोके यज्ञे वा यदास्माकं धनेच्छा जायते तदास्माकं देवतर्पणाद्धनं बह्वन्नमस्त्विति वाक्यार्थः ॥३२॥

वाजो॑ नोऽअ॒द्य प्रसु॑वाति॒ दानं॒ वाजो॑ दे॒वाँ२॥ऽऋ॒तुभि॑ः कल्पयाति ।
वाजो॒ हि मा॒ सर्व॑वीरं ज॒जान॒ विश्वा॒ आशा॒ वाज॑पति॒र्जयेयम् ॥३३॥

अद्यास्मिन्दिने वाजोऽन्नमन्नाधिष्ठात्री देवता नोऽस्मान्प्रसुवाति प्रेरयतु अनुज्ञानातु दानार्थमिति शेषः (36.) अन्नदानेहास्माकं भवत्वित्यर्थः । वाजः ऋतुभिः कालैः सह देवान्कल्पयाति यथास्थानं कल्पयतु लेटोऽडाटौ यस्मिन्काले यो देवो यष्टव्यस्तं तत्र यजत्वित्यर्थः । हि चकारार्थो वाजश्च मा मां सर्ववीरं सर्वे वीराः पुत्रपौत्रादयो यस्य स सर्ववीरस्तादृशं जजान जनयतु छन्दसि लुङ्लङ्लिटः पुत्रादियुतं मां करोत्वित्यर्थः । ततो वाजपतिः समृद्धान्नः सन्नहं विश्वा आशा सर्वा दिशो जयेयमन्नदानेन सर्वा दिशो वशीकुर्यामित्यर्थः ॥ ३३ ॥

वाजः पुरस्तादुत मध्यतो नो वाजो देवान्हविषा वर्धयाति ।

वाजो हि मा सर्ववीरं चकार सर्वा आशा वाजपतिर्भवेयम् ॥ ३४ ॥

वाजोऽन्नं नोऽस्माकं पुरस्तादस्तु उतापि च नोऽस्माकं मध्यतो गृहमध्ये च वाजोऽस्तु । नोऽस्माकं वाजो हविषा कृत्वा देवान्वर्धयाति वर्धयतु पुष्णातु । हि चार्थे वाजो मां सर्ववीरं पुत्रादियुतं चकार करोतु । वाजपतिरन्नपालकः सन्नहं विश्वा (37.) आशा सर्वा दिशो भवेयम् दिग्रूपता व्यापकता प्रार्थ्यते यद्वा विश्वा (37.) आशा भवेयं प्राप्नुयाम् वशीकुर्यामित्यर्थः । भू प्राप्तौ ॥ ३४ ॥

सं मा सृजामि पयसा पृथिव्याः सं मा सृजाम्यद्भिरोषधीभिः ।

सोऽहं वाजꣳ सनेयमग्ने ॥ ३५ ॥

द्वे विराजौ । दशकास्त्रयो विराडेकादशका वेत्युक्तेरेकादशाक्षरत्रिपादा विराट् तृतीयो व्यूहेन दशकस्तेनैकोना । सोऽहमिति तच्छब्दश्रवणाद्यदोऽध्याहारः हे अग्ने योऽहं पृथिव्याः पयसा पृथिवीसम्बन्धिरसेन मामात्मानं संसृजामि संयोजयामि । अद्भिरोषधीभिश्च मां संसृजामि । सोऽहं संसृष्टपयोऽबोषधिशरीरः सन्वाजमन्नं सनेयं सम्भजेयम् । यद्वा व्यत्ययेनास्मच्छब्दस्य युष्मदादेशः हे अग्ने योऽहं त्वं पृथिव्याः पयसाद्भिरोषधीभिश्च त्वां संसृजामि होमेन सोऽहं वाजं सनेयम् ॥ ३५ ॥

पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः ।

पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ ३६ ॥

हे अग्ने त्वं पृथिव्यां पयो रसं धाः धेहि स्थापय दधातेर्लुङि मध्यमैकवचने रूपम् बहुलं छन्दस्यमाङ्योगेऽपीति [पा° ६. ४. ७५.] अडभावः । ओषधीषु च पयो धाः । दिवि स्वर्गे च पयो धाः । अन्तरिक्षे च पयो धाः । किं च मह्यं मदर्थे प्रदिशः दिशो विदिशश्च पयस्वतीः पयस्वत्यो रसयुताः सन्तु आकृतिपरिणामिन पृथिव्यादयो ममाभीष्टदा भवन्त्वित्यर्थः ॥ ३६ ॥

a. दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम् ।

b. सर॑स्वत्यै वा॒चो य॒न्तुर्य॒न्त्रेणा॒ग्नेः साम्रा॑ज्येना॒भिषि॑ञ्चामि ॥ ३७ ॥

का° [१८. ५. ६-१.] स्रुवं प्रास्य परिश्रित्स्पृक् कृष्णाजिनमास्तीर्य पुच्छादुत्तरं शेषेऽपः कृत्वाभिषेकसामर्थ्यात् क्षीरोदके वा वाजपेयिकानीति श्रुतेस्तत्राभिषिच्यते ब्रह्मवर्चसकामश्चित्यन्वारब्धो देवस्य त्वेति । अस्यार्थः । कर्मापवर्गे औदुम्बरं चतुष्कोणं स्रुवमाहवनीये प्रक्षिप्याग्निपुच्छादुत्तरदिशि परिश्रित्संलग्नं प्राग्ग्रीवमुत्तरलोम कृष्णाजिनमास्तीर्य तत्र स्थितो ब्रह्मवर्चसकामो यजमानश्चयनकृतान्वारम्भो ऽध्वर्युणा सर्वौषधशेषेणाभिषिच्यते । किं कृत्वा सर्वौषधशेषेऽपो जलानि (38.) कृत्वा अभिषेकस्यैव द्रव्यसाध्यत्वात् (39.) अयं पूर्वपक्षः सिद्धान्तमाह क्षीरोदके वेति वा पूर्वपक्षनिरासे शेषे जलसेको न यतस्तत्र क्षीरोदके विद्येते (40.) वाजपेयिकानीति श्रुतेः [१. ३. ४. ७.] अत्र वाजपेयसम्बन्धीनि वाजप्रसवीयानि श्रूयन्ते तत्रोदकक्षीरे स्त एव औदुम्बरे पात्रेऽप आसिच्य पयश्चेत्युक्तेः [कात्या° १४. ५. १६.] अतस्तस्मिन्मिश्रेणैवाभिषेको न जलसेक इत्यर्थः ॥ देवस्य त्वा । व्याख्यातम् ॥ सरस्वत्यै लिङ्गोक्तदेवतं यजुः । सरस्वत्यै षष्ठ्यर्थे चतुर्थी सरस्वतीसम्बन्धिन्या वाचो वाण्या यन्तुर्नियन्तुः प्रजापतेः यन्त्रेण नियमेन अग्नेश्च साम्राज्येन चक्रवर्तित्वेन हे यजमान त्वामभिषिञ्चामि मत्कृताभिषेकेण वाक्सिद्धिरैश्वर्यं साम्राज्यं च तव सम्पद्यन्तामित्यर्थः ॥ ३७ ॥

X. ऋ॒ता॒षाडृ॒तधा॑मा॒ग्निर्ग॑न्ध॒र्वस्तस्यौष॑धयोऽप्स॒रसो॒ मुदो॒ नाम॑ ।

स न॑ इ॒दं ब्रह्म॑ क्ष॒त्रं पा॑तु तस्मै॒ स्वाहा॒ वाट्ताभ्यः॒ स्वाहा॑ ॥ ३८ ॥

का॰ [१८.५.१६.] द्वादशगृहीतं विग्राहं जुहोत्यृताषाडिति प्रतिस्वाहाकारं राष्ट्रभृतो वाट्कारान्तः पूर्वः-पूर्वो मन्त्रः । आज्याद्वादशगृहीतं गृहीत्वा विभज्य द्वादशांशं कृत्वा ऋतेत्यादिद्वादशमन्त्रैः (41.) प्रतिस्वाहाकारं राष्ट्रभृत्संज्ञा आहुतीर्जुहोति व्यतिषक्तेषु द्वादशमन्त्रेषु पूर्वो मन्त्रः स्वाहा वाडित्यन्तः उत्तरस्ताभ्यः स्वाहेत्यन्तः ततो मन्त्रे यानि पुंलिङ्गानि स न इदं ब्रह्मेत्यादीनि तानि व्यवहितपठितान्यप्यपकृष्य (42.) पठित्वा पूर्वो मन्त्रः सम्पाद्यः यानि च स्त्रीलिङ्गानि तस्यौषधयोऽप्सरस इत्यादीनि तान्युत्कृष्योत्तरो (43.) मन्त्रः सम्पाद्य इत्यर्थः ॥ द्वादश यजूंषि गन्धर्वाप्सरोदेवत्यानि । तत्रायं विभागः । ऋताषाडृतधामाग्निर्गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाडिति वाडन्तः पूर्वः-पूर्वो मन्त्रः तस्यौषधयो ऽप्सरसो मुदो नाम ताभ्यः स्वाहेति स्वाहान्त उत्तर-उत्तरो (44.) मन्त्रः पूर्वो गन्धर्वदेवत्यः उत्तरोऽप्सरोदेवत्यः । एवं पञ्चकण्डिकास्वप्यग्रे मन्त्रविभागो ज्ञेयः । तथा च श्रुतिः [९.४.१.६.] पुंसे (45.) पूर्वस्मै जुहोत्यथ स्त्रीभ्यः पुमांसं तद्वीर्येणादधात्येकस्मा इव पुंसे जुहोति बह्वीभ्य-इव स्त्रीभ्यस्तस्मादप्येकस्य पुंसो बह्व्यो जाया भवन्त्युभाभ्यां वाट्कारेण च स्वाहाकारेण च पुंसे जुहोति स्वाहाकारेणैव स्त्रीभ्यः पुमांसमेव तद्वीर्येणादधातीति ॥ तथा चैवमृताषाट् संहितः सुषुम्णः इषिरः भुज्युः प्रजापतिरिति षण्णां पूर्वमन्त्राणामृताषाडित्यादिनामका गन्धर्वा देवताः तस्यौषधयः तस्य मरीचयः तस्य नक्षत्राणि तस्यापः तस्य दक्षिणाः तस्यऋक्सामानीति षण्णामुत्तरमन्त्राणामोषध्यादिनामका अप्सरसो देवताः ॥ अथ मन्त्रार्थः । योऽग्निर्गन्धर्वः स नोऽस्माकमिदं ब्रह्म ब्राह्मणजातिमिदं क्षत्रं क्षत्रजातिं च पातु रक्षतु । कीदृशो गन्धर्वः ऋताषाट् ऋतं सत्यं सहतऽइति ऋतषाट् सत्यं सहते असत्ये कुपितो भवतीत्यर्थः सहेः साडः स इति [पा॰ ८.३.५६.] षत्वम् पूर्वपदस्य छान्दसो दीर्घः । तथा ऋतधामा ऋतं सत्यमविनश्वरं धाम स्थानं यस्य स ऋतधामा । य ईदृशोऽग्निः तस्मै अग्नये गन्धर्वाय स्वाहा वाट् वषट्कारेण सुहुतमस्त्वित्येको मन्त्रः ॥ तस्याग्नेर्गन्धर्वस्यौषधयो व्रीह्याद्या नाम नाम्ना अप्सरसः स्त्रीवत् भोग्याः । कीदृश्य ओषधयः मुदः मोदन्ते जना याभिस्ता मुदः ओषधयो वै मुद ओषधीभिर्हीदं सर्वं मोदतऽइति [९.४.१.७.] श्रु-

तेः । ओषधयोऽग्नेर्भोग्याः तथा च श्रुतिः [९.४.१.७.] अग्निर्ह गन्धर्व ओषधीभिरप्सरोभिर्मिथुनेन सहोच्चक्रामेति । ताभ्य ओषधीभ्यः स्वाहा सुहुतमस्तु ॥३८॥

सꣳहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवो नाम ।
स न इदं ब्र° ॥३९॥

यः सूर्यो गन्धर्वः स नोऽस्माकमिदं ब्रह्म क्षत्रं च पातु । कीदृशः संहितः संदधात्यहोरात्रेऽइति संहितः असौ वाऽआदित्यः सꣳहित एष ह्यहोरात्रे संदधातीति [९.४.१.८.] श्रुतेः । विश्वसामा विश्वानि सर्वाणि सामानि प्रतिपादकत्वेन यस्य स विश्वसामा सर्वसामरूपो वा । विश्वसामेत्येष ह्येव सर्वꣳ सामेति [९.४.१.८.] श्रुतेः । यदेतदर्चिर्दीप्यते तन्महाव्रतं तानि सामानीति च । तस्मै सूर्याय स्वाहा वाट् ॥ तस्य सूर्यस्य मरीचयो नामाप्सरसः तेजस्त्रसरेणवः सूर्यो ह गन्धर्वो मरीचिभिरप्सरोभिर्मिथुनेन सहोच्चक्रामेति [९.४.१.८.] श्रुतेः । कीदृश्यो मरीचयः आयुवः आ समन्ताद्युवन्ति मिश्रीभवन्त्यायुवः आयुवाना-इव हि मरीचयः प्लवन्तऽइति [९.४.१.८.] श्रुतेः ताभ्यो मरीचिभ्यः स्वाहा ॥३९॥

सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम ।
स न इदं ब्र° ॥४०॥

यश्चन्द्रमा गन्धर्वः स नोऽस्माकमिदं ब्रह्म क्षत्रं च पातु । कीदृशः सुषुम्णः शोभनं सुम्नं सुखं यस्मात् सुयज्ञियः यज्ञद्वारा सुखप्रदः याज्ञिकानां चन्द्रलोकारोहत्वात् । तथा च सूर्यरश्मिः सूर्यस्येव रश्मयः किरणा यस्य । सुषुम्ण इति सुयज्ञिय इत्येतत्सूर्यरश्मिरिति सूर्यस्येव हि चन्द्रमसो रश्मय इति [९.४.१.९.] श्रुतेः तस्मै चन्द्रमसे स्वाहा वाट् ॥ तस्य चन्द्रमसः नक्षत्राणि नाम (46.) अप्सरसः कीदृश्यः भेकुरयः भां कान्तिं कुर्वन्तीति भेकुरयः पृषोदरादित्वात्साधुः । चन्द्रमा ह गन्धर्वो नक्षत्रैरप्सरोभिर्मिथुनेन सहोच्चक्राम भेकुरयो नामेति भाकुरयो ह नामैते भाꣳ हि नक्षत्राणि कुर्वन्तीति [९.४.१.९.] श्रुतेः । ताभ्यो नक्षत्राप्सरोभ्यः स्वाहा ॥४०॥

DDDD*

इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापोऽअप्सरस ऊर्जो नाम ।
स न इदं ब्र° ॥४१॥

यो वातो वायुर्गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् सुहुतमस्तु । कीदृशो वातः इषिरः इष गतौ दिवादिः इष्यति गच्छतीति इषिरः औणादिक इरप्रत्ययः (47.) शीघ्रगमनः । विश्वव्यचाः विश्वस्मिन्व्यचो गमनं यस्य स विश्वव्यचाः सर्वतोगमनः । इषिर इति क्षिप्र इत्येतद्विश्वव्यचा इत्येष हीदꣳ सर्वं व्यचः करोतीति [९.४.१.१०.] श्रुतेः ॥ तस्यापो नामाप्सरसः वातो ह गन्धर्वोऽद्भिरप्सरोभिर्मिथुनेन सहोच्चक्रामेति [९.४.१.१०.] श्रुतेः । कीदृश्यः ऊर्जः ऊर्जयन्ति जीवयन्ति धान्योत्पादनेनेत्यूर्जः आपो वाऽऊर्जोऽद्भ्यो ह्यूर्ग्जायतऽइति [९.४.१.१०.] श्रुतेः ताभ्योऽद्भ्योऽप्सरोभ्यः स्वाहा ॥४१॥

भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसं स्तावा नाम ।
स न इदं ब्र° ॥४२॥

यो यज्ञो गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् । कीदृशो यज्ञः भुज्युः भुनक्ति पालयति भूतानीति भुज्युः यज्ञो हि सर्वाणि भूतानि भुनक्तीति [९.४.१.११.] श्रुतेः । सुपर्णः शोभनं पर्णं पतनं स्वर्गगमनं यस्य सः यज्ञे स्वर्गं गते यजमानो गच्छति ॥ तस्य यज्ञस्य दक्षिणा नाम अप्सरसः यज्ञो ह गन्धर्वो दक्षिणाभिरप्सरोभिर्मिथुनेन सहोच्चक्रामेति [९.४.१.११.] श्रुतेः । कीदृश्यः स्तावाः स्तूयते यज्ञो यजमानश्च याभिस्ताः स्तावाः दक्षिणाभिर्हि यज्ञः स्तूयतेऽथो यो वै कश्चन दक्षिणां ददाति स्तूयतऽएव स इति [९.४.१.११.] श्रुतेः । ताभ्यो दक्षिणाभ्यः स्वाहा ॥४२॥

प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्यऽऋक्सामान्यप्सरस एष्टयो नाम ।
स न इदं ब्र° ॥४३॥

यो मनोरूपो गन्धर्वः स न इदं ब्रह्म क्षत्रं च पातु तस्मै मनसे गन्धर्वाय स्वाहा वाट् हविर्दत्तम् । कीदृशो गन्धर्वः प्रजापतिः प्रजायाः पालकः । विश्व-

कर्मा विश्वं सर्वं करोतीति अन्येभ्योऽपि दृश्यन्तऽइति [पा° ३.२.७५.] करोतेर्मनिन् । स हीदꣳ सर्वमकरोदिति [१.४.१.१२.] श्रुतेः ॥ तस्य मनसो गन्धर्वस्य ऋक्सामान्यप्सरसः नाम प्रसिद्धम् । कीदृश्यः एष्टयः इष्यते काङ्क्ष्यतेऽभीष्टं याभिस्ता एष्टयः मनो ह गन्धर्व ऋक्सामैरप्सरोभिर्मिथुनेन सहोच्चक्रामिष्टयो नामित्यृक्सामानि वाऽएष्टय ऋक्सामैर्ह्याशासतऽइति नोऽस्त्वित्थं नोऽस्त्विति [१.४.१.१२.] श्रुतेः ताभ्योऽप्सरोभ्यः स्वाहा सुहुतमस्तु ॥४३॥

स नो भुवनस्य पते प्रजापते यस्य तऽउपरि गृहा यस्य वेह ।
अस्मै ब्रह्मणेऽस्मै क्षत्राय महि शर्म यच्छ स्वाहा ॥४४॥

का° [१८.५.१७.] पञ्चगृहीतं च रथशिरस्यध्यध्याहवनीयं ध्रियमाणे पञ्च कृत्वः स नो भुवनस्येति । राष्ट्रभृद्धोमानन्तरं पूर्वसंस्कृतादाज्यात्पञ्च गृहीत्वाहवनीयोपरि प्रतिप्रस्थात्रादिना धार्यमाणे रथशिरसि तदाज्यं पञ्चधा विभज्य पञ्च कृत्वो जुहोति पञ्चवारं मन्त्र इति सूत्रार्थः ॥ प्रजापतिदेवत्या प्रस्तारपङ्क्तिः आद्यौ द्वादशकावन्त्यावष्टकौ सा प्रस्तारपङ्क्तिः तृतीयोऽत्र नवकः । हे भुवनस्य पालक हे प्रजापते यस्य ते तवोपरि स्वर्गे गृहाः सन्ति वाथवा यस्य तऽइह भूलोके गृहाः सन्ति स त्वं नोऽस्माकमस्मै ब्रह्मणे ब्राह्मणायास्मै क्षत्राय क्षत्रियाय च महि महत् शर्म सुखं यच्छ देहि स्वाहा सुहुतमस्तु ॥४४॥

a. समुद्रोऽसि नभस्वानार्द्रदानुः शम्भूर्मयोभूरभि मा वाहि स्वाहा ।
b. मारुतोऽसि मरुतां गणः शम्भूर्म° ।
c. अवस्यूरसि दुवस्वाञ्छम्भूर्म° ॥४५॥

का° [१८.६.१.] वातहोमाञ्जुहोत्यञ्जलिनाहृत्य बहिर्वेदेरधो दक्षिणास्यां धुर्युत्तरत उत्तरस्यां दक्षिणातो दक्षिणाप्रष्टिः समुद्रोऽसीति प्रतिमन्त्रम् । रथहोमानन्तरं तं रथमग्नेरुत्तरतो वेदौ प्राङ्मुखमवस्थाप्य तस्य स्थानत्रये त्रीन्वायुहोमाञ्जुहोति प्रतिमन्त्रं मन्त्रत्रयेण । रथयुगदक्षिणधुरोऽधः प्रथमम् उत्तरधुरोऽधो द्वितीयम् युगमध्याधस्तृतीयम् । किं कृत्वा बहिर्वेदेरञ्जलिना वा तमानीयेति सूत्रार्थः ॥

वायव्यानि त्रीणि यजूंषि । त्रिलोकस्थो वायुः स्तूयते । हे वायो यस्त्वमीदृशोऽसि स त्वं मा मामभिवाहि मदभिमुखमागछ स्वाहा सुहुतं तेऽस्तु वा गतिगन्धनयोः लोट् मध्यमैकवचनम् । कीदृशः समुद्रः सम्यक् उन्दति जलैः क्लिन्नो भवतीति समुद्रः उन्दी क्लेदे रक्प्रत्ययः । नभस्वान् नभांसि नक्षत्राणि विद्यन्ते यत्र सः । आर्द्रदानुः आर्द्रं वृष्ट्यवश्यायादिकं ददातीत्यार्द्रदानुः । शम्भूः शमैहिकं सुखं भावयति प्रापयतीति शम्भूः । मयोभूः मयः पारलौकिकं सुखं भावयतीति मयोभूः स्वर्लोकरूपोऽसि असौ वै लोकः समुद्र इति श्रुतेः [९. ४. २. ५.] स मामभिवाहि ॥ मरुतां वातानामयं मारुतः । मरुतां शुक्रज्योतिःप्रभृतीनां गणः (48.) तन्निवासत्वात् अन्तरिक्षलोको वै मारुत इति [९. ४. २. ६.] श्रुतेः । शम्भूः मयोभूः त्वं मामभिवाहि पूर्ववत् ॥ अव अवनं रक्षणं सीव्यतीत्यवस्यूः षिवु तन्तुसंताने क्विप् छ्वोः शूडनुनासिके चेति [पा॰ ६. ४. १९.] ऊठि कृते यणादेशः अयं वै लोकोऽवस्यूरिति [९. ४. २. ७.] श्रुतेः भूलोकरूपोऽसि । दुवस्वान् दुवोऽन्नं हविर्लक्षणं विद्यते यस्य सः शम्भूरित्यादि पूर्ववत् ॥ ४५ ॥

यास्तेऽअग्ने सूर्ये रुचो॰ ॥ ४६ ॥ या वो देवाः सूर्ये रुचो॰ ॥ ४७ ॥

का॰ [१८. ६. ६.] नव जुहोति यास्तऽइति प्रतिमन्त्रम् । अस्यार्थः । पूर्वसंस्कृतान्याज्यात्सकृत्सकृदादाय नवाहुतीर्जुहोति यास्तेऽअग्ने या वो देवाः रुचं नः तत्वा यामि एताश्चतस्रः स्वर्णेति कण्डिकायां पञ्चयजुर्भिः पञ्चेति नव ॥ द्वे व्याख्याते [१३, २२. २३.] ॥ ४६ ॥ ४७ ॥

रुचं नो धेहि ब्राह्मणेषु रुच७ राजसु नस्कृधि ।
रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुचम् ॥ ४८ ॥

अग्निदेवत्यानुष्टुप् प्रथमो नवकः हे अग्ने नोऽस्माकं ब्राह्मणेषु अस्मत्सम्बन्धिषु विप्रेषु रुचं दीप्तिं धेहि आरोपय । नोऽस्माकं राजसु क्षत्रियेषु रुचं कृधि कुरु अशृणिवत्यादिना [पा॰ ६. ४. १०२.] हेर्धित्वम् शपो लुक् । विश्येषु वैश्येषु शूद्रेषु चास्माकीनेषु रुचं कुरु । किं च मयि विषये रुचा सह रुचं धेहि अवि-

छिन्नां रुचं धेहीत्यर्थः ॥ यद्वा ब्राह्मणराजविट्शूद्रेषु या रुक् तां नोऽस्माकं धेहि देहि । शिष्टं पूर्ववत् ॥४८॥

तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।
अहेडमानो वरुणेह बोध्युरुशंꣳस मा न आयुः प्रमोषीः ॥४९॥

वरुणदेवत्या त्रिष्टुप् शुनःशेपदृष्टा । अत्र द्वौ तच्छब्दौ वर्तेते तत्रैकस्य यच्छब्दपरिणामः कार्यः । हे वरुण यजमानः हविर्भिः दत्तैः यद्धनपुत्रादिकमाशास्ते इच्छति यत्कामस्तुभ्यं हविर्दत्ते तत् यजमानेष्टं त्वा त्वामहं यामि याचामि तत्त्वया यजमानाय दीयतामित्यर्थः यामीति याच्ञाकर्मसु [निघ० ३. १९.] पठितः अथापि वर्णलोपो भवति तत्वायामीति यास्कोक्तेराकारलोपः (49.) । कीदृशोऽहम् ब्रह्मणा त्रयीलक्षणेन वेदेन वन्दमानः त्वां स्तुवानः । किं च हे उरुशंस शंसनं शंसः स्तुतिः शंसु स्तुतौ उरुर्महान् शंसः स्तुतिर्यस्य स उरुशंसः तत्सम्बुद्धौ हे बहुस्तुते इहास्मिन्स्थाने अहेडमानः हेडते क्रुध्यति हेडमानः न हेडमानोऽहेडमानः अक्रुध्यन्सन् त्वं बोधि बुध्यस्व त्वं मत्प्रार्थनां जानीहीत्यर्थः । हुझल्भ्यो हेर्धिः वा छन्दसीति [पा० ३. ४. ८८.] हेरपित्त्वाद्गुणः धलोपश्छान्दसः । किं च नोऽस्माकमायुर्जीवनं मा प्रमोषीः मा चोरय मुष स्तेये लुङ् न माङ्योगऽइति [पा० ६. ४. ७४.] अडभावः पूर्णमायुश्च देहीत्यर्थः ॥४९॥

a. स्वर्ण घर्मः स्वाहा । b. स्वर्णार्कः स्वाहा । c. स्वर्ण शुक्रः स्वाहा ।
d. स्वर्ण ज्योतिः स्वाहा । e. स्वर्ण सूर्यः स्वाहा ॥५०॥

पञ्च यजूंष्यग्निदेवत्यानि । सूर्याहर्देववाची स्वःशब्दः । न इवार्थे । अर्काश्वमेधसंततिसंज्ञाः पञ्चाहुतयः तथा च श्रुतिः [९. ४. ३. १८.] अथार्काश्वमेधयोः संततीर्जुहोतीति अस्यार्थः अर्कोऽग्निः अश्वमेधो रविस्तयोः संततयः संतन्वन्तीति संयोजयन्तीति संततयस्ताः अग्न्यादित्यैक्यकारिका आहुतय इत्यर्थः तथा च श्रुतिः [९. ४. ३. १८.] अग्निरर्कोऽसावादित्योऽश्वमेधस्तौ सृष्टौ नानेवास्तां तौ देवा एताभिराहुतिभिः समतन्वन्त्समदधुरिति । तदनुसारेण व्याख्या यथा । न इवार्थे स्वः न

स्वरिव अहरिव दिनकरत्वात्सूर्यस्याहरुपमानम् स्वरिव दिनमिव यो घर्मः आदित्यः तं स्वाहा अग्नौ जुहोमि तमग्नाविति शेषः पूरणीयः आदित्यमग्नौ स्थापयामि असौ वाऽआदित्यो घर्मोऽमुं तदादित्यमस्मिन्नग्नौ प्रतिष्ठापयतीति [९.४.३.१९.] श्रुतेः ॥ स्वरिव सूर्य-इव योऽर्कोऽग्निस्तमादित्ये जुहोमि स्थापयामि अयमग्निरर्क इमं तदग्निममुष्मिन्नादित्ये प्रतिष्ठापयतीति [९.४.३.२०.] श्रुतेः ॥ स्वरिव स्वर्देवः नकारो निश्चितार्थः स्वर्न देव एव यः शुक्र आदित्यस्तमादित्ये एव जुहोमि स्थापयामि असौ वावादित्यः शुक्रस्तं पुनरमुत्र दधातीति [२१.] श्रुतेः ॥ स्वः स्वर्गः स इव ज्योतिरग्निः स्वर्गप्रदत्वादग्नेः स्वर्गोपमानम् तमग्निमग्नाविव जुहोमि स्थापयामि अयमग्निर्ज्योतिस्तं पुनरिह ददातीति [२२.] श्रुतेः ॥ एवमग्निं सूर्ये सूर्यमग्नौ सूर्ये च सूर्यमग्नावग्निं च संधाय किं बहुना तयोः संयोगं कृत्वा सूर्यमुत्तमं करोति स्वर्ण सूर्यः स्वाहेति । स्वः न सर्वदेवत्रूप-इव यः सूर्यस्तं स्वाहा (50.) उत्तमं करोमि अव्ययानामनेकार्थत्वात्स्वाहाशब्द उत्तमार्थः सर्वे देवा भिन्ना भ्रान्त्या भासन्ते वस्तुतः सूर्य एव नानारूपोऽस्तीतीवशब्दार्थः असौ वाऽआदित्यः सूर्योऽमुं तदादित्यमस्य सर्वस्योत्तमं दधाति तस्माद्विषोऽस्य सर्वस्योत्तम इति [९.४.३.२३.] श्रुतेः । एवं पञ्चाहुतिभिरग्न्यर्कयोरैक्यं विधाय सर्वदेवेष्वर्कस्योत्तमत्वं कृतमिति भावः ॥५०॥

XI. अग्निं युनज्मि शवसा घृतेन दिव्यꣳ सुपर्णं वयसा बृहन्तम् ।
तेन वयं गमेम ब्रध्नस्य विष्टपꣳ स्वो रुहाणा अधि नाकमुत्तमम् ॥५१॥

का° [१८.६.१६.] अग्नियोजनं प्रातरनुवाकमुपाकरिष्यन्परिधीनालभ्य यथापूर्वमग्निं युनज्मीति प्रत्यृचम् । अस्यार्थः । प्रातरनुवाकोपाकरणात्प्राक् यथापूर्वमित्युपधानक्रमेण ऋक्त्रयेण प्रत्येकं परिधीन्स्पृष्ट्वाग्नियोजनं करोतीति ॥ अग्निदेवत्यास्तिस्रः द्वे त्रिष्टुभौ तृतीया पङ्क्तिः । शवसा बलेन घृतेनाज्येन चाहमग्निं युनज्मि संयोजयामि युजिर्योगे रुधादिभ्यः श्नम् । कीदृशमग्निम् दिव्यं दिवि भवो दिव्यस्तम् । सुपर्णं शोभनं पर्णं पतनं यस्य तं सुगमनम् । वयसा धूमेन बृहन्तं वह्निर्धूमेन महान्भवति अग्नेर्वै धूमो जायते धूमादभ्रमभ्राद्वृष्टिरिति [५.३.५.१७.] श्रुतेः । किं च

तेन युक्तेनाग्निना ब्रध्नस्यादित्यस्य विष्टपं लोकं वयं गमेम गच्छेम । गमेराशीर्लिङि लिङ्याशिष्यङिति [पा° ३.१.८६.] अङ्प्रत्यये उत्तमबहुवचने रूपम् । विगतस्तापो दुःखं यस्य स विष्टपो लोकः ततोऽधि उपरि ब्रध्नविष्टपोपरिष्टात् स्वो रुहाणाः स्वर्गं लोकमारोहन्तः सन्त उत्तमं नाकं दुःखरहितं श्रेष्ठं लोकं गमेमेत्यनुवर्तते । रोहतेर्बहुलं छन्दसीति शपि लुप्ते शानचि रूपम् रुहाणा इति । नास्त्यकं दुःखं यत्र स नाकः ॥५१॥

इ॒मौ ते॑ प॒क्षाव॒जरौ॑ पत॒त्रिणौ॒ याभ्या॒ꣳ रक्षा॒ꣳस्यप॒हꣳस्य॑ग्ने ।
ताभ्यां॑ पतेम सु॒कृता॑मु लो॒कं यत्र॒ऽऋष॑यो ज॒ग्मुः प्र॑थम॒जाः पु॑रा॒णाः ॥५२॥

हे अग्ने यौ ते तवेमौ पक्षौ उत्तरदक्षिणौ । कीदृशौ अजरौ नास्ति जरा ययोस्तौ सदा नवौ । पतत्रिणौ पतत्रं पतनं ययोरस्ति तौ उत्पतनशीलौ । याभ्यां पक्षाभ्यां रक्षांसि राक्षसान् त्वमपहंसि नाशयसि । उ एवार्थे । ताभ्यां पक्षाभ्यां वयं सुकृतां पुण्यकृतामेव लोकं पतेम उत्पतेम । यत्र सुकृल्लोके प्रथमजाः प्रथमोत्पन्नाः पुराणाः पुरातना ऋषयो मुनयो जग्मुः ॥५२॥

इन्दु॒र्दक्षः॑ श्ये॒न ऋ॒तावा॒ हिर॑ण्यपक्षः शकु॒नो भु॑र॒ण्युः ।
म॒हान्त्स॒धस्थे॑ ध्रु॒व आ निष॑त्तो॒ नम॑स्तेऽअस्तु॒ मा मा॑ हिꣳसीः ॥५३॥

हे अग्ने यस्त्वमेतादृशस्तस्मै ते तुभ्यं नमोऽस्तु त्वं मां मा हिंसीः हिंसां मा कुरु । कीदृशस्त्वम् इन्दुः इन्दति ईष्टे इन्दुः ईश्वरः इदि परमैश्वर्ये चन्द्रवदाह्लादको वा । दक्षः उत्साहवान् श्येनः श्येनपक्षिवदाकाशधारिवाद्येनः (51.) यद्वा शंसनीयगतिः । ऋतावा ऋतं सत्यं यज्ञ उदकं वास्यास्ति ऋतवा संहितायां दीर्घः । हिरण्यपक्षः सुवर्णशकलैर्हिरण्यरूपौ पक्षौ यस्य । शकुनः पक्ष्याकारः । भुरण्युः बिभर्तीति भुरण्युः भृञ औणादिकः कन्युप्रत्ययः पोषकः । महान्प्रभावेण । ध्रुवः स्थिरः । सधस्थे ब्रह्मणा सह स्थाने आ निषत्तः समन्तान्निषण्णः । सह तिष्ठन्ति यत्रेति सधस्थं सध मादस्थयोश्छन्दसीति [पा° ६.३.९६.] सधादेशः । नसत्तेत्यादिना [पा° ८.२.६१.] निष्ठायां निपातः ॥५३॥

दिवो मूर्धासि पृथिव्या नाभिरूर्गपामोषधीनाम् ।
विश्वायुः शर्म सप्रथा नमस्पथे ॥५४॥

का° [१८. ६. १७.] अग्निमारुतस्तोत्रस्य पुरस्ताद्विमोचनं परिधिसंध्योर्दिवो मूर्धेति प्रत्यृचम् । यज्ञायज्ञियस्तोत्रप्रकरणात्प्राक् दिवो मूर्धेति ऋग्द्वयेन दक्षिणोत्तरयोः परिधिसंध्योरुपस्पृश्याग्निविमोचनं करोतीति सूत्रार्थः ॥ आग्नेयी परोष्णिक् आद्यावष्टकौ तृतीयो द्वादशकः सा त्रिपादा परोष्णिक् अत्राद्यो दशकः द्वितीयः सप्तकः तृतीयो द्वादशकस्तेनैकाधिका । हे अग्ने यस्त्वमीदृशोऽसि तस्मै पथे मार्गाय स्वर्गमार्गरूपाय नमो नमस्कारोऽस्तु अग्निमुखो हि देवयानपन्थाः श्रुतावुक्तः । कीदृशस्त्वम् दिवो मूर्धा स्वर्लोकस्योत्तमाङ्गस्थानीयः । पृथिव्या नाभिः मध्यस्थानीयः नह्यतेऽनया सा नाभिः नह्यति बध्नाति जीवनेनेति नाभिः नहो भश्चेति [उणा° ४. १२७.] इन्प्रत्ययो (52.) णिश्च (53.) भान्तादेशः निश्चादाद्युदात्तः निृत्यादि नित्यमित्युक्तेः [पा° ६. १. १९७.] । पृथ्वी लोकानां जीवनमग्निर्निबन्धनमिति भावः । अपां जलानामोषधीनां व्रीह्यादीनां च ऊर्क् रसः सारः । विश्वायुः विश्वं सर्वमायुर्यस्य सः बहुजीवनः यद्वा विश्वेषां सर्वेषां प्राणिनामायुर्जीवनम् तदधि जीवनत्वात्तेषामिति भावः । शर्म शरणभूतः सर्वेषाम् सप्रथाः प्रथनं प्रथो विस्तारः प्रथसा सह वर्तमानः सप्रथाः तिर्यगूर्ध्वमधश्चानवच्छिन्नप्रभावः । ईदृशायाग्नये नमः ॥५४॥

विश्वस्य मूर्धन्नधि तिष्ठसि श्रितः समुद्रे ते हृदयमप्स्वायुरपो दत्तोदधिं भिन्त ।
दिवस्पर्जन्यादन्तरिक्षात्पृथिव्यास्ततो नो वृष्ट्याव ॥५५॥

आग्नेयी महापङ्क्तिर्जगती आद्यो व्यूहेन षडक्षरः द्वितीयः सप्तकः तृतीयो दशकः चतुर्थोऽष्टकः पञ्चमो नवकः षष्ठो नवकः एवमष्टचत्वारिंशदर्णा महापङ्क्तिः । हे अग्ने स त्वं नोऽस्मान् वृष्ट्या कृत्वा अव रक्ष वृष्टिं कृत्वा पालयेत्यर्थः । किं कृत्वा दिवो द्युलोकात् पर्जन्यान्मेघात् अन्तरिक्षादाकाशात् पृथिव्याः भूमेः सकाशाद्वान्यत्र वा यत्र जलं ततः प्रदेशाज्जलमादायेति शेषः । यस्त्वं श्रितः इन्द्रियाणि सुषुम्णां नाडीमाश्रितः सन् विश्वस्य मूर्धन् मूर्धनि शिरसि अधितिष्ठसि मूर्धन्-

शब्दात्सुपां सुलुगिति [पा° ७.१.३९.] सप्तम्या लुक् सर्वेषां भूर्ध्नि उपरि रविरूपेण दीप्यसऽइत्यर्थः । यस्य ते तव समुद्रे समुनत्त्यार्द्रीभवतीति समुद्रोऽन्तरिक्षं तत्र हृदयं मध्यभागः भुवि पादौ स्वर्लोके शिरोऽन्तरिक्षे मध्यभागः त्रिलोकव्यापीत्यर्थः ॥ यस्य ते अप्सु जलेषु आयुः जीवनं जलाधीनं जीवनं तव जलाद्धृता जायन्ते ततोऽग्निरित्यग्निर्जलाधीनजीवनत्वम् । किं बहुना हे अग्ने अपो जलानि दत्त देहि उदधिं भित्त भिन्धि । उदकानि दधाति धीयन्ते वात्रेत्युदधिर्मेघः तं विदार्य मेघं भिन्धि जलं देहीत्यर्थः पेषंवासवाहनधिषु चेति [पा° ६.३.५८.] उदकस्योदादेशः । दत्त भित्तेत्युभयत्र व्यत्ययो बहुलमिति [पा° ३.१.८५.] वचनव्यत्ययः ॥५५॥

इ॒ष्टो य॒ज्ञो भृगु॑भिराशी॒र्दा वसु॑भिः ।
तस्य॑ न इ॒ष्टस्य॑ प्री॒तस्य॒ द्रवि॑णे॒हाग॑मेः ॥५६॥

का° [१८.६.११.] अधरसमिष्टयजुरन्तऽइष्टो यज्ञ इति प्रत्यृचमपरे । समिन्द्र णइत्यादिनवानामधरसमिष्टयजुषां [८.१५.] होमान्ते इष्टो यज्ञः इष्टोऽअग्निरिति द्वाभ्यामपरे आग्निके द्वे समिष्टयजुषी जुहोतीति सूत्रार्थः ॥ यज्ञदेवत्या उष्णिग्गालवदृष्टा अष्टविंशत्यक्षरत्वात् । अध्वर्युर्द्रव्यं प्रत्याह । हे द्रविण द्रव्य तस्य यजमानस्य इह सदने त्वमागमेः आगच्छ आङ्पूर्वाद्गमेश्छत्वाभावे लिङि मध्यमैकवचने रूपम् । कीदृशस्य यजमानस्य नोऽस्माकमिष्टस्य वल्लभस्य प्रीतस्य अस्मासु स्निग्धस्य । तस्य कस्य यस्य यजमानस्य यज्ञो भृगुभिः भृगुगोत्रैर्ब्राह्मणैः वसुभिर्वस्वादिदेवैश्च इष्टः सम्पादितः । कीदृशो यज्ञः आशीर्दाः आशिषोऽभिलषितपदार्थान्ददातीत्याशीर्दाः क्विप् । विप्रैर्देवैर्यस्य यज्ञः कृतस्तस्य गृहे त्वं धन सर्वदा तिष्ठेत्यर्थः ॥५६॥

इ॒ष्टोऽअ॒ग्निराहु॑तः पिपर्तु (54.) न इ॒ष्टᳬ ह॒विः ।
स्व॒गेदं दे॒वेभ्यो॒ नमः॑ ॥५७॥

अग्निदेवत्या गायत्री गालवदृष्टा । अग्निर्नोऽस्माकमिष्टमभिलषितं पिपर्तु पूर-

यतु ददावित्यर्थः नोऽस्मान्पालयत्विति वा पृ पालनपूरणयोः लोट् ह्वादिवाद्द्वित्वम् अर्तिपिपर्त्योश्चेति [पा° ७.४.७७.] अभ्यासस्येत्वम् । कीदृशोऽग्निः इष्टः कृतयागः । हविः विभक्तिव्यत्ययः हविषा आहुतः समन्तात्तर्पितः । किं च इदं नमः हविः समिष्टयजुर्लक्षणं देवेभ्योऽर्थायास्तु । कीदृशं स्वगा स्वयं गमनशीलं विभक्तेराकारः ॥५७॥

XII. यदाकूतात्समसुस्रोद्धृदो वा मनसो वा सम्भृतं चक्षुषो वा ।
तदनु प्रेत सुकृतामु लोकं यत्रऽऋषयो जग्मुः प्रथमजाः पुराणाः ॥५८॥

का° [१८.६.२२.] हृदयशूलान्ते स्रुवाहुतीर्जुहोति यदाकूतादिति प्रत्यृचमष्टौ । साग्निचित्ये मैत्रावरुण्यनूबन्ध्यावश्यमेका भवति तेन तस्या हृदयशूलसम्बन्धिसमिदाधानान्ते कृते यदाकूतादिति प्रत्यृचमष्टौ स्रुवाहुतीर्जुहोतीति सूत्रार्थः ॥ अष्टावृच अग्निदेवत्या विश्वकर्मदृष्टाः आद्या जगती त्रयः पादा एकादशार्णाः चतुर्थश्चतुर्दशार्णः । हे ऋत्विजो यूयं तदनु प्रेत प्रजापतिकृतं कर्मानुगच्छतानुसरत प्रजापतिशरीराद्उत्पन्नं यत्कर्म वैदिकं तत्कुरुतेत्यर्थः । तत्र कर्मणि कृते सति सुकृतां पुण्यवतां लोके उ एवार्थे स्वर्गमेव प्रेतेत्यनुषङ्गः स्वर्गं गच्छत । प्रथमजाः पूर्वोत्पन्नाः पुराणाः पुरापि नवा अजरामरा ऋषयो यत्र लोके जग्मुः । तत्किं कर्म यत्प्रजापतेराकूतादभिप्रायात् हृदो वा हृदयश्च बुद्धेः मनसः संकल्पात्मकात् चक्षुषः चक्षुरुपलक्षणम् (55.) चक्षुरादीन्द्रियेभ्यश्च समसुस्रोत् संस्रुतं प्रसृतम् ब्रह्मणा यत्सर्वात्मना सृष्टं कर्म तत्कृत्वा स्वर्लोकं गच्छतेत्यर्थः । कीदृशं कर्म सम्भृतं सम्भारैः पुष्टं पूर्णसामग्रीकम् ॥ मनःप्रवर्तक आत्मनो धर्म आकूतम् । समसुस्रोदिति स्रु गतावित्यस्माल्लङ् बहुलं छन्दसीति [पा° २.४.७६.] जुहोत्यादित्वात् श्लौ द्वित्वम् ॥५८॥

एतꣳ सधस्थ परि ते ददामि यमावहाच्छेवधिं जातवेदाः ।
अन्वागन्ता यज्ञपतिर्वोऽअत्र तꣳ स्म जानीत परमे व्योमन् ॥५९॥

तिस्रस्त्रिष्टुभः । सह तिष्ठन्ति देवा यत्रेति सधस्थः स्वर्गः तं प्रार्थयते । हे स-

धस्थ एतं यजमानं ते तव परिददामि । जातवेदा अग्निर्यं शेवधिं सुखनिधिमाकृतिपरिणामभूतमावहात् आवहति प्रापयति तं यज्ञफलभूतं च सुखनिधिं तव परिददामि । अभयं रक्षणार्थं तुभ्यं ददामीत्यर्थः ॥ एवं यजमानं यज्ञं च स्वर्गे समर्प्य तत्स्थान्देवानर्थयते अन्वितिं हे देवा यज्ञपतिर्यजमानो वो युष्मानन्वागन्ता कर्मसमाप्तौ भवतः प्रत्यागमिष्यति लुट् । अत्रास्मिन्परमे व्योमन् उत्कृष्टे व्योम्नि आकाशे स्वर्गाख्ये आगतं तं यजमानं यूयं जानीत स्मेति पादपूरणः स्वर्गागतः स भवद्भिः सम्भावनीय इत्यर्थः ॥ आवहात् वहतेर्लेट् इतश्च लोपः परस्मैपदेष्विति [पा° ३.४.९७.] तिप इलोपः (56.) लेटोऽडाटाविति [पा° ३.४.९४.] अडागमः । शेव इति सुखनाम [निघ° ३.६.] शेवं धीयतेऽस्मिन्निति शेवधिः ॥५९॥

एतं जानाथ परमे व्योमन्देवाः सधस्था विद रूपमस्य ।

यदागच्छात्पथिभिर्देवयानैरिष्टापूर्ते कृणवाथाविरस्मै ॥ ६० ॥

सह तिष्ठन्ति सधस्थाः । परमे व्योमन् उत्कृष्टे स्वर्गभूते व्योम्नि सह स्थिता हे देवाः एतं यजमानं जानाथ जानीत लेटो मध्यमबहुवचने आडागमे रूपम् । किं च अस्य यजमानस्य रूपं विद वित्त जानीत प्रत्यभिज्ञानाय वेत्तेर्विकरणव्यत्यये शः वचनव्यत्ययश्च । विदितरूपोऽयं यद्यदा देवयानैः पथिभिः स्वर्गमार्गैः आगच्छात् आगच्छति इलोपाडागमौ तदा इष्टापूर्ते श्रौतस्मार्तकर्मफले अस्मै यजमानायाविः कृणवाथ प्रकटीकुरुत दत्तेत्यर्थः देवा यान्ति येषु ते देवयानाः करणाधिकरणयोश्चेति [पा° ३.३.११७.] ल्युट् । उपभोगस्थानभेदाद्बहुत्वं पूजार्थं वा ॥ इष्टं च पूर्तं च इष्टापूर्ते देवसम्बन्धिकर्मत्वाद्देवताद्वन्द्वे चेति [पा° ६.३.२६.] पूर्वपदस्यानङ् आपूर्तं चेति वा । कृणवाथ कृञ् कृतौ स्वादिः आडागमश्च ॥ ६० ॥

उद्बुध्यस्वाग्ने प्रतिजा° ॥ ६१ ॥ येन वहसि सहस्रं ये° ॥ ६२ ॥

उद्बुध्यस्व । त्रिष्टुप् ॥ येन वहसि । अनुष्टुप् ॥ एते द्वे व्याख्याते [१५.५४.५५.] ॥ ६१ ॥ ६२ ॥

प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा ।

ऋचेमं यज्ञं नो नय स्वर्देवेषु गन्तवे ॥ ६३ ॥

तिस्रोऽनुष्टुभः । अग्ने नोऽस्माकमिमं यज्ञं स्वः स्वर्गं नय । किं कर्तुम् देवेषु गन्तवे देवान्प्रति गन्तुं प्राप्तुम् तुमर्थे तवेन्प्रत्ययः नित्त्वादाद्युदात्तः । कीदृशं प्रस्तरेण स्रुगाधारभूतेन दर्भमुष्टिना परिधिना परिधिभिस्त्रिभिर्बाहुमात्रैः काष्ठैः स्रुचा जुह्वादिकया वेद्या मितया वेदेर्भूम्या वा बर्हिषा दर्भपूलकेन (57.) ऋचा ऋगादिभिर्मन्त्रैश्चोपलक्षितमिति शेषः ॥ ६३ ॥

यद्दत्तं यत्परादानं यत्पूर्तं याश्च दक्षिणाः ।
तदग्निर्वैश्वकर्मणः स्वर्देवेषु नो दधत् ॥ ६४ ॥

वैश्वकर्मणः विश्वकर्मा प्रजापतिस्तदीयः विश्वकर्मैव वैश्वकर्मणः स्वार्थे तद्धितो वा विश्वकर्ता अग्निः नोऽस्माकं तद्दानं स्वः स्वर्लोके देवेषु मध्ये दधत् दधातु स्थापयतु फलभोगायेत्यर्थः । तत्किम् यद्दत्तं भार्यापुत्रजामातृभगिनीतत्पत्यादिभ्यो दत्तम् यच्च परादानं परोपकाराय दयादिनान्धकृपणेभ्यो दत्तम् यच्च पूर्तं स्मृतिविहितं विप्रभोजनकूपारामादि याश्च दक्षिणाः यज्ञसम्बन्धिन्यः । यज्ञे गते यज्ञाङ्गत्वाद्यजमानः स्वर्गत एव ॥ ६४ ॥

यत्र धारा अनपेता मधोर्घृतस्य च याः । तदग्निर्वैश्व° ॥ ६५ ॥

वैश्वकर्मणः विश्वकर्ताग्निस्तत् तत्र स्वः स्वर्गे देवेषु मध्ये नोऽस्मान्दधत् दधातु स्थापयतु तत्र यत्र देशे मधोर्मधुनो घृतस्य च याश्चान्याः पयोदध्यादीनां धाराः प्रवाहा अनपेता न अपेता उपभुज्यमाना अप्यक्षीणा वर्तन्ते ॥ ६५ ॥

अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं मऽआसन् ।
अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥ ६६ ॥

अग्न्यहितवादिनी (58.) त्रिष्टुप् देवश्रवोदेववातदृष्टा यज्ञेऽविनियुक्ता । अग्निप्रकरणत्वाद्यजमान आत्मानमग्नित्वेन ध्यायति । जन्मना उत्पत्त्यैवाहमग्निरस्मि अग्निरूपोऽस्मि । नाम विभक्तिलोपः नाम्ना हविः पुरोडाशादिकमप्यहमस्मि । कीदृशोऽहं जातं-जातं विन्दतऽइति जातवेदाः उत्पन्नस्य सर्वस्य स्वामीत्यर्थः । अर्कः

अर्चनीयो यज्ञोऽप्यर्कमेव । त्रिधातुः त्रयो धातव ऋग्यजुःसामलक्षणा यस्य । रज-सो विमानः रज उदकं तस्य निर्माता विमिमीतऽइति विमानः नन्द्यादित्वात्कर्त-रि ल्युट् । अजस्रः न जसति क्षीयतऽइत्यजस्रः अनुपक्षीणः जसु उपक्षये नमिक-म्पीत्यादिना [पा° ३.२.१६७.] रप्रत्ययः । घर्मः घृ क्षरणदीप्त्योः जिघर्ति घर्मः औ-णादिको मप्रत्ययः दीप्तः आदित्यरूपः क्षरणो मेघरूपो वा । एतादृशोऽग्निरर्कं य-तस्ततो घृतं मे मम चक्षुर्नेत्रं घृतहोमिनं पश्यामीति भावः अमृतं हविर्मम आ-सन् आस्ये मुखे पद्दन्न इत्यादिना [पा° ६.१.६३.] आस्यशब्दस्यासन्नादेशः सप्तम्या लुक् मन्मुखे हविर्जुहुतममृतं करोमीति भावः । एवमात्मन्यग्न्यर्कितं (59.) स-म्पाद्यम् ॥ ६६ ॥

a. ऋचो नामास्मि यजूꣳषि नामास्मि सामानि नामास्मि ।

b. येऽअग्नयः पाञ्चजन्या अस्यां पृथिव्यामधि ।

तेषामसि त्वमुत्तमः प्र नो जीवातवे सुव ॥ ६७ ॥

ऋचः । आत्मदेवत्यं यजुः सप्तदशाक्षरम् । यज्ञेऽस्य विनियोगो नास्ति । यज-मानोऽनेनात्मनि वेदत्रयात्मकत्वं सम्पादयति । नाम नाम्नाहमृचोऽस्मि ऋग्वेदरू-पोऽस्मि यजूंषि नामास्मि यजुर्वेदरूपोऽस्मि सामानि नामास्मि सामवेदो नाम्ना-स्मि ॥ का° [१८. ६. २३.] चित्रोऽसीति चित्यनाम कृत्वोपतिष्ठते येऽअग्नय इति । चित्यस्याग्नेः चित्रोऽसीति नाम विधाय तमुपतिष्ठते कर्मशेषं समाप्येदमुपस्थानं कार्यमुपस्थानानन्तरं समारोपविधानादिति सूत्रार्थः ॥ अग्निदेवत्यानुष्टुप् अस्यां पृ-थिव्यामधि अस्याः पृथिव्या उपरि ये अग्नयो वर्तन्ते । कीदृशाः पाञ्चजन्याः पञ्चज-ना मनुष्यास्तेभ्यो हिताः पाञ्चजन्याः यद्वा पञ्च जनाः समूहाः चितिरूपा येषां ते पञ्चजनास्तऽएव पाञ्चजन्याः स्वार्थे तद्धितः । हे चित्याग्ने तेषां पृथिवीस्थानाम-मीषां त्वमुत्तमोऽसि श्रेष्ठोऽसि अतो नोऽस्मान् जीवातवे चिरजीवनाय प्रसुव प्रे-रय चिरं जीवयेत्यर्थः जीवेरातुरिति [उणा° १.७९.] आतुप्रत्ययः व्यवहिताश्चेति [पा° १.४.८२.] प्रेत्यस्य सुवेत्यनेन व्यवधानम् ॥ ६७ ॥

XIII. वार्त्रहत्याय शवसे पृतनाषाह्याय च । इन्द्र त्वावर्तयामसि ॥ ६८ ॥

का० [१७.७.१.२.] चितिं पुरीषवतीमुपतिष्ठते वार्त्रहत्यायेति सप्तभिरष्टाभिरेके दशभिर्वा । मृत्पूरणानन्तरमेतां चितिमुपतिष्ठते सप्तभिरष्टाभिरेकेषां मते दशऽभिर्वेति सूत्रार्थः ॥ आग्नेय्यः सप्त ऋच इन्द्रदृष्टाः आद्ये द्वे वृत्रहेन्द्रदेवत्ये गायत्रीत्रिष्टुभौ विश्वामित्रेणापि दृष्टे । हे इन्द्र वयं त्वा त्वामावर्तयामसि आवर्तयामः इदन्तो मसि उपतिष्ठामहे । किमर्थं शवसे बलाय त्वद्बलवृद्ध्यै इत्यर्थः । कीदृशाय शवसे वार्त्रहत्याय वृत्रस्य दैत्यस्य हत्यायां हनने कुशलं वार्त्रहत्यं वृत्रघातसमर्थमित्यर्थः । च पुनः पृतनाषाह्याय पृतना शत्रुसेना सह्यतेऽभिभूयते येन तत्पृतनाषाह्यं तस्मै शत्रुसेनापराभवसमर्थायेत्यर्थः ॥ ६८॥

सहदानुं पुरुहूत क्षियन्तमहस्तमिन्द्र सम्पिणक्कुणारुम् ।
अभि वृत्रं वर्धमानं पियारुमपादमिन्द्र तवसा जघन्थ ॥ ६९॥

हे पुरुहूत पुरुभिर्बहुभिर्हूतोऽभिहूतः पुरुहूतः हे बहुभिराहूत हे इन्द्र त्वं सहदानुं शत्रुमहस्तं हस्तहीनं कृत्वा सम्पिणक् सम्पिड्ढि चूर्णय । सह इति बलनाम [निघ० २.९.] सहो बलं ददाति सहदानुः पृषोदरादित्वात्सहःशब्दान्त्यलोपः नुप्रत्ययो ददातेः अयमसमर्थोऽस्ति त्वं तु समर्थ इति यः शत्रुं प्रेर्य बलं ददाति स सहदानुः यद्वा सह एकीभूय योद्धुमन्त्रं ददाति सहदानुः शत्रुः । कीदृशं क्षियन्तं क्षियति वसतीति क्षियन् तम् क्षि निवासगत्योः तुदादिः शतृप्रत्ययः निकटे वसन्तम् । कुणारुं क्वणति दुर्वचो वदति कुणारुः तम् क्वण शब्दे औणादिक आरुप्रत्ययः धातोः सम्प्रसारणं च । पिष्लृ संचूर्णने लङि मध्यमैकवचनं रुधादित्वात् श्नम् संपूर्वः अडभावस्त्वार्षः षस्य कुत्वमार्षम् । हे इन्द्र वृत्रं दैत्यमपादं पादहीनं कृत्वा तवसा बलेन त्वमभिजघन्थ जहि सम्यक् मारय छन्दसि लुङ्लङ्लिटः इति [पा० ३.४.६.] लोडर्थे लिट् । कीदृशं वृत्रं वर्धमानं जगद्व्याप्नुवन्तम् । पियारुं सुराणां हन्तारं पियतिर्हिंसाकर्मा ॥ ६९॥

वि न इन्द्र मृधो जहि० ॥ ७०॥

शासदृष्टानुष्टुप् । व्याख्याता [८.४४.] ॥ ७०॥

मृगो न भीमः कुचरो गिरिष्ठाः परावत आजगन्था परस्याः ।

सृकꣳ सꣳशाय पविमिन्द्र तिग्मं वि शत्रूंताढि वि मृधो नुदस्व ॥७१॥

जयदृष्टा त्रिष्टुप् हे इन्द्र परस्याः परावतो दूरतराद्देशादाजगन्थ आगच्छ परावच्छब्दो दूरवचनः परस्या दूरदिशोऽपि परावतः दूरदेशादित्यर्थः लोडर्थे लिट् । आगत्य च शत्रून्विताढि विशेषेण ताडय । मृधः संग्रामांश्च विनुदस्व विशेषेण प्रेरय दूरीकुरु । किं कृत्वा पविं वज्रं संशाय तीक्ष्णीकृत्य शो तनूकरणे ल्यप् । कीदृशं पविं सृकम् सरति शत्रुशरीरे गच्छतीति सृकः तम् । तिग्ममुत्साहवत्तम् तिग्मं तेजतेरुत्साहकर्मण इति [निरु॰ १०. ६.] यास्कः । क-इव मृगो न मृग-इव यथा मृगः सिंहो दूरादेत्य प्राणिनं हन्ति । कीदृशो भीमः भयंकरः । कुचरः कुत्सितं चरति गच्छति कुचरः । गिरिष्ठाः गिरौ तिष्ठति गिरिष्ठाः पर्वताश्रयः ॥ ताडयतिर्हिंसाकर्मा तस्य हौ परे छन्दस्युभयथेत्यार्धधातुकत्वे [पा॰ ३. ४. ११७.] णिचो लोपः झलाम्यो हेर्धिः ष्टुत्वम् ताढि ॥७१॥

वैश्वानरो न ऊतयऽआ प्रयातु परावतः । अग्निर्नः सुष्टुतीरुप ॥७२॥

वैश्वानरदेवत्या गायत्री । वैश्वानरः (60.) अग्निर्नोऽस्माकं सुष्टुतीः शोभनाः स्तुतीरुप उपश्रोतुं परावतो दूरदेशादा प्रयातु आगच्छतु । किमर्थं नोऽस्माकमूतये रक्षणाय अस्मान्रक्षितुमित्यर्थः ॥७२॥

पृष्टो दिवि पृष्टोऽअग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश ।
वैश्वानरः सहसा पृष्टोऽअग्निः स नो दिवा स रिषस्पातु नक्तम् ॥७३॥

वैश्वानरदेवत्या त्रिष्टुप् कुत्सदृष्टा । वैश्वानरः सर्वनरेभ्यो हितोऽग्निर्दिवा दिवसे नोऽस्मान्पातु रक्षतु स च नक्तं रात्रौ नः पातु सर्वदास्मान्रक्षत्वित्यर्थः । स कः योऽग्निर्दिवि द्युलोके पृष्टः कोऽयमादित्यात्मना तपतीति मुमुक्षुभिः पृष्टः अन्तरिक्षे (61.) यमेतमादित्ये पुरुषं वेदयन्ते स इन्द्रः स प्रजापतिस्तद्ब्रह्मेति श्रुतेः । यश्चाग्निः पृथिव्यामन्तरिक्षलोके पृष्टः कोऽयं विद्युदात्मना स्थित इति जलार्थिभिः पृष्टः अन्तरिक्षनामसु [निघ॰ १. ३.] पृथिवीति पठितम् । यश्च विश्वा ओषधीः सर्वा व्रीह्याद्योषधीः आविवेश प्रविष्टः सन्पृष्टः कोऽयं प्रजानां जीवनहेतुस्तापपा-

कप्रकाशैरुपकरोति । यश्च सहसा बलेनाध्वर्युणा मथ्यमानः सन्पृष्टः जनैः कोऽयं मथ्यतऽइति । सोऽयमग्निर्दिवा नक्तं रिषो बधात्पातु रिषतिर्हिंसाकर्मा मास्मान्नाशयत्वित्यर्थः ॥ ७३ ॥

अश्याम तं काममग्ने तवोतीऽअश्याम रयिꣳ रयिवः सुवीरम् ।
अश्याम वाजमभि वाजयन्तोऽश्याम द्युम्नमजराजरं ते ॥ ७४ ॥

भरद्वाजदृष्टाग्नेयी कामवती त्रिष्टुप् । हे अग्ने तव ऊती ऊत्या अवनेन पालनेन वयं तं काममभिलाषमश्याम प्राप्नुयाम यमिच्छाम इत्यर्थः । अशूङ् व्याप्तौ विकरणव्यत्ययेन लोटि श्यन्प्रत्ययः । रयिर्धनमस्यास्तीति रयिवान् तत्सम्बुद्धौ हे रयिवः धनवन् सुवीरं रयिं वयमश्याम शोभना वीराः पुत्रा यत्र तं रयिं पुत्रसहितं धनं वयं प्राप्नुयाम । वाजयतिरर्चतिकर्मा [निघ॰ ३. १४.] वाजयन्तो वह्निमर्चयन्तः सन्तो वयं वाजमन्नमभि अश्याम समन्तात्प्राप्नुयाम । हे अजर नास्ति जरा यस्य सोऽजरः हे जरारहित अजरमक्षीणं ते तव द्युम्नं यशो वयमश्याम सर्वदा यशस्विनो भवामेत्यर्थः ॥ ७४ ॥

वयं तेऽअद्य ररिमा हि काममुत्तानहस्ता नमसोपसद्य ।
यजिष्ठेन मनसा यक्षि देवानस्रेधता मन्मना विप्रोऽअग्ने ॥ ७५ ॥

उत्कीलदृष्टाग्नेयी त्रिष्टुप् । हे अग्ने हि यस्मात्कारणात् वयं ते तुभ्यमद्यास्मिन्दिने कामं हविः ररिम दद्मः काम्यतऽइष्यतऽइति कामं हविः रा दाने लिट् अन्येषामपि दृश्यतऽइति [पा॰ ६. ३. १३७.] ररिमेत्यस्य संहितायां दीर्घः । किं कृत्वा नमसा उपसद्य नमस्कारेणोपसंगम्य नमस्कृत्य निकटमागत्य हविर्दद्म इत्यर्थः । कीदृशा वयम् उत्तानहस्ताः उत्ताना हस्ता येषां ते अबद्धमुष्टिकाः त्यक्तकार्पण्या इत्यर्थः । तथा मनसा उपलक्षिताः सावधाना इत्यर्थः । कीदृशेन मनसा यजिष्ठेन यजतीति यष्टृ अतिशयेन यष्टृ यजिष्ठं तेन तुरिष्ठेमेयःस्विति [पा॰ ६. ४. १५४.] तृचो लोपः यागतत्परेणेत्यर्थः । तथा अस्रेधता स्रिध गतौ स्रेधति अन्यत्र गच्छति स्रेधत् न स्रेधदस्रेधत् तेन अनन्यगतेनेत्यर्थः । मन्मना मन्यते दे-

वमहिमानं जानाति मन्म तेन मन्यतेर्मन्प्रत्ययः देवतायाथात्म्यज्ञेनेत्यर्थः । यत ए-तादृशेन मनसा वयं हविः ररिम अतो हे अग्ने विप्रो मेधावी त्वं देवान्यक्षि यज मद्दत्तेन हविषा देवांस्तर्पयेत्यर्थः यजतेर्बहुलं छन्दसीति [पा° २.४.७३.] शपि लुप्ते मध्यमैकवचने षत्वे ष्टुत्वे यक्षीति रूपम् । विप्रोऽग्ने इत्यत्र प्रकृत्यान्तःपादमव्यपरे इति [पा° ६.१.११५.] प्रकृतिभावः ॥७५॥

धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः ।
सचेतसो विश्वे देवा यज्ञं प्रावन्तु नः शुभे ॥७६॥

विश्वदेवदेवत्यानुष्टुप् । एते देवा नोऽस्माकं यज्ञं प्रावन्तु प्रकर्षेण रक्षन्तु अन्यूनातिरिक्तं कुर्वन्त्वित्यर्थः अन्यूनातिरिक्त एव कर्मणो रक्षणम् । शुभे इष्टे स्थाने स्वर्गे च यज्ञं स्थापयन्त्विति शेषः यद्वा शुभे स्थाने यज्ञं प्रावन्तु । एते के अग्निः । देव इति सर्वत्र सम्बन्धनीयम् । इन्द्रः । ब्रह्मा चतुर्मुखः । बृहस्पतिर्जीवः । विश्वे देवाश्च । धामानि स्थानानि छादयति आच्छादयति धामच्छत् छादयतेः क्विपि ह्रस्व इति (62.) क्विपि णिलोपे धातोर्ह्रस्वः धाम्नां छदनं न्यूनानां पूरणमतिरिक्तानां समीकरणम् इदं सर्वेषां विशेषणम् । तथा सचेतसः चेतसा प्रज्ञया सहिताः सचेतसः समानं चेतो येषामिति वा । समानज्ञाना अग्न्यादयो मद्यज्ञं रक्षन्त्वित्यर्थः ॥७६॥

त्वं यविष्ठ दाशुषो° ॥७७॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायामष्टादशोऽध्यायः ॥ ॥

ऋष्यादि प्रागुक्तम् व्याख्याता च [१३.५२.] ॥७७॥

इति श्री-महीधरकृते वेद-दीपेऽष्टादश ईरितः (63.) । वसोर्धारादिकोऽध्यायश्चित्युपस्थावसानकः ॥१८ (64.)॥ ॥

अथ काण्वशाखायां पाठविशेषः ॥

I. ॥ १७, ८७ [जुषस्व शतधारमर्व°] - ११ ॥१-१२॥ ॥

II. ॥ १८, १ [आवश्च]. २ [मेऽसुं च] - ४ ॥१-४॥१६॥ ॥

FFFF*

III. ॥ ५ [क्रीला] ॥१॥ ११ ॥२॥ ७ [सीरं च मे लयश्च मे सूश्च मे प्रसूश्च मे] ॥३॥ ८ ॥४॥२०॥ ॥

IV. ॥ ९ ॥१॥ ६ [सुगं च मे शयनं] ॥२॥ १० ॥३॥ १२ ॥४॥२४॥ ॥

V. ॥ १३ [सीसं च मे त्रपु च मे श्यामं च मे लोहं च मे] ॥१॥ १४ ॥२॥ १५ [यामश्च मऽइत्या] ॥३॥२७॥ ॥

VI. ॥ १६-१८ ॥१-३॥३०॥ ॥

VII. ॥ १९-२३ [संवत्सरश्च मे तपश्च मेऽह्नो°] ॥१-५॥३५॥ ॥

VIII. ॥ २४-२७ ॥१-४॥३९॥ ॥

IX. ॥ २८ - प्रजापतये स्वाहा ॥१॥ इयं - °त्याय ॥२॥ २९ - °आत्मा यज्ञेन कल्पतां पृष्ठं यज्ञेन कल्पतां ब्रह्मा यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पतां ज्योतिर्यज्ञेन कल्पता७ स्वर्यज्ञेन कल्पताम् ॥३॥ स्तोमश्च - वेट् स्वाहा ॥४॥४२॥ ॥ नवानुवाकेषु त्रयश्चत्वारिंशत् ॥

इति काण्वशाखायां संहितापाठे एकोनविंशोऽध्यायः ॥१९॥

I. ॥ १८, ३० [साविषक्] ॥१॥ ३१ ॥२॥ ३२ [धनसाताऽइद्वावतु] ॥३॥ ३३ [°वीरं चकार सर्वा आशा वाजपतिर्भवेयम्] ॥४॥ ३४ [विश्वा आशा वाजपतिर्जयेयम्] ॥५॥ ३५ ॥६॥ ३६. ३७ ॥७॥७॥ ॥

II. ॥ ३८ [ऋताषाल्लृत°] - ४१ [अहेलमानो] ॥१-१२॥ ५० ॥१३॥२०॥ ॥

III. ॥ ५१ [अग्निं युनग्मि - तेन गमेम -] ॥१॥ ५२ [पक्षाऽअजरौ पतत्रिणो -] - ५७ ॥२-७॥२७॥ ॥

IV. ॥ ५८ ॥१॥ ५९ [जानीय] ॥२॥ ६० [कृण्वथा°] - ६५ ॥३-८॥ ६७b ॥९॥३६॥ ॥

V. ॥ ६८ ॥१॥ ६९ [जघंध (65.)] ॥२॥ ७० ॥३॥ ७१ [ताल्हि] ॥४॥

७२-७७ [नृचः] ॥५-१०॥४६॥ ॥ पञ्चानुवाकेषु षट्चत्वारिंशत् ॥ ॥

इति काण्वशाखायां संहितापाठे विंशोऽध्यायः ॥२०॥ ॥

I. a. स्वाद्वीं त्वा स्वादुना तीव्रां तीव्रेणामृताममृतेन ।
मधुमतीं मधुमता सृजामि सꣳ सोमेन ॥
b. सोमोऽसि । c. अश्विभ्यां पच्यस्व । d. सरस्वत्यै पच्यस्व ।
e. इन्द्राय सुत्राम्णे पच्यस्व ॥१॥

कृपानाथं रमाकान्तं नत्वा नृहरिमीश्वरम् । एकोनविंशे स्वध्याये (1.) मन्त्रदीपमथो ब्रुवे ॥ ॥ अथ सौत्रामणीमन्त्रास्त्रिभिरध्यायैः ॥ ऋद्धिकामस्याग्निचितो मुखेतरछिद्रसोमवामिनो (2.) मुखेन सोमवामिनो राज्यच्युतनृपस्य पशुकामस्य च सौत्रामणीयागः ॥ अन्तःपात्यस्थाने गोचर्मणि एतानि स्थापयेत् सोमसुराविक्रयिणः क्लीवाद्वा क्रीत्वा सीसेन शष्पं क्रीत्वा ऊर्णाभिस्तोक्मान् सूत्रेण लाजान् केनचिद्द्रव्येण नग्नहुम् विरूढा व्रीहयः शष्पम् विरूढा यवास्तोक्माः भृष्टव्रीहयो लाजाः सर्जत्वक्त्रिफलाशुण्ठीपुनर्नवाचतुर्जातकपिप्पलीगजपिप्पलीवंशावकाबृहच्छत्राचित्रकेन्द्रवारुण्यश्वगन्धाधान्यकयवानीजीरकद्वयहरिद्राद्वयविरूढयवव्रीहय एकीकृता नग्नहुः । शष्पतोक्मलाजनग्नहून्दक्षिणद्वारेणाग्निगृहं नीत्वा संचूर्ण्य दर्शपौर्णमासधर्मेण व्रीहिश्यामाकयोश्चरू बहुजले पक्त्वा (3.) पशुतालम्भनानन्तरं तयोश्चर्वोर्निःस्रावमुष्णं (4.) पृथक्-पात्रयोरादाय शष्पादिचतुर्णां चूर्णैः संसृज्य स्थापयेत् द्वयं चूर्णाचामरूपं (5.) मासराख्यम् । का° [१९.१.२२.] ओदनौ चूर्णमासरैः सꣳसृज्य स्वाद्वीं त्वाꣳशुनेति त्रिरात्रं निदधाति । एवमाचामयोश्चूर्णसंसर्गे (6.) मासरत्वनिष्पादनानन्तरमोदनौ व्रीहिश्यामाकचरू चतुर्भिश्चूर्णैः संसृज्य स्वाद्वीं त्वेति मन्त्रेण अंशुनेति विंशाध्यायसप्तविंशया ऋचा चैकस्मिन्पात्रे चूर्णसंसृष्टावोदनौ मासराभ्यां संसृज्य त्रिरात्रं शालानैर्ऋतकोणे गर्तं कृत्वा तत्र स्थापयेत् । अयमर्थः । चरू उद्वास्य द्वयोः पृथगाचामग्रहणाम् ततः शष्पतोक्मलाजचूर्णानां पृथक् त्रिधा कृतानां तृतीयांशं द्वेधा कृत्वाचामयोः क्षिपेत् ततो नग्नहुचूर्णं द्वेधा कृत्वैकमर्धं क्षि-

धा विभज्याचामयोः क्षिपेत् । एवं चूर्णसंसृष्टाचामयोर्मासरसंज्ञा । ततः शष्पतोक्मलाजचूर्णानां द्वितीयं तृतीयांशं द्विधा कृत्वैकैकं भागमोदनयोः क्षिपेत् नग्नहुचूर्णद्वितीयार्धं द्वेधा कृत्वौदनयोः क्षिपेत् तत ओदनाविकपात्रे कृत्वा तत्राचामौ क्षिपेत् ततः स्वाद्वीं त्वा अमृतेनेति मन्त्राभ्यां चूर्णमासरैः सहौदनयोराड्वालनेन संसर्गः कार्यः ततस्त्रिरात्रनिधानम् शष्पतोक्मलाजचूर्णतृतीयांशानां प्रतिदिनं सुरायां निवापार्थं रक्षणमिति सूत्रार्थः ॥ स्वाद्वीं त्वा । सुरासोमदेवत्यानुष्टुप् सुराद्रूपः सोमो देवता । सौत्रामणीमन्त्राणां प्रजापत्यश्विसरस्वत्य ऋषयः । अथ मन्त्रार्थः । हे सुरे त्वा त्वां सोमेन संसृजामि संयोजयामि छन्दसि परेऽपीति [पा° १.४.८१.] समुपसर्गस्य क्रियापदात्परप्रयोगः । कीदृशीं त्वाम् स्वाद्वीम् मिष्टां मिष्टरसाम् । तीव्रां तीव्रशब्दः कटुवचनः कट्वीं शीघ्रमदजनिकामित्यर्थः । अमृताममृततुल्याम् । मधुमतीं मधुरस्वादोपेताम् । कीदृशेन सोमेन स्वादुना मृष्टेन तीव्रेण कटुरसेन अमृतेन सुधातुल्येन मधुमता मधुरस्वादेन ॥ सोमोऽसि । चत्वारि यजूंषि सुरादेवत्यानि । पूर्व एव विनियोगः । सोमोऽसि दैव्युष्णिक् अश्विभ्यां यजुर्गायत्री सरस्वत्यै यजुरुष्णिक् इन्द्राय यजुर्बृहती । हे सुरे त्वं सोमसंसर्गात्सोमः असि अतस्त्वां वदामि अश्विभ्यामर्थाय (7.) पच्यस्व विपरिणम पाको विपरिणामः सरस्वत्यै सरस्वत्यर्थं पच्यस्व इन्द्राय च पच्यस्व कीदृशायेन्द्राय सुत्राम्णे सुष्ठु त्रायते रक्षतीति सुत्रामा तस्मै त्रायतेरातो मनिन्निति [पा° ३.२.७४.] मनिन् ॥ १॥

परीतो षिञ्चता सुतꣳ सोमो य उत्तमꣳ हविः ।
दधन्वा (8.) यो नर्योऽअप्स्वन्तरा सुषाव सोममद्रिभिः ॥ २॥

का° [१९.१.२३-२८.] एकस्याः पयस्यायाः कृतेनाश्विनेन परिषिञ्चति परीतो षिञ्चतेति शष्पचूर्णानि चावपति सारस्वतेन द्वयोः प्रातस्तोक्मचूर्णानि चैन्द्रेणोत्तमे (9.) तिसृणां लाजचूर्णानि च । साग्रहोमान्तेऽश्विभ्यामपाकरोमीति करेण गां स्पृष्ट्वा एकां तां दुग्ध्वा तत्पयसाध्वर्युः सुरां सिञ्चति परीत इति मन्त्रेण । रक्षितं शष्पचूर्णानां तृतीयांशं सुराभाण्डे क्षिपेत् । द्वितीयेऽह्नि निशान्ते (10.) सरस्वत्याऽअपाकरोमीति गावौ स्पृष्ट्वा दोहितेन (11.) तयोर्दुग्धेन तेनैव मन्त्रेण

सुरां सिञ्चति तोक्मचूर्णतृतीयांशलेपश्च । तृतीयेऽह्नि रात्रौ इन्द्राय सुत्राम्णेऽपाकरोमीति तिस्रो गाः स्पृष्ट्वा ता दुग्ध्वैकीकृततत्पयसा सुरां सिञ्चति तेनैव मन्त्रेण तत्र लाजचूर्णतृतीयांशलेपश्चेति सूत्रार्थः ॥ भरद्वाजदृष्टा सोमदेवत्या बृहती । हे ऋत्विज इतो गोः सकाशाद्दुह्यतेन दुग्धेनेति शेषः सुतमभिषुतं सोमं परिस्रुद्रूपं परिषिञ्चत यूयम् परि इतः सिञ्चतेति पदेषु सत्सु ओकारमितः सिञ्चतौ सोपध इति [प्रातिशा° ३.३.९.] सूत्रेण सविसर्गस्य तकारस्थाकारस्य ओकारः अन्येषामपि दृश्यतऽइति [पा° ६.३.१३७.] सिञ्चतपदस्य संहितायां दीर्घः । तं कम् यः सोम उत्तमं हविः सर्वेषां हविषां श्रेष्ठम् यश्च नर्यः नरेभ्यो हितः सन् दधन्वान् (8.) यजमानं धारितवान् धन शब्दे क्वसुप्रत्ययः । अप्सु जलेषु अन्तर्मध्ये वर्तमानं यं सोममद्रिभिः ग्रावभिरध्वर्युः आसुषाव अभिषुतवान् । तं सोमं सुरारूपमापन्नं पयसा सिञ्चतेति सम्बन्धः ॥२॥

a. वायोः पूतः पवित्रेण प्रत्यङ्क्सोमोऽअतिद्रुतः । इन्द्रस्य युज्यः सखा ॥

b. वायोः पूतः पवित्रेण प्राङ्क्सोमोऽअतिद्रुतः । इन्द्रस्य युज्यः सखा ॥३॥

का° [१९.२.७-९.] सते पुनाति गोऽश्ववालवालेन पुनाति ते परिस्रुतमिति [क° 8.] वायोः पूत इति सोमातिपूतस्य प्राङिति तद्वामिनः । वायोः पूत इति कण्डिकायां द्वे ऋचौ पुनाति तऽइति तृतीया तासां व्युत्क्रमेण विनियोगमाह पूतां सुरामादाय गोऽश्वकेशनिर्मितेन वालेन पवित्रेण सते पलाशपात्रे पुनाति पुनाति तऽइति मन्त्रेण सतं वारणमिति केचित् मुखितरङ्घ्रिसोमवामिनो यजमानस्य सौत्रामण्यां वायोः पूतः पवित्रेण प्रत्यङ्ङिति मन्त्रेण सते सुरां पुनाति मुखेन सोमवामिनस्तु वायोः पूतः पवित्रेण प्राङिति मन्त्रेण सते सुरां पुनातीत्यर्थः ॥ ऋक्द्वयमाभूतिदृष्टं सोमदेवत्यं गायत्रम् । प्रत्यञ्चति अधो गच्छति प्रत्यङ् अधोमुखोऽतिद्रुतो गुदद्वारा गतः सोमः वायोः पवित्रेण (12.) उदरान्तर्वर्तिना पूतः शुद्धः । कीदृशः इन्द्रस्य युज्यः सखा योगार्होऽगर्ह्यः सहायः ॥ प्राञ्चत्यूर्ध्वं गच्छति प्राङ् मुखतोऽतिद्रुतो निर्गतः सोमो वायोः पवित्रेण हृदयान्तर्वर्तिना पूतः य इन्द्रस्य युज्यः योग्यः सखा ॥३॥

पुनाति ते परिस्रुतꣳ सोमꣳ सूर्यस्य दुहिता । वारेण शश्वता तना ॥४॥

अध्वर्युर्यजमानं प्रत्याचष्टे हे यजमान सूर्यस्य दुहिता पुत्री श्रद्धा ते तव परिस्रुतं सुरां सोमं च पुनाति शोधयति श्रद्धा वै सूर्यस्य दुहितेति श्रुतिः । यद्वा लुप्तोपमानम् ते तव परिस्रुतं सोममिव पुनाति सोमवत्पवित्रां करोति । यद्वा सोमं सोमरूपापन्नां परिस्रुतं श्रद्धा पुनाति । केन वारेण वालेन रलयोरैक्यम् गोऽश्ववालवालेन । कीदृशेन वारेण शश्वता शाश्वतिकेन अनादिना । तथा तना तनेति धननाम [निघ॰ २. १०.] तनेन धनेन धनरूपेण धनोत्पत्तिनिमित्तभूतेनेत्यर्थः ॥४॥

ब्रह्म क्षत्रं पवते तेज इन्द्रियꣳ सुरया सोमः सुत आसुतो मदाय ।
शुक्रेण देव देवताः पिपृग्धि रसेनान्नं यजमानाय धेहि ॥५॥

का॰ [१९. २. १०.] उत्तरस्यां पयो वैतसेऽजाविलोमपवित्रेण ब्रह्म क्षत्रमिति । अजमेषलोमकृतपवित्रेण वेतसपात्रे उत्तरदिशि (13.) पयः पुनाति ब्रह्म क्षत्रमिति मन्त्रेणेत्यर्थः ॥ सुरासोमदेवत्या त्रिष्टुप् आद्यो द्वादशकः द्वितीयस्त्रयोदशार्णः अन्यावेकादशार्णौ तेन त्र्यधिका । हे देव सोम शुक्रेण शुद्धेन वीर्येण त्वं देवताः अग्न्याद्याः पिपृग्धि प्रीणीहि । पुनः रसेन घृतादिना सहितमन्नं यजमानाय धेहि देहि । यतः सोमो भवान् सुतोऽभिषुतः सन् ब्रह्म ब्राह्मणं क्षत्रं क्षत्रियं तेजः कान्तिमिन्द्रियमिन्द्रियसामर्थ्यं पवते जनयति पवतिर्जननार्थः यज्ञादेव सर्वोत्पत्तेः सोमे उपचर्यते । आसुतः सुरया तीव्रीकृतः सन् भवान् मदाय च भवति । ईदृशसामर्थ्ययुक्तस्त्वं देवान्यजमानं चाभीष्टेन प्रीणीहीत्यर्थः ॥५॥

a. कुविदङ्ग यवमन्तो यवं॰

b. उपयामगृहीतोऽस्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे ।

c. एष ते योनिस्तेजसे त्वा वीर्याय त्वा बलाय त्वा ॥६॥

का॰ [१९. २. १२. १३.] पयोग्रहान्गृह्णाति कुविदङ्गेति पृथगुपयामयोनी । एवं सुरापयसोः पावनं कृत्वा कुविदङ्गेति मन्त्रेणैव त्रीन्पयोग्रहान्गृह्णाति मन्त्रपाठे उ-

पयामगृहीतोऽसि एष ते योनिरिति द्वे यजुषी सकृत्पठिते त्रिषु ग्रहेषु पृथग्भवतः ॥ ततश्चेति मन्त्राः । कुविदङ्गेत्यृचं पठित्वा उपयामगृहीतोऽस्यश्विभ्यां त्वा । ऋग्व्याख्याता [१०.३२.] । हे पयोग्रह त्वमुपयामेन पात्रेण गृहीतोऽसि अश्विभ्यामर्थे त्वा त्वां गृह्णामि । सादयति एष ते योनिस्तेजसे त्वा एष ते तव योनिः स्थानम् योनिर्द्वयोरिति योनिशब्द उभयलिङ्गः तेजसे तेजोऽर्थं त्वां सादयामि ॥ द्वितीये पयोग्रहे कुविदिति पठित्वा उपयामगृहीतोऽसि सरस्वत्यै त्वा सरस्वत्यर्थं त्वां गृह्णामि । सादयति एष ते योनिर्वीर्याय त्वा वीर्यार्थं त्वां सादयामि ॥ तृतीयपयोग्रहे कुविदित्यन्ते उपयामगृहीतोऽसीन्द्राय त्वा सुत्राम्णे सुष्ठु त्रायते रक्षतीति सुत्रामा तस्मै रक्षकायेन्द्राय त्वां गृह्णामि । सादयति एष ते योनिर्बलाय त्वा बलाय बलार्थं त्वां सादयामि ॥ एतेषां क्रमादश्वत्थोदुम्बरन्यग्रोधपात्रैर्ग्रहणम् ॥ ६ ॥

नाना हि वां देवहितꣳ सदस्कृतं मा सꣳसृक्षाथां परमे व्योमन् ।
सुरा त्वमसि शुष्मिणी सोम एष मा मा हिꣳसीः स्वां योनिमाविशन्ती ॥७॥

का° [१९.२.२०.] स्थालीभिः सौरान्नाना हि वामिति व्यत्यासम् । नाना हीति मन्त्रेण मृन्मयस्थालीभिस्त्रीन्सुराग्रहान्गृह्णाति । व्यत्यासमित्ययमर्थः आदावाश्विनं पयोग्रहं गृहीत्वासाद्याश्विनसुराग्रहस्य ग्रहणासादने ततः सारस्वतौ पयोग्रहसुराग्रहौ तत ऐन्द्रौ पयःसुराग्रहौ । क्रमेण वा । उपयामयोनी अत्रापि पृथक् प्रथमे नाना हीति पठित्वोपयामगृहीतोऽस्याश्विनं तेज इति ग्रहणमेष ते योनिर्मोदाय त्वेति सादनम् द्वितीये नाना हीत्यन्ते उपयामगृहीतोऽसि सारस्वतं वीर्यमिति ग्रहणमेष ते योनिरानन्दाय त्वेति सादनम् तृतीये नानेत्यन्ते उपयामगृहीतोऽस्यैन्द्रं बलमिति ग्रहणमेष ते योनिर्महसे त्वेति सादनमिति सूत्रार्थः ॥ सुरासोमदेवत्या जगती । हे सुरासोमौ हि यस्मात्कारणाद्वां युवयोः नाना पृथक् सदः स्थानं कृतम् सुरापयसोर्द्वे वेदी भवतः । कीदृशं सदः देवहितं देवानां हितं पथ्यम् यद्वा देवैः हितं स्थापितम् । अतः कारणात् परमे उत्कृष्टे व्योमन् व्योम्नि व्योमवद्विशाले हवनस्थाने युवं मा संसृक्षाथां संसर्गं मा कुरुतम् । आहवनीये

पयो हूयते दक्षिणाग्नौ सुरा हूयते अतो न संसर्गः । सृज विसर्गे लुङ् । एवं द्वौ प्रत्युक्त्वा सुरामाह हे सुरे त्वं सुरा असि कीदृशी शुष्मिणी शुष्मं बलमस्या अस्तीति बलवती ततस्त्वां पीत्वा मत्तो भवति । एष सोमः शान्तः अतः स्वां योनिमाविशन्ती प्रविशन्ती सती सोमं मा हिंसीः अनुदात्तो माशब्दः पादपूरणः ॥७॥

a. उपयामगृहीतोऽस्याश्विनं तेजः सारस्वतं वीर्यमैन्द्रं बलम् ।
b. एष ते योनिर्मोदाय त्वानन्दाय त्वा महसे त्वा ॥८॥

आश्विनं तेजः साक्षात्त्वमेव । सारस्वतं सरस्वतीसम्बन्धि वीर्यं सामर्थ्यं च त्वम् । ऐन्द्रमिन्द्रसम्बन्धि बलं च त्वमिति शेषः ॥ सादयति । एष ते तव योनिः स्थानं मोदाय प्रमोदाय त्वा त्वां सादयामि । आनन्दाय हर्षाय त्वां सादयामि । महसे महत्त्वाय च सादयामि । प्रत्येकं मन्त्राः ॥८॥

a. तेजोऽसि तेजो मयि धेहि । b. वीर्यमसि वीर्यं मयि धाः ।
c. बलमसि बलं मयि धेहि । d. ओजोऽस्योजो मयि धेहि ।
e. मन्युरसि मन्युं मयि धेहि । f. सहोऽसि सहो मयि धेहि ॥९॥

का° [१९.२.१६.] गोधूमकुवलचूर्णानि चावपति तेजोऽसीति । आश्विनग्रहग्रहणानन्तरं सादनात्प्राक् द्वे दर्भतृणे प्रागग्रे पात्रोपरि कृत्वा गोधूमकुवलयोश्चूर्णानि सहैव पयसि क्षिपति कुवलं स्थूलं बदरीफलमित्यर्थः ॥ त्रीणि यजूंषि पयोदेवत्यानि आद्यं यजुर्बृहती । हे पयः त्वं तेजोऽसि अतो मयि तेजो धेहि स्थापय यो यदात्मकः स तत्र नियुज्यतऽइति न्यायात् ॥ का° [१९.२.१७.] उपवाकबदरचूर्णानि च वीर्यमसीति । उपवाका इन्द्रयवाः बदरं सूक्ष्मबदरीफलम् तयोश्चूर्णानि सारस्वते पयोग्रहे निवपेदित्यर्थः ॥ यजुःपङ्क्तिः । हे ग्रह त्वं वीर्यमसि अतो मयि वीर्यं सामर्थ्यं धेहि ॥ का° [१९.२.१९.] यवकर्कन्धुचूर्णानि च बलमसीति । यवाः प्रसिद्धाः कर्कन्धुः अतिस्थूलं बदरम् तयोश्चूर्णान्यैन्द्रे पयोग्रहे क्षिपेदित्यर्थः ॥ यजुःपङ्क्तिः । हे ग्रह त्वं बलमसि अतो मयि विषये बलं धेहि ॥ का° [१९.२.२२.२३.] सुराग्रहाच्छ्रीणात्योजोऽसीति वृकव्याघ्रसिंहलोमभिः प्र-

तिमन्त्रं मिश्रैरेके यथासंख्यम् । वृकादीनां मिश्रैः केशैरोजोऽसीति प्रतिमन्त्रं सुराग्रहान्मिश्रयेत् ओजोऽसीत्याश्विनं मन्युरसीति सारस्वतं सहोऽसीत्यैन्द्रम् एके वृकादिकेशैर्यथासंख्यं ग्रहं मिश्रयन्ति वृककेशैराश्विनं वैयाघ्रैः (14.) सारस्वतं सैंहैरैन्द्रमिति सूत्रार्थः ॥ त्रीणि यजूंषि सुरादेवत्यानि हे सुरे त्वमोजः असि अतो मयि विषये ओजः कान्तिं धेहि स्थापय । त्वं मन्युर्मानसं प्रज्वलनं कोपोऽसि मयि मन्युं धेहि । सहोऽसि मयि सहो बलं धेहि ॥ ९ ॥

या व्याघ्रं विषूचिकोभौ वृकं च रक्षति ।
श्येनं पतत्रिणꣳ सिꣳहꣳ सेमं पात्वꣳहसः ॥ १० ॥

का० [१९. २. २६.] दीक्षावत्पावयतोऽन्तःपात्ये श्येनपत्राभ्यां या व्याघ्रमिति । अध्वर्युप्रतिप्रस्थातारौ सहैवान्तःपात्येऽवस्थितं प्राङ्मुखं यजमानं श्येनपिच्छाभ्यां पावयतः दीक्षावदित्येकेन नाभेरूर्ध्वं प्रदक्षिणं द्वितीयेन सकृदवाङ् यद्वोभाभ्यां नाभेरूर्ध्वमधश्च द्विरिति सूत्रार्थः ॥ हैमवर्चिदृष्टा विषूचिकादेवत्यानुष्टुप् । व्याध्यधिष्ठात्री देवतास्ति सा प्रार्थ्यते । विषु सर्वत्र अञ्चति गच्छति विषूची सैव विषूचिका रोगविशेषः केऽण इति [पा० ७. ४. १३.] ङीपो ह्रस्वः या विषूचिका व्याघ्रं वृकमेनावुभौ द्वौ परिरक्षति पाति तथा श्येनं पतत्रिणं पक्षिणं सिंहं चोभौ रक्षति न हि तेषामन्नपरिणामजनितो दोषः सा विषूचिका इमं यजमानमंहसः व्याधिहेतुभूतात्पापात्पातु रक्षतु ॥ १० ॥

a. यदापिपेष मातरं पुत्रः प्रमुदितो धयन् ।
एतत्तदग्नेऽअनृणो भवाम्यहतौ पितरौ मया ॥
b. सम्पृच स्थ सं मा भद्रेण पृङ्क्त । c. विपृच स्थ वि मा पाप्मना पृङ्क्त ॥ ११ ॥

का० [१९. २. २७.] अग्निं प्रेक्षयति यदापिपेषेति । अग्निं प्रेक्षस्वेति प्रैषेणाध्वर्युर्यजमानमग्निं दर्शयति स प्रेषित औत्तरवेदिकमग्निमीक्षतऽइत्यर्थः ॥ अग्निदेवत्या बृहती । पुत्रोऽहं प्रमुदितः प्रहृष्टो धयन् स्तनपानं कुर्वन्सन् यत् मातरं जननीमापिपेष पिष्टवान् पद्भ्यां पीडितवान् पिषेर्लिट उत्तमैकवचनम् हे अग्ने तत् ए-

तत् त्वत्समक्षमहमनृणो भवामि ऋणत्रयरहितोऽस्मि अत एव ब्रवीमि मया पितरौ मातापितरौ अहतौ न पीडितौ यः पुत्रः प्रत्युपकर्तुमशक्तः स एव पित्रोर्हन्तेति भावः ॥ का° [१९. २. २८.] पयोग्रहसंमर्शनꣳ सम्पृच स्थेति । यजमानः सहैव पयोग्रहाणां स्पर्शं करोतीत्यर्थः ॥ पयोग्रहदेवत्यम् । यजुस्त्रिष्टुप् । हे पयोग्रहा यूयं सम्पृचः स्थ सम्पृञ्चन्ति संयोजयन्तीति सम्पृचः स्वत एव संयोजका भवत अतो मा मां भद्रेण कल्याणेन सम्पृङ्क्त संसृजत कल्याणयुक्तं मां कुरुतेत्यर्थः । सम्पूर्वात्पृचेः क्विप् । पृचे रौधिकाल्लोट् सम्पृङ्क्त ॥ का° [१९. २. २८.] विपृच स्थेति सौराणाम् । यजमानं सौरग्रहान्संमृशतीत्यर्थः ॥ हे सुराग्रहा यूयं विपृचः स्थ विपृञ्चन्तीति विपृचः वियोजका भवत अतो मा मां पाप्मना कल्माषेण विपृङ्क्त निष्पापं कुरुतेत्यर्थः ॥११॥

II. दे॒वा य॒ज्ञम॑तन्वत भेष॒जं भि॒षजा॒श्विना॑ ।
वा॒चा सर॑स्वती भि॒षगिन्द्रा॑येन्द्रि॒याणि॒ दध॑तः ॥१२॥

देवा यज्ञमित्यादिकण्डिकाविंशतिर्ब्राह्मणानूपातो विनियोगाभावः । ब्राह्मणानुवाको विंशतिरनुष्टुभः सौत्रामण्याः सोमसाम्यप्रतिपादिकाः । अत्रेतिहासः । अनुपहूतसोमपानाद्दष्टस्येन्द्रस्य (15.) वीर्यं नमुचिरसुरोऽपिबत् तत्र देवैरिन्द्रस्य भैषज्यं कृतम् तत्राश्विनौ सरस्वती च भिषजः सौत्रामणी त्वौषधम् तथा च श्रुतिः [१२. ८. ३. १.] त्वष्टा हतपुत्रोऽभिचरणीयमपेन्द्रꣳ सोममाहरत्तस्येन्द्रो यज्ञवेशसं कृत्वा प्रासहा सोममपिबत्स विष्वङ् व्यार्च्छत्तस्य मुखात्प्राणेभ्यः श्रीयशसान्यूर्ध्वान्युदक्रामꣳस्तानि पशून्प्राविशꣳस्तस्मात्पशवो यशो यशो ह भवति य एवं विद्वान्सौत्रामण्याभिषिच्यते ततोऽस्माऽएतमश्विनौ च सरस्वती च यज्ञꣳ समभरन्त्सौत्रामणीं भैषज्याय तयैनमभ्यषिञ्चꣳस्ततो वै स देवानाꣳ श्रेष्ठोऽभवच्छ्रेष्ठः स्वानां भवति य एतयाभिषिच्यतऽइति ॥ देवा यज्ञं सौत्रामण्याख्यं भेषजमिन्द्रस्यौषधरूपमतन्वत विस्तारयामासुः तदा अश्विना अश्विनौ भिषजा भिषजौ वैद्यौ आस्तामिति शेषः । सरस्वती च वाचा त्रयीलक्षणया भिषगासीत् । कीदृशाः सरस्वत्यश्विनाः इन्द्राय इन्द्रियाणि वीर्याणि दधतः इन्द्राय सामर्थ्यं ददत इत्यर्थः ॥१२॥

दीक्षायै रूपꣳ शष्पा॑णि प्राय॒णीय॑स्य॒ तोक्मा॑नि ।
क्रय॑स्य रू॒पꣳ सोम॑स्य ला॒जाः सो॑मा॒ꣳशवो॒ मधु॑ ॥ १३ ॥

इदानीं सौत्रामण्याः सोमसम्पत्तिं निरूपयति । शष्पाणि नवप्ररूढव्रीहिरूपाणि पूर्वोक्तानि दीक्षायै षष्ठ्यर्थे चतुर्थी दीक्षाया दीक्षणीयेष्टे रूपम् शष्पाणि दीक्षणीयात्वेन ध्येयानि । एवमग्रेऽपि । तोक्मानि नवप्ररूढयवाः प्रायणीयस्य प्रायणीयेष्टे रूपं ध्येयम् । सोमस्य क्रयस्य रूपं लाजाः सोमक्रयोऽस्ति सोमे अत्र लाजास्तस्य रूपम् लाजाः सोमक्रयरूपेण ध्येया इत्यर्थः सोमक्रयस्येति समासे युक्ते तदभावः सोमक्रयपदयोर्व्यत्ययो रूपपदेन व्यवधानं च छान्दसम् । मधु सोमांशवः सोमखण्डास्तद्रूपेण ध्येयम् यद्वा मधु मधुरस्वादा लाजा एव सोमांशवो ध्येयाः ॥ १३ ॥

आ॒ति॒थ्य॒रू॒पं मास॑रं महावी॒रस्य॑ न॒ग्नहुः॑ ।
रू॒पमु॑प॒सदा॑मे॒तत्ति॒स्रो रात्रीः॒ सुरासु॑ता ॥ १४ ॥

किं च मासरमातिथ्यरूपमातिथ्येष्टेः स्वरूपं ध्येयम् व्रीहिश्यामाकौदनाचामयोः शष्पतोक्मलाजनग्नहुचूर्णैः संसर्गो मासरं पूर्वमुक्तम् । सर्जत्वगादिषड्विंशतिवस्तून्येकीकृतानि नग्नहुः पूर्वोक्तः स महावीरस्य घर्मस्य रूपं ध्येयम् । या तिस्रो रात्रीः कालाध्वनोरिति [पा॰ २.३.५.] द्वितीया त्रिरात्रपर्यन्तं सुरा आसुता अभिषुता पूर्वोक्तं सर्वमेकपात्रे कृत्वा स्वाद्वीं त्वेति मन्त्रेण यद्गर्ते त्रिरात्रं स्थापनम् एतदुपसदामुपसत्संज्ञानामिष्टीनां रूपम् ॥ १४ ॥

सोम॑स्य रू॒पं क्री॒तस्य॑ परि॒स्रुत्परि॑षिच्यते ।
अ॒श्विभ्यां॑ दु॒ग्धं भे॑ष॒जमिन्द्रा॑येन्द्रꣳ सर॑स्वत्या ॥ १५ ॥

यत् अश्विभ्यां सरस्वत्या च ऐन्द्रमिन्द्रदेवत्यमिन्द्राय भेषजमिन्द्रार्थे औषधं दुग्धं पयः अश्विभ्यामपाकरोमीति दुग्धेनैकगोः पयसा सरस्वत्याऽअपाकरोमीति दुग्धेन गोद्वयपयसा इन्द्रायापाकरोमीति दुग्धेन गोत्रयपयसा दिनत्रये परिस्रुत् सुरा यत् परिषिच्यते तत्क्रीतस्य सोमस्य रूपं ज्ञातव्यम् । एकस्याः पयसापाकृतेना-

श्विनेन परिषिञ्चति सारस्वतेन द्वयोः प्रातः ऐन्द्रेणोत्तमे तिसृणामिति [१९. १. २३. २५. २७.] कात्यायनेन निर्दिष्टत्वादश्विभ्यां सरस्वत्या च दुग्धमिति निर्देशः ॥ १५॥

आसन्दी रूपꣳ राजासन्द्यै वेद्यै कुम्भी सुराधानी ।

अन्तर उत्तरवेद्या रूपं कारोतरो भिषक् ॥ १६॥

राज्ञः सोमस्यासन्दी राजासन्दी तस्यै चतुर्थी षष्ठ्यर्थे आसन्दी यजमानाभिषेका यासन्दी मञ्चिका राजासन्द्याः सोमासन्द्या रूपम् तत्त्वेन ध्येया । सुराधानी सुरा धीयते स्थाप्यते यस्यां सा सुराधानी कुम्भी वेद्यै वेद्याः सौमिक्या वेदेः रूपम् । अन्तरः वेदिद्वयमध्यभाग उत्तरवेद्या रूपम् । कारोतरः सुरापावनचालनी (16.) इन्द्रस्य यजमानस्य च भिषक् ज्ञेयः ॥ १६॥

वेद्या वेदिः समाप्यते बर्हिषा बर्हिरिन्द्रियम् ।

यूपेन यूप आप्यते प्रणीतोऽअग्निरग्निना ॥ १७॥

वेद्यात्र वर्तमानया वेदिः सौमिकी समाप्यते सम्यक् प्राप्यते तद्रूपा ध्येयेत्यर्थः । बर्हिषात्रत्येन बर्हिः सौमिकं समाप्यते । इन्द्रियं वीर्यं चेन्द्रियेणेति शेषः समाप्यते सामर्थ्यं फलदाने उभयोरप्यस्तीत्यर्थः । यूपेनात्रत्येन यूप आप्यते । अग्निनात्रत्येन प्रणीतोऽग्निः सौमिक आप्यते प्राप्यते ॥ १७॥

हविर्धानं यदश्विनाग्नीध्रं यत्सरस्वती ।

इन्द्रायैन्द्रꣳ सदस्कृतं पत्नीशालं गार्हपत्यः ॥ १८॥

अत्र सौत्रामण्यां यत् अश्विना अश्विनौ देवते वर्तेते तेनाश्विसद्भावेन हविर्धानं सौमिकमाप्यतेऽइत्यनुषङ्गः । अत्र यत्सरस्वती देवतास्ति तेन सरस्वतीसद्भावेन आग्नीध्रं सौमिकमाप्यते । सोमे ऐन्द्रमिन्द्रदेवत्यं सदः कृतमस्ति । ऐन्द्रं सदः पत्न्याः शाला पत्नीशालम् विभाषा सेनासुरेत्यादिना [पा॰ २. ४. २५.] क्लीबत्वम् गार्हपत्यश्चेति त्रयमिन्द्राय यद्धविः क्रियते तेनाप्यते । सौत्रामण्यामिन्द्राय यद्धविस्तत्सौमिकसदःपत्नीशालगार्हपत्यरूपेण (17.) ध्येयमित्यर्थः ॥ १८॥

प्रैषेभिः प्रैषानाप्नोत्याप्रीभिराप्रीर्यज्ञस्य ।

प्रयाजैर्भिरनुयाजान्वषट्कारेभिराहुतीः ॥ १९ ॥

प्रैषेभिः प्रैषैः प्रैषानाप्नोति आप्रीभिः प्रयाजयाज्याभिर्यज्ञस्याप्रीराप्नोति । प्रयाजैभिरित्यादिवाक्यचतुष्टयस्योत्तरपदलोपश्छान्दसः प्रयाजैभिः प्रयाजैः प्रयाजानाप्नोति अनुयाजैरनुयाजानाप्नोति वषट्कारेभिर्वषट्कारैर्वषट्कारानाप्नोति आहुतिभिराहुतीराप्नोति । प्रैषादीनामुभयत्र सद्भावात् ॥ १९ ॥

पशुभिः पशूनाप्नोति पुरोडाशैर्हवीᳬंष्या ।
छन्दोभिः सामिधेनीर्याज्याभिर्वषट्कारान् ॥ २० ॥

पशुभिः कृत्वा पशूनाप्नोति पुरोडाशैः पुरोडाशानाप्नोति हविर्भिरन्यैर्हवींषि आप्नोति छन्दोभिश्छन्दांसि आप्नोति सामिधेनीभिः सामिधेनीराप्नोति याज्याभिर्याज्या आप्नोति वषट्कारैर्वषट्कारानाप्नोति । पश्वादीनामुभयत्र सद्भावात् । अत्राप्युत्तरार्धलोपः पूर्ववत् ॥ २० ॥

धानाः करम्भः सक्तवः परीवापः पयो दधि ।
सोमस्य रूपᳬं हविष आमिक्षा वाजिनं मधु ॥ २१ ॥

धानादयः सोमस्य रूपं ध्येयाः । धानाः भ्रष्टधान्यम् करम्भः उदमन्थः (18.) सक्तवः प्रसिद्धाः । परीवापः हविष्पङ्क्तिः परिवापो जलस्थाने पर्युप्त्युपरिवारयोरिति (19.) कोशः । पयोदधनी प्रसिद्धे । एतानि सोमरूपम् । आमिक्षा पयस्या मधु मधुरं वाजिनं च हविषो रूपम् । उष्णे दुग्धे दध्नि क्षिप्ते घनभाग आमिक्षा (20.) शिष्टं वाजिनम् ॥ २१ ॥

धानानाᳬं रूपं कुवलं परीवापस्य गोधूमाः ।
सक्तूनाᳬं रूपं बदरमुपवाकाः करम्भस्य ॥ २२ ॥

नन्वधस्तनमन्त्रे धानादीनां सोमरूपत्वमुक्तम् तेऽत्र कुत्र सन्तीति धानादिसोमहविषां सोमस्य च सम्पत्तिं सौत्रामणीद्रव्यैराह । कुवलं कोमलं बदरीफलं धानानां पूर्वोक्तानां रूपं ध्येयम् कुवलं बदरीफले मुक्ताफलोत्पलयोश्चेति कोशः ।

गोधूमाः परीवापस्य रूपम् बदरं सर्वं बदरीफलं सक्तूनां रूपम् उपवाकाः यवाः करम्भस्य रूपं ज्ञेयम् ॥ २२॥

पय॑सो रू॒पं यद्यवा॑ द॒ध्नो रू॒पं क॒र्कन्धू॑नि ।
सोम॑स्य रू॒पं वाजिन॑ꣳ सौ॒म्यस्य॑ रू॒पमा॒मिक्षा॑ ॥ २३ ॥

यत् ये यवाः ते पयसो रूपम् कर्कन्धूनि स्थूलबदराणि दध्नो रूपम् वाजिनं सोमस्य रूपम् आमिक्षा पयस्या सौम्यस्य चरोः रूपं ज्ञेयम् ॥ २३॥

आश्रा॑वयेति॑ स्तो॒त्रिया॑: प्रत्याश्रा॒वो ऽअनु॑रूपः ।
यजेति॑ धाय्यारू॒पं प्र॑गा॒था ये॑यजाम॒हाः ॥ २४॥

शस्त्रसम्पत्तिमाह ओश्रावयेति शब्दः स्तोत्रियारूपो ज्ञेयः स्तोत्रे प्रथमस्तृचो ऽनुवाकः स्तोत्रियाः । प्रत्याश्रावः अस्तु श्रौषडिति शब्दः अनुरूपः उत्तरस्तृचः तद्रूपः । यजेति शब्दो धाय्याया रूपम् निष्केवल्ये स्तोत्रियानुरूपयोरनन्तरं धय्या शस्यते सा यजेति शब्दो ज्ञेयः । येयजामहाः ये यजामहे ऽइति शब्दः प्रगाथाः प्रगाथरूपत्वेन ध्येयाः ॥ २४॥

अ॒र्ध॒ऽऋ॒चैरु॑क्थाना॑ꣳ रू॒पं प॒दैरा॑प्नोति नि॒विद॑: ।
प्र॒णवै॑: श॒स्त्राणा॑ꣳ रू॒पं पय॑सा॒ सोम॑ आप्यते ॥ २५॥

ऋचामर्धानि अर्धऽऋचास्तैः अर्धऽर्चादयः पुंसि चेति [पा॰ ७.४.३१.] पुंस्त्वम् ऋत्यक इति [पा॰ ६.१.१२८.] ऋकारस्य संध्यभावः अत्रत्यैरर्धर्चैरुक्थानां शस्त्रविशेषाणां रूपमाप्यते प्राप्यते । पदैर्निविदो न्यूङ्ख्नानाप्नोति । प्रणवैः ओंकारैः शस्त्राणां रूपमाप्यते । पयसा दुग्धेन सोम आप्यते । अर्धऽर्चादय उक्थादयो ध्येयाः ॥ २५॥

अ॒श्विभ्यां॑ प्रातःसव॒नमिन्द्रे॑णैन्द्रं माध्य॑न्दिनम् ।
वै॒श्व॒दे॒व॑ꣳ सर॑स्वत्या तृ॒तीय॑माप्त॑ꣳ सव॑नम् ॥ २६॥

सवनसम्पत्तिमाह । अश्विभ्यां देवाभ्यां प्रातःसवनमाप्तं प्राप्तम् इन्द्रेण देवेन

ऐन्द्रमिन्द्रदेवत्यं माध्यन्दिनं सवनं प्राप्तम् सरस्वत्या देवतया कृत्वा वैश्वदेवं विश्वदेवदेवत्यं तृतीयं सवनं प्राप्तम् ॥२६॥

वायव्यैर्वायव्यान्याप्नोति सतेन द्रोणकलशम् ।
कुम्भीभ्यामम्भृणौ सुते स्थालीभिः स्थालीराप्नोति ॥२७॥

वायव्यानि सोमपात्राणि वायव्यैर्वायव्यानि पात्राणि आप्नोति । वैतसं पात्रं सतः तेन सतेन द्रोणकलशमाप्नोति । कुम्भी सुराधानी तद्द्वयमस्ति कुम्भीभ्यां शतच्छिद्राभ्यां (21.) सुराधानीभ्यामम्भृणौ पूतभृदाधवनीयौ सुतेऽभिषुते सोमे यौ स्तस्तावाप्नोति । स्थालीभिः कृत्वा स्थालीराप्नोति उभयत्र स्थालीसद्भावात् ॥२७॥

यजुर्भिराप्यन्ते ग्रहा ग्रहैः स्तोमाश्च विष्टुतीः ।
छन्दोभिरुक्थाशस्त्राणि साम्नावभृथ आप्यते ॥२८॥

यजुर्भिः यजूंषि आप्यन्ते ग्रहा ग्रहैराप्यन्ते स्तोमैः स्तोमा आप्यन्ते विष्टुतिभिर्विविधस्तुतिभिर्विष्टुतीर्विष्टुतय आप्यन्ते छन्दोभिरुक्थाशस्त्राणि उक्थानि शस्त्राणि चाप्यन्ते । साम्ना सामाप्यते । अवभृथेनावभृथ आप्यते ॥२८॥

इडाभिर्भक्षानाप्नोति सूक्तवाकेनाशिषः ।
शम्युना पत्नीसंयाजान्त्समिष्टयजुषा सꣳस्थाम् ॥२९॥

इडाभिरिडामाप्नोति भक्षैर्भक्षानाप्नोति सूक्तवाकेन सूक्तवाकमाप्नोति आशीर्भिराशिष आप्नोति शम्युना होमविशेषेण शम्युमाप्नोति पत्नीसंयाजैः पत्नीसंयाजानाप्नोति समिष्टयजुषा समिष्टयजुराप्नोति संस्थया संस्थामाप्नोति इडादीनामुभयत्र सद्भावात् ॥२९॥

व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् ।
दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥३०॥

हुतोच्छिष्टभक्षश्चतूरात्रमग्निहोत्रं जुहोतीति व्रतेन दीक्षामाप्नोति दीक्षया दक्षिणामाप्नोति दक्षिणा विभक्तिलोपः दक्षिणया श्रद्धामाप्नोति श्रदिति सत्यनाम अतू

सत्यं धीयते यस्यां सा श्रद्धा आस्तिक्यबुद्धिः (22.) पुण्यवतां मनोविशेषः श्रद्धया सत्यं ज्ञानमनन्तं ब्रह्माप्यते प्राप्यते श्रद्धां विना ज्ञानाभावात् ॥३०॥

एतावद्रूपं यज्ञस्य यद्देवैर्ब्रह्मणा कृतम् ।
तदेतत्सर्वमाप्नोति यज्ञे सौत्रामणी सुते ॥३१॥

यज्ञस्य सोमयज्ञस्य एतावत् एतत्परिमाणं रूपम् देवैर्ब्रह्मणा प्रजापतिना च यद्रूपं कृतं दृष्टम् । दर्शनकरणयोः को भेदः सुप्तप्रतिबुद्धन्यायो दर्शनं बुद्धिपूर्वं तु करणम् । सौत्रामणी सप्तम्येकवचनस्य पूर्वसवर्णदीर्घः सौत्रामणी सौत्रामण्यां यज्ञे सुते सुरा सोमेऽभिषुते सति तदेतत् सोमयागरूपं सर्वमाप्नोति ॥३१॥

III. सुरावन्तं बर्हिषदꣳ सुवीरं यज्ञꣳ हिन्वन्ति महिषा नमोभिः ।
दधानाः सोमं दिवि देवतासु मदेमेन्द्रं यजमानाः स्वर्काः ॥३२॥

का° [१९.३.८.] सुरावन्तमिति जुहोति । अध्वर्युस्त्रीनपि पयोग्रहान्सहैव जुहोतीत्यर्थः ॥ एवं सौत्रामण्याः सोमसम्पत्तिमापाद्य प्रकृतमनुसरति । चतस्रस्त्रिष्टुभोऽश्विसरस्वतीन्द्रदेवत्याः । महिषा महान्तः ऋत्विजो यज्ञं सौत्रामणीसंज्ञं हिन्वन्ति वर्धयन्ति प्रापयन्ति वा । किम्भूतं यज्ञम् बर्हिषदं बर्हिषि सीदन्तीति देवा यत्र स बर्हिषत्तम् । तथा सुरावन्तं सुरा विद्यते यत्र स सुरावान् तम् सुरावान्वाऽएष बर्हिषद्यज्ञो यत्सौत्रामणीति [१२.८.१.२.] श्रुतेः । सुवीरं शोभना वीरा यत्र शोभनऽर्त्विजम् । कीदृशा महिषाः नमोभिरन्नैर्नमस्कारैर्वा सह दिवि स्वर्गे वर्तमानासु देवतासु सोमं दधानाः धारयन्तः । तत्र यज्ञे इन्द्रं यजमानाः यजन्तः सन्तो वयं मदेम हृष्येम । किम्भूता वयं स्वर्काः शोभनोऽर्कोऽर्चनं मन्त्रा वा येषां ते स्वर्काः यद्वा शोभनोऽर्कोऽन्नं येषां ते स्वर्का इत्यर्को वै देवानामन्नमन्नं यज्ञो यज्ञेनैवैनमन्नाद्येन समर्धयन्तीति [१२.८.१.२.] श्रुतेः । अर्को देवो भवति यदेनमर्चन्ति अर्को मन्त्रो भवति यदेनेनार्चन्ति अर्कमन्नं भवत्यर्चति भूतान्यर्को वृक्षो भवति संवृतः कटुकिम्नेति (23.) यास्कः [निरु° ५.४.] । महिषशब्दो यद्यपि महन्नामसु पठितस्तथाप्यत्र ऋत्विग्वाचकः महिषा नमोभिरित्यृत्विजो वै महिषा इति [१२.८.१.२.] श्रुतेः ॥३२॥

यस्ते॒ रसः॒ सम्भृ॑त॒ ओष॑धीषु॒ सोम॑स्य॒ शुष्मः॒ सुर॑या सु॒तस्य॑ ।
तेन॑ जिन्व॒ यज॑मानं॒ मदे॑न॒ सर॑स्वतीम॒श्विना॒विन्द्र॑म॒ग्निम् ॥३३॥

का° [१९.३.९.] पालाशैः सौरान्न मृन्मयमाकृतिमानशऽइति श्रुतेर्यस्तऽइति । प्रतिप्रस्थाता पालाशोलूखलैः सुराग्रहान्दक्षिणेऽग्नौ यजति मृन्मयपात्रमाकृतिं न व्याप्नोतीत्युक्तेरित्यर्थः ॥ हे सुरे ओषधीषु वर्तमानो यस्ते तव रसः सम्भृत एकीकृतः अपां च वाऽएष ओषधीनां च रसो यत्सुरेति [१२.८.१.४.] श्रुतेः । सुरया सह सुतस्य सोमस्य च यः शुष्मः यद्बलम् । मदयतीति मदस्तेन मदेन मदजनकेन तेन सुरारसेन सोमशुष्मेण च यजमानं सरस्वतीमश्विनौ इन्द्रमग्निं च जिन्व प्रीणीहि ॥३३॥

यम॒श्विना॒ नमु॑चेरासु॒रादधि॒ सर॑स्व॒त्यसु॑नोदिन्द्रि॒याय॑ ।
इ॒मं तꣳ शु॒क्रं मधु॑मन्त॒मिन्दु॒ꣳ सोम॒ꣳ राजा॑नमि॒ह भ॑क्षयामि ॥३४॥

का° [१९.३.१०-१३.] अध्वर्युः प्रतिप्रस्थाताग्नीध्रमश्विनेत्याश्विनं भक्षयन्ति द्विर्द्विरावर्तꣳ होतृब्रह्ममैत्रावरुणाः सारस्वतमाश्विनवदैन्द्रं यजमानः । अथ आवृत्याश्विनं पयोग्रहं क्रमेण द्विर्द्विर्भक्षयन्ति सकृन्मन्त्रः होत्रादयः सारस्वतं पयोग्रहमदन्ति यजमान ऐन्द्रं पयोग्रहमत्तीति सूत्रार्थः ॥ नमुचिनेन्द्रस्य वीर्यं पीतम् तस्मिन्हते रुधिरमिश्रः सोमो जातस्तं देवाः पपुस्तदभिवादिन्येषा ऋक् । असुरस्यापत्यमासुरस्तस्मादसुरपुत्रान्नमुचेरधि सकाशाद्यं सोममाहरतामिति शेषः अश्विनौ ह्येनं नमुचेरध्याहरतामिति [१२.८.१.३.] श्रुतेः । सरस्वती च यं सोममश्विभ्यामानीतमसुनोत् (24.) अभ्यषुणोत् किमर्थमिन्द्रियाय इन्द्रस्य वीर्याय भैषज्याय वा । तमश्व्याहृतं सरस्वतीसुतमिमं राजानमिह यज्ञेऽहं भक्षयामि । कीदृशं सोमं शुक्रं शुद्धं लोहितासंसृष्टमत एव मधुमन्तं रसवन्तमिन्दुमिदि परमैश्वर्ये परमैश्वर्यप्रदम् ॥३४॥

यदत्र॑ रि॒प्तꣳ र॒सिनः॑ सु॒तस्य॒ यदिन्द्रो॒ऽअपि॑ब॒च्छची॑भिः ।
अ॒हं तद॑स्य॒ मन॑सा शि॒वेन॒ सोम॒ꣳ राजा॑नमि॒ह भ॑क्षयामि ॥३५॥

HHHH*

b. अवभृथ निचुम्पुण निचे° - एनोऽयद्यत्र मर्त्यैर्म° ॥ १८ ॥

a. समुद्रे ते हृदय°-- उतापः । b. सुमित्रिया न° ॥ १९ ॥

यदापः । व्याख्यातम् [६.२२.] ॥ का° [१९.५.१४.] पूर्ववन्मज्जनम् । पूर्ववदिति अवभृथेत्यादि ओषधीरुताप इत्यन्तेन [१९ a.] सुराकुम्भस्य जले मज्जनम् ॥ अवभृथ । व्याख्यातम् [३, ४८. ८, २५.] इयान्विशेषः अयक्षि अवायक्षि नाशितवानस्मि यजेर्लुङि तङि उत्तमैकवचने रूपम् पूर्वत्र अयासिषमिति ॥ का° [१९.५.१५.] सुमित्रिया न इत्यपोऽञ्जलिनादाय दुर्मित्रिया इति द्वेष्यं परिषिञ्चति द्वौ विक्रमाऽउदङ्गत्वा । यजमानोऽवभृथप्रदेशात् द्वौ विक्रमौ उदीच्यां गत्वा सुमित्रिया इति जलाञ्जलिमादाय यस्यां दिशि रिपुस्तां प्रति सिञ्चतीति सूत्रार्थः ॥ सुमित्रिया नः । व्याख्यातम् [६.२२.] ॥ १८ ॥ १९ ॥

द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव ।
पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ॥ २० ॥

का° [१९.५.१६.] अवभृथवत्स्नात्वा वासोऽपासनं द्रुपदादिवेति । जलस्थाविव जायापती सौमिकावभृथवत्स्नात्वा कर्मकाले धृतं वासोऽप्सु क्षिपतः ॥ अब्देवत्यानुष्टुप् । आपो जलानि एनसः पापात् मा मां शुन्धन्तु पुनन्तु पापात्पृथक्कुर्वन्तु । तत्र दृष्टान्तत्रयमाह द्रुपदादिवेति पलाशीद्रुद्रुमागमा इत्यभिधानोक्तेः [अमर° २.४.५.] द्रुस्तरुः तन्मयं पदं द्रुपदं पादुका तस्मान्मुमुचानः पृथग्भवन् यथा पादुकादोषैरसम्बद्धो भवति मुचेर्विकरणव्यत्ययेन शानचि जुहोत्यादित्वाद्द्वित्वे मुमुचान इति रूपम् । यथा च स्विन्नः स्वेदयुक्तः स्नातः सन्मलात्पृथग्भवति । आज्यमिव यथा पवित्रेण कम्बलमयेन पूतं गालितमाज्यं घृतं कीटेभ्यः पृथग्भवति । तथापो मां शुन्धन्तु ॥ २० ॥

उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ २१ ॥

का° [१९.५.१७.] सोमवदुत्क्रमणमागमनं च । सोमवदिति उद्वयमिति मन्त्रेण

जलान्निष्क्रमणम् अपाम सोमममृता अभूमेति जपनां सर्वेषां त्रिपशुदेशमागमन-मिति (4.) सूत्रार्थः ॥ सूर्यदेवत्यानुष्टुप् प्रस्कण्वदृष्टा । वयं तमसः परि तमसः सकाशात् तमोबहुलादस्माल्लोकात् उदगन्म उद्गता निर्गताः गमेर्लङि शपि लुप्ते मस्य नः । कीदृशा वयम् उत्तरमुत्कृष्टतरं स्वः स्वर्गं पश्यन्तः ईक्षमाणाः किं च देवत्रा देवलोके सूर्यं देवं पश्यन्तः सन्त उत्तमं ज्योतिर्ब्रह्मरूपमुदगन्म प्राप्ताः ॥२१॥

अपोऽअद्यान्वचारिषꣳ रसेन समसृक्ष्महि ।
पयस्वानग्नऽआगमं तं मा सꣳसृज वर्चसा प्रजया च धनेन च ॥ २२॥

का॰ [१९.५.१८.] आहवनीयमुपतिष्ठतेऽपोऽअद्येति । यजमान आहवनीयमुपतिष्ठते ॥ अग्निदेवत्या पङ्क्तिः । हे अग्ने तं मां वर्चसा ब्रह्मवर्चसेन प्रजया पुत्रादिकया धनेन सुवर्णादिकेन च त्वं संसृज संयोजय योऽहमद्य अपः अन्वचारिषम् अवभृथकर्मणा जलमनुचरितवानस्मि प्राप्तोऽस्मि चरतेर्लुङ् यश्चाहं रसेन जलेन समसृक्ष्महि संसृष्टोऽस्मि सृजेर्लुङ् वचनव्यत्ययः यश्चाहं पयस्वानुदकवान्सन् आगममागतवानस्मि गमेर्लुङि पुषादीति [पा॰ ३.१.५५.] च्लेरङ् । तं मां वर्चआदिभिर्योजय ॥ २२॥

a. एधोऽस्येधिषीमहि । b. समिदसि तेजोऽसि तेजो मयि धेहि ।
c. समाववर्त्ति पृथिवी समुषाः समु सूर्यः । समु विश्वमिदं जगत् ॥
d. वैश्वानरज्योतिर्भूयासं विभून्कामान्व्यश्नवै भूः स्वाहा ॥ २३॥

का॰ [१९.५.१९.] एधोऽसीति समिधमादायाहवनीयेऽभ्यादधाति समिदसीति । यजमानः एधोऽसीति मन्त्रेण समिधं गृहीत्वा समिदसीति मन्त्रेणाग्नौ दधाति ॥ समिद्देवत्ये यजुषी । हे समित्त्वमेधः एधयति दीपयतीति एधः दीपिकासि वयं त्वत्प्रसादादेधिषीमहि धनादिभिर्वृद्धिं व्याप्नुयाम एधतेराशीर्लिङ् । हे समित्त्वं समिदसि समिन्धयति दीपयतीति समित् तेजश्चासि तत्संयोगेनाग्नेर्ज्वलनात् अतो मयि विषये तेजो धेहि धारय ॥ का॰ [१९.५.२०.] जुहोति (5.) समाववर्त्तीति । यजमानः सकृद्गृहीतमाज्यं कण्डिकाशेषेण जुहोति ॥ समाववर्त्ति आग्नेयी गायत्री

वैश्वानरज्योतिरिति यजुः श्राग्नेयम् । पृथिवी समाववर्त्ति सम्यगावर्तते विकरण व्यत्ययेन वृतेः शपः श्लुः नश्यतीत्यर्थः उषाः दिवसोऽपि समाववर्त्ति सूर्यः समाववर्त्ति उ एवार्थे विश्वमिदं जगत्समाववर्त्ति । अतोऽहं वैश्वानरज्योतिः भूयासम् विश्वेभ्यो नरेभ्यो हितो वैश्वानरः परमात्मा तद्रूपं ज्योतिर्ब्रह्मैव भूयासम् । विभून्महतोऽपि कामान् मनोरथान्व्यश्नवै प्राप्नुयाम् । भूः स्वाहा भुवनं भूः सत्तामात्रं ब्रह्म तस्मै स्वाहा सुहुतमस्तु भूरित्यव्ययम् ॥ २३ ॥

III. अभ्यादधामि समिधमग्ने व्रतपते त्वयि ।
व्रतं च श्रद्धां चोपैमीन्धे त्वा दीक्षितोऽअहम् ॥ २४ ॥

का० [१९. ५. १२.] अभ्यादधामीति प्रत्यृचमाहवनीये तिस्रः समिधोऽभ्यादधाति । सौत्रामण्यादावादित्येष्टिं समाप्य त्रिपश्वर्थमाहवनीयदक्षिणाग्नी विहृत्याग्न्यन्वाधानं ब्रह्मवरणं च कृत्वाहवनीये यजमानस्तिस्रः समिधः प्रत्यृचमादधाति ॥ अग्निदेवत्यास्तिस्रोऽनुष्टुभः आश्वतराश्विदृष्टाः । हे अग्ने व्रतपते व्रतस्य कर्मणः पालक अहं समिधं त्वयि अभ्यादधामि जुहोमि तेन समिदाधानेन दीक्षितः सन्नहं व्रतं कर्म श्रद्धां विश्वासं चोपैमि उपगच्छामि त्वा त्वामिन्धे दीपयामि ॥ २४ ॥

यत्र ब्रह्म च क्षत्रं च सम्यञ्चौ चरतः सह ।
तं लोकं पुण्यं प्रज्ञेषं यत्र देवाः सहाग्निना ॥ २५ ॥

पुण्यं पवित्रं लोकं प्रज्ञेषं जानीयाम् लोकमप्राप्तानां तल्लोकज्ञानं न भवतीति स्वर्लोकगमनं प्रार्थ्यते । तं कम् यत्र लोके ब्रह्म ब्राह्मणजातिः क्षत्रं क्षत्रियजातिश्च सहावियोगेन चरतस्तिष्ठत इत्यर्थः कीदृशे ब्रह्मक्षत्रे सम्यञ्चौ लिङ्गव्यत्ययः समीची सम्यक् अञ्चतस्ते । यत्र चाग्निना सह देवाः संचरन्ति । सदा च विप्राः क्षत्रियाश्च यं गच्छन्ति तं देवलोकं प्राप्नुयामित्यर्थः ॥ २५ ॥

यत्रेन्द्रश्च वायुश्च सम्यञ्चौ चरतः सह ।
तं लोकं पुण्यं प्रज्ञेषं यत्र सेदिर्न विद्यते ॥ २६ ॥

यत्र लोके इन्द्रश्च वायुश्च सम्यञ्चौ सह चरतः यत्र च सेदिः सदनं सेदिः

आदृगमेति [पा° ३.२.१७१.] चात्किप्रत्ययः लिड्वद्भावाद्द्वित्वाभ्यासलोपौ । अनाप्रातिजनितं दुःखं सेदिः स यत्र न विद्यते तं लोकं पुण्यं पवित्रं प्रज्ञेषं प्रज्ञानीयाम् जानातेः सिब्बहुलं लेटीति [पा° ३.१.३४.] सिपीटि च रूपम् ॥२६॥

अ॒ꣳशुना॑ तेऽअ॒ꣳशुः पृ॑च्यतां॒ परु॑षा॒ परुः॑ ।

ग॒न्धस्ते॒ सोम॑मवतु॒ मदा॑य॒ रसो॒ऽअच्यु॑तः ॥२७॥

सुरादेवत्यानुष्टुप् सुरासंसर्जने विनियुक्ता तत्सूत्रं सौत्रामण्यारम्भे [१९.१.] लिखितम् । हे सुरे ते तव अंशुः भागः सोमस्यांशुना भागेन सह पृच्यतां संयुज्यताम् तव परुः पर्व सोमस्य परुषा पर्वणा सह पृच्यताम् । तव गन्धः अच्युतः अनश्वरो रसश्च सोममवतु आलिङ्गतु किमर्थं मदाय मत्ततायै सुरायुक्तः सोमः पीतो मदजनको भवति अत उभयोर्योगोऽस्तु ॥२७॥

सि॒ञ्चन्ति॒ परि॑षिञ्चन्त्युत्सि॑ञ्चन्ति पु॒नन्ति॑ च ।

सुरा॑यै ब॒भ्र्वै मदे॑ कि॒न्त्वो व॑दति कि॒न्त्वः ॥२८॥

सुरादेवत्येन्द्रदेवत्या वानुष्टुप् पूतसुरादाने विनियोग उक्तः [का° १९.२.६.] । बभ्र्वै बभ्रुवर्णायै तस्यै सुरायै षष्ठ्यर्थे चतुर्थी सुराया मदे स्थितः सुरया मत्तः इन्द्रः किंत्वः किंत्व इति वदति त्वं किम् कस्य त्वमित्याद्यन्यतिरस्कारकरं वचो वदति । यां सुरां सिञ्चन्ति पात्रे ऋत्विजः परिषिञ्चन्ति पयआदिभिः उत्सिञ्चन्ति ग्रहैः गोवालपवित्रहिरण्यादिभिः पुनन्ति च ॥२८॥

धा॒नाव॑न्तं कर॒म्भिण॑मपू॒पव॑न्तमु॒क्थिन॑म् । इन्द्र॑ प्रा॒तर्जु॑षस्व नः ॥२९॥

इन्द्रदेवत्या गायत्री विश्वामित्रदृष्टा स्मार्ते श्रवणाकर्मणि धानाहोमे विनियुक्ता प्रातःसवने पुरोडाशपुरोऽनुवाक्यापि । हे इन्द्र त्वं प्रातःकाले नोऽस्माकं पुरोडाशं जुषस्व कीदृशं धानावन्तं धाना विद्यन्ते यत्र तम् करम्भिणं करम्भोऽस्यास्ति अपूपवन्तमपूपाः सन्ति यत्र उक्थिनमुक्थं शस्त्रं यत्र स्तुतियुक्तम् ॥२९॥

बृ॒हदिन्द्रा॑य गायत॒ मरु॑तो वृत्र॒हन्त॑मम् ।

येन॒ ज्योति॒रज॑नयन्नृता॒वृधो॑ दे॒वं दे॒वाय॒ जागृ॑वि ॥३०॥

का० [१९.५.२.] ऐन्द्यां बृहत्यां गायति । अध्वर्युप्रेषितो ब्रह्मा इन्द्रदेवतायां बृहत्यां साम गायति ॥ इन्द्रदेवत्या बृहती नृमेधपुरुषमेधदृष्टा । हे मरुतः ऋत्विजः इन्द्राय इन्द्रार्थं यूयं बृहत्साम गायत सामगानं कुरुत कीदृशं बृहत् वृत्रहन्तमम् वृत्रं पापं प्रति अतिशयेन हन्ति गच्छति वृत्रमसुरं नाशयति वा नाद्घस्येति [पा० ८.२.१७.] नुम् । ऋतं यज्ञं वर्धयन्ति ऋतवृधः देवा ऋत्विजो वा येन सामगानेन देवाय इन्द्राय ज्योतिः तेजः अजनयन्नुदपादयन् कीदृशं ज्योतिः देवं दीप्यमानम् जागृवि जागर्तीति जागृवि जागरणशीलमविनश्वरमित्यर्थः । सामगानेनेन्द्रस्तेजस्वी जात इत्यर्थः ॥ ३० ॥

अध्वर्यो॒ऽअद्रि॑भिः सु॒तꣳ सोमं॑ प॒वित्र॒ऽआन॑य । पु॒ना॒ही॒न्द्रा॑य॒ पात॑वे ॥ ३१ ॥

का० [१९.२.११.] ब्रह्मानुमन्त्रणमध्वर्योऽअद्रिभिरिति । ब्रह्मा पयोऽनुमन्त्रयते ॥ ऐन्द्री गायत्री । हे अध्वर्यो त्वं सोमं पवित्रे कम्बलमये आनय सिञ्च । कीदृशमद्रिभिर्ग्रावभिः सुतमभिषुतम् । ततः पुनाहि पुनीहि गालय ईत्वाभाव आर्षः । किमर्थं इन्द्राय पातवे इन्द्रस्य पानार्थम् तुमर्थे तवेप्रत्ययः ॥ ३१ ॥

IV. यो भू॒ताना॒मधि॑पति॒र्यस्मि॑ँल्लो॒का अधि॑ श्रि॒ताः ।
य ईशे॑ मह॒तो म॒हाँस्तेन॑ गृह्णामि॒ त्वाम॒हं मयि॑ गृह्णामि॒ त्वाम॒हम् ॥ ३२ ॥

का० [१९.४.२४.] त्रयस्त्रिꣳशं वसाग्रहं गृह्णाति यो भूतानामिति । प्रागभिषिकात्सीसेन तन्त्रमिति [१९.८०.] षोडशऽर्भिर्द्वात्रिंशद्वसाग्रहाः तेषां संस्रवैर्यजमानाभिषिकः कृतः ततोऽध्वर्युर्यो भूतानामिति सार्धकण्डिकात्मकेन मन्त्रेण त्रयस्त्रिंशं वसाग्रहमार्षभखुरेण गृह्णाति ॥ आत्मवादिनी ग्रहदेवत्या कौण्डिन्यदृष्टा पङ्क्तिः । यः परमात्मा भूतानां जराय्वादिभूतानां चतुर्विधानामधिपतिः अधिकं पालकः यस्मिन् आत्मनि लोका भूरादयोऽधिश्रिताः (6.) आश्रिताः लोका यदाधारा इत्यर्थः । महान्सर्वोत्कृष्टो यः महतः महत्तत्त्वप्रमुखस्य तत्त्वगणस्य ईशे ईष्टे नियन्ता वर्तते लोपस्त आत्मनेपदेष्विति [पा० ७.१.४१.] तलोपे लटि तङि प्रथमैकवचने ईशे इति रूपम् अधीगर्थदयेशामिति [पा० २.३.५२.] कर्मणि षष्ठी । हे

ग्रह ग्रहं तेन परमात्मना कृत्वा त्वा (7.) त्वां गृह्णामि मयि परमात्मभावमापन्ने मयि विषये ग्रहं त्वां गृह्णामि ॥ ३२ ॥

a. उपयामगृहीतोऽस्यश्विº ।

b. एष ते योनिरश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे ॥ ३३ ॥

उपयामº यजुः सामत्रिष्टुप् व्याख्यातम् [१०. ३२b.] । एष ते यजुः प्राजापत्या बृहती सादने विनियोगः । ग्रहदेवते द्वे यजुषी ॥ ३३ ॥

प्राणपा मेऽअपानपाश्चक्षुष्पाः श्रोत्रपाश्च मे ।

वाचो मे विश्वभेषजो मनसोऽसि विलायकः ॥ ३४ ॥

काº [१९. ५. ९.] शेषमृत्विजः प्राणभक्षं भक्षयन्ति । ससुराग्रहहोमानन्तरं शेषमृत्विजः सर्वेऽवजिघ्रन्ति कण्डिकाद्वयेन ॥ ग्रहदेवत्ये द्वे अनुष्टुबुपरिष्टाद्बृहत्यौ । हे ग्रह त्वं मे प्राणपा असि प्राणान्पाति रक्षति प्राणपाः अपानपाः अपानस्य रक्षकोऽसि चक्षुषी पातीति चक्षुष्पाः मे मम श्रोत्रपाश्चासि श्रोत्रेन्द्रियं पाति । मे वाचो वागिन्द्रियस्य विश्वभेषजः विश्वं सर्वं भेषजमौषधं यस्मात्स वाचः औषधमुन्मार्गनिवृत्तिर्जपादौ प्रवृत्तिश्च तत्कर्ता । मनसो विलायकश्चासि विलाययति विषयेभ्यो निवर्त्यात्मनि स्थापयति विलायकः आत्मज्ञानप्रदोऽसीत्यर्थः यद्वा ली श्लेषणे विलाययति चक्षुरादिभिः सह श्लेषयति विलायकः सर्वेन्द्रियैः सह मनः संयोजयसीत्यर्थः ॥ ३४ ॥

अश्विनकृतस्य ते सरस्वतिकृतस्येन्द्रेण सुत्राम्णा कृतस्य ।

उपहूत उपहूतस्य भक्षयामि ॥ ३५ ॥

हे ग्रह उपहूत आज्ञप्तोऽहं ते तव त्वां भक्षयामि कर्मणि षष्ठी । कीदृशस्य ते अश्विनकृतस्य करोतिर्दर्शनार्थः अश्विनावेवाश्विनौ स्वार्थेऽण् वृद्ध्यभाव आर्षः अश्विनाभ्यां कृतो दृष्टस्तस्य । सरस्वत्या कृतः सरस्वतिकृतः (8.) सरस्वत्या दृष्टस्य ङ्यापोः संज्ञाछन्दसोर्बहुलमिति [पाº ६. ३. ६३.] सरस्वतीशब्दस्य ह्रस्वः । सुष्ठु त्रायते रक्षति सुत्रामा तेनेन्द्रेण कृतस्य दृष्टस्य । उपहूतस्य ऋत्विग्भिः कृतोपहवस्य ॥ ३५ ॥

V. समिद्ध इन्द्र उषसामनीके पुरोरुचा पूर्वकृद्वावृधानः ।
त्रिभिर्देवैस्त्रिꣳशता वज्रबाहुर्जघान वृत्रं वि दुरो ववार ॥३६॥

आध्वर्यवं समाप्तम् इतः सौत्रामणिकं होत्रमुच्यते ॥ का° [११. ६. १२.] समिद्ध इन्द्र इत्याप्रियः प्रथमस्य । समिद्ध इत्याद्या एकादश ऋचः प्रथमस्येन्द्रस्य पशोराप्रियः प्रयाजयाज्याः ॥ आङ्गिरसदृष्टा एकादशाप्रियः त्रिष्टुभः तासां क्रमादिना देवता इध्मः तनूनपान्नराशंसो वा इडः बर्हिः द्वारः उषासानक्ता दैव्यौ होतारौ तिस्रो देव्यः त्वष्टा वनस्पतिः स्वाहाकृतयः एता देवताः यथायोगमिन्द्रविशेषणत्वेन व्याख्येयाः अनुवाकेनानेनेन्द्रः स्तूयते । इन्द्रो वृत्रं मेघं दैत्यं वा जघान हतवान् दुरः द्वाराणि च विववार मेघस्य द्वाराणि स्रोतांसि विवृतान्यकरोत् दैत्यपक्षे तत्पुरद्वाराणि शून्यान्यकरोत् द्वारशब्दस्य सम्प्रसारणे दुर इति रूपम् । कीदृश इन्द्रः समिद्धः संदीप्तः उषसामनीके मुखे प्रातःकाले पुरोरुचा अग्रे प्रसरन्त्या दीप्त्या पूर्वकृत् पूर्वां दिशं करोतीति आदित्यात्मना पूर्वस्याः कर्ता सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः । त्रिभिर्देवैः त्रिंशता च त्रयस्त्रिंशद्देवैः सह वावृधानः वर्धमानः वृधेर्विकरणव्यत्ययेन शपः तुजादीनां दीर्घोऽभ्यासस्येति [पा° ६. १. ७.] अभ्यासदीर्घः संहितायाम् । वज्रबाहुः वज्रं बाहौ यस्य वज्रपाणिः ॥३६॥

नराशꣳसः प्रति शूरो मिमानस्तनूनपात्प्रति यज्ञस्य धाम ।
गोभिर्वपावान्मधुना समञ्जन्हिरण्यैश्चन्द्री यजति प्रचेताः ॥३७॥

एकस्यामृचि नराशंसतनूनपातौ । प्रचेताः प्रकृष्टं चेतो ज्ञानमस्य स प्रचेताः कर्मज्ञाता यजमानस्तमिन्द्रं प्रतियजति प्रत्यक्षं यजति । तं कम् य ईदृशः नराशंसः नरैर्ऋत्विग्भिरा समन्तात् शस्यते शस्त्रैः स्तूयते स नराशंसः यद्वा नरा अस्मिन्नासीनाः शंसन्तीति [निरु° ८. ६.] यास्कोक्तेर्नराशंसो यज्ञः तद्रूपस्तद्वान्वा । यज्ञस्य धाम स्थानं प्रतिमिमानः मिमीते मिमानः प्रतिगणयन् यज्ञस्थानानि जानन्नित्यर्थः एकः प्रतिर्मिमान इत्यनेन सम्बध्यतेऽपरो यजतीत्यनेन । तथा शूरः शौर्यवान् । तनूनपात् तनोति विस्तारयति सृष्टिं तनूः प्रजापतिर्मरीचिस्तस्य नपात् पौत्रः कश्यपात्मज इत्यर्थः यद्वा तनूं शरीरं न पातयति रक्षति जाठराग्नि-

न्रूपेणेति तनूनपात् अग्निस्तद्रूपः यद्वा तनोति भोगानिति तनूः गौस्तस्या नपात्पौत्रं घृतम् गोः पयो जायते पयस आज्यमिति घृतरूपस्तद्वान्वा । गोभिर्वपावान् पशुसम्बन्धिनीभिर्वपावान्वपायुक्तः (9.) मधुना मधुस्वादोपेतेन घृतेन समञ्जन्हवींषि भञ्जयन् हिरण्यैः पश्ववदानभूतैः चन्द्री चन्द्रं सुवर्णमस्यास्तीति चन्द्री ॥३७॥

ईडितो देवैर्हरिवाँ२॥ऽअभिष्टिराजुह्वानो हविषा शर्धमानः ।
पुरंदरो गोत्रभिद्वज्रबाहुरायातु यज्ञमुप नो जुषाणः ॥३८॥

एवंविध इन्द्र आयातु आगच्छतु कीदृशः देवैरीडितः पूजितः स्तुतः । हरिवान् हरी इन्द्राश्वौ अस्य स्त इति हरिवान् । अभिष्टिः अभि समन्तादिष्टिर्यागो यस्य इलोपश्छान्दसः यद्वा अभिस्तूयतऽइत्यभिष्टिः स्तौतेरौणादिको डिप्रत्ययः । आजुह्वानः आहूयमान ऋत्विग्भिः हविषा निमित्तेन हविर्निमित्तं द्विजैराहूयमानः । शर्धमानः शर्ध इति [निघ° २.९.] बलनाम अतिबलायमानः । पुरं रिपुनगरं दारयति पुरंदरः । गोत्रभित् गां भूमिं वृष्ट्या त्रायन्ते गोत्रा मेघाः तान्वृष्ट्यर्थं भिनत्ति गोत्रभित् गोत्रान्गिरीन्वा भिनत्ति । वज्रबाहुः वज्रधरः । नोऽस्माकं यज्ञमुपजुषाणः उपसेवमानः ॥३८॥

जुषाणो बर्हिर्हरिवान्न इन्द्रः प्राचीनꣳ सीदत्प्रदिशा पृथिव्याः ।
उरुप्रथाः प्रथमानꣳ स्योनमादित्यैरक्तं वसुभिः सजोषाः ॥३९॥

इन्द्रो नोऽस्माकं प्राचीनं प्राग्भवं प्रदेशं सीदत्सीदतु आस्ताम् इतश्च लोप इति [पा° ३.४.९७.] इलोपः कीदृश इन्द्रः हरिवान् हरी अश्वौ तद्युक्तः । पृथिव्याः प्रदिशा द्वितीयार्थे षष्ठी पृथिवीं देवयजनभूमिं प्रदिशन् उपदिशन् प्रदिशति प्रदिशन् सुपां सुलुगित्यादिना [पा° ७.१.३९.] विभक्तेर्डादेशः । उरुप्रथाः प्रथनं प्रथः ख्यातिः उरु विस्तीर्णा प्रथो यस्य स उरुप्रथाः । सजोषाः जोषणं जोषः असुन्प्रत्ययः जोषसा प्रीत्या सहितः सजोषाः संतुष्टः । बर्हिर्जुषाणः सेवमानः शानचि शपो लुक् कीदृशं बर्हिः प्रथमानं प्रथते तत्प्रथमानं विस्तीर्णम् स्योनं सुखरूपम् आदित्यैः वसुभिः मरुद्भिश्च अक्तं अक्तितम् बर्हिरञ्जने मन्त्रे आदित्यादी-

नामुक्तवात्तिरक्तम् सं बर्हिरङ्क्ताꣳ हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिरिति [२.२२.] उक्तेः ॥३९॥

इन्द्रं॒ दुरः॑ कव॒ष्यो॒ धाव॑माना॒ वृषा॑णं यन्तु॒ जन॑यः सु॒पत्नीः॑ ।

द्वारो॑ दे॒वीर॒भितो॒ विश्र॑यन्ताꣳ सु॒वीरा॑ वी॒रं प्रथ॑माना॒ महो॑भिः ॥४०॥

दुरो यज्ञगृहद्वार इन्द्रं यन्तु प्राप्नुवन्तु । कीदृशमिन्द्रं वृषाणं वर्षति वृषा तम् वर्षितारम् इन्द्रः पृथिव्यै वर्षीयानित्युक्तेः । वीरं शूरम् । कीदृश्यो दुरः कवष्यः कु शब्दे कूयन्ते कुवन्ति शब्दयन्ति वा जना यासु ताः कवष्यः ससुषिराः सच्छिद्रा एव शब्दप्रसरात् कौतेरौणादिकोऽषच्प्रत्ययः । तथा धावमानाः धावन्ते धावमानाः आदरयुक्ता इत्यर्थः । तत्रोपमानं जनयः सुपत्नीः शोभनाः साध्व्यः पत्न्यो यज्ञे सहाधिकारिण्यो जायाः स्त्रिय-इव लुप्तोपमानम् ता यथा धावमानाः यन्ति यान्ति तथा द्वार इन्द्रं यान्तु । किं च इन्द्रं प्राप्य द्वारो देवीः देव्यः अभितः सर्वत्र विश्रयन्तां विवृता भवन्तु । कीदृश्यो द्वारः सुवीराः शोभना वीरा ऋत्विजो यासु ताः सुवीराः ऋत्विग्युक्ताः महोभिस्तेजोभिरुत्सवैर्वा प्रथमानाः विस्तृता भवन्त्यः ॥४०॥

उ॒षासा॒नक्ता॑ बृह॒ती बृ॒हन्तं॒ पय॑स्वती सु॒दुघे॒ शूर॒मिन्द्र॑म् ।

तन्तुं॑ त॒तं पेश॑सा सं॒वय॑न्ती दे॒वानां॑ दे॒वं यज॑तः सुरु॒क्मे ॥४१॥

उषासानक्ता इन्द्रं यजतः संगतं कुरुतः इन्द्रेण संगमं कुरुतः यजिरत्र संगतिकरणार्थः । उषा आदित्यप्रभा नक्ता रात्रिः उषाश्च नक्ता च उषासानक्ता समासे उषःशब्दस्योषासादेशः । किम्भूतमिन्द्रं बृहन्तं महान्तं शूरं विक्रान्तं देवानां देवं सर्वदेवपूज्यम् । कीदृश्यौ उषासानक्ता बृहती बृहत्यौ पयस्वती उदकवत्यौ अवश्यायवत्यौ । सुदुघे शोभनं दुग्धः ते दुहः कब्घश्चेति [पा॰ ३.२.७०.] कप् घादेशश्च । पेशसा विचित्ररूपेण संवयन्ती संग्रथयन्त्यौ इन्द्रं रूपेण योजयन्त्यौ तत्र दृष्टान्तः तन्तुमिव यथा पटार्थं ततं विस्तीर्णं तन्तुं सूत्रं रूपेण कश्चित्संवयति । तथा सुरुक्मौ शोभनं रुक्मं रोचनं कान्तिर्ययोस्ते सुरुक्मौ ॥४१॥

दैव्या मिमाना मनुषः पुरुत्रा होताराविन्द्रं प्रथमा सुवाचा ।
मूर्धन्यज्ञस्य मधुना दधाना प्राचीनं ज्योतिर्हविषा वृधातः ॥४२॥

अयं चाग्निरसौ च वायुर्मध्यमस्तौ देवानामिमौ दैव्यौ होतारौ वाय्वग्नी प्राचीनं प्राच्यां दिशि वर्तमानं ज्योतिराहवनीयाख्यं मधुना मधुरेण हविषा कृत्वा वृधातः वर्धयतः वृधेर्लेटोऽडाटावित्याट् [पा° ३.४.९४.] । कीदृशौ होतारौ पुरुत्रा बहुधा मिमाना मिमानौ यज्ञं निर्मिमाणौ । मनुषः मानुषाद्धोतुः प्रथमा आद्यौ मनुषः इति प्रथमा पञ्चम्यर्थे । सुवाचा सुवाचौ शोभना वाक् ययोस्तौ । यज्ञस्य मूर्धन् मूर्धनि प्रधानेऽङ्गे इन्द्रं दधाना स्थापयन्तौ सर्वत्र प्रथमद्विवचनस्याकारः ॥४२॥

तिस्रो देवीर्हविषा वर्धमाना इन्द्रं जुषाणा जनयो न पत्नीः ।
अच्छिन्नं तन्तु पयसा सरस्वतीडा देवी भारती विश्वतूर्तिः ॥४३॥

सरस्वती इडा भारती तिस्रो देव्यः पयसा हविषा कृत्वा तन्तु यज्ञमच्छिन्नं छेदेन विघ्नेन रहितं कुर्वन्त्विति शेषः । वर्धमानाः पुष्टियुक्ताः । पत्नीः पत्न्यः साध्व्यो जनयो न जाया इव इन्द्रं जुषाणाः सेवमानाः । देवी दीप्यमाना (10.) विश्वस्मिन्सर्वत्र त्वरते तूर्णं गच्छति विश्वतूर्तिः सर्वगामिनीति द्वे विशेषणे तिसृणाम् ॥४३॥

त्वष्टा दधच्छुष्ममिन्द्राय वृष्णेऽपाकोऽचिष्टुर्यशसे पुरूणि ।
वृषा यजन्वृषणं भूरिरेता मूर्धन्यज्ञस्य समनक्तु देवान् ॥४४॥

त्वष्टा यज्ञस्य मूर्धन्मूर्धनि शिरःस्थानीये आहवनीये देवान्समनक्तु भोजयतु अन्तर्भूतण्यर्थोऽनक्तिरत्र भोजनार्थः । कीदृशस्त्वष्टा यशसे यशस्विने वृष्णे सेक्त्रे इन्द्राय पुरूणि वचनव्यत्ययः पुरु बहु शुष्मं बलं दधत् धारयन् । तथा अपाकः पाक इति प्रशस्यनाम न विद्यते पाकः प्रशस्यो यस्मात्सोऽपाकः नञोऽस्त्यर्थानां (11.) बहुव्रीहिर्वाच्यो वोत्तरलोपश्चेति [पा° २.२.२४. वा° ८.] समासः । अचिष्टुः अचनशीलः सर्वत्र गतः । वृषा वर्षिता वृषणमिन्द्रं यजन्पूजयन् । भूरिरेताः भूरि बहु रेतो वीर्यं यस्य सः सर्वजनक इत्यर्थः त्वष्टा त्वक्षतेः क-

NN NN*

रोत्यर्थस्येति [निरु° ८.१३.] यास्कोक्तेः । ईदृशस्त्वष्टा देवान्भोजयत्वित्यर्थः ॥४४॥

वनस्पतिरवसृष्टो न पाशैस्त्मन्या समञ्जञ्छमिता न देवः ।
इन्द्रस्य हव्यैर्जठरं पृणानः स्वदाति यज्ञं मधुना घृतेन ॥४५॥

वनस्पतिर्यूपो देवो मधुना रसेन घृतेन च यज्ञं स्वदाति स्वदतु लेट् आस्वादयतु समनक्तु वा कीदृशो वनस्पतिः अवसृष्टो न आज्ञप्त-इव पाशैः कृत्वा त्मन्या आत्मनि समञ्जन् अर्थात्पशुम् संयोजयन् आत्मन्शब्दस्य तृतीयाया यादेशः मन्त्रेष्वाङ्यादेरात्मन इति [पा° ६.४.१४१.] आलोपः तत्र दृष्टान्तः शमिता न शमिता इव यथा शमिता पाशैः पशुमात्मनि संयोजयति । तथा हव्यैरिन्द्रस्य जठरमुदरं पृणानः पूरयन् पृणातेऽसौ पृणानः ॥४५॥

स्तोकानामिन्दुं प्रति शूर इन्द्रो वृषायमाणो वृषभस्तुराषाट् ।
घृतप्रुषा मनसा मोदमानाः स्वाहा देवा अमृता मादयन्ताम् ॥४६॥

इन्द्रः स्वाहा देवाः नामैकदेशे नामग्रहणं स्वाहाकृतयो देवाश्च मादयन्तां तृप्यन्तु मद तृप्तौ चुरादिः । किमुद्दिश्य स्तोकानामिन्दुं प्रति स्तोका वपासम्बन्धिनो घृतविन्दवः तत्सम्बन्धी य इन्दुः सोमः तं प्रति तमुद्दिश्य वपास्तोकेषु सोमत्वमारोप्यते वपास्तोकरूपं सोममुद्दिश्येन्द्रः स्वाहाकृतयश्च तृप्यन्तामित्यर्थः । कीदृश इन्द्रः शूरः शौर्यवान् वृषायमाणः वृषवदाचरति वृषायते वृषायतेऽसौ वृषायमाणः शत्रून्प्रतिगर्जन्नित्यर्थः वृषभः वर्षिता तुराषाट् तूर्णं सहते शत्रूनभिभवति तुराषाट् । कीदृशाः स्वाहाकृतयः घृतप्रुषा घृतविन्दुनापि मनसा मोदमानाः मोदन्ते ते मोदमानाः संतुष्टाः । अमृताः अमरणधर्माणः नास्ति मृतं मरणं येषां ते ॥४६॥

VI. आयात्विन्द्रोऽवस उप न इह स्तुतः सधमादस्तु शूरः ।
वावृधानस्तविषीर्यस्य पूर्वीर्द्यौर्न क्षत्रमभिभूति पुष्यात् ॥४७॥

का° [१९.६.१३.] याज्यानुवाक्याश्च । वपापुरोडाशपशुयागानां याज्यानुवाक्याः आयात्विन्द्र इति [४७.] वपायाः पुरोऽनुवाक्या आ न इन्द्रो दूरादिति [४८.]

याज्या आ न इन्द्रो हरिभिरिति [४९.] पशुपुरोडाशस्य पुरोऽनुवाक्या त्रातारमिन्द्रमिति [५०.] याज्या इन्द्रः सुत्रामिति [५१.] पशुयागे पुरोऽनुवाक्या तस्य वयमिति [५२.] याज्येति सूत्रार्थः ॥ सप्त त्रिष्टुभ इन्द्रदेवत्याः । इन्द्रो नोऽस्मानवसे अवितुं रक्षितुमुप आयातु समीपमागच्छतु तुमर्थेऽवतेरसेन्प्रत्ययः । इहायातः सन्सधमात् अस्तु सह देवैः सार्धं मादयति तृप्यति सहमात् सहभोजनकर्तास्तु मादयतेः क्विप् । कीदृश इन्द्रः शूरः विक्रान्तः । स्तुतोऽस्माभिः । वावृधानः वर्धमानः । यस्येन्द्रस्य पूर्वीः तविषीः पूर्वाः तविष्यः पूर्वाणि कृतानि बलानि वृत्रबधादयः पराक्रमाः द्यौर्न स्वर्ग-इव कथ्यन्ते स्वर्गो यथा स्तूयते तथा यस्येन्द्रस्य बलानि स्तूयन्ते तविषीति बलनाम तवतेर्वृद्धिकर्मण इति [निरु॰ १. २५.] यास्कः । यश्चेन्द्रः क्षत्रमस्मदीयं पुष्यात् पुष्यति लेटोऽडाटौ कीदृशं क्षत्रम् अभिभूति अभिभवनशीलं शूरम् । स इन्द्र आयाविति सम्बन्धः ॥४७॥

आ न॒ इन्द्रो॑ दूरादा न॑ आसाद॑भिष्टि॒कृद॑वसे यासदु॒ग्रः ।
ओजि॑ष्ठेभिर्नृ॒पति॒र्वज्र॑बाहुः सं॒गे स॒मत्सु॑ तु॒र्वणिः॑ पृत॒न्यून् ॥४८॥

इन्द्रो नोऽस्माकं दूराद्दूरप्रदेशात् द्युलोकादेरपि आयासत् आयातु यातेर्लेटोऽडाटाविति [पा॰ ३. ४. ९४.] अटि कृते सिब्बहुलं लेटीति [पा॰ ३. १. ३४.] सिप्प्रत्ययः । आसान्निकटप्रदेशादपि आयासत् आसादित्यन्तिकनाम [निघ॰ २. १६.] । दूरात्समीपाच्चागच्छत्वित्यर्थः । किं कर्तुमवसे अवितुमस्माकं रक्षणं कर्तुम् । कीदृश इन्द्रः अभिष्टिकृत् अभिष्टिमभिलाषं करोतीत्यभिष्टिकृत् मनोरथप्रदः । उग्रः उत्कृष्टः । ओजिष्ठेभिः तेजस्वितमैर्बलैर्युक्त इति शेषः ओजो विद्यते येषां ते ओजस्विनः अत्यन्तमोजस्विनः ओजिष्ठाः विन्मतोर्लुक् तैः । नृपतिः नृणां पालकः । वज्रबाहुः वज्रं बाह्वो यस्य सः । तथा संगे समत्सु संगः समदिति द्वे संग्रामनामनी [निघ॰ २. १७.] संगे एकस्मिन्संग्रामे समत्सु बहुष्वपि संग्रामेषु युगपदुत्थितेषु सत्सु पृतन्यून् शत्रून् तुर्वणिः तुर्व हिंसायां तुर्वतीति तुर्वणिः हन्ता पृतनामिच्छन्ति पृतन्यन्ति सुप आत्मनः क्यजिति [पा॰ ३. १. ८.] क्यचि परे कव्यधरेति [पा॰ ७. ४. ३९.] अलोपः ततः क्याच्छन्दसीति [पा॰ ३. २. १७०.] उप्रत्ययः संग्रामेषूनां हन्तेत्यर्थः ॥४८॥

आ न इन्द्रो हरिभिर्यात्वच्छार्वाचीनोऽवसे राधसे च ।
तिष्ठाति वज्री मघवा विरप्शीमं यज्ञमनु नो वाजसातौ ॥४९॥

अच्छाभिर्यौ । इन्द्रोऽर्वाचीनोऽभिमुखः सन् नोऽस्मानच्छ अस्मानभि आयातु कैः हरिभिरश्वैः किमर्थमवसे अवनमवः असुन् तस्मै रक्षणाय राधसे धनाय च आगत्य च वज्री इन्द्रो नोऽस्माकमिमं यज्ञमनु प्रति वाजसातौ अन्नसम्भजने निमित्ते तिष्ठाति तिष्ठतु लेट् । कीदृशः मघवा मघं धनमस्यास्तीति धनवान् । विरप्शी विविधं रपति लपति विरप्शी महान् ॥४९॥

त्रातारमिन्द्रमवितारमिन्द्रꣳ हवे-हवे सुहवꣳ शूरमिन्द्रम् ।
ह्वयामि शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः ॥५०॥

गर्गदृष्टा । त्रातारं रक्षितारमिन्द्रम् अवितारं प्रीणयितारमिन्द्रम् हवे हवे आह्वाने आह्वाने यज्ञे वा सुहवं सुखेन ह्वयते आहूयतऽइति सुहवम् शूरम् शक्रम् शक्नोति शक्रस्तं समर्थम् पुरुहूतं पुरुभिर्बहुभिर्हूयते पुरुहूतस्तं बहुभिराहूतम् ईदृशमिन्द्रं ह्वयामि आह्वयामि । मघवा धनवानिन्द्र आहूतः सन्नोऽस्माकं स्वस्ति अविनाशं धातु दधातु करोतु विकरणव्यत्ययः । इन्द्रशब्दावृत्तिरादरार्था ॥५०॥

इन्द्रः सुत्रामा स्ववाँ२॥ऽअवोभिः सुमृडीको भवतु विश्ववेदाः ।
बाधतां द्वेषोऽअभयं कृणोतु सुवीर्यस्य पतयः स्याम ॥५१॥

इन्द्रः अवोभिरन्नैः सुमृडीकः शोभनसुखकारी भवतु शोभनं मृडीकं सुखं यस्मात्स सुमृडीकः । कीदृश इन्द्रः सुत्रामा सुष्ठु त्रायते रक्षति सुत्रामा आतो मनिन्निति [पा॰ ३.२.७४.] मनिन् । स्ववान् स्वं धनमस्यास्तीति स्ववान् आतोऽटि नित्यमिति [पा॰ ८.३.३.] अनुनासिकत्वम् दीर्घादटि समानपादऽइति [पा॰ ८.३.९.] नस्य रुः । विश्ववेदाः विश्वं सर्वं वेदो धनं यस्य सः । स चेन्द्रो द्वेषः दौर्भाग्यं बाधतां निवर्तयतु अभयं च कृणोतु करोतु किं च इन्द्रप्रसादाद्वयं सुवीर्यस्य धनस्य पतयः स्वामिनः स्याम भवेम शोभनाश्च ते वीराश्च सुवीराः पुत्रादयः तेभ्यो हितं सुवीर्यं तस्य ॥५१॥

तस्यं वयꣳ सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ।
स सुत्रामा स्ववाँ२॥ऽइन्द्रोऽअस्मेऽआराच्चिद्द्वेषः सनुतर्युयोतु ॥५२॥

वयं तस्येन्द्रस्य सुमतौ शोभनबुद्धौ स्याम भवेम भद्रे कल्याणरूपे सौमनसे सुमनसो भावे शोभनमनस्कत्वेऽपि स्याम इन्द्रोऽस्मासु सुमतिं मनश्च भद्रं करोत्वित्यर्थः । कीदृशस्येन्द्रस्य यज्ञियस्य यज्ञाय हितो यज्ञियस्तस्य यज्ञसम्पादिनः । सुत्रामा सुरक्षकः स्ववान्धनवान्स इन्द्रः अस्मे अस्मत्तः आराच्चित् दूरादपि वर्तमानं द्वेषो दौर्भाग्यं सनुतरन्तर्हितं कृत्वा युयोतु पृथक्करोतु विकरणव्यत्ययः । सनुतरिति निर्णीतान्तर्हितनाम [निघ॰ ३.२५.] ॥५२॥

आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ।
मा त्वा के चिन्नि यमन्विं न पाशिनोऽति धन्वेव ताँ२॥ऽइहि ॥५३॥

विश्वामित्रदृष्टा बृहती तृतीयो द्वादशार्णोऽन्ये त्रयोऽष्टार्णाः—आ मन्द्रैः एवेत् अनयोर्विनियोगाभावः । हे इन्द्र त्वं हरिभिः अश्वैः आयाहि कीदृशैः मन्द्रैः गम्भीरनदैः मयूररोमभिः मयूरस्येव रोमाणि येषां ते मयूररोमाणस्तैः मयूरसमवर्णैः । किं च केचित् दुष्टा आगच्छन्तं त्वा त्वां मा नियमन् नियच्छन्तु मा निबध्नन्तु तत्र दृष्टान्तः पाशिनो पाशहस्ता व्याधाः विं पक्षिणमिव यथा पाशिनः पक्षिणं बध्नन्ति तथा त्वां मा बध्नन्तु अथ ये परिपन्थिनो भवेयुस्तानतीहि अतिक्रम्यागच्छ किमिव धन्व इव धन्व निरुदकदेशः यथा पान्थो मरुदेशमतिक्रम्य गच्छति तथागच्छ ॥५३॥

एवेदिन्द्रं वृषणं वज्रबाहुं वसिष्ठासोऽअभ्यर्चन्त्यर्कैः ।
स नं स्तुतो वीरवद्धातु गोमद्यूयं पात स्वस्तिभिः सदा नः ॥५४॥

वसिष्ठदृष्टा इन्द्रदेवत्या त्रिष्टुप् । वसिष्ठाः वसिष्ठापत्यानि मुनयः अर्कैर्मन्त्रैः एव इत् एवमेव इन्द्रमभ्यर्चन्ति पूजयन्ति कीदृशमिन्द्रं वृषणं वर्षितारम वज्रबाहुं वज्रं बाहौ यस्य तम् स इन्द्रः स्तुतः सन्वीरवत् वीरा विद्यन्ते यत्र तत् पुत्रयुक्तम् गोमत् गावो विद्यन्ते यत्र तत् गोसंयुक्तं धनम् नोऽस्मभ्यं धातु दधातु वि-

करणव्यत्ययः । एवं पादत्रयेणेन्द्रं स्तुत्वा अश्विन आह हे अश्विनः यूयं स्वस्तिभिः अविनाशैः सदा सर्वदा नोऽस्मान्पात रक्षत ॥५४॥

VII. समिद्धोऽअग्निरश्विना तप्तो घर्मो विराट् सुतः ।

दुहे धेनुः सरस्वती सोमꣳ शुक्रमिहेन्द्रियम् ॥५५॥

का॰ [१९. ६. १५.] आप्रियश्च समिद्धोऽअग्निरश्विनेति । समिद्ध इत्याद्या द्वादशानुष्टुभः चकारात्त्रिपशोः प्रयाजयाज्याः इति सूत्रार्थः ॥ विदर्भिदृष्टा अश्विसरस्वतीन्द्रदेवत्या आप्रीसंज्ञा द्वादशानुष्टुभः । अश्विनावध्वर्यू देवानामिति तौ प्रति होता प्राह हे अश्विना अश्विनौ अग्निः समिद्धो दीप्तोऽस्ति हविर्दहनक्षमोऽस्ति घर्मः प्रवर्ग्यः तप्तोऽस्ति विराट् विविधं राजमानः सोमः सुतोऽभिषुतः । किं च धिनोति प्रीणाति धेनुः औणादिको नुप्रत्ययो धिवेः वलोपो गुणश्च प्रीणयित्री सरस्वती इह यज्ञे सोमं दुहे दुग्धे दुह प्रपूरणे लटि तङि प्रथमैकवचने टेरेत्वे लोपस्त आत्मनेपदेष्विति [पा॰ ७. १. ४१.] तलोपे दुहे इति रूपम् । कीदृशं सोमं शुक्रं शुक्लं शुद्धम् इन्द्रियमिन्द्राय हितं बलकरम् । एतावता यज्ञसम्पत्तिरस्ति युवामागच्छतमिति भावः ॥५५॥

तनूपा भिषजा सुतेऽश्विनोभा सरस्वती ।

मध्वा रजाꣳसीन्द्रियमिन्द्राय पथिभिर्वहान् ॥५६॥

उभा अश्विना उभौ अश्विनौ सरस्वती मध्वा मधुना रजांसि लोकान् दुहन्ति पूरयन्ति पूर्वऽर्चो (12.) दुहे इत्यस्य वचनव्यत्ययेनेहानुषङ्गः लोका रजांस्युच्यन्तऽइति [निरु॰ ४. १९.] यास्कोक्तेः रजःशब्दोऽत्र लोकवाची । कीदृशावश्विनौ तनूपा तनूः शरीराणि पातस्तौ तनूपौ शरीराणां रक्षितारौ भिषजा भिषजौ वैद्यौ । क्व सति । सुते सोमेऽभिषुते सति पूरयन्तीत्यर्थः । किं च अश्विसरस्वत्य इन्द्राय इन्द्रियं वीर्यं पथिभिर्यज्ञमार्गैः वहान्वहन्ति इतश्च लोपः परस्मैपदेष्विति [पा॰ ३. ४. ९७.] इकारलोपे वहानिति रूपम् ॥५६॥

इन्द्रायेन्दुꣳ सरस्वती नराशꣳसेन नग्नहुम् ।

अधातामश्विना मधु भेषजं भिषजा सुते ॥५७॥

सरस्वती नराशंसेन यज्ञेन सह इन्द्राय इन्द्रार्थमिन्दुं सोमं नग्नहुं सुराकन्दं च पूर्वोक्तमधात् धृतवती किं च भिषजा अश्विना भिषजौ अश्विनौ सुते सोमेऽभिषुते सति मधु मधुरं भेषजमौषधमधातां धारितवन्तौ अधातामित्येव क्रिया वचनव्यत्ययेन पूर्वार्धे योज्या ॥५७॥

आजुह्वाना सरस्वतीन्द्रायेन्द्रियाणि वीर्यम् ।

इडाभिरश्विनाविषꣳ समूर्जꣳ सꣳ रयिं दधुः ॥५८॥

आह्वयति आजुह्वाना अर्थादिन्द्रमाह्वयन्ती सरस्वती अश्विना चेन्द्राय इन्द्रियाणि चक्षुरादीनि संदधुः वीर्यं सामर्थ्यं च दधुः इडाभिः पशुभिः सह इषमन्नं संदधुः पशवो वाऽइडेति [१.८.१.१२] श्रुतिः ऊर्जं दध्यादि रयिं धनं च संदधुः एतानि ददुरित्यर्थः ॥५८॥

अश्विना नमुचेः सुतꣳ सोमꣳ शुक्रं परिस्रुता ।

सरस्वती तमाभरद्बर्हिषेन्द्राय पातवे ॥५९॥

अश्विना अश्विनौ परिस्रुता सुरया सह सुतमभिषुतं शुक्रं शुद्धममलिनं सोमं नमुचेः असुरात्सकाशात् आहरताम् सरस्वती च तमेव सोमं बर्हिषास्तरणार्थेन सह आभरत् आहरत् किमर्थमिन्द्राय पातवे इन्द्रस्य पानार्थं तुमर्थे तवेप्रत्ययः ॥५९॥

कवष्यो न व्यचस्वतीरश्विभ्यां न दुरो दिशः ।

इन्द्रो न रोदसीऽउभे दुहे कामान्त्सरस्वती ॥६०॥

अस्यामृचि त्रयो नकाराश्चकारार्थाः । अश्विभ्यां सहिता सरस्वती इन्द्रो न इन्द्रश्च उभे रोदसी द्यावापृथिव्यौ कामान्दुहे दुग्धे द्विकर्मकः द्यावापृथिवीभ्यां सकाशात्कामान्दोग्धि दुरो दिशश्च सकाशात् दोग्धि अकथितं चेति [पा॰ १.४.५१.] द्वारां दिशां रोदसोश्च कर्मत्वम् कीदृश्यो द्वारः कवष्यः कुष निष्कर्षे कुषिताः सच्छिद्राः तथा व्यचस्वतीः व्यचनं व्यचोऽवकाशः तद्वत्यः ॥६०॥

उषासानक्तमश्विना दिवेन्द्रꣳ सायमिन्द्रियैः ।

संजानाने सुपेशसा समञ्जाते सरस्वत्या ॥६१॥

हे अश्विनौ उषासा रविप्रभा नक्तं रात्रिश्च सरस्वत्या सह दिवा दिवसे सायंकाले च इन्द्रमिन्द्रियैः वीर्यैः सह समञ्जाते संयोजयतः । कीदृश्यौ ते संजानाने संजानीतः ते संजानाने एकमती सुपेशसा शोभनं पेशो रूपं ययोस्ते शुक्ला उषाः कृष्णा रात्रिः ॥ ६१॥

पातं नोऽअश्विना दिवा पाहि नक्तꣳ सरस्वति ।

दैव्या होतारा भिषजा पातमिन्द्रꣳ सचा सुते ॥ ६२॥

हे अश्विना अश्विनौ दिवा दिवसे नोऽस्मान्युवां पातं रक्षतम् हे सरस्वति नक्तं रात्रौ त्वं नः पाहि रक्ष । हे दैव्या होतारा देवसम्बन्धिनौ होतारौ भिषजा भिषजौ अश्विनौ सुते सोमेऽभिषुते सति सचा सह एकीभूय युवमिन्द्रं पातं रक्षतम् सर्वत्र विभक्तेराकारः ॥ ६२॥

तिस्रस्त्रेधा सरस्वत्यश्विना भारतीडा ।

तीव्रं परिस्रुता सोममिन्द्राय सुषुवुर्मदम् ॥ ६३॥

तिस्रो देव्यः अश्विना अश्विनौ च परिस्रुता सुरया सह सोममिन्द्राय सुषुवुरभिषुतवन्तः । काः तिस्रः सरस्वती भारती इडा च कीदृश्यः त्रेधा स्थिता इति शेषः सरस्वती मध्यस्थाना भारती द्युस्थाना इडा पृथिवीस्थाना कीदृशं सोमं तीव्रं पटुत्वकरम् मदं मदजनकम् ॥ ६३॥

अश्विना भेषजं मधु भेषजं नः सरस्वती ।

इन्द्रे त्वष्टा यशः श्रियꣳ रूपꣳ-रूपमधुः सुते ॥ ६४॥

अश्विना नोऽस्माकं सरस्वती त्वष्टा प्रयाजदेवता च सुते सोमेऽभिषुते सति इन्द्रे एतानि वस्तूनि अधुः स्थापयामासुः दधातेर्लुङ् कानीत्यत आह भेषजमौषधं मधु मधुरूपं भेषजं च यशः कीर्तिं श्रियं लक्ष्मीं रूपं-रूपं नानाविधं रूपं च नित्यवीप्सयोरिति [पा° ८. १. ४.] रूपशब्दस्य द्वित्वम् ॥ ६४॥

ऋतुथेन्द्रो वनस्पतिः शशमानः परिस्रुता ।
कीलालमश्विभ्यां मधु दुहे धेनुः सरस्वती ॥ ६५॥

वनस्पतिः प्रयाजदेवः शशमानः स्तुवन्सन् ऋतुथा ऋतौ-ऋतौ काले-काले परिस्रुता सुरया सह कीलालमन्नरसमिन्द्रः इन्द्राय इन्द्रार्थं दुहे दुग्धे सुपां सुलुगित्यादिना [पा° ७.१.३९.] चतुर्थ्येकवचनस्य सुप्रादेशे इन्द्र इति लोपस्त आत्मनेपदेष्विति [पा° ७.१.४१.] तलोपे दुहे इति रूपम् । किं च सरस्वती अश्विभ्यां सहिता धेनुर्भूत्वा इन्द्राय मधु दुहे दुग्धे ॥ ६५॥

गोभिर्न सोममश्विना मासरेण परिस्रुता ।
समधात्तꣳ सरस्वत्या स्वाहेन्द्रे सुतं मधु ॥ ६६॥

हे अश्विना अश्विनौ मासरेण परिस्रुता सह गोभिर्न गोप्रभृतिपशुभिश्च सह नश्चार्थे सुतमभिषुतं सोमं मधु च इन्द्रे युवां समधातमारोपयतम् सम्पूर्वाद्धातेर्लुङि मध्यमद्विवचनम् हे स्वाहाकृतयः प्रयाजदेवाः यूयं सरस्वत्या सह इन्द्रे सुतं मधु समधातेति वचनव्यत्ययः ॥ ६६॥

VIII. अश्विना हविरिन्द्रियं नमुचेर्धिया सरस्वती ।
आ शुक्रमासुराद्वसु मघमिन्द्राय जभ्रिरे ॥ ६७॥

का° [१९, ६, १६.१७.] अश्विना हविरिति तिस्रो वपानां याज्यानुवाक्याः प्रथमामनूच्य द्वितीया याज्या द्वितीयामनूच्य तृतीया याज्या तृतीयामनूच्य प्रथमा याज्या । अश्विनेत्याद्यास्तिस्रस्तिसृणां वपानां क्रमाद्याज्यापुरोऽनुवाक्याः तत्प्रकारमाह आश्विनवपायागे अश्विनेति [६७.] अनुवाक्या यमश्विनेति [६८.] याज्या सारस्वतवपायागे यमश्विनेति [६८.] अनुवाक्या तमिन्द्रमिति [६९.] याज्या ऐन्द्रवपायागे तमिन्द्रमिति [६९.] अनुवाक्यां अश्विनेति [६७.] याज्येति सूत्रार्थः ॥ अश्विसरस्वतीन्द्रदेवत्यास्तिस्रोऽनुष्टुभः । अश्विना अश्विनौ सरस्वती च धिया बुद्ध्या कृत्वा नमुचेर्नमुचिसंज्ञात् आसुरात् दैत्यात् इन्द्रायेन्द्रार्थमेतानि वस्तूनि आजभ्रिरे आजह्रिरे कानीत्यत आह हविः शुक्रं शुद्धममलिनं हविः इन्द्रियं वीर्यं मघं महनीयं वसु धनं च ॥ ६७॥

०००

यमश्विना सरस्वती हविषेन्द्रमवर्धयन् ।

स बिभेद वलं मघं नमुचावासुरे सचा ॥ ६८॥

अश्विनौ सरस्वती च हविषा कृत्वा यमिन्द्रमवर्धयन् स इन्द्रो नमुचावासुरे सचा नमुचिना असुरेण सह मघं महनीयं वलं मेघं बिभेद विदारितवान् । स-चेत्यव्ययं सहार्थे तद्योगे नमुचावासुरे इति तृतीयार्थे सप्तमी । वृणोतेर्वल इति [निरु॰ ६. २.] यास्कः नमुचिं विदार्य वृष्टिं कारितवानित्यर्थः ॥ ६८॥

तमिन्द्रं पशवः सचाश्विनोभा सरस्वती ।

दधाना अभ्यनूषत हविषा यज्ञऽइन्द्रियैः ॥ ६९॥

पशवः कर्माङ्गभूता गोमेषाजाः उभा अश्विना उभौ अश्विनौ सरस्वती च स-चा सहभूताः सन्तः यज्ञे हविषा इन्द्रियैः वीर्यैश्च दधानाः पुष्णन्तः सन्तः तमिन्द्र-मभ्यनूषत अवर्धयन् अस्तुवन्वा नू स्तवने ॥ ६९॥

यऽइन्द्रऽइन्द्रियं दधुः सविता वरुणो भगः ।

स सुत्रामा हविष्पतिर्यजमानाय सश्चत ॥ ७०॥

का॰ [१९. ६. १८.] यऽइन्द्रऽइति पुरोडाशानां पूर्ववत् यऽइन्द्रऽइति तिसस्त्र-याणां पशुपुरोडाशानां याज्यानुवाक्याः पूर्ववत् यऽइन्द्रे [७०.] सविता [७१.] इ-त्यैन्द्रस्यानुवाक्यायाज्ये सविता [७१.] वरुणः क्षत्रम् [७२.] इति सावित्रस्य ते व-रुणः क्षत्रम् [७२.] यऽइन्द्रे [७०.] इति वारुणस्येति सूत्रार्थः ॥ प्रत्येकमिन्द्रसवि-तृवरुणदेवत्यास्तिस्रोऽनुष्टुभः । सविता वरुणो भग इति ये त्रयो देवाः इन्द्रे इन्द्रियं वीर्यं दधुः स्थापयामासुः । हविष्पतिः हविषां स्वामी सुत्रामा शोभनत्रा-णकर इन्द्रो यजमानाय कर्मणि चतुर्थी यजमानं सश्चत सेवताम् इष्टदानेन यज-मानं सुखयतित्यर्थः षश्च सेवने लोडर्थे लङ् अडभाव आर्षः ॥ ७०॥

सविता वरुणो दधद्यजमानाय दाशुषे ।

आदत्त नमुचेर्वसु सुत्रामा बलमिन्द्रियम् ॥ ७१॥

सुत्रामा इन्द्रो नमुचेरसुरात्सकाशात् यद्वसु धनं बलमिन्द्रियं वीर्यं च आदत्त

ऽग्राह सविता वरुणो भगश्च पशुपुरोडाशमन्नदेवास्तत् नमुचेरानीतं वस्वादिकं यजमानाय दधत् दधातु ददत्वित्यर्थः कीदृशाय यजमानाय दाशुषे दाशति ददाति दाश्वान् तस्मै हवींषि दत्तवते दाश्वान्साह्वानित्यादिना [पा॰ ६.१.१२.] क्वसन्तो निपातः ॥७१॥

वरु॑णः क्ष॒त्रमि॑न्द्रि॒यं भगे॑न सवि॒ता श्रिय॑म् ।
सु॒त्रामा॒ यश॑सा॒ बलं॒ दधा॑ना य॒ज्ञमा॑शत ॥७२॥

वरुणः सविता सुत्रामा इन्द्रश्च यज्ञं सौत्रामणीमाशत भक्षितवन्तः व्याप्तवन्तो वा अश भोजने अशूङ् व्याप्तौ वा उभयोर्विकरणव्यत्ययः । कीदृशास्ते क्षत्रं क्षतात्त्राणसामर्थ्यमिन्द्रियं वीर्यं भगेन भाग्येन सह श्रियं लक्ष्मीं यशसा सह बलं च दधानाः यजमाने स्थापयन्तः । तत्र वरुणः क्षत्रमिन्द्रियं च दधाति सविता भगं श्रियं सुत्रामा यशो बलं चेति विभागः ॥७२॥

अ॒श्विना॒ गोभि॑रिन्द्रि॒यमश्वे॑भिर्वी॒र्यं॑ बल॑म् ।
ह॒विषेन्द्र॒ꣳ सर॑स्वती॒ यज॑मानमवर्धयन् ॥७३॥

का॰ [१९.६.१९.] अश्विना गोभिरिति च हविषाम् । अश्विना गोभिरिति तिस्रो हविषां याज्यानुवाक्याः चात्पूर्ववत् अश्विना [७३.] ता नासत्या [७४.] इत्याश्विनपशुयागे पुरोऽनुवाक्यायाज्ये ता नासत्या [७४.] ता भिषजा [७५.] इति सारस्वते ता भिषजा [७५.] अश्विना [७३.] इत्यैन्द्रे इति सूत्रार्थः ॥ अश्विसरस्वतीन्द्रदेवत्यास्तिस्रोऽनुष्टुभः । अश्विना सरस्वती च एतैः पदार्थैः इन्द्रं यजमानं चावर्धयन् । कैस्तत्राह गोभिर्गोप्रभृतिपशुभिः इन्द्रियम् विभक्तिव्यत्ययः इन्द्रियेण इन्द्रियपाटवेन अश्वेभिः अश्वैः दक्षिणारूपैः वीर्यं बलं वीर्येण मनःसामर्थ्येन बलेन शरीरदार्ढ्येन हविषा पशुपुरोडाशेन च । इन्द्रस्य वर्धनं तृप्तिः यजमानस्य वर्धनं धनपुत्रपश्वादिपुष्टिः ॥७३॥

ता नास॑त्या सु॒पेश॑सा॒ हिर॑ण्यवर्तनी॒ नरा॑ ।
सर॑स्वती ह॒विष्म॒तीन्द्र॒ कर्म॑सु नोऽवत ॥७४॥

ता तौ नासत्या नासत्यौ अश्विनौ सरस्वती च कर्मसु सौत्रामण्यादियागेषु नोऽस्मानवत अवन्तु रक्षन्तु पुरुषव्यत्ययः हे इन्द्र त्वमपि नोऽस्मान्कर्मसु अव वचनव्यत्ययः । कीदृशौ नासत्यौ हिरण्यवर्तनी हिरण्येनोपलक्षिता वर्तनिर्मार्गो ययोस्तौ यत्र पथि गच्छतस्तत्र सुवर्णमिव सम्पद्यतऽइत्यर्थः । सुपेशसा शोभनं पेशो रूपं ययोस्तौ सुन्दरौ । नरा नरौ नरगुणयुक्तौ नराकारौ च । कीदृशी सरस्वती हविष्मती हविर्विद्यते यस्याः सा ॥ ७४ ॥

ता भिषजा सुकर्मणा सा सुदुघा सरस्वती ।
स वृत्रहा शतक्रतुरिन्द्राय दधुरिन्द्रियम् ॥ ७५ ॥

ता तौ प्रसिद्धौ भिषजा भिषजौ वैद्यौ अश्विनौ सा प्रसिद्धा सरस्वती च स प्रसिद्धो वृत्रहा इन्द्रः कल्पान्तरप्रभवः इन्द्राय एतत्कल्पप्रभवाय इन्द्रियं वीर्यं दधुः यद्वा इन्द्र एव दातृपात्ररूपेण बहुधा भवति देवानामचिन्त्यशक्तित्वात् । कीदृशौ भिषजौ सुकर्मणा सुकर्माणौ शोभनं कर्म ययोस्तौ । कीदृशी सरस्वती सुदुघा सुष्ठु दुग्धे सा सुदुघा साधुदोहना । कीदृशो वृत्रहा शतक्रतुः शतं क्रतवः कर्माणि यस्य बहुकर्मकर्ता ॥ ७५ ॥

युवꣳ सुराममश्विना नमुचावासुरे सचा ।
विपिपानाः सरस्वतीन्द्रं कर्मस्वावत ॥ ७६ ॥

का° [१९. ६. २०.] ग्रहाणां युवꣳ सुरामं पुत्रमिवेति । त्रयाणां पयोग्रहाणां सुराग्रहाणां च युवमिति पुरोऽनुवाक्या पुत्रमिवेति याज्येति सूत्रार्थः ॥ द्वे अश्विसरस्वतीन्द्रदेवत्येऽनुष्टुप्त्रिष्टुभौ । हे अश्विनौ हे सरस्वति युवं यूयं वचनव्यत्ययः नमुचावासुरे दैत्ये वर्तमानं सुरामं सुरामयं ग्रहं सचा सह विपिपाना विविधं पिबन्तः सन्तः कर्मस्विन्द्रमावत आ समन्ताद्रक्षत (13.) । पिपाना अत्र विकरणव्यत्ययः ॥ ७६ ॥

पुत्रमिव पित° ॥ ७७ ॥

इयं व्याख्याता दशमेऽध्याये [१०. ३४.] ॥ ७७ ॥

यस्मिन्नश्वास ऋषभास उक्षणो वशा मेषा अवसृष्टास आहुताः ।
कीलालपे सोमपृष्ठाय वेधसे हृदा मतिं जनय चारुमग्नये ॥७८॥

का° [१९. ६. २१.] पशुस्विष्टकृतो यस्मिन्नश्वासोऽह्नाव्यग्नऽइति । पशोः सम्बन्धिनि स्विष्टकृद्यागे यस्मिन्नश्वास इति पुरोऽनुवाक्या अह्नाव्यग्नऽइति याज्या ॥ द्वे अग्निदेवत्ये जगतीत्रिष्टुभौ । हे अध्वर्यो तस्मै अग्नये हृदा सह मतिं बुद्धिं चारुं समीचीनं जनय अग्न्यर्थं मनोबुद्धी शुद्धे कुरु इत्यर्थः । कीदृशायाग्नये कीलालपे कीलालमन्नरसं पिबति कीलालपास्तस्मै । सोमपृष्ठाय सोमः पृष्ठे यस्य तस्मै यस्य पृष्ठे सोमाहुतयो हूयन्तऽइत्यर्थः । वेधसे विदधाति शुभं करोति वेधाः तस्मै शुभमतिकर्त्रे । तस्मै कस्मै यस्मिन्नग्नौ एते पशवः अवसृष्टासः अवसृष्टाः अवदायावदाय चतुरवत्तेन निक्षिप्ताः तथा आहुताः आदायादाय हुताः । के पशवः अश्वासः अश्वाः ऋषभासः ऋषभाः उक्षणः उक्षाणः सेचनसमर्था वृषाः वा षपूर्वस्य निगमऽइति [पा° ६. ४. ९.] उपधादीर्घाभावः । वशाः वन्ध्याः मेषाः अजाः । यस्मिन्नेते पशवो हुतास्तस्मै मनःशुद्धिं कुर्विति होतुर्वाक्यम् ॥७८॥

अह्नाव्यग्ने हविरास्ये ते स्रुचीव घृतं चम्वीव सोमः ।
वाजसनिꣳ रयिमस्मे सुवीरं प्रशस्तं धेहि यशसं बृहन्तम् ॥७९॥

हे अग्ने ते तवास्ये हविरह्नावि हुतं सर्वतः जुहोतेः कर्मणि लुङ् संततहोमे दृष्टान्तः स्रुचि घृतमिव यथा स्रुचि घृतं सर्वदा स्थितम् चम्वि चम्वामधिषवणाचर्मणि सोम-इव तत्र यथा सोमः सर्वदा स्थितस्तद्वन्नित्यं मया तवास्ये हविर्हुतम् । हे अग्ने सः त्वमस्मे अस्मासु एतानि वस्तूनि धेहि स्थापय । कानि वाजसनिं वाजस्य अन्नस्य सनिं भोगम् । रयिं धनं कीदृशं सुवीरं शोभना वीराः पुत्रा यत्र तं सुपुत्रयुक्तं धनमित्यर्थः । प्रशस्तं सर्वलोकस्तुतं बृहन्तं महान्तं यशसं यशश्च पुंस्त्वमार्षम् सर्वलोकप्रसिद्धं यशो देहीत्यर्थः यशो वै सोमो राजेति श्रुतिः यशसं सोममिति वा ॥७९॥

IX. अश्विना तेजसा चक्षुः प्राणेन सरस्वती वीर्यम् ।

वाचेन्द्रो बलेनेन्द्राय दधुरिन्द्रियम् ॥ ८० ॥

का॰ [११. ७. १.] प्रतिगरिष्यत्युपविष्टेऽध्वर्यौ शोꣳसावित्याहूयाश्विना तेजसेत्यनुवाकꣳ शꣳसति । त्रयस्त्रिंशवसाग्रहसादनानन्तरमध्वर्योः होतुः पुरस्तात्प्रतिगरार्थमुपवेशनमुक्तम् तदाह प्रतिगरिष्यत्यध्वर्यौ पुर उपविष्टे सत्यध्वर्यौ शोंसावोऽमित्याहूयाश्विना तेजसा चक्षुरित्येकादशर्चमनुवाकं शस्त्रं शंसति प्रथमान्त्ये ऋचौ त्रिः शंसनीये मध्यस्थानां त्रयाणां तृचानामादिष्वाह्वावः कार्य इति सूत्रार्थः ॥ अश्विसरस्वतीन्द्रदेवत्यानुष्टुप् आद्यः पादोऽष्टार्णः द्वितीयो नवार्णः तृतीयः षडर्णः चतुर्थोऽष्टार्णः । अश्विनौ तेजसा सह चक्षुरिन्द्रियमिन्द्राय दधुः दधतुः ददतुः । सरस्वती प्राणेन सह वीर्यमिन्द्राय दधौ ददौ । इन्द्रः कल्पान्तरीणः वाचं बलेन च सह इन्द्रायैतत्कल्पोत्थाय इन्द्रियं सामर्थ्यं ददौ । एवमश्विसरस्वतीन्द्रा इन्द्राय तेजआदि दधुरित्यर्थः सर्वापेक्षया दधुरिति बहुवचनम् ॥ ८० ॥

गोमदू षु णासत्या अश्वावद्यातमश्विना । वर्ती रुद्रा नृपाय्यम् ॥ ८१ ॥

गृत्समददृष्टा अश्विदेवत्यास्तिस्रो गायत्र्यः आद्या पादनिवृद्गायत्री त्रयः सप्तकाः पादनिवृदिति वचनात् । उ सु निपातौ पादपूरणौ इकः सुञीति [पा॰ ६. ३. १३४.] सुनिपाते परे उ इत्यस्य संहितायां दीर्घः सुञ इति [पा॰ ८. ३. १०७.] सूत्रेण सु इत्यस्य षत्वम् पूर्वपदादिति [पा॰ ८. ३. १०६.] नासत्यशब्दनकारस्य णत्वम् । हे नासत्या नासत्यौ हे अश्विना हे रुद्रा रुद्रौ शत्रूणां रोदयितारौ वर्तिः विभक्तिव्यत्ययः वर्त्या मार्गेण युवां नृपाय्यं यज्ञं प्रति यातं गच्छतम् नृभिः पीयते सोमो यस्मिन्स नृपाय्यः क्रतौ कुण्डपाय्यसंचाय्याविति [पा॰ ३. १. १३०.] अत्र कुण्डशब्द उपलक्षकः नृशब्देऽपि तृतीयान्ते उपपदे पिबतेर्धातोरधिकरणे यत्प्रत्ययो युगागमश्च निपात्यते । किं कृत्वा गोमत् गावो विद्यन्ते यस्मिन्गोमत् अश्वावत् अश्वा विद्यन्ते यस्य तदश्ववत् मन्त्रे सोमाश्वेत्यादिना [पा॰ ६. ३. १३१.] अश्वशब्दस्य दीर्घः गोयुक्तमश्वयुक्तं च धनमादाय यज्ञं गच्छतमित्यर्थः ॥ ८१ ॥

न यत्परो नान्तर आदधर्षद्वृषण्वसू । दुःशꣳसो मर्त्यो रिपुः ॥ ८२ ॥

हे वृषण्वसू वृषा वृष्टिरिव वसु धनं ययोस्तौ यद्वा वृष्णा वृष्ट्या वासयतो

लोकं स्थापयतस्तौ वृषण्वसू हे अश्विनौ दुःशंसो दुष्टमपवादं शंसति कथयति दुःशंसोऽपवदिता रिपुः शत्रुः मर्त्यः मनुष्यः परः असम्बद्धः अन्तरः सम्बद्धः स्वकीयोऽपि ईदृशो मर्त्यो यत् यमिन्द्रं न आदधर्षति न आधृष्णुयात् न पराभूयात्। स्वजनोऽस्वजनोऽपि रिपुः पिशुनोऽपि यमिन्द्रं पराभवितुं न शक्त इत्यर्थः। ञिधृषा प्रागल्भ्येऽस्माद्धातोर्यङ्लुगन्ताच्छतृप्रत्ययः ॥ ८२॥

ता न॒ आवो॑ढमश्विना र॒यिं पि॒शङ्ग॑संदृशम्। धिष्ण्या॑ वरिवो॒विद॑म् ॥ ८३॥

हे धिष्ण्या धिष्ण्यौ धिष्ण्याग्निरूपौ धातारौ वा हे अश्विना युवां नोऽस्माकं रयिं धनमावोढमावहतम् आनयतमित्यर्थः वहतेर्लुङि परस्मैपदे मध्यमद्विवचनम्। कीदृशं रयिं पिशंगसंदृशं पिशंगं पीतं सम्यक् दृश्यते तत्पिशंगसंदृशम् पीतवर्णं सुवर्णमित्यर्थः। तथा वरिवोविदं वरिवो धनं विन्दति प्राप्नोति वरिवोविदस्तम् विद्लृ लाभे इगुपधेति [पा° ३.१.१३२] कः। यच्च धनं धनान्तरहेतुभूतं भवतीत्यर्थः ॥ ८३॥

पा॒व॒का न॒: सर॑स्वती॒ वाजे॑भिर्वा॒जिनी॑वती। य॒ज्ञं व॑ष्टु धि॒याव॑सुः ॥ ८४॥

मधुच्छन्दोदृष्टाः सरस्वतीदेवत्यास्तिस्रो गायत्र्यः। सरस्वती नोऽस्माकं यज्ञं वष्टु कामयतां वश कान्तौ यो यदिच्छति स तत्प्रति गच्छति अस्मद्यज्ञं प्रत्यागच्छत्वित्यर्थः। कीदृशी सरस्वती पावका पावयित्री पवनं पावः शोधनम् घञ् पावं कायति कथयति पावका आतोऽनुपसर्गे कः [पा° ३.२.३.]। वाजेभिर्वाजैः अन्नैः वाजिनीवती वाजा अन्नानि विद्यन्ते यस्यां सा वाजिनी यज्ञक्रिया वाजिनी विद्यते यस्याः सा वाजिनीवती यज्ञक्रियाधिष्ठात्री। धियावसुः धिया कर्मणा वसु धनं यस्याः सा धियावसुः छान्दसस्तृतीयाया अलुक् ॥ ८४॥

चो॒द॒यि॒त्री सू॒नृता॑नां॒ चेत॑न्ती सुमती॒नाम्। य॒ज्ञं द॑धे॒ सर॑स्वती ॥ ८५॥

सरस्वती यज्ञं दधे धारयति। कीदृशी सूनृतानां प्रियं सत्यं सूनृतं प्रियसत्यवचनानां वेदत्रयीशब्दानां चोदयित्री प्रेरयित्री चुद प्रेरणे णिजन्तात्तृच् ततो ङीप्। सुमतीनां शोभनानां बुद्धीनां चेतन्ती चेतयन्ती प्रकटयन्ती सुमतिदात्रीत्यर्थः छन्दस्युभयथेति [पा° ३.४.११७.] शपोऽप्यार्धधातुकत्वाण्णिचो लोपः ॥ ८५॥

म॒हो॑ऽअर्णः॒ सर॑स्वती॒ प्रचे॑तयति के॒तुना॑ । धियो॒ विश्वा॒ वि रा॑जति ॥ ८६ ॥

सरस्वती केतुना कर्मणा प्रज्ञया वा महो महत् अर्णः उदकं प्रचेतयति प्रज्ञापयति प्रेरयति सर्वस्यां भूमौ वृष्टिं कारयतीत्यर्थः । किं च विश्वाः सर्वाः धियः सर्वप्राणिस्था बुद्धीः विराजति विराजयति दीपयति सर्वजन्तुबुद्धीः प्रकाशयति तां स्तुमः ॥ ८६ ॥

इन्द्राया॑हि चित्रभानो सु॒ता इ॒मे त्वा॒यवः॑ । अण्वी॑भि॒स्तना॑ पू॒तासः॑ ॥ ८७ ॥

मधुच्छन्दोदृष्टा इन्द्रदेवत्यास्तिस्रो गायत्र्यः । चित्रा नानाविधा भानवो दीप्तयो यस्य स चित्रभानुः हे चित्रभानो इन्द्र त्वमायाहि आगच्छ । किमिति इमे सोमाः सुताः अभिषुताः । कीदृशा इमे त्वायवः त्वां कामयन्ते त्वायवः सुप आत्मनः क्यच् [पा॰ ३. १. ८.] क्याच्छन्दसीति [पा॰ ३. २. १७०.] उप्रत्ययः । तथा अण्वीभिः अण्वीत्यङ्गुलीनाम [निघ॰ २. ५.] अङ्गुलीभिः तना दशापवित्रेण च पूतासः पूताः शोधिताः तनशब्दो दशापवित्रवाची तृतीयैकवचनस्य पूर्वसवर्णः । शोधिताः सुताः सोमा इन्द्रोऽस्मान्पिबत्विति कामयन्तेऽतोऽत्रायाहीत्यर्थः ॥ ८७ ॥

इन्द्राया॑हि धि॒येषि॒तो विप्र॑जूतः सु॒ताव॑तः । उप॒ ब्रह्मा॑णि वा॒घतः॑ ॥ ८८ ॥

हे इन्द्र धिया स्वबुद्ध्या इषितः प्रेरितः सन्नायाहि अनन्यप्रेरित आगच्छेत्यर्थः । कीदृशस्त्वं विप्रजूतः जु गतौ विप्रैर्मेधाविभिरनुगतः सेवितः । किमित्यागन्तव्यमिति चेत् सुतावतः छान्दसो दीर्घः सुतवतः सोममभिषुतवतो यजमानस्य ब्रह्माणि हवींषि उप हविषां समीपे वाघतः ऋत्विजो वर्तन्तऽइति शेषः वाघत इति ऋत्विङ्नामसु [निघ॰ ३. १८.] पठितम् ऋत्विजो हविरादाय स्थिता वर्तन्तऽइत्यायाहीत्यर्थः ॥ ८८ ॥

इन्द्राया॑हि॒ तूतु॑जान॒ उप॒ ब्रह्मा॑णि हरिवः । सु॒ते द॑धिष्व न॒श्चनः॑ ॥ ८९ ॥

हरी अश्वौ विद्येते यस्य स हरिवान् मतुवसो रुः सम्बुद्धौ छन्दसीति [पा॰ ८. ३. १.] रुत्वम् हे हरिवः अश्ववन् हे इन्द्र तूतुजानः त्वरमाणः सन् त्वं ब्रह्माणि हवींषि उप हवींषि प्रति आयाहि तूतुजान इति [निघ॰ २. १५.] क्षिप्रना-

म । आगत्य सुते सोमेऽभिषुते सति नोऽस्माकं चनः अन्नं सोमरूपं हविः दधिध उदरे धारय धि धारणे व्यत्ययेन शपो लुकि द्वित्वं जुहोत्यादित्वात् अभ्यासस्यात्वं छान्दसम् । चन इत्यन्ननाम [निघ° २.७.] ॥ ८९ ॥

अश्विना पिबतां मधु सरस्वत्या सजोषसा ।

इन्द्रः सुत्रामा वृत्रहा जुषन्ताᳬ सोम्यं मधु ॥ ९० ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां विंशोऽध्यायः ॥ २० ॥ ॥

अश्विसरस्वतीन्द्रदेवत्यानुष्टुप् । अश्विना अश्विनौ मधु मधुरस्वादं सोमं पिबतां भक्षयताम् कीदृशौ अश्विनौ सरस्वत्या सजोषसा सजोषसौ जोषः प्रीतिः असुन् समानं जोषः प्रीतिर्ययोस्तौ सरस्वत्या सह प्रीतिमन्तावित्यर्थः । किं च सुष्ठु त्रायते रक्षति सुत्रामा वृत्रं हतवान्वृत्रहा ईदृश इन्द्रः अश्विनौ सरस्वती च मधु मधुरं सोम्यं सोममयं हविर्जुषन्ताम् सेवन्ताम् मये चेति [पा° ४.४.१३८.] सोमशब्दात् मयडर्थे यप्रत्ययः सोममयं सोम्यम् ॥ ९० ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे । सेकासन्यादिहौत्रान्तो विंशो ध्यायो निरूपितः ॥ २० ॥ ॥

अथ काण्वशाखायां पाठविशेषः ॥

१४ [दिवक्षेलनं] - १६ ॥ १-३ ॥ १७. १८. १९ a ॥ ४ ॥ १९ d ॥ ५ ॥ २० ॥ ६ ॥ २१ ॥ ७ ॥ २२. २३ a. b ॥ ८ ॥ २३ c. d ॥ ९ ॥ २४-३८ [ईलितो] ॥ १०-२४ ॥ ३९-४२ [होताराऽइन्द्रं] ॥ २५-२८ ॥ ४३ [°स्वतीला] ॥ २९ ॥ ४४-५१ [सुमृलीको] ॥ ३०-३७ ॥ ५२-६३ [भारतीला] ॥ ३८-४९ ॥ ६४-६८ [नमुचाऽआसुरे] ॥ ५०-५४ ॥ ६९-७६ [नमुचाऽआसुरे] ॥ ५५-६२ ॥ ७७ [पितराऽअश्विनोभि°] - ८३ [वील्हम°] ॥ ६३-६९ ॥ ८४-९० ॥ ७०-७६ ॥ ॥

इति काण्वीयायां वाजसनेयसंहितायां द्वाविंशोऽध्यायः ॥ २२ ॥

I. इमं मे॑ वरुण श्रुधी हव॑मद्या च॑ मृडय । त्वाम॑वस्युरा च॑के ॥ १ ॥

ओम् श्रीगणेशाय नमः ॥ प्रणम्य (1.) शिरसा देवं लक्ष्मीकान्तमुमापतिम् । एकविंशेऽधुनाध्याये वेददीपो वितन्यते ॥ का° [१९. ७. १३.] इमं मे तत्त्वेत्येककपालस्य । अवभृथेष्टौ वारुणस्यैककपालस्य पुरोडाशस्य द्वे पुरोऽनुवाक्यायाज्ये इत्यर्थः ॥ वरुणदेवत्ये गायत्रीत्रिष्टुभौ शुनःशेपदृष्टे । हे वरुण त्वं मे मम इमं हवमाह्वानं श्रुधि शृणु श्रुशृणुवति [पा° ६. ४. १०२.] हेर्धिः (2.) संहितायां दीर्घः । च पुनः अद्य दिने (3.) मृडयास्मान्सुखय यतोऽहं त्वामाचके कामये आचकऽइति [निघ° २. ६.] कान्तिकर्मा । कीदृशोऽहम् अवस्युः अवनमवः पालनमवतेरसुन् तदिच्छति अवस्युः सुप आत्मनः क्यच् [पा° ३. १. ८.] क्याच्छन्दसीति [पा° ३. २ १७०.] उप्रत्ययः आत्मनो रक्षणमिच्छन् त्वामिच्छामीत्यर्थः ॥ १ ॥

तत्त्वा॑ यामि ब्रह्म॑णा व° ॥ २ ॥

व्याख्याता [१८. ४९.] ॥ २ ॥

त्वं नो॑ऽअग्ने वरु॑णस्य विद्वान्दे॒वस्य॒ हेडो॒ऽअव॑यासिसीष्ठाः ।
यजि॑ष्ठो॒ वह्नि॑तमः॒ शोशु॑चानो॒ विश्वा॒ द्वेषा॑ᳪसि॒ प्रमु॑मुग्ध्य॒स्मत् ॥ ३ ॥

का° [१९. ७. १४.] अग्नीवरुणयोस्त्वं नः स त्वं न इति । अवभृथेष्टाववाग्निवरुणयागे पुरोऽनुवाक्यायाज्ये ॥ अग्निवरुणदेवत्ये त्रिष्टुभौ वामदेवदृष्टे । हे अग्ने त्वं नोऽस्मान्प्रति वरुणस्य देवस्य हेडः क्रोधमवयासिसीष्ठाः निवर्तय यसु उपक्षये अवपूर्वस्य णिजन्तस्यास्याशीर्लिङि रूपम् । किं च विश्वा विश्वानि सर्वाणि द्वेषांसि दौर्भाग्यानि अस्मत् अस्मत्तः सकाशात्प्रमुमुग्धि प्रमुञ्च दूरीकुरु मुचेर्व्यत्ययेन शपः श्लुः । कीदृशस्त्वम् विद्वान् स्वाधिकारं जानन् यजिष्ठः अतिशयेन यष्टा यजिष्ठः तुरिष्ठेमेयःस्विति [पा° ६. ४. १५४.] तृचो लोपः । वह्नितमः वहतीति वह्निः अत्यन्तं वह्निर्वह्नितमः हविषां वोढा । शोशुचानः अत्यन्तं शोचते दीप्यते शोशुचानः शोचतेर्यङ्लुगन्ताच्छानच्प्रत्ययः ॥ ३ ॥

स त्वं नो॑ऽअग्नेऽव॒मो भ॑वो॒ती नेदि॑ष्ठोऽअ॒स्या उ॒षसो॒ व्यु॑ष्टौ ।

अवयक्ष्व नो वरुणᳫं रराणो वीहि मृडीकᳫं सुहवो न एधि ॥४॥

हे अग्ने स त्वमस्या उषसो व्युष्टौ व्युष्टिकालेऽस्मिन्नहनि (4.) ऊती ऊत्या अवनेन नोऽस्माकमवमः रक्षकः नेदिष्ठोऽन्तिकतमः समीपतमश्च भव । अवतीत्यवमः अवतेरमप्रत्ययः यद्वा अवतीत्यवः पचाद्यच् अत्यन्तमवोऽवतमः तलोपश्छान्दसः । अत्यन्तमन्तिको नेदिष्ठः अन्तिकबाढयोर्नेदसाधाविति [पा° ५.३.६३.] इष्ठे परे नेदादेशः । किं च रराणो हविर्ददत् सन् नोऽस्माकं वरुणमवयक्ष्व अवयज अवपूर्वाद्यजतेर्लोटि शपो लुक् ततो मृडीकं सुखकरं हविः वीहि भक्षय वी कान्तिव्याप्तिक्षेपप्रजननखादनेषु । किं च नोऽस्माकं सुहवः स्वाह्वान एधि भव घ्वसोरेद्धावभ्यासलोपश्चेति [पा° ६.४.११९.] एकारः ॥४॥

महीमू षु मातरᳫं सुव्रतानामृतस्य पत्नीमवसे हुवेम ।
तुविक्षत्रामजरन्तीमुरूचीᳫं सुशर्माणमदितिᳫं सुप्रणीतिम् ॥५॥

का° [११.७.१५.] आदित्यस्य सुत्रामाणम् महीमूषु मातरमिति । आदित्यं चरुं यक्ष्यमाणो निर्वपत्यादित्यमीजान इत्यादावन्ते चादित्यश्चरुरुक्तस्तस्य सुत्रामाणमिति [६.] पुरोऽनुवाक्या महीमू ष्विति याज्या ॥ अदितिदेवत्या त्रिष्टुप् । उ सु निपातौ पादपूरणौ संहितायामाद्यस्य दीर्घोऽन्त्यस्य षत्वम् । वयमवसे अवितुं रक्षितुमदितिं हुवेम आह्वयामः तुमर्थे असेप्रत्ययः । कीदृशीमदितिं महीं महतीम् । सुव्रतानां शोभनकर्मणां मातरं निर्मात्रीम् व्रतमिति [निघ° २.१.] कर्मनाम । ऋतस्य यज्ञस्य पत्नीं पालयित्रीम् । तुविक्षत्रां तुवीति [निघ° ३.१.] बहुनाम बहुक्षतात्त्राणशीलाम् । अजरन्तीं न जीर्यति अजरन्ती तां जरारहिताम् । उरु अञ्चतीति उरूची बहुगमनशीलाम् । सुशर्माणं शोभनं शर्माश्रयः सुखं वा यस्यास्ताम् । सुप्रणीतिं शोभना प्रणीतिः प्रणयनं भजनं यस्यास्ताम् । अदितिरदीना देवमाता [निरु° ४.२२.] ॥५॥

सुत्रामाणं पृथिवीं द्यामनेहसᳫं सुशर्माणमदितिᳫं सुप्रणीतिम् ।
दैवीं नावᳫं स्वरित्रामनागसमस्रवन्तीमारुहेमा स्वस्तये ॥६॥

अदितिदेवत्या त्रिष्टुप् गयप्लातदृष्टा (5.)। दैवीं देवसम्बन्धिनीं नावं यज्ञरूपां स्वस्तये कल्याणायाविनाशाय वयमारुहेम यज्ञं कृत्वा स्वर्गं गच्छेमेत्यर्थः। कीदृशीं नावं सुत्रामाणं सुष्ठु त्रायते रक्षति सुत्रामा ताम्। पृथिवीं विशालाम्। द्यां स्वर्गरूपां स्वर्गहेतुभूतामित्यर्थः। अनेहसमेह इति [निघ॰ २.१३.] क्रोधनाम नास्ति एहो यत्र क्रोधरहिताम्। यद्वा लुप्तोपमानम् पृथिवीमिव सुत्रामाणं पालयित्रीं द्यामिवानेहसमक्रोधाम्। सुशर्माणं साधुशरणभूताम्। अदितिमखण्डितामदीनां वा। सुप्रणीतिं सुष्ठु प्रणयतीति सुप्रणीतिः साधुप्रणेत्री। स्वरित्रां साधुकेन्दुवालाम् अरित्रशब्दः केन्दुवालवाचकः अरित्रं केनिपातक इत्यभिधानात् [अमर॰ १.२.२७.] प्रयाजानुयाजादयोऽरित्रस्थानीयाः। अनागसमनपराधाम्। अस्रवन्तीमछिद्रां निर्दोषामित्यर्थः। ईदृशीं नावमारुहेम संहितायां दीर्घः ॥६॥

सु॒नाव॒मारु॑हेय॒मस्र॑वन्ती॒मना॑गसम्। श॒तारि॑त्रा७ स्व॒स्तये॑ ॥७॥

स्वर्गसम्बन्धिनौदेवत्या गायत्री। तद्धि सर्व एव यज्ञो नौः स्वर्ग्येति श्रुतेः स्वर्ग्या नौर्यज्ञ एव। सुनावं शोभनां नावं यज्ञरूपां स्वस्तयेऽविनाशाय संसारसागरोत्तरणायाहमारुहेयमारोहेयं यज्ञं कुर्यामित्यर्थः। कीदृशीमस्रवन्तीमछिद्राम्। अनागसं निरपराधां सर्वेष्टदामित्यर्थः। शतारित्रां बहुकेन्दुवालाम् ऋग्यजुःसामभिरित्यर्थः। स्मार्ते नावारोहणे विनियोगोऽस्या ऋचः ॥७॥

आ नो॑ मि॒त्रावरुणा घृ॒तैर्गव्यू॑तिमुक्षतम्। मध्वा॒ रजा॑७सि सुक्रतू ॥८॥

का॰ [११.७.१६.] आ नः प्र बाहवेति पयस्यायाः। अवभृथादुदेत्य मैत्रावरुण्या पयस्यया यजतीति या पयस्या तस्या आ नो मित्रावरुणेति पुरोऽनुवाक्या प्र बाहवेति याज्या। मित्रावरुणदेवत्या गायत्री विश्वामित्रदृष्टा। हे मित्रावरुणा मित्रावरुणौ देवौ नोऽस्माकं गव्यूतिं यज्ञमार्गं घृतैर्युवामा उक्षतम् सर्वतः सिञ्चतम् यद्वा गवि पृथिव्यामूतिमवनहेतुभूतं क्षेत्रं घृतैः शुद्धोदकैः सिञ्चतम्। किं च हे सुक्रतू शोभनः क्रतुः कर्म ययोस्तौ हे सुकर्माणौ मध्वा मधुना रजांसि लोकाना उक्षतम् अनित्यमागमशासनमिति नुमभावः ॥८॥

प्र बा॒हवा॑ सिसृतं जी॒वसे॑ न॒ आ नो॒ गव्यू॑तिमुक्षतं घृ॒तेन॑।

आ मा जने॑ अवयतं युवाना श्रुतं मे॑ मित्रावरुणा हवेमा ॥९॥

मित्रावरुणदेवत्या त्रिष्टुप् वसिष्ठदृष्टा । हे मित्रावरुणौ हे युवाना युवानौ तरुणौ छिन्नजरसौ नोऽस्माकं जीवसे चिरं जीवनाय बाहवा बाहू प्रसिसृतम-त्तर्भूतण्यर्थः प्रसारयतं जीवनविघ्ननिवारणाय बाहुप्रसारणं कुरुतमित्यर्थः । किं च नोऽस्माकं गव्यूतिं क्षेत्रं घृतेन जलेन आ उक्षतं सिञ्चतम् । भवत्सिक्तक्षेत्र-निष्पन्नधान्यैः यद्विनं मा मां जने जनपदे युवामाश्रवयतम् आश्रावयतम् इत्थ-मदात् इत्थमयाक्षीदिति लोके मां कथयतमित्यर्थः वृद्धभाव आर्षः किं च युवां मे मम इमा इमानि हवा हवानि आह्वानानि श्रुतं शृणुतम् श्रुत्वा पूर्वोक्तं कु-रुतमित्यर्थः शृणोतेः शपो लुक् ॥९॥

शं नो॑ भवन्तु॰ ॥१०॥ वाजे॑-वाजे॰ ॥११॥

का॰ [१९.७.१७.] वाजिनस्य शं नो वाजे-वाजऽइति । पयस्यायां वाजिनया-गोऽस्ति तत्र शं न इति पुरोऽनुवाक्या वाजे-वाजऽइति याज्या॥ व्याख्याते [९, १६.१८.] ॥१०॥११॥

II. समि॑द्धोऽअ॒ग्निः स॒मिधा॒ सुस॑मिद्धो॒ वरे॑ण्यः ।

गा॒यत्री छन्द॑ इन्द्रि॒यं त्र्यवि॒र्गौर्वयो॑ दधुः ॥१२॥

का॰ [१९.७.११.] वायोधसऽआप्रियः समिद्धोऽअग्निः समिधेति । वायोधसे प-शौ समिद्धोऽअग्निरित्याद्या एकादश ऋच आप्रियः प्रयाजानां याज्या इति सूत्रार्थ ॥ एकादश आप्रीदेवत्या अनुष्टुभः स्वस्त्यात्रेयदृष्टाः । अग्निः गायत्री छन्दो गौश्च एते त्रय इन्द्रे इन्द्रियं वीर्यं वयः सत्वमन्नमायुर्वा दधुः दधतु प्रयच्छन्तु । कीदृशो ऽग्निः समिधा प्रयाजदेवतया समिद्धः दीप्तः सुसमिद्धश्च अतिदीप्तः प्रयाजघृतेनेति शेषः वरेण्यः वरणीयः सम्भजनीयः । कीदृशो गौः त्र्यविः त्रयोऽवयोऽनुचरत्वेन यस्य स त्र्यविः यद्वा षण्मासावधिः कालोऽविः त्रयोऽवयो यस्य सार्धवत्सरो गौ-रित्यर्थः ॥१२॥

तनूनपाच्छुचिव्रतस्तनूपाश्च सरस्वती ।

उष्णिहा छन्द इन्द्रियं दित्यवाड्गौर्वयो दधुः ॥१३॥

तनूनामपां नपात् पौत्रोऽग्निः तनूनां गवां नपात् घृतं वा प्रयाजदेवता सरस्वती उष्णिहा छन्दः हलन्तवादाप् उष्णिक्छन्दः गौश्च एते चत्वार इन्द्रे इन्द्रियं वयश्च दधुः दधतु । कीदृशस्तनूनपात् शुचिव्रतः शुचि शुद्धं व्रतं कर्म यस्य सः । कीदृशी सरस्वती तनूपाः तनूं शरीरं पाति रक्षतीति । कीदृशो गौः दित्यवाट् दित्यं हविर्वहतीति ॥१३॥

इडाभिरग्निरीड्यः सोमो देवोऽअमर्त्यः ।
अनुष्टुप्छन्द इन्द्रियं पञ्चाविर्गौर्वयो दधुः ॥१४॥

इडाभिः प्रयाजदेवताभिः सहाग्निः सोमो देवः अनुष्टुप्छन्दः गौः एते पञ्च इन्द्रियं वयश्चेन्द्रे दधुः कीदृशोऽग्निः ईड्यः स्तुत्यः कीदृशः सोमः अमर्त्यः अमरणधर्मा कीदृशो गौः पञ्चाविः पञ्चावयोऽनुचराः कालविशेषा वा यस्य सार्धद्विवर्षः ॥१४॥

सुबर्हिरग्निः पूषण्वान्त्स्तीर्णबर्हिरमर्त्यः ।
बृहती छन्द इन्द्रियं त्रिवत्सो गौर्वयो दधुः ॥१५॥

शोभनं बर्हिः प्रयाजदेवता अग्निः बृहती छन्दः गौः एते चत्वार इन्द्रियं वयश्चेन्द्रे दधुः । कीदृशोऽग्निः पूषण्वान् पूषास्यास्तीति पूष्णा युक्तः स्तीर्णबर्हिः स्तीर्णं बर्हिर्यस्य सः अमर्त्यः अनश्वरः । कीदृशो गौः त्रिवत्सः त्रयो वत्सा अनुचरा वत्सरा वा यस्य स त्रिवत्सः ॥१५॥

दुरो देवीर्दिशो महीर्ब्रह्मा देवो बृहस्पतिः ।
पङ्क्तिश्छन्द इहेन्द्रियं तुर्यवाड्गौर्वयो दधुः ॥१६॥

दुरो द्वारो देव्यः प्रयाजदेवताः छान्दसं सम्प्रसारणम् महीर्महत्यो दिशः ब्रह्मा देवो बृहस्पतिः पङ्क्तिश्छन्दः तुर्यं चतुर्थं वर्षं वहतीति तुर्यवाट् गौः एते षट् देवा इह इन्द्रे इन्द्रियं वयश्च दधुः ॥१६॥

उषे यह्वी सुपेशसा विश्वे देवा अमर्त्याः ।

होताध्वर्युरावया अग्निमिन्धो ग्रावग्राभ उत शꣳस्ता सुविप्रः ।
तेन यज्ञेन स्वरंकृतेन स्विष्टेन वक्षणा आपृणध्वम् ॥२८॥

हे होत्रादय ऋत्विजः तेन प्रसिद्धेन यज्ञेनाश्वमेधेन वक्षणाः नदीः घृतकुल्याद्याः आपृणध्वं घृतपयोदधिपयस्यापुरोडाशमांसैः पूरयत । वहन्तीति वक्षणाः । यज्ञं सम्पाद्य फलं साधयतेत्यर्थः । कीदृशेन यज्ञेन स्वरंकृतेन रलयोरैक्यम् सुष्ठु अलंकृतेन विप्रहविर्दक्षिणादिभिः शोभितेन । स्विष्टेन सुष्ठु इष्टेन । के ऋत्विजस्तानाह होता आह्वाता देवानां तन्नामक ऋत्विक् । अध्वर्युः अध्वरमिच्छति अध्वर्यति सुप आत्मनः क्यच् कव्यध्वरपृतनस्यऽर्चि लोप इति [पा॰ ७.४.३९.] ठिलोपः ततः क्याच्छन्दसीति [पा॰ ३.२.१७०.] उप्रत्ययः । आवयाः आभिमुख्येनावयजतीत्यावयाः श्वेतवाहोक्थशासेति (14.) डस् आवयाः प्रतिप्रस्थाता अत्रे यज इति [पा॰ ३.२.७२.] ण्विन् अवाप्योरिति अवस्याल्लोपः । अग्निमिन्धः अग्निमिन्द्धे दीपयति अग्निमिन्धः अग्नीत् भ्राष्ट्राग्न्योरिन्धऽइति [पा॰ ६.३.७०. वा॰ ६.] मुम् । ग्रावग्राभः ग्राव्णो गृह्णाति स्तौति ग्रावग्राभः कर्मण्यण् हस्य भः ग्रावस्तोता । उतापि शंस्ता शंसति स्तौति शंस्ता प्रशास्ता । सुविप्रः शोभनो विप्रो मेधावी सुविप्रो ब्रह्मा ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हतीत्युक्तेः । अयमनुक्तर्त्विगुपलक्षकः । एते यज्ञेन वक्षणाः (15.) पृणध्वमिति सम्बन्धः ॥२८॥

यूपव्रस्का उत ये यूपवाहाश्चषालं येऽअश्वयूपाय तक्षति ।
ये चार्वते पचनꣳ सम्भरन्त्युतो तेषामभिगूर्तिर्न इन्वतु ॥२९॥

तेषामृत्विजामभिगूर्तिः अभिगोरणमभिगूर्तिरुद्यमः नोऽस्मानिन्वतु प्रीणातु व्याप्नोतु वा अस्माकं यज्ञं सम्यक् साधयत्वित्यर्थः इवि व्याप्तिप्रीणनयोः लोट् शपि इदितो नुम् धातोरिति [पा॰ ७.१.५८.] नुमागमः । तेषां केषाम् ये यूपव्रस्काः यूपाय वृश्चन्ति तरुं छिन्दन्ति ते यूपव्रस्काः । उतापि च ये यूपवाहाः यूपं वहन्ति ते यूपवाहाः कर्मण्यन् छिन्नस्य यूपस्य वोढारः । ये च अश्वयूपाय अश्वबन्धनयूपार्थं चषालं तक्षति यूपाग्रे भागे स्थाप्यं काष्ठं तक्षन्ति वचनव्यत्ययः । चषालो यूपकटक इत्यमरः [२.७.१८.] तक्षू तनूकरणे साधु सम्पादयन्तीत्यर्थः । उतो अपि

च ये नराः अर्वते अश्वाय पचनं पच्यतेऽनेनेति पचनं पाकसाधनं काष्ठभाण्डादिकं सम्भरन्ति संहरन्ति आनयन्ति तेषामुद्यमोऽस्मान्प्रीणात्वित्यर्थः ॥२९॥

उप प्रागा॑त्सु॒मन्मे॑ऽधायि॒ मन्म॑ दे॒वाना॒माशा॒ उप॑ वी॒तपृ॑ष्ठः ।
अन्वे॑नं॒ विप्रा॒ ऋष॑यो मदन्ति दे॒वाना॑ं पु॒ष्टे च॑कृमा सु॒बन्धु॑म् ॥३०॥

मन्म मननीयं फलं सुमत् स्वयमुपप्रागात् उपगच्छतु सुमदित्यव्ययं स्वयमित्यर्थे सुमत्स्वयमित्यर्थे इति यास्कोक्तिः [निरु॰ ६.२२.] तन्मन्म फलं मे मया अधायि धृतमित्यर्थः । किं च अयं वीतं पुष्टं पृष्ठं यस्य यद्वा वीतं कामितं पृष्ठं यस्य अश्वपृष्ठमारोहणाय सर्वे कामयन्ते स वीतपृष्ठोऽश्वो देवानामाशाः मनोरथान् पूरयितुमिति शेषः उप गच्छतु उपसर्गेण क्रियावृत्तिः । किं च देवानां पुष्टे पोषणं पुष्टम् भावे निष्ठा निमित्ते सप्तमी देवपुष्टिनिमित्तं यमश्वं वयं सुबन्धुं चकृम कृतवन्तः संहितायां दीर्घः शोभनो बन्धुर्बन्धनं यस्य तम् यमश्वं बद्धवन्तः एनमश्वं विप्रा मेधाविनः ऋषयो मन्त्रदर्शिन ऋत्विजोऽनुमदन्ति अनुमोदन्तां तुष्यन्तु ॥३०॥

यद्वा॒जिनो॒ दाम॑ सं॒दान॒मर्व॑तो॒ या शी॑र्ष॒ण्या॑ र॒श॒ना रज्जु॑रस्य ।
यद्वा॑ घास्य॒ प्रभृ॑तमा॒स्ये॒ तृण॒ꣳ सर्वा॒ ता ते॒ऽअपि॑ दे॒वेष्व॑स्तु ॥३१॥

वाजिनो वेगवतोऽर्वतोऽश्वस्य यत् दाम ग्रीवाबद्धा रज्जुः यच्च संदानं पादबन्धनरज्जुः । या च शीर्षण्या शीर्षे भवा शीर्षण्या शिरोबद्धास्याश्वस्य रज्जुः शिरःशब्दाद्भवे छन्दसीति [पा॰ ४.४.११०.] यत् मे च तद्धितऽइति [पा॰ ६.१.६१.] शीर्षन्नादेशः तित्स्वरितम् । कण्ठस्था रशना रज्जुः अस्यान्यापि या रज्जुः । वाथवा अस्याश्वस्य घ प्रसिद्धम् आस्ये मुखे प्रभृतं प्रहृतं प्रक्षिप्तं यत् तृणं हे अश्व ते तव सर्वा सर्वाणि ता तानि देवेषु अस्तु सन्तु देवोपयोगीनि भवन्तु देवत्वं प्राप्नुवन्तु वा । अत्रोपयुक्तानां सर्वेषां देवत्वमाशास्यते ॥३१॥

XIII. यदश्व॑स्य क्र॒विषो॒ मक्षि॒काश॒ यद्वा॒ स्वरौ॒ स्वधि॑तौ रि॒प्तमस्ति॑ ।
यद्धस्त॑योः शमि॒तुर्यन्न॒खेषु॒ सर्वा॒ ता ते॒ अपि॑ दे॒वेष्व॑स्तु ॥३२॥

मक्षिका अश्वस्य क्रविषः क्रविः यदाश भक्षितवती अश्नातेर्लिट् क्रविषः इति

कर्मणि षष्ठी । वाथवा यत् मांसं स्वरौ पश्वञ्जनकाले रितं लिप्तमस्ति स्वरुणा पशुमनक्तीति श्रुतेः । यत् स्वधितौ शासि लिप्तमस्ति छेदनकालेऽवदानकाले च । यच्च शमितुर्हस्तयोः लिप्तं यच्च शमितुर्नखेषु लिप्तम् हे अश्व सर्वा ता सर्वाणि तानि अपि देवेषु अस्तु भवतु वचनव्यत्ययः सर्वं त्वदीयं देवभोग्यं भवतु ॥३२॥

यदूवध्यमुदरस्यापवाति य आमस्य क्रविषो गन्धोऽअस्ति ।
सुकृता तच्छमितारः कृण्वन्तूत मेधꣳ शृतपाकं पचन्तु ॥३३॥

उदरस्य ऊवध्यमीषज्जीर्णतृणपुरीषं यत् अपवाति अपगच्छति । भक्षितमपक्वमामाशयस्थमूवध्यमुच्यते । आमस्यापक्वस्य क्रविषो मांसस्य यो गन्धो लेशोऽस्ति शमितारः विशसितारः तत्सर्वं सुकृता सुकृतं सुसंस्कृतं कृण्वन्तु कुर्वन्तु । उतापि च मेधं मेध्यमश्वं शृतपाकं यथा पचन्तु शृतो देवयोग्यो ज्ञातः पाको यस्मिन्कर्मणि तथा पचन्तु अतिपक्वमीषत्पक्वं च मा कुर्वन्त्वित्यर्थः ॥३३॥

यत्ते गात्रादग्निना पच्यमानादभि शूलं निहतस्यावधावति ।
मा तद्भूम्यामाश्रिषन्मा तृणेषु देवेभ्यस्तदुशद्भ्यो रातमस्तु ॥३४॥

हे अश्व अग्निना पच्यमानात्ते तव गात्रात् शरीरात् यत् ऊष्मा रसो वा अवधावति अधस्ताद्गच्छति । तथा निहतस्य निःशेषेण हतस्य यत् अङ्गं शूलमभि अवधावति शूलेन पाके क्रियमाणे यन्निर्गच्छति तन्निर्गतमूष्माङ्गादिकं भूम्यां मा आश्रिषत् भूम्याश्लिष्टं मा भूत् श्रिषेः पुषादित्वाच्च्लेरङ् । तथा तृणेषु माश्रिषत् विशसनसमये तृणलग्नं मास्तु । किं तर्हि तत्पतितं तृणलग्नं सर्वं देवेभ्यो रातं दत्तमस्तु रा दाने । कीदृशेभ्यो देवेभ्यः उशन्ति कामयन्ते ते उशन्तः तेभ्यः हविः कामयमानेभ्यः वश कान्तौ लटः शत्रादेशः ॥३४॥

ये वाजिनं परिपश्यन्ति पक्वं य ईमाहुः सुरभिर्निर्हरेति ।
ये चार्वतो माꣳसभिक्षामुपासतऽउतो तेषामभिगूर्तिर्न इन्वतु ॥३५॥

ये जनाः पक्वं वाजिनमश्वं परिपश्यन्ति अयं पक्व इति जानन्ति । ये ईम् ईमित्यव्ययं चार्थे ये च इत्याहुः एवं कथयन्ति किम् सुरभिः सुगन्धः पाको ज्ञातः अ-

तो निर्हर अग्नेः सकाशादुत्तारयेति । ये च जनाः अर्वतोऽश्वस्य मांसभिक्षामुपासते हुतशिष्टमांसयाचनां कुर्वते । उतो अपि च तेषां पाकद्रष्ट्रादिजनानामभिगूर्तिः उद्यमो नोऽस्मानिन्वतु प्रीणातु । यद्वायं मन्त्रो देवपरो व्याख्येयः । ये देवाः पक्वं वाजिनं परिपश्यन्ति कदा होष्यतीति ये च विलम्बं दृष्ट्वा सुरभिः पाको जातोऽस्मभ्यं निर्हर देहीत्याहुः ये चार्वतो मांसभिक्षामुपासते मांसं याचन्ते तेषामभिगूर्तिः संकल्पोऽस्मान्प्रीणातु सफलो भवत्वित्यर्थः ॥ ३५ ॥

यन्नीक्षणं मांस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि ।
ऊष्मण्यापिधाना चरूणामङ्काः सूनाः परिभूषन्त्यश्वम् ॥ ३६ ॥

एते पदार्था अश्वं परिभूषन्ति अलंकुर्वन्ति स्वव्यापारेण साधयन्तीत्यर्थः भूष अलङ्कारे भौवादिकः । एते के तानाह यत् उखायाः (16.) स्थाल्याः नीक्षणं नितरामीक्षणं पाकपरीक्षार्थं दर्शनम् । कीदृश्या उखायाः मांस्पचन्याः मांसं पच्यते यस्यां सा मांस्पचनी तस्याः मांसपाकाधिकरणभूतायाः करणाधिकरणयोश्चेति [पा° ३. ३. ११७.] ल्युट् मांसस्य पचि युड्घञोरिति [काशिका° पा° ६. १. १४४. (17.)] मांसस्याकारलोपः टिड्ढाणञिति [पा° ४. १. १५.] ङीप् । तथा यूष्णः पक्वरसस्य आसेचनानि आसिच्यन्ते येषु तानि आसेचनसाधनानि या यानि पात्राणि पद्दन्निति यूषशब्दस्य यूषन्नादेशः । यानि च चरूणां मांसपूर्णपात्राणामपिधाना अपिधानानि आच्छादनपात्राणि । कीदृशानि तानि ऊष्मण्या ऊष्माणं धारयन्ति तानि ऊष्मण्यानि ऊष्मन्शब्दाद्धारणार्थे यप्रत्ययः आच्छादने ऊष्मा बहिर्न यातीत्यर्थः । तथा अङ्काः चिह्नसाधनानि हृदयाद्यवयवज्ञापकानि वेतसमयानि । सूनाः विशसनकरणभूताः स्वधित्यादयः । एतेऽश्वं परिभूषयन्ति ॥ ३६ ॥

मा त्वाग्निर्ध्वनयीद्धूमगन्धिर्मोखा भ्राजन्त्यभिविक्त जघ्रिः ।
इष्टं वीतमभिगूर्तं वषट्कृतं तं देवासः प्रतिगृभ्णन्त्यश्वम् ॥ ३७ ॥

हे अश्व पच्यमानाश्वावयव अग्निः त्वा त्वां मा ध्वनयीत् ध्वनिं मा कारयतु ध्वनौ सति भाण्डभङ्गः स्यात् दह्यमानं मांसं सिम-सिमिति शब्दं करोति तन्मास्तु

नोनयतिध्वनयतीत्यादिना [पा° ३. १. ५१.] एयन्ताच्चङ्प्रतिषेधः ह्म्यन्तक्षणेति [पा° ७. २. ५.] वृद्ध्यभावः । कीदृशोऽग्निः धूमगन्धिः धूमस्य गन्धो लेशो यत्र सः अल्पधूमवानित्यर्थः अल्पाख्यायामिति [पा° ५. ४. १३६.] धूमादिकारः । किं च आजन्ती अतितापिन दीप्यमाना उखा स्थाली मा अभिविक्त मा चलतु ओविजी भयचलनयोः लुङि तङि झलो झलीति [पा° ८. २. २६.] सिलोपे रूपम् न माङ्योगऽइति [पा° ६. ४. ७४.] अडभावः । कीदृशी उखा जघ्रिः जिघ्रति गन्धं गृह्णातीति जघ्रिः आदृगमेति [पा° ६. २. १७१.] किन्प्रत्ययः अधिष्ठात्र्या देवताया घ्राणम् । तमेवंविधमश्वं देवासः देवाः प्रतिगृभ्णन्ति प्रतिगृह्णन्तु । कीदृशमश्वम् इष्टं प्रयाजैः वीतमाप्रीभिः पर्यग्निकृतम् अभिगूर्तं ये यजामहऽइत्यागूर्त्योक्तम् वषट्कृतं वषट्कारेण संस्कृतम् ॥ ३७ ॥

निक्रमणं निषदनं विवर्तनं यच्च पड्वीशमर्वतः ।
यच्च पपौ यच्च घासिं जघास सर्वा ता तेऽअपि देवेष्वस्तु ॥ ३८ ॥

यत् निक्रमणं नितरां क्रमते यत्र तत् निक्रमणस्थानम् निषदनं नितरां सीदत्यस्मिन्निति निषदनमुपवेशनस्थानम् विवर्तनं विविधं वर्तते यत्र तत् इतस्ततो लुण्ठनस्थानम् सर्वत्राधिकरणे ल्युट् यच्चार्वतोऽश्वस्य पड्वीशम् पदेषु विशति पड्वीशं पादबन्धनम् । क्रियापरा वा निक्रमणादयः शब्दाः आलम्भसमये यानि अश्वस्य निक्रमणादीनि चेष्टितानि । किं च यच्च पपौ यज्जलं पीतवान् यच्च घासिमदनीयं तृणादिकं जघास भक्षितवान् घस्ल अदने लिट् हे अश्व ता तानि सर्वाणि ते तव निक्रमणादीनि देवेषु अस्तु सन्तु । देवार्थस्याश्वस्य रोमादीनामपि निरर्थकत्वं मास्त्वित्यर्थः ॥ ३८ ॥

यदश्वाय वास उपस्तृणन्त्यधीवासं या हिरण्यान्यस्मै ।
संदानमर्वन्तं पड्वीशं प्रिया देवेष्वायामयन्ति ॥ ३९ ॥

प्रिया प्रियाणि एतानि वस्तूनि देवेषु आयामयन्ति आगमयन्ति ऋत्विजोऽश्वस्यैतानि देवेष्वेव प्रापयन्तीत्यर्थः । कानीत्यत आह अश्वाय यत् अधीवासमाच्छाद-

कं वासो वस्त्रमुपस्तृणन्ति स्तृञ् आच्छादने क्र्यादिकः तथा या यानि हिरण्यानि सौवर्णशकलानि अस्मै अश्वाय उपस्तृणन्ति । तथा अर्वन्तम् षष्ठ्यर्थे द्वितीया अर्वतोऽश्वस्य संदानं शिरोबन्धनं पड्वीशं पादबन्धनम् । एतानि देवेषु प्रापयन्ति । कीदृशानि प्रिया प्रियाणि देवानामिष्टानि ॥३९॥

XIV. यत्ते॑ सा॒दे मह॑सा॒ शूकृ॑तस्य॒ पार्ष्ण्या॑ वा॒ कश॑या वा तु॒तोद॑ ।
स्रु॒चेव॒ ता ह॒विषो॑ऽअध्व॒रेषु॒ सर्वा॒ ता ते॒ ब्रह्म॑णा सूदयामि ॥४०॥

हे अश्व अश्ववारः सादे गमने यत्ते तव त्वां पार्ष्ण्या पादाधोभागेन कशया वा तुतोद पीडितवान् तुद व्यथने लिट् सदनं सादः घञ् कीदृशस्य तव महसा बलेन शूकृतस्य शूकृतमस्यास्ति शूकृतः तस्य शब्दानुकरणमेतत् शूकारं कुर्वतः । अध्वरेषु ता सर्वा तानि सर्वाणि ते तव पार्ष्णिकशाताडनानि ब्रह्मणा मन्त्रेणाहं सूदयामि षूद क्षरणे चुरादिः क्षारयामि यज्ञे आहुतिवेन कल्पयामीत्यर्थः । तत्र दृष्टान्तः हविषः स्रुचेव हविराज्यादिकं यथा स्रुचा जुह्वा सूदयामि तद्वत् । एकं तापदं पादपूरणाय ॥४०॥

चतु॑स्त्रिꣳशद्वा॒जिनो॑ दे॒वब॑न्धो॒र्वङ्क्री॒रश्व॑स्य॒ स्वधि॑तिः॒ समे॑ति ।
अच्छि॑द्रा॒ गात्रा॑ व॒युना॑ कृणोत॒ परु॑ष्परुरनु॒घुष्या॒ विश॑स्त ॥४१॥

स्वधितिः पशुच्छेदनसाधनोऽसिः अश्वस्य चतुस्त्रिंशत् वङ्क्रीः चतुस्त्रिंशत्संख्याकान्युभयपार्श्वास्थीनि समेति सम्यगागच्छति छेदनाय । कीदृशस्याश्वस्य वाजिनः वजति गच्छतीति वाजी तस्य वेगवत इत्यर्थः । देवबन्धोः देवानां बन्धुः प्रियस्तस्य देवा बन्धवो यस्येति वा । भावी निर्देशः । अश्वस्य चतुस्त्रिंशद्वङ्क्रयः अजादीनां षड्विंशतिः । अतो हे ऋत्विजो वयुना वयुनेन ज्ञानेनाश्वस्य गात्रा गात्राणि अच्छिद्रा अच्छिद्राणि छिद्रहीनानि यूयं कृणोत कुरुत स्वधितिना छिन्नानि सच्छिद्राणि वर्तन्ते तान्यच्छिद्राणि कुरुत । किं च परुः-परुः ग्रन्थिर्ना पर्वपरुषीति अमरः नित्यवीप्सयोरिति [पा॰ ८.१.४.] द्वित्वम् प्रतिपर्व प्रत्यवयवम् अनुघुष्य इदमिदमिति नाम्ना संशब्द्य यूयं विशस्त विशसनं छेदं कुरुत शसु हिंसायाम्

छान्दसः शपो लुक् । कृणोत कृ करणे स्वादिः तप्तनबिति [पा° ७.१.४५.] मध्यमवहुवचनस्य तबादेशः (18.) ततो गुणः । अनुघुष्य घुषिर् शब्दे क्त्वो ल्यप् ॥४१॥

एकस्त्वष्टुरश्वस्या विशस्ता द्वा यन्तारा भवतस्तथऽऋतुः ।
या ते गात्राणामृतुथा कृणोमि ता-ता पिण्डानां प्रजुहोम्यग्नौ ॥४२॥

अश्वस्य विशस्ता विशसनकर्ता एकः ऋतुः । कीदृशस्याश्वस्य त्वष्टुः दीप्तस्य । ऋतूपलक्षितः कालात्मा प्रजापतिरेवाश्वस्य शस्तेत्यर्थः शसेस्तृच् । तथा यन्तारा यन्तारौ नियमकर्तारौ द्वा द्वौ द्यावापृथिव्यभिमानिदेवौ भवतः तयोरेव सर्वेषां नियन्तृत्वादिति भावः । तथा ऋतुः अत्र ऋत्यक इति [पा° ६.१.१२८.] ह्रस्वप्रकृतिभावौ । एवमश्वस्य विशसितृयन्तृनुक्त्वाध्वर्युः स्वकर्माह हे अश्व ते तव गात्राणां पिण्डानां गात्रसम्बन्धिनां मांसपिण्डानां या यानि अङ्गानि अहं कृणोमि हन्मि छिनद्मि कृञ् बधे स्वादिः ऋतुथा ऋतौ ऋतूपलक्षिते वसन्तादियज्ञकाले ता-ता तानि-तान्यङ्गानि अग्नौ प्रजुहोमि प्रकर्षेण हुतानि करोमि ॥४२॥

मा त्वा तपत्प्रिय आत्मापियन्तं मा स्वधितिस्तन्व आतिष्ठिपत्ते ।
मा ते गृध्नुरविशस्तातिहाय छिद्रा गात्राण्यसिना मिथू कः ॥४३॥

हे अश्व प्रियः वल्लभो भोगायतनत्वात् तवात्मा देहः त्वा त्वां मा तपत् तप्तं दुःखितं मा कार्षीत् तव देहवियोगजनिता व्यथा मा भूदिति विज्ञानात्मानं प्रत्युच्यते । किम्भूतं त्वाम् अपियन्तम् अप्येतीत्यपियन् तम् देवलोकं गच्छन्तम् अपिपूर्वादेतेः शतृप्रत्ययः । किं च स्वधितिः शस्त्रं ते तव तन्वः तनूः अङ्गानि मा आतिष्ठिपत् मा स्थापयतु सर्वाणि छित्वा देवेभ्यो ददत्वित्यर्थः । तिष्ठतेर्ण्यन्तस्य लुङि चङि तिष्ठतेरिदिति [पा° ७.४.५.] इकारे कृते द्विवादि । किं च शमिता ते तव गात्राणि अङ्गानि अतिहाय त्यक्त्वा शास्त्रोक्तक्रमं त्यक्त्वा असिना शासेन मिथु मिथ्या छिद्रा छिद्राणि अयथछिन्नानि (19.) मा कः मा कार्षीत् करोतेर्लुङि मन्त्रे घसह्वरेत्यादिना [पा° २.४.८०.] च्लेर्लुक् गुणे हल्ङ्याबिति [पा° ६.१.६८.]

तिपो लोपे विसर्गः । मिथु इति मिथ्यार्थेऽव्ययम् संहितायां दीर्घः । कीदृशः शमिता गृध्नुः गृध्यतीति गृध्नुः लुब्धः केवलं मांसग्रहणेच्छुः अत एवाविशस्ता न विशेषेन शसति हिनस्ति अविशस्ता विशसने अकुशलः अत एवान्यथा (20.) मा छिदत् सम्यगवदानानि करोत्वित्यर्थः ॥४३॥

न वाऽउंऽएतन्म्रियसे न रिष्यसि देवाँ२॥ऽइदेषि पथिभिः सुगेभिः ।
हरी ते युञ्जा पृषतीऽअभूतामुपास्थाद्वाजी धुरि रासभस्य ॥४४॥

वै एवार्थे उ अवधारणे हे अश्व त्वमेतन्नैव म्रियसे इतराश्ववन्मृतो न भवसि देवत्वप्राप्तेर्वक्ष्यमाणत्वात् अत एव न रिष्यसि हिंस्यसे व्यर्थहिंसाया अभावात् रिषतेर्यकि परस्मैपदमार्षम् । ननु प्रत्यक्षत्वे मरणमङ्गनाशश्च दृश्यते तर्हि कथमेवमुच्यते तत्राह सुष्ठु गम्यते यत्र ते सुगाः तैः सुगेभिः सुगैः साधुगमनैः पथिभिर्मार्गैः देवयानरूपैः देवान् इत् एषि देवानेव गच्छसि अथो युक्ता मदुक्तिः । कथं देवान्प्रति गमनम् तत्राह हे अश्व ते तव हरी इन्द्राश्वौ युञ्जा युञ्जौ रथे युक्तौ अभूतां भविष्यतः आशंसायां भूतवच्चेति [पा॰ ३.३.१३२.] भूतकालप्रयोगो भविष्यदर्थे । हरीऽइन्द्रस्येति यास्कः [निघ॰ १.१५.] । तथा पृषती मरुतां वाहनभूते तव युञ्जौ अभूताम् पृषत्यो मरुतामिति यास्कः [निघ॰ १.१५.] । युङ्क्ते युञ्जौ ऋत्विग्दधृगित्यादिना [पा॰ ३.२.५९.] क्विन् क्विन्प्रत्ययस्य कुरिति [पा॰ ८.२.६२.] कुत्वम् युजेरसमासे इति [पा॰ ७.१.७१.] नुम् सुपां सुलुगिति [पा॰ ७.१.३९.] विभक्तेरात्वम् । किं च रासभस्याश्विवाहनस्य धुरि अश्विवाहनस्थाने वाजी कश्चिदश्वः उपास्थात् उपस्थास्यति । देवत्वं प्राप्तस्य तव वहनाय इन्द्रादयो निजवाहनानि प्रेषयिष्यन्तीति भावः यद्वा तत्तद्देवभावं प्राप्तं त्वां तानि-तानि वाहनानि वक्ष्यन्तीत्यर्थः ॥४४॥

सुगव्यं नो वाजी स्वश्व्यं पुꣳसः पुत्राँ२॥ऽउत विश्वापुषꣳ रयिम् ।
अनागास्त्वं नोऽअदितिः कृणोतु क्षत्रं नोऽअश्वो वनताꣳ हविष्मान् ॥४५॥

इदानीं याच्ञा क्रियते । वाजी देवत्वं प्राप्तोऽश्वः नोऽस्माकं सुगव्यं शोभनं गो-

समूहं कृणोतु करोतु गवां समूहो गव्यम् खलगोरथादिति [पा° ४.२.५०.] यत्प्रत्ययः शोभनं गव्यं सुगव्यम् । तथा स्वश्व्यं कृणोतु अश्वानां समूहः अश्व्यम् केशाश्वेति [पा° ४.२.४८.] विकल्पात् पक्षे यत् शोभनमश्व्यं स्वश्व्यम् । तथा पुंसः पुत्रान्करोतु पुत्रशब्दोऽपत्यवाचक इति पुंस इति विशेषणम् । यद्वा पुंसः पुरुषार्थसाधकान् पुत्रान्करोतु । उतापि च रयिं धनं करोतु कीदृशं रयिं विश्वपुषम् पुष्णाति पुषः इगुपधेति [पा° ३.१.१३५.] कप्रत्ययः विश्वस्य सर्वस्य पुषस्तम् सर्वजनपोषणसमर्थं धनं करोत्वित्यर्थः संहितायां विश्वशब्दस्य दीर्घः । किं च नोऽस्माकमनागस्त्वं करोतु नास्ति आगः अपराधः पापरूपो यस्य सोऽनागाः तस्य भावोऽनागस्त्वम् दीर्घश्छान्दसः निष्पापत्वं करोतु पापसद्भावे उक्तफलाप्राप्तिः । किं च अश्वो नोऽस्माकं क्षत्रं क्षतत्राणं बलं पराभवाद्रक्षणं वा करोतु । कीदृशोऽश्वः अदितिः नास्ति दितिः खण्डनं दैन्यं वा यस्य सः । हविष्मान् हविरस्यास्ति हविष्मान् तदस्यास्तीति [पा° ५.२.९४.] मतुप् हविर्भूतावयवः यद्वा देवतात्या हविष्मान् । ईदृशोऽश्वो नः क्षत्रं वनतां करोतु वनतिः करोत्वित्यर्थः ॥४५॥

XV. a. इमा नु कं भुवना सीषधामेन्द्रश्च विश्वे च देवाः ।
b. आदित्यैरिन्द्रः सगणो मरुद्भिरस्मभ्यं भेषजा करत् ।
c. यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह सीषधाति ॥४६॥

का° [२०.८.१२.] इमा नु कमिति च द्विपदाः । अयस्मयपात्रेणाश्वलोहितहोमानन्तरमिमा नु कमित्याद्याः षट् द्विपदाः जुहोति । कण्डिकाद्वयस्य षडर्धानि सन्ति तैः षडाहुतीर्जुहोतीति सूत्रार्थः ॥ द्विपदाछन्दस्का विश्वदेवदेवत्या आप्त्यपुत्रभुवनदृष्टास्तिस्र ऋचः । नु कम् एतौ निपातौ पादपूरणौ इमा इमानि भुवना भुवनानि भूतजातानि वयं सीषधाम साधयामः वशीकुर्म इत्यर्थः साधयतेर्लुङि उत्तमबहुवचने रूपम् अडभाव आर्षः । किं च इन्द्रः इदि परमैश्वर्ये ऐश्वर्यवान् सगणो निजगणैः परिवारैः सहित इन्द्रो देवेशो विश्वे देवाश्च आदित्यैः द्वादशभिः मरुद्भिः एकोनपञ्चाशत्संख्यैश्च सहिताः अस्मभ्यं भेषजा भेषजानि औषधानि हितानि करत् कुर्वन्तु सर्वे देवा अस्माकं हितकारिणो भवन्त्वित्यर्थः । किं च

EE EE E*

इन्द्रः आदित्यैः सह नोऽस्माकं यज्ञमश्वमेधं तन्वं शरीरं प्रजां पुत्रादिकां च सीषधाति साधयतु वशीकरोत्वित्यर्थः नीरोगाः सपुत्रा वयं यज्ञं सम्यक्कुर्म इति भावः ॥४६॥

a-c. अग्ने त्वं नोऽअन्तम उत° ॥४७॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां पञ्चविंशोऽध्यायः ॥२५॥ ॥

तिस्रो द्विपदा व्याख्याताः [३.२५.२६ a.] ॥ ॥ समिद्धोऽअञ्जन् [२९.१.] आश्वमेधिकोऽध्याय इति वचनादत्र क्षौत्रे तन्मन्त्राणां विनियोगः ॥ समाप्तोऽश्वमेधः सप्तविंशत्युत्तरवर्षसाध्यः ॥४७॥

श्रीमन्महीधरकृते वेददीपे मनोरमे । अध्यायः पञ्चविंशोऽयमश्वमेधगतो ऽगमत् ॥२५॥ ॥

अथ काण्वशाखायां पाठविशेषः ॥

१ - आण्डाभ्याम् ॥१॥ १ आदि° - इत्त्वंः ॥२॥ २ - कनीनकाभ्याम् ॥३॥ २ कर्णा° - स्तुपेन ॥४॥ ३ - कपिञ्जलान् ॥५॥ ३ त्वं - रोमाभ्याम् ॥६॥ ४ [°याया चतु°] ॥७॥ ५ [°या सोमस्य चतु°] ॥८॥ ६ [°रुणाऽअल्गा°] ॥९॥ ७ [कूष्मा° K.] ॥१०॥ ८ [क्रोलोऽदि° - °थौपसेना° J.] - °रीतता ॥११॥ ८ नभं - भस्मना ॥१२॥ ९-२१ [व्यशेम] ॥१३-२५॥ २२-२६ [पुरोलाशम°] ॥२६-३०॥ २७-३४ [°माञ्जिष° J.] ॥३१-३८॥ ३५-३८ ॥३९-४२॥

XIV. । ३९ ॥४३॥ ॥ XV. । ४६.४७ ॥४४.४५॥ ॥

पञ्चदशानुवाकेषु पञ्चचत्वारिंशत् ॥ ॥

इति काण्वीयायां वाजसनेयसंहितायां सप्तविंशोऽध्यायः ॥२७॥ ॥

I. a. अग्निश्च पृथिवी च संनते ते मे संनमतामदः ।

b. वायुश्चान्तरिक्षं च संनते ते मे० । c. आदित्यश्च द्यौश्च संन० ।
d. आपश्च वरुणश्च संन० । e. सप्त स७ंसदोऽअष्टमी भूतसाधनी ।
f. सकामाँ२॥ऽअध्वनस्कुरु संज्ञानमस्तु मेऽमुना ॥ १ ॥

श्री (1.) । इषे त्वेत्यारभ्य दर्शपौर्णमासपितृयज्ञाग्निहोत्रोपस्थानपशुचातुर्मास्याग्निष्टोमवाजपेयराजसूयाग्निसौत्रामण्यश्वमेधसम्बद्धा मन्त्रा व्याख्याताः । इदानीं खिल्यान्युच्यन्ते क्वचिद्विनियोगानुक्तेः । तेषां विवस्वानृषिरन्यस्यानुक्तेः आदित्यानीमानि यजूंषि व्याख्यायन्तऽइति श्रुतेः [बृहदारण्य० ५.५.३३.] याज्ञवल्क्यो वा याज्ञवल्क्येन व्याख्यायन्तऽइति श्रुतेः ॥ ॥ अग्निश्च । सप्त लिङ्गोक्तानि यजूंषि । चतस्र ऋग्गायत्र्यः । सप्त संसदः आसुर्यनुष्टुप् । सकामान् प्राजापत्यानुष्टुप् । यथेमाम् ब्राह्मी गायत्री ॥ अग्निश्च पृथिवी च संनते संनमनं संनतम् आनुकूल्येन प्रवृत्तिः अग्निपृथिव्यौ भोगाय संगते अतो ब्रवीमि ते अग्निपृथिव्यौ मे ममादः अमुकं संनमताम् संनमयतां वशवर्तिनं कुरुतामित्यर्थः । अद इति पुरुषादेर्नाम द्वितीयान्तं प्रयोज्यम् । छन्दस्युभयथेति [पा० ३.४.११७.] शपोऽप्यार्धधातुकत्वाणेरनिटीति [पा० ६.४.५१.] णिचो लोपः संनमतामित्यत्र । एवमुत्तरेष्वपि मन्त्रेषु योज्यम् । वायुरन्तरिक्षं च संनते ते ममामुकं संनमयताम् । आदित्यः द्यौश्च संनते ते म० । आपश्च वरुणश्च संनते ते म० ॥ परमात्मानं प्रत्युच्यते हे स्वामिन् यस्य तव सप्त संसदः संसदनानि अधिष्ठानानि अग्निवाय्वन्तरिक्षादित्यद्युलोकाम्बुवरुणाख्यानि तत्राष्टमी भूतसाधनी पृथ्वी भूतानि साधयति उत्पादयति भूतसाधनी भूमिं विना भूतोत्पत्तेरभावात् अतः सर्वाधिष्ठानभूतस्त्वमध्वनो मार्गान् सकामान्कुरु येषु मार्गेषु मया गम्यते तत्रास्माकं कामप्राप्तिरस्त्वित्यर्थः । किं च मे ममामुना देवदत्तादिना संज्ञानं संगतं ज्ञानमस्तु इष्टेन मम प्रीतिरस्तु ॥ विज्ञानात्मा वोच्यते यस्य तव सप्त संसदः पञ्च बुद्धीन्द्रियाणि मनो बुद्धिश्चेति सप्तायतनानि अष्टमी भूतसाधनी भूतानि साधयति वशीकरोति भूतसाधनी वाक् स त्वं नोऽस्माकमध्वनः सकामान्कुरु अमुना सह मे संज्ञानं संगतमस्तु ॥ १ ॥

a. यथेमां वाचं कल्याणीमावदानि जनेभ्यः ।

ब्रह्मराजन्याभ्याᳪ शूद्राय चार्याय च स्वाय चारणाय ।

b. प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृध्यतामुप मादो नमतु ॥ २ ॥

इमां कल्याणीमनुद्वेगकरीं वाचमहं यथा यतः आवदानि सर्वतो ब्रवीमि दीयतां भुज्यतामिति सर्वेभ्यो वच्मि । केभ्यस्तदाह ब्रह्मराजन्याभ्यां ब्राह्मणाय राजन्याय क्षत्रियाय च शूद्राय अर्याय वैश्याय स्वायात्मीयाय अरणाय पराय अरणो ऽपगतोदकः शत्रुः (2.) नास्ति रणः शब्दो येन सह वाक्सम्बन्धरहितः शत्रुरिति वा ॥ प्रियो देवानाम् मध्येऽवसानरहितानुष्टुप् लौगाक्षिदृष्टा । यथेति पूर्वोक्तेरत्र तथाशब्दोऽध्याहार्यः यतोऽहं ब्राह्मणादिभ्यः कल्याणीं वाचं वदामि तथा ततोऽहं देवानां प्रियः भूयासम् इह संसारे दक्षिणायै दक्षिणायाः दातुश्च प्रियः भूयासम् देवा दक्षिणादातारश्च मयि प्रीतिं कुर्वन्त्वित्यर्थः । किं च मे ममायं कामः समृध्यतां सफलो भवतु अयमिति नामनिर्देशः धनपुत्रादिलाभकामो मे सम्पद्यतामित्यर्थः । किं च अदो मा मामुपनमतु अद इति इष्टनामग्रहणम् देवदत्तादिर्मा प्रीणयतु (3.) ॥ २ ॥

a. बृहस्पते ऽअति यदर्यो ऽअर्हाद्द्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदयच्छवस ऽऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥

b. उपयामगृहीतोऽसि बृहस्पतये त्वा । c. एष ते योनिर्बृहस्पतये त्वा ॥ ३ ॥

ब्रह्मदेवत्या त्रिष्टुप् गृत्समददृष्टा बृहस्पतिसवे बार्हस्पत्यग्रहणेऽस्याः सोपयामाया विनियोगः । ऋतात् सत्यात् ब्रह्मणः सकाशात् प्रजातं प्रकृष्टं जातं जन्म यस्य ऋतप्रजातः हे ऋतप्रजात हे बृहस्पते बृहतां वेदानां पते पालक चित्रं नानाविधं तत् द्रविणमस्मासु यजमानेषु धेहि धारय स्थापय देहीत्यर्थः । तत्किम् अर्यः स्वामी यज्जनमर्हात् अर्हति पूजयति लेटोऽडाटाविति [पा° ३. ४. ९४.] आडागमः अर्यः स्वामिवैश्ययोरिति [पा° ३. १. १०३.] अर्यशब्दः स्वामिन्यन्तोदात्तः वैश्ये आद्युदात्तः ईश्वरयोग्यं धनं देहीत्यर्थः । यज्जनं जनेषु लोकेषु वि-

भाति विविधं शोभते । कीदृशं धनं द्युमत् द्यौः कान्तिरस्यास्ति द्युमत् दिव उच्चेति [पा° ६.१.१३१.(4.)] उकारः । क्रतुमत् क्रतवो यज्ञा विद्यन्ते येन तत् येन यज्ञाः क्रियन्ते तादृशं धनं देहीत्यर्थः । यत् धनं शवसा बलेन दीदयत् दापयति प्रापयति वा धनान्तरम् तद्धनं देहीत्यर्थः दय दानगतिहिंसादानेषु अस्माण्णिजन्ताल्लुङि रूपम् अडभाव आर्षः ॥ उपयामेन पात्रेण गृहीतोऽसि बृहस्पतयेऽर्थाय त्वा गृह्णामि । स्थापयति एष ते योनिः स्थानम् बृहस्पतये त्वां सादयामि ॥३॥

a. इन्द्र॒ गोम॑न्नि॒हाया॑हि॒ पिबा॒ सोम॑७ शतक्रतो । वि॒द्यद्भि॒र्ग्राव॑भिः सु॒तम् ॥

b. उ॒प॒या॒मगृ॑हीतो॒ऽसीन्द्रा॑य त्वा॒ गोम॑ते ।

c. ए॒ष ते॒ योनि॒रिन्द्रा॑य त्वा॒ गोम॑ते ॥४॥

हे इन्द्रदेवत्ये गायत्र्यौ रम्याक्षिदृष्टे गोसवे यज्ञे ग्रहग्रहणे नियुक्ते सोपयामे । शतं क्रतवः कर्माणि यस्य स शतक्रतुः हे शतक्रतो हे इन्द्र हे गोमन् गावो धेनवः स्तुतयः किरणा वा विद्यन्ते यस्य स गोमान् त्वमिह यज्ञे आयाहि आगच्छ सोमं च पिब द्व्यचोऽतस्तिङ इति [पा° ६.३.१३५.] दीर्घः । कीदृशं सोमं ग्रावभिः सुतमश्मभिरभिषुतम् कीदृशैर्ग्रावभिः विद्यद्भिः विशेषेण द्यन्ति खण्डयन्तिः ते विद्यन्तः तैः दो अवखण्डने दिवादित्वाच्छन् शतरि ओतः श्यनीति [पा° ७.३.७१.] ओकारलोपः ॥ उपया° गोमते इन्द्राय त्वां गृह्णामि । सादयति एष ते° ॥४॥

a. इन्द्राया॑हि वृत्रह॒न्पिबा॒ सोम॑७ शतक्रतो । गोम॑द्भि॒र्ग्राव॑भिः सु॒तम् ॥

b. c. = ४ b. c. ॥५॥

वृत्रं दैत्यं हन्ति वृत्रहा शतं क्रतवो मखा यस्य स शतक्रतुः । हे वृत्रहन् हे शतक्रतो हे इन्द्र त्वमायाहि आगच्छ सोमं च पिब कीदृशं सोमं ग्रावभिः सुतम् कीदृशैर्ग्रावभिः गोमद्भिः गौः स्तुतिर्विद्यते येषां ते गोमन्तस्तैः ॥ उप° एष ते° व्याख्याते ॥५॥

a. ऋ॒तावा॑नं वैश्वान॒रमृ॒तस्य॒ ज्योति॑ष॒स्पति॑म् । अज॑स्रं घ॒र्मम॑ीमहे ॥

b. उ॒प॒या॒मगृ॑हीतो॒ऽसि वैश्वान॒राय॑ त्वा । c. ए॒ष ते॒ योनि॑र्वैश्वान॒राय॑ त्वा ॥६॥

तिस्रो वैश्वानरीयाः पुरोऽनुवाक्याः । आद्या गायत्री प्राङ्गराजिदृष्टा । वयं वैश्वानरमीमहे याचामः यज्ञसमाप्तिमिति शेषः ईमहे याच्ञाकर्मसु पठितः । कीदृशं वैश्वानरम् ऋतवानम् ऋतं सत्यं यज्ञो जलं वास्यास्ति ऋतवा तम् छन्दसीवनिपौ वाच्याविति [पा° ५. २. १०९. वा° २.] अस्त्यर्थे वन्प्रत्ययः संहितायामृतस्य दीर्घः । ऋतस्य सत्यस्याविनाशिनो ज्योतिषः तेजसः पतिं पालकम् तेजोऽधिष्ठानमित्यर्थः । अजस्रं न जस्यति नश्यति अजस्रस्तमनुपक्षीणाम् जसु हिंसायाम् नमिकम्पीति [पा° ३. २. १६७.] रप्रत्ययः । घर्मं घृ क्षरणदीप्त्योः जिघर्ति क्षरति जलं घर्मस्तम् दीप्तं वा ॥ उपया° वैश्वानराय त्वां गृह्णामि । एष ते° सादयामि ॥ ६ ॥

a. वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः ।
इतो जातो विश्वमिदं विचष्टे वैश्वानरो यतते सूर्येण ॥

b. c. = ६ b. c. ॥ ७ ॥

त्रिष्टुप्कुत्सदृष्टा । वैश्वानरस्य सुमतौ शोभनबुद्धौ वयं स्याम भवेम । कं निपातः पादपूरणः हि यस्माद्धितोवैश्वानरः इतोऽरणितो जातः उत्पन्नः सन् इदं विश्वं सर्वं विचष्टे कर्मानुरूपं पश्यति सूर्येण सह यतते स्पर्धते च सूर्यसमतेजा इत्यर्थः । कीदृशोऽग्निः राजा राजते दीप्यते राजा । भुवनानां भूतजातानामभिश्रीः आश्रयणीयः अभि समन्तात् श्रीयते सेव्यतेऽभिश्रीः कर्मणि क्विप् । उप° एष ते उक्ते ॥ ७ ॥

a. वैश्वानरो न ऊतयऽआ प्रयातु परावतः । अग्निरुक्थेन वाहसा ॥

b. c. = ६ b. c. ॥ ८ ॥

गायत्री । नोऽस्माकमूतयेऽवनाय परावतः दूरदेशाद्वैश्वानरः आ प्रयातु आगच्छतु केन वाहसा वाहनभूतेन उक्थेन स्तोमेन वाहिष्ठो वाहनानां स्तोमो दूतो हुतं नरा (5.) इति श्रुत्यन्तरे स्तोमस्य वाहनत्वमुक्तम् । उप° एष° उक्ते ॥ ८ ॥

a. अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् ॥

b. उपयामगृहीतोऽस्यग्नये त्वा वर्चसे । c. एष ते योनिरग्नये त्वा वर्चसे ॥ ९ ॥

अग्निदेवत्या गायत्री वसिष्ठभरद्वाजदृष्टा पुरोरुक् । महान्गयः स्तुतिर्यस्य स महागयो महागृहरूपो वा तमग्निं वयमीमहे याचयामः । तं कं योऽग्निर्ऋषिः मन्त्रद्रष्टा । पवमानः पव गतौ पवतऽइतस्ततो गच्छति पवमानः यद्वा पूङ् शोधने पवते शोधयति पवमानः । पाञ्चजन्यः पञ्चजनेभ्यो हितः विप्रादयश्चत्वारो वर्णा निषादश्चेति पञ्चजनास्तेषां यज्ञाधिकारात् पुरोहितः पुरोऽग्रे हितः स्थापितः दधातेर्निष्ठा ॥ उप॰ वर्चसे तेजोरूपायाग्नये त्वां गृह्णामि । एष॰ ॥ ९ ॥

a. महाँ२॥ऽइन्द्रो वज्रहस्तः षोडशी शर्म यच्छतु । हन्तु पाप्मानं योऽस्मान्द्वेष्टि ॥

b. उपयामगृहीतोऽसि महेन्द्राय त्वा । c. एष ते योनिर्महेन्द्राय त्वा ॥ १० ॥

महेन्द्रदेवत्या गायत्री वसिष्ठकृता । पुरोरुक् । इन्द्रः शर्म सुखं यच्छतु ददातु योऽस्मान्द्वेष्टि तं च पाप्मानं पापिष्ठं हन्तु नाशयतु यद्वास्मद्द्वेष्टारं पाप्मानं च पापं ब्रह्महत्यादिकं हन्तु अस्त्री पङ्कं पुमान्पाप्मेत्यमरः [१. १. १३१.] । कीदृश इन्द्रः महान् श्रेष्ठः । वज्रहस्तः वज्रं हस्ते यस्य सः । षोडशी पञ्च प्राणा दशेन्द्रियाणि मनश्चेति षोडशपदार्था लिङ्गशरीररूपा यस्य स षोडशी आत्मरूप इत्यर्थः ॥ उप॰ एष॰ उक्तौ ॥ १० ॥

तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः ।
अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥ ११ ॥

इन्द्रदेवत्या पथ्या बृहती नोधागोतमदृष्टा स्वाध्यायादिषु नियुक्ता । आदित्ययाज्ञवल्क्ययोरार्षमाध्यायात् । हे यजमानाः तमिन्द्रं वयं गीर्भिः स्तुतिलक्षणाभिर्वाग्भिः अभिनवामहे सम्यक् स्तुमहे नु स्तुतौ व्यत्ययेन शप् । किम्भूतमग्निं वो युष्माकं दस्मं दर्शनीयम् दस दर्शने मप्रत्ययः । ऋतिषहम् ऋ गतौ क्तिन्प्रत्ययः ऋत्या गत्या सहतेऽभिभवति शत्रूनिति ऋतिषट् तम् पूर्वपदाच्चेति [पा॰ ८. ३. १०६. (6.)] षत्वम् संहितायां दीर्घः । वसोः वासयितुः स्थितिहेतुभूतस्यान्धसोऽन्नस्य षष्ठी तृतीयार्थे अन्नेन मन्दानं मोदमानम् मदिङ् स्वप्ने जाड्ये मदे मोदे स्तुतौ

गताविति धातोः शानच्प्रत्ययेन शपो लुक् । दृष्टान्तमाह वत्सं न नकार इवार्थः स्वसरेषु स्वेनैवात्मनैव सरन्ति प्रसरन्ति किरणा येषु ते स्वसरा दिवसाः तेषु यथा धेनवो नवप्रसूता गावो वत्सं नुवन्ति स्तुवन्ति शब्दैराह्वयन्तीत्यर्थः । तद्वद्यमिन्द्रं स्तुमः ॥११॥

यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो ।

महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ॥१२॥

अग्निदेवत्यानुष्टुब्वसूयुदृष्टा । हे उद्गातः अग्नये अग्न्यर्थं तत् बृहत्साम अर्च गाय बृहत्साम्नो गानं कुरु तत्किम् यत् वाहिष्ठम् वाहयति प्रापयति इष्टमिति वाहयितृ वहेर्ण्यन्तात्तृच् अत्यन्तं वाहयितृ वाहिष्ठम् अतिशायने तमबिष्ठनाविति [पा॰ ५.३.५५.] अनुवृत्तौ तुश्छन्दसीति [पा॰ ५.३.५९.] इष्ठनि परे तुरिष्ठेमेयःस्विति [पा॰ ५.४.१५४.] च तृचो लोपे वाहिष्ठमिति रूपम् । किं च सामगानेन प्रत्यक्षमग्निं ब्रूहि किम् हे विभावसो विभा कान्तिरेव वसु धनं यस्य स विभावसुः हे अग्ने रयिः धनं वाजा अन्नानि च त्वत् त्वत्तः सकाशात् उदीरते उद्गच्छन्ति ईर गतौ कम्पे च लट् शपो लुक् अदभ्यस्तात् [पा॰ ७.१.४.] । तत्र दृष्टान्तः महिषीव यथा महिषी प्रथमपरिणीता स्त्री गृहात् भोगार्थं पतिं प्रति उदीर्ते उद्गच्छति । एकं त्वत्पदं पादपूरणम् रयिः त्वदुदीर्ते इति वा ॥१२॥

एह्यू षु ब्रवाणि तेऽग्नऽइत्थेतरा गिरः । एभिर्वर्धासऽइन्दुभिः ॥१३॥

अग्निदेवत्या गायत्री भरद्वाजदृष्टा हे अग्ने त्वमेहि आगच्छ उ पादपूरणः सुञि चेति (7.) संहितायामुकारस्य दीर्घः । इत्था इत्थमनेन प्रकारेण न (8.) इतराः अन्याः गिरो वाणीः स्तुतिलक्षणाः ते तव सु ब्रवाणि सुतरां वदानि ब्रूञो लोट् । किं च एभिरिन्दुभिः सोमैः वर्धासि वर्धस्व लेटोऽडाटौ ॥१३॥

ऋतवस्ते यज्ञं वितन्वन्तु मासा रक्षन्तु ते हविः ।

संवत्सरस्ते यज्ञं दधातु नः प्रजां च परिपातु नः ॥१४॥

अग्निदेवत्या बृहती ९.८.११.८. वर्णपादा विषमपादा नवकाष्टकैकादशाष्टि-

नो विषमपादेति वचनात् । हे अग्ने ऋतवः ऋतूपलक्षिताः कालविशेषाः ते तव यज्ञं वितन्वन्तु विस्तारयन्तु । मासाः चैत्राद्यधिष्ठातारो देवास्ते तव हविः पुरोडाशादिकं रक्षन्तु पान्तु । संवत्सरस्तदधिष्ठाता देवः ते तुभ्यं त्वदर्थं नोऽस्माकं यज्ञं दधातु पुष्णातु नोऽस्माकं प्रजां पुत्रादिकां च परिपातु रक्षतु संवत्सर एव ॥ १४ ॥

उपह्वरे गिरीणाᳪं संगमे च नदीनाम् । धिया विप्रोऽअजायत ॥ १५ ॥

सोमदेवत्या गायत्री वत्सदृष्टा । गिरीणां पर्वतानामुपह्वरे निकटे नदीनां गङ्गादीनां च संगमे विप्रो मेधावी सोमः अजायत उत्पन्नः जनिर्लङ् कया धिया बुद्ध्या विप्रादयो मया यज्ञं करिष्यन्तीति विचार्येत्यर्थः ॥ १५ ॥

II. उच्चा ते जातमन्धसो दिवि सद्भूम्याददे । उग्रᳪं शर्म महि श्रवः ॥ १६ ॥

सोमदेवत्यास्तिस्रो गायत्र्य आमहीयवदृष्टाः । हे सोम ते तव अन्धसोऽन्नाद्रसरूपात् जातमुत्पन्नं होमतो जातमपूर्वम् उच्चा उच्चं गतं दिवि स्वर्गे सत् विद्यमानं भूमिः आददे गृह्णाति भूमिशब्दस्य विसर्गलोपे संधिश्छान्दसः (9.) । किं तत् द्युलोकस्थं भूमिर्गृह्णाति तदाह । उग्रमुत्कृष्टं शर्म सुखं गृहपुत्रादिजन्यं महि महत् श्रवः कीर्तिर्धनं वा ॥ अनेन मन्त्रेण पञ्चाहुतिपरिणाम उक्तः । स यथा । हुताहुतिरादौ दिवि गच्छति ततोऽन्तरिक्षे जलरूपेण ततो भूमावन्नरूपेण ततो नरे रेतोरूपेण ततो योनौ नररूपेणागत्य तं नरं (10.) धनयशोभ्यां सुखिनं करोतीति भावः ॥ १६ ॥

स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः । वरिवोवित्परिस्रव ॥ १७ ॥

हे सोम स त्वं नोऽस्माकं परिस्रव क्षर रसरूपो भूत्वाहुतिर्भवेत्यर्थः किमर्थमिन्द्राय वरुणाय मरुद्भ्यश्च इन्द्रादीनां तृप्तये परिस्रवेत्यर्थः । कीदृशायेन्द्राय यज्यवे यष्टुं योग्यो यज्युस्तस्मै यष्टव्याय इदं त्रयाणां विशेषणम् यज्युभ्य इति मरुताम् । कीदृशस्त्वं वरिवोवित् वरिवो धनं वेत्ति जानाति विन्दति लभते वा वरिवोवित् धनस्य ज्ञाता प्रापकश्च ॥ १७ ॥

FF FF F*

एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम् । सिषासन्तो वनामहे ॥ १८ ॥

अर्यः ईश्वरः सोमः एना एनानि विश्वानि सर्वाणि मानुषाणां नराणां द्युम्नानि धनानि यशांसि वा आ नयत्विति शेषः अस्मभ्यं ददात्वित्यर्थः तानि सोमदत्तानि द्युम्नानि वयं वनामहे वन सम्भक्तिशब्दयोः लट् सम्भजामहे । कीदृशा वयं सिषासन्तः षनु दाने सनितुं दातुमिच्छन्ति सिषासन्ति ते सिषासन्तः सनेर्धातोः सन्नन्ताच्छतृप्रत्ययः जनसनखनां सञ्झलोरिति [पा° ६.४.४२.] आत्वम् सन्यन्यत इति [पा° ७.४.७९.] अभ्यासेकारः दानं कुर्वाणा धनभाजः स्यामित्यर्थः ॥ १८ ॥

अनु वीरैरनु पुष्यास्म गोभिरन्वश्वैरनु सर्वेण पुष्टैः ।
अनु द्विपदानु चतुष्पदा वयं देवा नो यज्ञमृतुथा नयन्तु ॥ १९ ॥

आशीरियं देवदेवत्या त्रिष्टुप् मुद्गलदृष्टा । वयं वीरैः पुत्रैः अनुपुष्यास्म पुष्टा भवेम पुषेराशीर्लिङि उत्तमबहुवचनम् गोभिर्धेनुभिः अनुपुष्यास्म उपसर्गावृत्त्या क्रियावृत्तिः अश्वैरनु पुष्यास्म सर्वेणान्येनापि कामेन पुष्यास्म पुष्टैः सर्वपदार्थैर्गृहादिभिः पुष्यास्म । द्वौ पादौ यस्येति द्विपात् तेन द्विपदा मनुष्येण दासादिना चतुष्पदा गजादिना च पुष्यास्म पादोऽन्यतरस्यामिति [पा° ४.१.८.] अन्त्यलोपः पादः पदिति [पा° ६.४.१३०.] पदादेशः । किं च ऋतुथा ऋतावृतौ काले-काले देवा नोऽस्माकं यज्ञं नयन्तु प्रापयन्तु प्राप्नुवन्तु ॥ १९ ॥

अग्ने पत्नीरिहावह देवानामुशतीरुप । त्वष्टारꣳ सोमपीतये ॥ २० ॥

अग्निदेवत्या गायत्री मेधातिथिदृष्टा । इतः पञ्च ऋचोऽग्निष्टोमे नेष्टुर्याज्याः आद्या प्रातःसवने नेष्टृचमसयागे याज्या । हे अग्ने देवानां पत्नीः इह यज्ञे त्वमुपावह आगमय कीदृशीः पत्नीः उशतीः हविः कामयमानाः वशेः शत्रन्तात् उगित इति [पा° ४.१.६.] ङीप् । किं च सोमपीतये सोमपानाय त्वष्टारं देवं चोपावह ॥ २० ॥

अभि यज्ञं गृणीहि नो ग्नावो नेष्टः पिब ऋतुना । त्वꣳ हि रत्नधा असि ॥ २१ ॥

द्वे ऋतुदेवते गायत्र्यौ मेधातिथिदृष्टे ऋतुयागे नेष्टुर्याज्ये । ग्नाः पत्न्योऽस्य स-

त्तीति ग्रावा तदस्यास्तीति [पा° ५.२.९४.] मतुप् (11.) मादुपधाया इति [पा° ८.२.९.] वत्वम् तस्य सम्बोधनं हे ग्रावः पत्नीवन् हे नेष्टः नोऽस्माकं यज्ञमभिगृणीहि स्तुहि गृ शब्दे क्र्यादित्वात् श्ना ई हल्यघोरिति [पा° ६.४.११३.] तस्येकारः प्वादीनां ह्रस्व इति [पा° ७.३.८०.] धातोर्ह्रस्वः । किं च ऋतुना देवेन सह पिब सोममिति शेषः । हि यस्मात् त्वं रत्नधा असि रत्नानि दधाति ददाति रत्नधाः रमणीयधनानां दातासि ॥२१॥

द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत । नेष्ट्रादृतुभिरिष्यत ॥२२॥

द्रविणस्शब्दः सान्तो धनवाची द्रविणो धनं ददाति द्रविणोदाः धनदाताग्निः पिपीषति पातुमिच्छति सोममिति शेषः पीङ् पानेऽस्माद्दिवादिकात्सन्प्रत्ययः । अतो हे ऋत्विजः यूयं जुहोत जुहुत प्रतितिष्ठत च तप्तनबिति [पा° ७.१.४५.] तबादेशः कर्मसमाप्तियुक्ता भवतेत्यर्थः । किं च नेष्टुरिदं नेष्ट्रम् वृद्ध्यभाव आर्षः नेष्टुर्धिष्ण्यात् ऋतुभिः देवैः सह इष्यत सोमं प्रतिगच्छत इष गतौ दिवादित्वात् श्यन् लोट् ॥२३॥

तवायं सोमस्त्वमेह्यर्वाङ् शश्वत्तमꣳ सुमना अस्य पाहि ।
अस्मिन्यज्ञे बर्हिष्या निषद्या दधिष्वेमं जठर इन्दुमिन्द्र ॥२३॥

इन्द्रदेवत्या त्रिष्टुप् विश्वामित्रदृष्टा । माध्यन्दिने सवने नेष्टृचमसयागे याज्या । हे इन्द्र तव अयं सोमोऽस्ति अतः अर्वाङ् अस्मदभिमुखः त्वमेहि आगच्छ शश्वत्तमं सर्वकालमस्य पाहि कर्मणि षष्ठी इमं सोमं रक्ष पा रक्षणे लोट् । कीदृशः त्वं सुमनाः शोभनं मनो यस्य सः प्रसन्नचित्तः । किं च अस्मिन्यज्ञे बर्हिषि आस्तृतदर्भेषु निषद्य उपविश्य इममिन्दुं सोमं जठरे उदरे दधिष्व धारय धि धारणे तुदादिः व्यत्ययेन शपः श्लुस्तङ् अभ्यासेकारस्याकार आर्षः ॥२३॥

अमेव नः सुहवा आ हि गन्तन नि बर्हिषि सदतना रणिष्टन ।
अथा मदस्व जुजुषाणो अन्धसस्त्वष्टर्देवेभिर्जनिभिः सुमद्गणः ॥२४॥

त्वष्टृदेवत्या जगती गृत्समददृष्टा । तृतीयसवने नेष्टृचमसयागे याज्या । देवप-

त्यः प्रार्थ्यन्ते । अमाशब्दो गृहवाचकः अमेव स्वगृहमिव नोऽस्माकं यज्ञगृहाणि हे देवपत्न्यो यूयमागन्तन आगच्छत गमेः शपो लुक् लोटि मध्यमबहुवचने । हि पादपूरणः बर्हिषि दर्भे निसदतन निषीदत उपविशत सद गतौ रणिष्टन रण शब्दे अस्य लुङि रूपम् अडागमाभावः परस्परं वार्त्तां कुरुतेत्यर्थः तप्तनप्तनेति [पा° ७. १. ४५.] सर्वत्र तनबित्यादेशः । कीदृश्यो यूयं सुहवाः शोभनः सुकरो ह्व आह्वानं यासां ताः । एवं देवपत्नीरुक्त्वाथ त्वष्टारमाह हे त्वष्टः त्वमथानन्तरं देवपत्नीष्वागतासु मदस्व मोदस्व तृप्यस्वेत्यर्थः । कीदृशस्त्वम् अन्धसः अन्धः हविर्लक्षणमन्नं जुजुषाणः सेवमानः जुषी प्रीतिसेवनयोः व्यत्ययेन शानचि शपः श्लुः । अन्धसः इति कर्मणि षष्ठी । देवेभिः देवैः जनिभिः देवपत्नीभिश्च सुमद्गणः सुष्ठु माद्यन्ति हृष्यन्ति सुमदः मदेः क्विप् सुमदः संतुष्टा गणा देवाः स्त्रीगणाश्च यस्य स सुमद्गणः । जनयन्ति जनयो नार्यः ॥ २४ ॥

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥ २५ ॥

सोमदेवत्ये द्वे गायत्र्यौ मधुच्छन्दोदृष्टे जपादिषु नियुक्ते । हे सोम धारया कृत्वा पवस्व गच्छ दशापवित्राद्द्रोणकलशं प्रति गच्छ । कीदृश्या धारया स्वादिष्ठया स्वादो विद्यते यस्यां सा स्वादवती अत्यन्तं स्वादवती स्वादिष्ठा तया विन्मतोर्लुगिति [पा° ५. ३. ६५.] इष्ठनि मतुपो लुक् स्वादुतमया । मदिष्ठया मदयति मदयित्री अत्यन्तं मदयित्री मदिष्ठा तया इष्ठनि तुरिष्ठेमेयःस्विति [पा° ६. ४. १५४.] तृचो लोपः । यत इन्द्राय पातवे इन्द्रस्य पातुं त्वं सुतोऽभिषुतोऽसि अस्माभिरतो धारया पवस्व ॥ २५ ॥

रक्षोहा विश्वचर्षणिरभि योनिमयोहते । द्रोणे सधस्थमासदत् ॥ २६ ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां षड्विंशोऽध्यायः ॥ २६ ॥ ॥

सोमः द्रोणे विभक्तिव्यत्ययः द्रोणं द्रोणकलशलक्षणं योनिं स्थानमभि आसदत् आभिमुख्येन सीदति तिष्ठति । कीदृशः सोमः रक्षोहा रक्षांसि हन्तीति रक्षोहा दुष्टनाशकः । विश्वचर्षणिः विश्वं सर्वं जगत् चष्टे पश्यति विश्वचर्षणिः सर्वस्य शुभाशुभद्रष्टा यद्वा चर्षणिरिति मनुष्यनामसु [निघ° .] पठितम्

विश्वे सर्वे चर्षणयो मनुष्या ऋत्विग्यजमानलक्षणा यस्य कण्डनाहरणादिषु स । तथा कीदृशं द्रोणम् अयः सुपां सुलुगिति तृतीयैकवचनलोपः (12.) अयसा लोहेन हतमुत्कीर्णम् वास्या कृत्वा तक्ष्णा सोमभाजनीकृतम् हतमिति विभक्तिव्यत्ययः । तथा सधस्थं सह सार्धं तिष्ठन्ति सोमा यत्र स सहस्थः सुपि स्थ इति [पा॰ ३.२.४.] कप्रत्ययः । आतो लोप इति [पा॰ ६.४.६४.] आलोपः सध मादस्थयोश्छन्दसीति [पा॰ ६.३.९६.] सहस्य सधादेशः । असदत् पुषादीति [पा॰ ६.१.५५.] लुङि च्लेरङ् छन्दसि लुङ्लङ्लिट इति [पा॰ ३.४.६.] लडर्थे लुङ् ॥२६॥

श्रीमन्महीधरकृते वेददीपे मनोहरे । अनुक्तमन्त्रकथनः षड्विंशोऽध्याय ईरितः ॥२६॥ ॥

अथ काण्वशाखायां पाठविशेषः ॥

I. ॥ १ - भूतसाधनी ॥१॥ सकामां२ ३ अध्व॰ - जनेभ्यः ॥२॥ २ ब्रह्मरा॰ - मादो नमतु ॥३॥

II. ॥ ३ ॥४॥ III. ॥ ४ ॥५॥ IV. ॥ ६ ॥६॥

V. ॥ वैश्वानर७ ह्वामहऽऋतस्य ज्यो॰ - योनिर्वैश्वानराय त्वा ॥७॥

VI. ॥ ८ (13.) ॥८॥ VII. ॥ ७ ॥९॥

VIII. ॥ मरुत्वां२ ३ इन्द्र वृष॰ [७.३८.] ॥१०॥

IX. ॥ १० [महां२ ३ इन्द्रो वज्रहस्तः षोलशी श॰ - ॰हीतोऽसीन्द्राय त्वा षोलशिनऽएष ते योनिरिन्द्राय त्वा षोलशिने] ॥११॥

X. ॥ ९ a ॥१२॥ XI. ॥ ११ ॥१३॥

XII. ॥ आ नो गोत्रा दर्द्दहि गोपते गाः समस्मभ्य७ सनयो यन्तु वाजाः । दिवक्षा असि वृषभ सत्यशुष्मोऽस्मभ्य७ सु मघवन्बोधि गोदाः ॥१४॥

द्वादशानुवाकेषु चतुर्दश ॥

इति काण्वीयायां वाजसनेयसंहितायामष्टाविंशोऽध्यायः ॥२८॥ ॥

I. समास्त्वाग्नऽऋतवो वर्धयन्तु संवत्सरा ऋषयो यानि सत्या ।
सं दिव्येन दीदिहि रोचनेन विश्वा आभाहि प्रदिशश्चतस्रः ॥ १ ॥

श्रीगणेशाय नमः (1.) । अयमध्यायः पञ्चचितिकस्याग्नेः सम्बन्धी प्रजापतिदृष्टः । नव ऋचोऽग्निदेवत्यास्त्रिष्टुभोऽग्निना दृष्टाः इष्टकापशौ समिध्यमानसमिद्धत्योरन्तराले आसां विनियोगः । अग्निर्ऋषिः कर्माङ्गभूतमग्निं स्तौति । हे अग्ने एते त्वा त्वां वर्धयन्तु । के । समा मासाः संवत्सरस्य पृथगुक्तेः समाशब्दो मासवाचकः । ऋतवो वसन्ताद्याः संवत्सराः तदधिष्ठातारः ऋषयो मन्त्रद्रष्टारः यानि सत्या सत्यानि सत्यरूपा मन्त्रा इत्यर्थः । त्वमप्येतैर्वर्धमानो दिव्येन दिवि भवेन रोचनेन दीप्त्या संदीदिहि संदीप्यस्व दिवेः श्लौ लुकि रूपम् तुजादीनां दीर्घोऽभ्यासस्येति [पा॰ ६. १. ७.] अभ्यासदीर्घः । किं च विश्वाः सर्वाः प्रदिशो विदिशः चतस्रो दिशश्च आभाहि दीपय अन्तर्भूतो ण्यर्थः भा दीप्तौ ॥ १ ॥

सं चेध्यस्वाग्ने प्र च बोधयैनमुच्च तिष्ठ महते सौभगाय ।
मा च रिषदुपसत्ता तेऽग्ने ब्रह्माणस्ते यशसः सन्तु मान्ये ॥ २ ॥

व्यवहिताश्चेति पाणिन्युक्तेः [१. ४. ८२.] उपसर्गक्रिययोर्व्यवधानम् हे अग्ने समिध्यस्व च दीप्यस्व व्यत्ययेन श्यन् एनं यजमानं प्रबोधय च ज्ञातार्थं कुरु अग्निश्चेतव्य इति । महते सौभगाय ऐश्वर्याय उत्तिष्ठ च ऐश्वर्यं दातुमुद्यमं कुर्वित्यर्थः । किं च हे अग्ने ते तव उपसीदतीत्युपसत्ता तृच् सेवको मा रिषत् च मा नश्यतु च यजमानो ह्यग्निमुपसीदति । ते तव ब्रह्माणः ब्राह्मणा ऋत्विग्यजमानाः यशसः यशस्विनः सन्तु मत्वर्थीयप्रत्ययलोपः । मा अन्ये अन्ये अयज्वानो मा यशसः सन्तु ॥ २ ॥

त्वामग्ने वृणते ब्राह्मणा इमे शिवोऽअग्ने संवरणे भवा नः ।
सपत्नहा नोऽअभिमातिजिच्च स्वे गये जागृह्यप्रयुच्छन् ॥ ३ ॥

हे अग्ने इमे ब्राह्मणाः ऋत्विजः त्वा त्वां वृणते वृङ् सम्भक्तौ यागाय भजन्ति अतो हे अग्ने संवरणे ब्राह्मणैः सहैकस्मिन्वरणे सति नोऽस्माकं शिवः शान्तो

भव । अस्माकं सपत्नहा अभिमातिजिच्च भव अभिमातिरपि शत्रुः तत एवं व्याख्या सपत्नानां हन्ता भव हतावशिष्टानां जेता च भव । किं च स्वे गये निजे गृहे जागृहि सावधानो भव किं कुर्वन् अप्रयुछन् अप्रमाद्यन् ॥ ३ ॥

इहैवाग्ने ऽअधिधारया रयिं मा त्वा निक्रन्पूर्वचितो निकारिणः ।
क्षत्रमग्ने सुयममस्तु तुभ्यमुपसत्ता वर्धतां ते ऽअनिष्टृतः ॥ ४ ॥

हे अग्ने इहैवास्मास्वेव यजमानेषु रयिं धनं त्वमधिधारय अधिकं देहि । किं च पूर्वं चिन्वन्ति पूर्वचितः पूर्वमग्निं चितवन्तोऽत एव निकारिणः नितरां यज्ञकरणशीलाः त्वा त्वां मा निक्रन् मा नीचैः कुर्वन्तु मावजानन्त्वित्यर्थः करोतेः शपि लुप्ते लङि प्रथमबहुवचने रूपम् । किं च हे अग्ने क्षत्रं क्षत्रजातिः तुभ्यं तव सुयममस्तु सुखेन यन्तुं शक्यं सुयमं सुखेन वशीकर्तुं शक्यमस्तु ईषद्दुःसुषिति [पा° ३. ३. १२६.] सुपूर्वाद्यमेः खल् । किं च ते तव उपसत्ता उपसदनकर्ता यष्टा अनिष्टृतः अनुपहिंसितः सन्वर्धताम् धनपुत्रादिभिरेधताम् स्तृञ् हिंसायां निष्ठान्तः ॥ ४ ॥

क्षत्रेणाग्ने स्वायुः सᳬरभस्व मित्रेणाग्ने मित्रधेये यतस्व ।
सजातानां मध्यमस्था ऽएधि राज्ञामग्ने विहव्यो दीदिहीह ॥ ५ ॥

हे अग्ने त्वं क्षत्रेण संरभस्व समारभस्व ण्यन्तो बोध्यः क्षत्रेण समारम्भय यज्ञमिति शेषः क्षत्रियान्यज्ञं कारयेत्यर्थः । कीदृशस्त्वं स्वायुः शोभनमायुः जीवनं यस्य सः यद्वा आयुः उकारान्तो मनुष्यवाची शोभन आयुर्मनुष्यो यजमानो यस्य स स्वायुः । किं च हे अग्ने मित्रेण सूर्येण सह वर्तमानः सन् मित्रधेये यतस्व धातुं धारयितुं योग्यं धेयं मित्रस्य यजमानस्य धेयं कार्यं यागलक्षणं तत्र यत्नं कुरु यजमानेन यज्ञं कारय । किं च सजातानां समानजन्मनां मध्यमेस्थाः मध्यमे तिष्ठतीति क्विप् मध्यमस्थ एधि भव सजाता अपि यज्वानो भवन्त्वित्यर्थः । किं च हे अग्ने इह यज्ञगृहे दीदिहि दीप्यस्व दीव्यतेर्व्यत्ययेन शपः श्लुः श्लाविति [पा° ६. १. १०.] द्विवम् तुजादीनां दीर्घ इति [पा° ६. १. ७.] अभ्यासदीर्घः । कीदृशस्त्वम् राज्ञां

विहव्यः कर्तरि षष्ठी राजभिर्विविधं हूयते आहूयते विहव्यः राजभिर्यज्ञे आह्वातव्यः ॥५॥

अति॒ निहो॒ऽअति॒ स्रिधो॒ऽत्यचि॑त्ति॒मत्यरा॑तिमग्ने ।

विश्वा॒ ह्य॑ग्ने दुरि॒ता सह॒स्वाथा॒स्मभ्य॑ᳪं स॒हवी॑राᳪं र॒यिं दाः॑ ॥६॥

हे अग्ने हि निश्चितं विश्वा विश्वानि सर्वाणि दुरिता दुरितानि पापानि त्वं सहस्व अभिभव निवर्तयेत्यर्थः । किं कृत्वा निहः निहन्ति निहः निपूर्वाद्धन्तेर्ड-प्रत्ययः सुपां सुलुगिति शसः सु-आदेशः निहान् हन्तॄन् अतिक्रम्य । स्रेधतिः कुत्सितकर्मा स्रेधन्ति स्रिधः क्विप् कुत्सिताचारान् अतिक्रम्य । अचित्तिमन्यमनस्कतामतिक्रम्य । न रातिर्दानं यस्य सोऽरातिस्तमदातारमतिक्रम्य । दुष्टान्सर्वानतिक्रम्य पापं नाशयेत्यर्थः । किं च अथानन्तरं हे अग्ने अस्मभ्यं सहवीरां वीरैः पुत्रैः सहितां रयिं दाः देहि लुङ् ॥६॥

अ॒ना॒धृ॒ष्यो जा॒तवे॑दा॒ अनि॑ष्टृतो वि॒राड॑ग्ने क्षत्र॒भृद्दी॑दिही॒ह ।

विश्वा॒ आशाः॑ प्रमु॒ञ्चन्मानु॑षीर्भि॒यः (2.) शि॒वेभि॑र॒द्य परि॑पाहि नो वृ॒धे ॥७॥

हे अग्ने इह कर्मणि वर्तमानस्त्वं विश्वा आशाः दीदिहि सर्वाः दिशः प्रकाशय । कीदृशस्त्वम् अनाधृष्यः पराभवितुमशक्यः । जातवेदाः जातं वेदो धनं ज्ञानं वा यस्मात् । अनिष्टृतः न हिंसितः केनापि स्तृ हिंसायां क्तान्तः । विराट् विविधं राजमानः क्षत्रभृत् क्षत्रं बिभर्ति पुष्णाति । किं च मानुषीः मनुष्यसम्बन्धिनीर्भियः जन्मजरामृतिदैन्यशोकादिकाः प्रमुञ्चन्निवर्तयन्सन् शिवेभिः शिवैः शान्तैस्तैभिरद्य (3.) वृधे वृद्धौ नोऽस्मान्परिपाहि । वर्धनं वृत् तस्मै वृधे सम्पदादित्वाद्भावे क्विप् ॥७॥

बृह॑स्पते सवितर्बो॒धयै॑नᳪं सᳪंशि॑तं चि॒त्सं॑त॒राᳪं सᳪंशि॑शाधि ।

व॒र्धयै॑नं मह॒ते सौभ॑गाय॒ विश्व॑ऽएन॒मनु॑मदन्तु दे॒वाः ॥८॥

हे बृहस्पते हे सवितः एनं यजमानं बोधय कर्माभिज्ञं कुरु । किं च चिदप्यर्थे संशितं चित् संशितं शिक्षितमपि संतरामतितरां संशिशाधि शिक्षय शास्तेः

शपः श्लौ द्विवम् छान्दसमभ्यासस्येत्वम् । किं च महते सौभगाय ऐश्वर्याय एनं वर्धय । विश्वे देवाः एनं यजमानमनुमदन्तु तृप्ता हृष्टा वा भवन्तु । बृहस्पतिसवितृशब्दाभ्यां सामिधेन्यङ्गभूतोऽग्निरेवोच्यते वाक्यद्वयं वा एकेन बृहस्पतिरुक्तोऽन्येन सविता ॥ ८ ॥

अमुत्रभूयादध यद्यमस्य बृहस्पतेऽअभिशस्तेरमुञ्चः ।
प्रत्यौहतामश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः ॥ ९ ॥

हे बृहस्पते त्वममुत्रभूयादमुञ्चः अमुत्र परलोके भवनममुत्रभूयम् भुवो भावऽइति [पा° ३. १. १०७.] क्यप् परलोकगमनान्मरणात् मुञ्च मरणाद्रक्षेत्यर्थः लकारव्यत्ययः । अध अथ यत् यमस्य भयं परलोकभयं (4.) नरकपातादि तस्मादपि मुञ्च । किं च अभिशस्तेः अभिशापादपि लोकापवादादपि मुञ्च । देवानां भिषजा भिषजौ अश्विना अश्विनौ अस्मात् यजमानान्मृत्युं प्रत्यौहतां निवर्तयतां कैः शचीभिः कर्मभिः कृत्वा । अत्र बृहस्पतिरग्निरेव सामिधेनीप्रकरणस्याग्नेयत्वात् ॥ ९ ॥

उद्वयं तमस° ॥ १० ॥

व्याख्याता [२०. २१.] ॥ १० ॥

II. ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचीᳪष्यग्नेः ।
द्युमत्तमा सुप्रतीकस्य सूनोः ॥ ११ ॥

द्वादशाप्रीदेवत्या उष्णिहो विषमपादा आग्नेय्योऽग्निना दृष्टाः । अग्निः प्रजापतित्वेन स्तूयते तेन प्राजापत्या अपि । ता आग्नेय्यः प्राजापत्या यदग्निरपश्यत्तेनाग्नेय्यो यत्प्रजापतिमप्रीणात्तेन प्राजापत्या इति श्रुतेः । अस्याग्नेः समिधः ऊर्ध्वाः देवगामिन्यो भवन्ति शोचींषि तेजांस्यपि ऊर्ध्वा ऊर्ध्वानि भवन्ति । कीदृशानि शोचींषि शुक्रा शुक्राणि शुद्धाशुद्धानि । द्युमत्तमा द्यौः दीप्तिः प्रकाशो येषां तानि द्युमन्ति अत्यन्तं द्युमन्ति द्युमत्तमानि विश्वप्रकाशकानि । कीदृशस्याग्नेः सुप्रतीकस्य सुष्ठु प्रतीकं मुखं यस्य । तथा सूनोः यजमानपुत्रस्य स यदेनं जनयति तेनास्यैष सूनुरिति श्रुतेः । य ईदृशस्तं स्तुम इति शेषः ॥ ११ ॥

GGGGG

तनूनपादसुरो विश्ववेदा देवो देवेषु देवः । पथोऽअनक्तु मध्वा घृतेन ॥१२॥

देवोऽग्निः मध्वा मधुना मधुरेण घृतेन पथो यज्ञमार्गाननक्तु । मध्वेति नुमभावः अनित्यमागमशासनमित्युक्तेः । पथोऽनक्तु इत्यत्र प्रकृत्यान्तःपादमव्यपरऽइति [पा॰ ६.१.११५.] संध्यभावः । यज्ञे बहु घृतमस्तु येन मार्गा घृताभ्यक्ताः स्युरितिभावः । कीदृशो देवः तनूनपात् तनूनामपां नपात् पौत्रः अद्भ्यो वृक्षा जायन्ते तेभ्योऽग्निरिति अपां पौत्रः । असुरः असवोऽस्य सन्ति प्राणवान् रो मत्वर्थः । विश्ववेदाः सर्वधनः । देवेषु अपि देवः दीप्तिमान् श्रेष्ठः ॥१२॥

मध्वा यज्ञं नक्षसे प्रीणानो नराशꣳसोऽअग्ने ।

सुकृद्देवः सविता विश्ववारः ॥१३॥

हे अग्ने त्वं मध्वा स्वादुना घृतेन यज्ञं नक्षसे व्याप्नोषि नक्षतिर्व्याप्तिकर्मा । कीदृशस्त्वम् प्रीणानः प्रीणीते प्रीणानः देवान् तर्पयन् । नराशंसः नरैर्ऋत्विग्भिराशंस्यते स्तूयते नराशंसः । सुकृत् शोभनकारी । देवः दीप्तिमान् । सविता विश्वस्योत्पादकः । विश्वेन व्रियते सेव्यते विश्ववारः विश्वं वृणोति अङ्गीकरोतीति वा कर्मण्यण् सर्वस्य वरणीयः सर्वाङ्गीकर्ता वा ॥१३॥

अच्छायमेति शवसा घृतेनेडानो वह्निर्नमसा ।

अग्निꣳ स्रुचोऽअध्वरेषु प्रयत्सु ॥१४॥

अयमध्वर्युः अध्वरेषु प्रयत्सु वर्तमानेषु सत्सु अग्निमच्छ एति अभ्येति अच्छाभिराप्तुमिति शाकपूणिः [निरु॰ ५.२८.] । कीदृशः शवसा ज्ञानबलेन ईडानः ईड स्तुतौ शानच् तथा वह्निः वहति यज्ञभारमिति वह्निः यज्ञनिर्वाहकः । किं कृत्वा घृतेन नमसा अन्नेन हविर्लक्षणेनोपलक्षिताः स्रुचो जुह्वाद्या गृहीत्वेति शेषः ॥१४॥

स यक्षदस्य महिमानमग्नेः स ईं मन्द्रा सुप्रयसः ।

वसुश्चेतिष्ठो वसुधातमश्च ॥१५॥

सोऽध्वर्युरस्याग्नेः महिमानं यक्षत् यजतु सिब्बहुलं लेटि [पा॰ ३.१.३४.] लेटोऽडाटौ इतश्च लोपः परस्मैपदेष्विति [पा॰ ३.४.९४.९७.] सूत्रैर्यक्षदिति रूपम् । सः

ईम् स च मन्द्रा मन्द्राणि मदजनकानि हवींषि च यजतु ददातु । कीदृशस्याग्नेः सुप्रयसः प्रयस् इत्यन्ननाम [निघ॰ २.७] शोभनानि प्रयांसि यस्य सुप्रयास्तस्य । कीदृशस्याग्नेर्महिमानं यजतु यो वसुः वासयिता । चेतिष्ठः अतिचेतयिता वसुधातमः वसूनां धनानां दातृतमः वहिबल्लात्तमप् ॥ १५॥

द्वारो देवीरन्वस्य विश्वे व्रता ददन्तेऽअग्नेः ।
उरुव्यचसो धाम्ना पत्यमानाः ॥ १६ ॥

द्वारो देव्योऽस्याग्नेर्व्रता व्रतानि कर्माणि ददन्ते धारयन्ति दद दाने धृतौ च । अनु पश्चात् विश्वे सर्वे देवाः अग्निव्रतानि ददन्ते । कीदृश्यो द्वारः उरुव्यचसः उरु विशालं व्यचोऽवकाशो यासां ताः विशालान्तराः । तथा धाम्ना स्थानेन पत्यमानाः पत ऐश्वर्ये दिवादिरात्मनेपदी पत्यन्ते ईशते ताः पत्यमानाः स्थानैरैश्वर्यं कुर्वाणाः ऋत्विजां स्थानानि ददाना इत्यर्थः ताः स्तुमः ॥ १६ ॥

तेऽअस्य योषणे दिव्ये न योनाऽउषासानक्ता । इमं यज्ञमवतामध्वरं नः ॥१७॥

उषाश्च नक्ता रात्रिश्च उषासानक्ता उषस उषासादेशो द्वन्द्वे ते प्रसिद्धे उषासानक्ता अहोरात्रिदेव्यौ नोऽस्माकमिमं यज्ञमवतां रक्षताम् । कीदृश्यौ ते अस्याग्नेः योषणे भार्ये । तथा दिव्ये दिवि भवे स्वर्गस्थे । कीदृशस्याग्नेः योनौ गार्हपत्यस्थाने स्थितस्येति शेषः नकारः पादपूरणः । कीदृशं यज्ञम् अध्वरम् ध्वृ कौटिल्ये न ध्वरतीत्यध्वरस्तम् अकुटिलम् शास्त्रोक्तमित्यर्थः ॥ १७ ॥

दैव्या होताराऽऊर्ध्वमध्वरं नोऽग्नेर्जिह्वामभिगृणीतम् ।
कृणुतं नः स्विष्टिम् ॥ १८ ॥

अयं चाग्निरसौ च मध्यमो वायुः हे दैव्या होतारौ अग्निवायू युवां नोऽस्माकं स्विष्टिं शोभनं यजनं कृणुतं कुरुतम् किं च नोऽस्माकमध्वरं यज्ञमूर्ध्वं कृणुतं देवमार्गगामिनं कुरुतम् । अग्नेर्जिह्वां ज्वालामभिगृणीतं वर्णयतम् समीची वह्निज्वालेति स्तुतमित्यर्थः ॥ १८ ॥

तिस्रो देवीर्बर्हिरेदꣳ सदन्त्विडा सरस्वती भारती । मही गृणाना ॥ १९ ॥

तिस्रो देव्यः इदं बर्हिरासदन्तु आसीदन्तु छान्दसः सीदादेशाभावः व्यवहिता-श्चेति [पा० १.४.८२.] आङा सह क्रियापदव्यवधानम् । कास्ता अत आह इडा पृथिवीस्थाना सरस्वती मध्यस्थाना भारती द्युस्थाना । मही महती गृणाना स्तु-वन्तीति विशेषणद्वयं तिसृणाम् ॥ १९ ॥

तन्न॑स्तु॒रीप॒मद्भु॑तं पुरु॒क्षु त्वष्टा॑ सु॒वीर्य॑म् । रा॒यस्पोषं॒ विष्य॑तु॒ नाभि॑म॒स्मे ॥ २० ॥

त्वष्टा देवः तं प्रसिद्धं रायो धनस्य पोषं पुष्टिमस्मे अस्माकं नाभिं प्रति विष्यतु विमुञ्चतु नाभौ मुक्तमुत्सङ्गे पततीति भावः षोऽन्तकर्मणि ओतः श्यनीति [पा० ७.३.७१.] ओकारलोपः स्यतिरुपसृष्टो विमोचने इति यास्कः । कीदृशं रायः पो-षम् नोऽस्माकं तुरीपम् तुरा वेगेन आप्नोति तुरीपं शीघ्रप्रापकम् । अद्भुतं महा-न्तम् । पुरुक्षु पुरुषु बहुषु क्षियति निवसति पुरुक्षु सुपां सुलुगिति [पा० ७.१.३९.] अमो लुक् क्षियतेरौणादिको डुप्रत्ययः । सुवीर्यं साधु वीर्यं सामर्थ्यं येन तम् । ईदृशं धनं देहीत्यर्थः ॥ २० ॥

वन॑स्पते॒ऽव॑सृजा॒ ररा॑ण॒स्त्मना॑ दे॒वेषु॑ । अ॒ग्निर्ह॒व्यꣳ श॑मि॒ता सू॑दयाति ॥ २१ ॥

अग्निः शमिता हव्यं सूदयाति सूदयति संस्करोति यतः अतो हे वनस्पते त-त्संस्कृतं हव्यमवसृज स्रुङ्मुखतोऽवाचीनां क्षिप । कीदृशस्त्वम् त्मना आत्मना देवेषु रराणः हविर्ददानः रा दाने कानच् । मन्त्रेष्वाङ्यादेरात्मन इति [पा० ६.४.१४१.] आलोपः ॥ २१ ॥

अग्ने॒ स्वाहा॑ कृणुहि जातवेद॒ इन्द्रा॑य ह॒व्यम् ।
विश्वे॑ दे॒वा ह॒विरि॒दं जु॑षन्ताम् ॥ २२ ॥

हे अग्ने हे जातवेदः जातप्रज्ञान हव्यमिन्द्राय स्वाहा कृणुहि स्वाहाकारेण प्रयच्छ । किं च विश्वे देवा इदं हविर्जुषन्तां सेवन्ताम् ॥ २२ ॥

III. पीवो॑ऽअन्ना र॒यि॒वृधः॑ सु॒मेधाः॑ श्वे॒तः सि॑षक्ति नि॒युता॑मभि॒श्रीः ।
ते वा॒यवे॒ सम॑नसो॒ वित॑स्थु॒र्विश्वेन्नरः॑ स्वप॒त्यानि॑ चक्रुः ॥ २३ ॥

अथैतं वायवे नियुवते शुक्लं तूपरमालभते इति ह्युतस्य (5.) पशोः पीवो-

ऽश्वान्ना रयिवृध इत्याद्याः षट् याज्यानुवाक्याः । द्वे वायुदेवत्ये त्रिष्टुभौ वसिष्ठदृष्टे । शुक्लो हि वायुरिति श्रुतेः श्वेतो वायुः यान्नियुतोऽश्वान् सिषक्ति सेवते ते नियुतः समनसः सममनस्काः सन्तो वायवेऽर्थाय वितस्थुर्विशेषेण तिष्ठन्ति । कीदृशान्नियुतः पीवोऽश्वन्ना पीवः पुष्टमन्नं येषां तान् नकारलोपः प्रकृत्यान्तःपादमिति [पा° ६.१.११५.] पीवोऽश्वन्नानित्यत्र संध्यभावः । तथा रयिवृधः रयिं धनं वर्धयन्ति तान् । कीदृशः श्वेतः सुमेधा शोभना मेधा बुद्धिर्यस्य । नियुतामभिश्रीः अश्वानामाश्रयणीयः । एवमश्वयोगे वायुना कृते नरो मनुष्या ऋत्विजः विश्वा इत् विश्वानि सर्वाण्येव स्वपत्यानि शोभनापत्यप्रापकानि चक्रुः कर्माणीति शेषः ॥२३॥

राये नु यं जज्ञतू रोदसीमे राये देवी धिषणा धाति देवम् ।
अध वायुं नियुतः सश्चत स्वा उत श्वेतं वसुधितिं निरेके ॥ २४ ॥

इमे रोदसी द्यावापृथिव्यौ यं वायुं जज्ञतुः उत्पादयामासतुः नु क्षिप्रम् किमर्थम् राये धनायोदकन्नपाय । धियं सनोति ददाति धिषणा वाक् देवी देवं वायुं धाति धारयति शपो लुक् राये धनाय । रोदस्योः सद्भावेऽपि वायुं विना जगद्धारणाशक्तेर्वायुरुत्पादितः । धिषणेति ह्रस्वमार्षम् । अध अथ उत्पत्त्यनन्तरमेव उत निश्चितं स्वा नियुतो निजाश्वा वायुं सश्चत सश्चन्ते सेवन्ते षचू सेवने पुरुषव्यत्ययः । क्व निरेके निर्गतः रेकः रेचनं रेकः शून्यता यस्मात् तादृशे बहुजनाकीर्णे स्थाने । कीदृशं वायुं श्वेतं श्वेतवर्णम् । तथा वसुधितिं वसुनो धनस्य धितिर्धारणं यत्र तम् धनस्य धारयितारम् ॥ २४ ॥

आपो ह यद्बृहतीर्विश्वमायन्गर्भं दधाना जनयन्तीरग्निम् ।
ततो देवानाᳪं समवर्ततासुरेकः कस्मै देवाय हविषा विधेम ॥ २५ ॥

द्वे प्रजापतिदेवत्ये त्रिष्टुभौ हिरण्यदृष्टे प्रथमा द्व्यधिका । आपो ह वाऽइदमग्रे सलिलमेवासेति [११.१.६.१.] ब्राह्मणमेतयोः कण्डिकयोर्निदानभूतं बोध्यम् । ह प्रसिद्धौ यत् यदा पुरा आपो जलानि विश्वमायन् प्रापुः । कीदृश्य आपः बृहतीः बृहत्यो महत्यः बहुलाः । तथा गर्भं हिरण्यगर्भलक्षणं दधानाः

धारयन्त्यः अत एवाग्निं जनयन्तीः अग्निरूपं हिरण्यगर्भं जनयन्त्यः उत्पादयिष्यन्त्यः । ततो गर्भात् संवत्सरोषितात् देवानामसुः प्राणरूप आत्मा लिङ्गशरीररूपो हिरण्यगर्भः समवर्तत उदपद्यत । कस्मै प्रजापतिरूपाय देवाय हिरण्यगर्भाय हविषा विधेम हविर्दद्मः विभक्तिव्यत्ययः विधतिर्दानार्थः ॥२५॥

यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम् ।
यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम ॥२६॥

चिदप्यर्थः यो देवोऽन्तर्यामी महिम्ना (6.) आपः विभक्तिव्यत्ययः अपः पूर्वोक्ताः पर्यपश्यत् सर्वतो ददर्श । कीदृशीः दक्षं कुशलं प्रजापतिं दधानाः । यज्ञं जनयन्तीः यज्ञशब्देन यज्ञकर्त्री प्रजा उच्यते सृष्टिकर्त्रीरित्यर्थः । यश्च देवेष्वधि अधिकः एको मुख्यो देव आसीत् । तस्मै देवाय हविर्दद्मः ॥२६॥

प्र याभिर्यासि दाश्वाꣳसमच्छा नियुद्भिर्वायविष्टये दुरोणे ।
नि नो रयिꣳ सुभोजसं युवस्व नि वीरं गव्यमश्व्यं च राधः ॥२७॥

द्वे वायुदेवत्ये त्रिष्टुभौ वसिष्ठदृष्टे । हे वायो त्वं याभिर्नियुद्भिरश्वाभिः कृत्वा इष्टये यागाय दुरोणे यज्ञगृहे वर्तमानं दाश्वांसं हविर्दत्तवन्तं यजमानमच्छ अभिमुखं प्रयासि गच्छसि निपातस्य चेति [पा॰ ६. ३. १३६.] संहितायामच्छा इति दीर्घः व्यवहिताश्चेति [पा॰ १. ४. ८२.] प्रेण यासीत्यस्य व्यवधानं ताभिर्नियुद्भिरागत्य नोऽस्मभ्यं रयिं धनं नियुवस्व देहि नियौतिर्दानार्थः व्यत्ययेन शप्रत्ययः । कीदृशं रयिं सुभोजसं सुष्ठु भुज्यतऽइति सुभोजास्तम् भुजेरसुन्प्रत्ययः । किं च वीरं पुत्रं गव्यं गोसम्बन्धि अश्व्यमश्वसम्बन्धि गोऽश्वरूपं राधः धनं च नियुवस्व ॥२७॥

आ नो नियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम् ।
वायोऽअस्मिन्त्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः ॥२८॥

हे वायो नियुद्भिरश्वाभिः नोऽस्माकमध्वरं यज्ञमुपयाहि । कीदृशीभिः शतिनीभिः सहस्रिणीभिः शतं सहस्रं च संख्या यासां ताभिः वयं बहुवाहनतर्पणे शक्ता इति भावः । एत्य चास्मिन् सवने तृतीये मादयस्व तृप्यस्व । अथ पादेन

जोषाः समानो जोषः प्रीतिर्येषां ते एकमतय इत्यर्थः । इन्द्रज्येष्ठाः इन्द्रो ज्येष्ठो येषां ते । ईदृशा देवा नोऽवन्तु ॥५०॥

अर्वाञ्चोऽअद्या भवता यजत्रा आ वो हार्दि भयमानो व्ययेयम् ।
त्राध्वं नो देवा निजुरो वृकस्य त्राध्वं कर्तादवपदो यजत्राः ॥५१॥

कूर्मदृष्टादित्यस्य प्रथमा पुरोरुक् । यजन्तं त्रायन्ते यजत्राः यष्टव्या वा हे यजत्राः देवाः अद्य यूयमर्वाञ्चः अस्मदभिमुखाः भवत दीर्घो संहितायाम् । यतो भयमानः बिभ्यत् अहं वो युष्माकं हार्दि हृदि भवं मनः आव्ययेयम् आगमयेयमभिमुखं सम्पादयेयमित्यर्थः । व्यय गतौ णिजन्तः । भिञो व्यत्ययेन शपि भयमानः । किं च हे यजत्राः देवाः नोऽस्मान् वृकस्य वृकात् त्राध्वम् पालयत कर्तात् कूपाच्च त्राध्वम् । कीदृशाद्वृकात् निजुरः जूरी बधे नितरां जूर्यते हिनस्ति निजूः क्विप् तस्मान्निजुरः हिंसकात् । कीदृशात्कर्तात् अवपदः अवाचीनाः पादन्यासा यत्र सः अवपात् तस्मादवपदः सोपानैर्यत्रोत्तरीतुं शक्यतऽइत्यर्थः ॥५१॥

विश्वेऽअद्य मरुतो वि° ॥५२॥

लुशदृष्टादित्यपुनर्ग्रहणे । व्याख्याता [१८.३१.] ॥५२॥

विश्वे देवाः शृणुतेमꣳ हवं मे येऽअन्तरिक्षे यऽउप द्यवि ष्ठ ।
येऽअग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वम् ॥५३॥

सुहोत्रदृष्टादित्यग्रहस्य दध्ना श्रयणे (28.) विनियुक्ता । हे विश्वे देवाः ये यूयमन्तरिक्षे स्थ भवथ ये च द्यवि उप स्वर्गसमीपे स्थ ये चाग्निजिह्वाः वह्निमुखाः उत वा अपि च यजत्राः यजनीयाः ते सर्वे यूयमिमं मे मत्कृतं हवमाह्वानं शृणुत श्रुत्वा चास्मिन्बर्हिषि आसद्योपविश्य मादयध्वं तृप्यध्वम् ॥५३॥

देवेभ्यो हि प्रथमं यज्ञियेभ्योऽमृतत्वꣳ सुवसि भागमुत्तमम् ।
आदिद्दामानꣳ सवितर्व्यूर्णुषेऽनूचीना जीविता मानुषेभ्यः ॥५४॥

वामदेवदृष्टा जगती सावित्रग्रहस्य पुरोरुक् । हे सवितः हि निश्चितं प्रथममुदयसमये यज्ञियेभ्यः यज्ञार्हेभ्यो देवेभ्यः त्वमुत्तमं भागमग्निहोमरूपं सुवसि प्रेरय-

TTTT

सि षू प्रेरणे तुदादिः अभ्यनुज्ञानासीत्यर्थः । कीदृशं भागममृतत्वममृतप्रदमित्यर्थः कार्यकारणयोरभेदेन निर्देशः । आत् इत् अनन्तरमेव उदयानन्तरम् दामानम् ददाति प्रकाशमिति दामा रश्मिसमूहः तं व्यूर्णुषि विवृणोषि विस्तारयसि । ततो मानुषेभ्यः [जीविता] जीवितानि जीवनहेतूनि कर्माणि व्यूर्णुषि सूर्योदयानन्तरमेव प्राणिनां कर्मसु प्रवृत्तेः कीदृशानि जीवितानि [अनूचीना] अनूचीनानि अन्वञ्चन्ति तान्यनूचीनानि रश्मिसमूहानुगतानि तमसि तदभावात् । लौकिकवैदिकव्यवहारप्रवर्तयिता त्वमेवेत्यर्थः ॥ ॥ इति वैश्वदेवस्तुचतुर्थमहः । समाप्तोऽयं सर्वमेधः ॥५४॥

V. प्र वायुमच्छा बृहती मनीषा बृहद्रयिं विश्ववारꣳ रथप्राम् ।
द्युतद्यामा नियुतः पत्यमानः कविः कविमियक्षसि प्रयज्यो ॥५५॥

अथ पञ्चदशपञ्चदशत्रयोदशर्चास्त्रयोऽनुवाकाः पुरोरुचोऽनारभ्याधीताः श्रौतकर्मण्यविनियुक्ताः ब्रह्मयज्ञार्हा आदित्ययाज्ञवल्क्यदृष्टाः पितृमेधपर्यन्तम् ॥ ऋजिश्वदृष्टा त्रिष्टुप् वायुदेवत्या । प्रकर्षेण यजति प्रयज्युः हे प्रयज्यो अध्वर्यो बृहती मनीषा महत्या बुद्ध्या कृत्वा अच्छ आभिमुख्येन त्वं वायुं प्र इयक्षसि प्रकर्षेण यष्टुमिच्छसि । कीदृशः त्वम् कविः ज्ञानी । कीदृशं वायुं बृहद्रयिम् बृहन्रयिर्यस्य तम् महाधनम् । विश्ववारम् विश्वेन व्रियते तम् सर्वस्य वरणीयम् विश्वं वृणोतीति वा सर्वव्यापकम् । रथप्राम् रथं प्राति पूरयति रथप्राः तम् यजमानाय दातुं धनैः रथं पूरयति । द्युतद्यामा व्यत्ययः द्युतद्यामानम् द्युतत् दीप्यमानं याम यमनं नियमनं यस्य तम् । नियुतः पत्यमानः उभयत्रविभक्तिव्यत्ययः नियुद्भिरश्वैः पत्यमानं गच्छन्तम् । कविं क्रान्तदर्शनम् । ईदृशं वायुं यजेत्यर्थः ॥५५॥

इन्द्रवायूऽइमे सु° ॥५६॥

व्याख्याता [७.८.] ॥५६॥

मित्रꣳ हुवे पूतदक्षं वरुणं च रिशादसम् । धियं घृताचीꣳ साधन्ता ॥५७॥

द्वे मधुच्छन्दोदृष्टे गायत्र्यौ आद्या लिङ्गोक्तदेवत्या । मित्रं वरुणं चाहं हुवे आ-

ह्वयामि । कीदृशं पूतदक्षम् पूतं पवित्रं सदाचारं दक्षयति धनपुत्रादिभिर्वर्धयति पूतदक्षस्तम् दक्ष कम्पृद्ध्योरित्यस्माण्णिजन्तात्कर्मण्यण् । रिशादसम् रिशन्ति हिंसन्ति रिशा दुष्टाः तान्समन्ताद्दसति नाशयति रिशादसः तम् रिश हिंसायाम् दस उपक्षये । द्वयोर्विशेषणे । कीदृशावुभौ धियं कर्म साधन्ता साधयन्तौ । कीदृशीं धियं घृताचीम् घृतमच्यते हूयते यत्र तम् ॥५७॥

दस्रा युवाकवः सुता नासत्या वृक्तबर्हिषः । आयातꣳ रुद्रवर्तनी ॥

तं प्रत्नथा । अयं वेनः ॥५८॥

आश्विनी द्वयोरश्विनोरेकस्य दस्र इति नामापरस्य नासत्य इति । हे दस्रौ दर्शनीयौ हे [नासत्या] नासत्यौ न असत्यौ सत्यवादिनावित्यर्थः । युवामायातमागच्छतम् यतः सुताः अभिषुताः सोमा इति शेषः । कीदृशाः सोमाः युवाकवः युवां कामयन्ते ते युवाकवः मां पिबतमितीच्छन्तः यद्वा युवन्ति अग्नौ मिश्रीभवन्ति युवाकवः कटिकुषिभ्यां काकुरिति [उणा° ३.७६.] बहुलग्रहणात्काकुप्रत्ययः । वृक्तबर्हिषः वृक्तं बर्हिर्यत्र ते । कीदृशौ युवां रुद्रवर्तनी रुद्रस्येव वर्तनिः पन्था ययोस्तौ रुद्रवद्गमनशीलौ ॥ तं प्रत्नथा [७.१२.] अयं वेनः [७.१६.] एते द्वे प्रतीकोक्ते ॥५८॥

विदद्यदी सरमा रुग्णमद्रेर्महि पाथः पूर्व्यꣳ सध्र्यक्कः ।

अग्रं नयत्सुपद्यक्षराणामच्छा रवं प्रथमा जानती गात् ॥५९॥

कुशिकदृष्टा त्रिष्टुप् इन्द्रदेवत्या । सह रमन्ते देवा विप्रा वा यस्यां सा सरमा वाक् । प्रथमा आद्या सरमा त्रयीलक्षणा वाक् अच्छ यज्ञाभिमुखं गात् आगच्छति यज्ञं प्रतिपादयतीत्यर्थः । कीदृशी सरमा सुपदी शोभनानि पदानि सुप्तिङन्तानि यस्यां सा । अक्षराणामकारादीनां रवं शब्दं जानती ज्ञापयन्ती अन्तर्भूतणिजर्थः । तां सरमां यदि चेत् विदत् जानीयात् अध्वर्युः तर्हि पाथः सोमलक्षणमन्नं कः कुर्यात् वेदानभिज्ञस्य सोमकण्डनानधिकारात् । कीदृशं पाथः अद्रेः रुग्णम् विभक्तिव्यत्ययः अद्रिणा सोमाभिषवग्राव्णा रुग्णमभिषुतम् । महि महत् । पूर्व्यं पूर्वगृहीतमुपांश्वन्तर्यामैन्द्रवायवादिपात्रेषु । सध्र्यक् सहाञ्चति सहस्य सध्रिः सहैव हव-

नाय गच्छतु । अग्रं नयतु अग्रं मुख्यत्वं यजमानं प्रापयतु यज्ञेन यजमानो मुख्यो भवति ॥ एवमधियज्ञं मन्त्रो व्याख्यातः । बह्वृचानां तु संवादसूक्तमिदम् । तत्र पणिभिरसुरैर्देवगोधनेऽपहृते इन्द्रेण देवशुनी तद्वीत्यै (29.) प्रेरिता तदभिप्रायेण व्याख्यायते । सरमा देवशुनी इन्द्रेण गवन्वेषणाय प्रहिता सती यदि यदा अद्रेः गिरेः रुग्णं भग्नम् द्वारम् विदत् अविदत् अलभत् तदा इन्द्रः पाथः हविरन्नं कः अकार्षीत् तस्यै दत्तवान् । ततः सुपदी शोभनपादयुक्ता सा सरमा अक्षराणां क्षरणेन नाशेन रहितानामनुपद्रुतानां गवाम् अग्रं प्राप्तं नयत् अनयत् प्राप्नोत् (30.) । प्रथमा प्रथमम् रवं गवां हम्भारवं जानती सती अच्छ गवामभिमुखं गात् अगात् जगाम । कीदृशं पाथः महि महत् । पूर्व्यं पूर्वं प्रेषणाकाले अन्नादिनीं ते प्रजां करिष्यामीति प्रतिज्ञातम् । सध्र्यक् सध्रीचीनमितरैरपि सह भोज्यम् ॥ विदत् विद्लृ लाभे पुषादीत्यादिना [पा° ३.१.५५.] च्लेरङादेशः अडभाव आर्षः । सरमा सृ गतौ औणादिकोऽमप्रत्ययः सरमा सरणिरिति (32.) यास्कः । रुग्णम् रुजो भङ्गे निष्ठायामोदितश्चेति [पा° ८.२.४५.] नत्वम् । पाथः पातीति पा रक्षणे अन्नम् असुन्प्रत्ययस्य (31.) थुडागमः । कः करोतेर्लुङि मन्त्रे घसह्वरेत्यादिना [पा° २.४.८०.] च्लेर्लोपे रूपम् । सुपदी पादोऽन्यतरस्यामिति [पा° ४.१.८.] ङीप् । गात् इणो गा लुङि ॥५९॥

न॒हि स्पश॒मवि॑दन्न॒न्यम॒स्माद्वै॑श्वान॒रात्पु॑रए॒तार॑म॒ग्नेः ।
एमे॑नमवृधन्न॒मृता॒ अम॑र्त्यं वैश्वान॒रं क्षैत्र॑जित्याय दे॒वाः ॥ ६० ॥

विश्वामित्रदृष्टा त्रिष्टुब्वैश्वानरी । देवाः वैश्वानरात् विश्वेभ्यो हितात् अग्नेः अन्यं स्पशं दूतं पुरएतारं सर्वकार्येषु पुरःसरं च नहि अविदन् नालभन्त नहिशब्दो निषेधवाची । स्पशः प्रणिधिरुच्यते । पुर एति गच्छति पुरएता तम् । आ ईम् निपातौ अथार्थौ अथामृता देवाः एनं वैश्वानरमवृधन् अवर्धयन् कीदृशमग्निम् अमर्त्यममरणधर्माणम् किमर्थमवृधन् क्षैत्रजित्याय क्षेत्रमेव क्षैत्रं तस्य जित्यं जयस्तस्मै यजमानस्य क्षेत्राप्त्यै ॥ ६० ॥

उ॒ग्रा वि॑घ॒निना॒ मृध॑ इन्द्रा॒ग्नी ह॑वामहे । ता नो॑ मृडात ई॒दृशे॑ ॥ ६१ ॥

भरद्वाजदृष्टा ऐन्द्राग्नी गायत्री । वयमिन्द्राग्नी हवामहे आह्वयामः कीदृशाविन्द्राग्नी उग्रौ उद्गूर्णबलौ । मृधो हिंसकान्विघनिनौ विशेषेण हन्तो नाशयतस्तौ विघनिनौ हन्तेर्धः । ता तौ आहूतौ इन्द्राग्नी नोऽस्मान् ईदृशे भयानके संग्रामे कर्मणि वा मृडातः मृडयतः सुखयतः ॥ ६१ ॥

उपा॑स्मै गायता नरः॒ पव॑माना॒येन्द॑वे । अ॒भि दे॒वाँ२॥ऽइय॑क्षते ॥ ६२ ॥

देवलदृष्टा सोमदेवत्या गायत्री । हे नरो यज्ञनेतारः ऋत्विजः अस्मै इन्दवे सोमाय उपगायत उद्गातृशास्त्रमनुसृत्योपशब्दयत स्तोत्राणि कुरुतेत्यर्थः । कीदृशायेन्दवे पवमानाय पव गतौ पवते दशापवित्राद्द्रोणकलशं गच्छति पवमानस्तस्मै । देवान् यष्टव्यानभि संमुखमियक्षते यष्टुमिच्छते यजेः सनि छान्दसोऽभ्यासयकारलोपः ॥ ६२ ॥

ये त्वा॑हि॒हत्ये॑ मघव॒न्नव॑र्धन्ये शा॑म्ब॒रे ह॑रिवो॒ ये गवि॑ष्टौ ।
ये त्वा॑ नू॒नम॑नु॒मद॑न्ति॒ विप्राः॒ पिबे॑न्द्र॒ सोम॑७ सग॑णो म॒रुद्भिः॑ ॥ ६३ ॥

विश्वामित्रदृष्टाद्या द्वे त्रिष्टुभौ इन्द्रदेवत्यास्तिस्रः । हे मघवन्धनवन् ये मरुतो गणदेवाः अहिहत्ये वृत्रहननरूपे कर्मणि त्वा त्वामवर्धन् जहि वीरयस्वेत्यादिवचोभिस्ते वृद्धिमकुर्वन् । हे हरिवः हरिनामकाश्वयुक्त शाम्बरे शम्बरसम्बन्धिनि युद्धे ये त्वामवर्धन् । ये च मरुतो गविष्टौ गवां पण्यसुरहृतानामिष्टौ प्रत्याहरणेच्छायां ये त्वामवर्धयन् । ये च विप्राः मेधाविनो मरुतो नूनं निश्चितं त्वामनु मदन्ति उत्कर्षयन्ति तर्पयन्ति वा (33.) । हे इन्द्र तैर्मरुद्भिः सगणः गणसहितः सन् सोमं पिब मरुत्वतीयादियहं पिबातृतेः ॥ अहिहत्ये हन्तेर्भावे हनस्त चेति [पा° ३. १. १०८.] क्यप् कृदुत्तरपदसमासः । अवर्धन् णेः सार्वधातुकत्वेऽपि छन्दस्युभयथेति [पा° ३. ४. ११७.] आर्धधातुकत्वे णिलोपः यद्वृत्तयोगान्निघाताभावः [पा° ८. १. ६६.] । गवामिष्टिर्यस्मिन्रणे इति बहुव्रीहौ प्रकृत्या पूर्वपदमिति [पा° ६. २. १.] पूर्वपदस्वरः । अनुमदन्ति केर्लसार्वधातुकानुदात्तत्वे धातुस्वरः तिङि चोदात्तवतीति [पा° ८. १. ७१.] गतेर्निघातः ॥ ६३ ॥

ज॒निष्ठा॑ उ॒ग्रः सह॑से तु॒राय॑ म॒न्द्र ओजि॑ष्ठो बहु॒लाभि॑मानः ।

अवर्धन्निन्द्रं मरुतश्चिदत्र माता यद्वीरं दधनद्धनिष्ठा ॥ ६४॥

गौरीवितिदृष्टा । हे इन्द्र त्वं सहसे बलाय जनिष्ठा अजनिष्ठाः जातोऽसि लुङ् अडभावः । कीदृशाय सहसे तुराय त्वरमाणाय वेगवते । कीदृशः त्वम् उग्रः उत्कृष्टः । मन्द्रः स्तुत्यः ओजिष्ठः अत्यन्तमोजस्वी ओजिष्ठः विन्मतोर्लुगिति [पा० ५.३.६५.] विनो लुक् । बहुलाभिमानः सर्वं जगन्मद्विभूतिरिति भूयिष्ठाभिमनः (34.) । अत्र वृत्रवधे ईदृशमिन्द्र मरुतश्चित् मरुतोऽपि अवर्धन् स्तुतिसहायाभ्यामिति शेषः । इदं चेन्द्रसौभाग्यं गर्भकालीनमित्याह यत् यस्मात् मातादितिः धनिष्ठान्या वीरमिन्द्रं दधनत् गर्भे धारितवती नकार उपजनः ॥ ६४॥

आ तू न इन्द्र वृत्रहन्नस्माकमर्धमागहि । महान्महीभिरूतिभिः ॥ ६५॥

वामदेवदृष्टा गायत्री । तु इति निपातः क्षिप्रवचनः ऋचि तुनुघेत्यादिना [पा० ६.३.१३३.] तस्य संहितायां दीर्घः । वृत्राणामावरकाणां पाप्मनां हन्ता वृत्रहा हे वृत्रहन् हे इन्द्र त्वं नोऽस्मान्प्रति तु क्षिप्रम् आ आगच्छेत्यर्थः आगत्य चास्माकमर्धमस्मन्निवासदेशमागहि देवयजनदेशं प्राप्नुहीत्यर्थः । कीदृशस्त्वम् महीभिः महतीभिः ऊतिभिः अवनैः रक्षाभिः महान् योऽन्यं रक्षति स महानुच्यते ॥ ६५॥

त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।

अशस्तिहा जनिता विश्वतूरसि त्वं तूर्य तरुष्यतः ॥ ६६॥

नृमेधदृष्टे द्वे ऐन्द्र्यौ पथ्याबृहतीसतोबृहत्यौ । प्रकृष्टा तूर्तिर्हिंसा येषां यत्र वा ते प्रतूर्तयः शत्रवः संग्रामा वा तेषु प्रतूर्तिषु हे इन्द्र त्वं विश्वाः सर्वाः स्पृधः स्पर्धमानाः शत्रुसेनाः अभि असि अभिभवसि । किं च यतः त्वं विश्वतूरसि विश्वान्सर्वान्रिपून् तूर्यते हिनस्ति विश्वतूः ततः तरुष्यतः हनिष्यतः शत्रून् तूर्य जहि मारय । कीदृशस्त्वम् अशस्तिहा नास्ति शंसा प्रशस्तिर्येषां ते अशस्तयः दुष्टास्तान्हन्तीत्यशस्तिहा । जनिता जनयिता स्वपक्षप्रशंसोत्पादकः ॥ ६६॥

अनु ते शुष्मं तुरयन्तमीयतुः क्षोणी शिशुं न मातरा ।

विश्वास्ते स्पृधः श्नथयन्त मन्यवे वृत्रं यदिन्द्र तूर्वसि ॥ ६७॥

हे इन्द्र त्रीणी द्यावापृथिव्यौ ते तव शुष्मं बलमन्वीयतुः अनुगच्छतः द्यावापृथिवीस्था लोकास्त्वद्बलं बहु मन्यन्ते इति भावः । कीदृशं शुष्मं तुरयन्तं शत्रुषु त्वरामाविष्कुर्वन्तम् । अनुगमने दृष्टान्तः मातरौ मातापितरौ शिश्रुं न शिशुमिव यथा पितरौ बालमनुगच्छतः यस्य बलाद्द्यावापृथिव्यावप्यबिभीतामिति [निरु॰ १०.१०.] यास्कः । तदेव प्रपञ्चयति विश्वा इति विश्वाः सर्वाः स्पृधः स्पर्धमानाः शत्रुसेनाः ते तव मन्यवे पञ्चम्यर्थे चतुर्थी तव क्रोधात् श्रथयन्त (35.) अश्रथयन्त श्रथिताः खिन्ना भवन्ति तव क्रोधदर्शनादुद्विजन्तऽइत्यर्थः युक्तमेतत् यत् यस्मात् युद्धे इन्द्र त्वं वृत्रं देवासुरावध्यं तूर्वसि हंसि तूर्वतिर्हिंसार्थः ॥ ६७ ॥

यज्ञो देवानां प्र॰ ॥ ६८ ॥

कुत्सदृष्टा त्रिष्टुप् । व्याख्याता [८.४.] ॥ ६८ ॥

अदब्धेभिः सवितः पायुभिष्ट्वꣳ शिवेभिरद्य परिपाहि नो गयम् ।
हिरण्यजिह्वः सुविताय नव्यसे रक्षा माकिर्नोऽअघशꣳस ईशत ॥ ६९ ॥

भरद्वाजदृष्टा जगती सवितृदेवत्या । हे सवितः सर्वस्य प्रसवितः पायुभिः पालनैः नोऽस्माकं गयं गृहं धनं वा त्वमद्य परिपाहि रक्ष गयः कृदरः (36.) इति गृहनामसु [निघ॰ ३.४.] मील्हं गय इति [निघ॰ २.१०.] धननामस्वपि पाठात् गृहधनयोर्गयशब्दः । कीदृशैः पायुभिः अदब्धेभिः अदब्धैरनुपहिंसितैः । शिवेभिः शान्तैः सुखरूपैः कीदृशस्त्वम् हिरण्यजिह्वः हिरण्यवदविचला जिह्वा यस्य सत्यवाक् यद्वा हिरण्या हितरमणीया जिह्वा ज्वाला यस्येति वा हिरण्यं कस्मादित्यादि हितरमणीयं भवतीति वेति [निरु॰ २.१३.] यास्कोक्तेः । किं च नव्यसे नवीयसे नवतराय सुविताय सु इताय सुखाय अस्मान्रक्ष पालय । किं च माकिः मा कश्चनाघशंसः पापमाशंसमानः शत्रुः नोऽस्माकमीशत ऐश्वर्यं कुर्यात् त्वत्प्रसादात्पाप्मास्माकमीशिता मा भूदित्यर्थः । ईशत लङ् बहुलं छन्दसीति [पा॰ २.४.७३.] शपो लुगभावः अडभावश्च ॥ ६९ ॥

VI. प्र वीरया शुचयो दद्रिरे वामध्वर्युभिर्मधुमन्तः सुतासः ।

वह॑ वायो नि॒युतो॑ या॒ह्यस्म॒ पिबा॑ सु॒तस्यान्ध॑सो॒ मदा॑य ॥७०॥

वसिष्ठदृष्टा त्रिष्टुप् । वायुदेवत्याः पञ्चदश ऋचः द्वे प्रतीकोक्ते एवं सप्तदशकः पुरोरुचां समूहः । वामिति द्विवचनं पत्नीयजमानविषयम् हे पत्नीयजमानौ वां युवयोः स्वभूताः सोमाः ददिरे विदीर्णाः चूर्णीभूताः दृ विदारे कर्मकर्तरि लिट् । कीदृशाः प्रवीरया (37.) प्रकृष्टा वीरा ज्ञानोद्भवा ऋत्विजो येषां सोमानां ते प्रवीराः सुपां सुलुगिति [पा° ७.१.३९.] जसो याजादेशः । शुचयः निर्मलाः । अध्वर्युभिः सुतासः सुताः अभिषवधर्मेण ग्रावभिः द्रवीभावमापादिताः अभिषुण्वन्ति चत्वारः पर्युपवेशनसामर्थ्यादिति [का° ९.५.१.] कात्यायनस्मरणादध्वर्युभिरिति बहुवचनम् अध्वरनेतृभिर्ऋत्विग्विशेषैः सुता इत्यर्थः । मधुमन्तः मधु नियाभ्याद्रूपमुदकम् तद्वन्तः । एवं पूर्वार्धे पत्नीयजमानौ सम्बोध्य वायुमाह वाति सर्वत्र गच्छति वायुः हे वायो नियुतोऽश्वान् त्वं वह देवयजनदेशं प्रापय अच्छयाहि अच्छाभिरर्थे आप्तुमिति वा सोमाभिमुखं सोममाप्तुं वा याहीत्यर्थः । यात्वा च मदाय तृप्तये मत्ततायै वा सुतस्याभिषुतस्यान्धसः सोमस्य स्वमंशं पिब ॥७०॥

गाव॒ उपा॑वता° ॥७१॥

व्याख्याता [३३.१९.] ॥७१॥

काव्य॑योरा॒जाने॑षु॒ क्रत्वा॒ दक्ष॑स्य दुरो॒णे । रि॒शाद॑सा स॒धस्थ॒ऽआ ॥७२॥

दक्षदृष्टा गायत्री मैत्रावरुणी । कवीनां क्रान्तदर्शिनां ज्ञानसमुच्चयकारिणां हितौ काव्यौ तयोः । रिशन्ति हिंसन्ति रिशाः तान् समन्ताद्दस्यतो नाशयतः तौ रिशादसौ द्विवचनं मित्रावरुणविषयम् हे रिशादसौ शत्रूपक्षयितारौ मित्रावरुणौ यजमानस्य सधस्थे देवमनुष्याणां सहसोमपानस्थाने युवाम् आ आगच्छतम् । कीदृशस्य यजमानस्य काव्ययोः कविहितयोर्युवयोः आजानेषु आ समन्ताज्जन्मसु सोमपानार्थमाविर्भूतभूमिषु देवयजनादिषु दुरोणे यज्ञगृहे च क्रत्वा क्रतुना यज्ञकर्मणा कृत्वा दक्षस्य उत्साहवतः यज्ञं समर्धयत इत्यर्थः । दक्षस्येति विशेषणात् यजमानपदमध्याहर्तव्यम् आ इत्युपसर्गेण गच्छतमिति क्रियाध्याहारः ॥७२॥

दैव्या॑वध्वर्यू॒ आग॑त॒७ रथे॑न॒° ॥ तं प्र॒त्नथा॑ । अ॒यं वे॒नः ॥७३॥

व्याख्याता [३३.३३.] । तं प्रत्नथा [७.१२.] अयं वेनः [७.१६.] इति द्वे प्रतीकोक्ते ॥७३॥

तिरश्चीनो विततो रश्मिरेषामधः स्विदासी३दुपरि स्विदासी३त् ।
रेतोधा आसन्महिमान आसन्त्स्वधा अवस्तात्प्रयतिः परस्तात् ॥७४॥

प्रजापतिदृष्टा त्रिष्टुप् भाववृत्तदेवत्या भावेषु पदार्थेषु वृत्तः स्थितो भाववृत्तः परमात्मा सोऽस्या देवता । आग्रयणग्रहे विनियोगः क्रमपाठाल्लभ्यते ततोऽधियज्ञं तावद्व्याख्यायते । आधवनीयादुन्नेता निग्राभ्यास्वासिञ्चति ताः पवित्रे यजमानस्ततो ग्रहग्रहणमा ध्रुवादिति [का° ९.५.१७.] कात्यायनेनोक्तम् तदभिप्रायेणोच्यते । एषां पूयमानसोमानां रश्मिः यमनात् ऋजीषादिकल्कनियामको दशापवित्रलक्षणः तिरश्चीनः तिर्यङ् एव विततो विस्तारितः उद्गातृभिरिति शेषः । तस्मिन्दशापवित्रे सोमः प्रक्षिप्तः सन् दशापवित्रादधश्च आसीत् उपरि च आसीत् स्वित्शब्दौ चार्थौ उपरि स्विदासीदितीकारः प्लुतः (38.) । किं च तत्रैके पदार्था ग्रहचमसाधवनीयद्रोणकलशादयो रेतोधा आसन् रेतो जगदुत्पत्तिबीजं सोमं दधति धारयन्ति ते रेतोधाः सोमाधारभूताः आसन् यज्ञाद्धि प्रजाः प्रजायन्तऽइति श्रुतेर्जगद्बीजत्वं सोमस्य । तथापरे पदार्थाः सोमरसद्रूपास्तत्राधेयाः सन्तो महिमानः महान्तः उत्कृष्टा आसन् । आधाराधेयभावेन सर्वोऽयं यज्ञात्मैव स्थित इति भावः ब्रह्मार्पणं ब्रह्म हविरिति स्मृतेः । किं च स्वधान्नं तद्रूपः अवस्तात् अवरो होमात्प्राक् नीच आसीत् प्रयतिः प्रयतते प्रयतिः प्रयत्नवान् होमानन्तरं लब्धफलकः सन् परस्तात् परः उत्कृष्टः आसीत् ॥ ॥ अथाधिदैवतं व्याख्या । एषां प्रसिद्धानां सूर्यरश्मीनां मध्ये एकः सुषुम्णाख्यो रश्मिः तिरश्चीनः विततः विस्तृतः सन् किम् द्युलोकादधः स्वित् आसीत् उतोपरि स्विदासीत् स्विदिति वितर्के विचार्यमाणानामिति [पा° ८.२.९७.] प्लुतः । किं च स रश्मिः रेतोधाः रेतसो विश्वबीजस्योदकस्य धारयिता आसीत् व्यत्ययेनैकवचनम् तथा च श्रुतिः सूर्यस्य ह वाऽएको रश्मिर्वृष्टिवनिर्नाम येनेमाः सर्वाः प्रजा बिभर्तीति । अन्ये रश्मयो महिमानः महात्म्याधायका आसन् विश्वप्रकाशत्वेन । किं च स्वधान्ननिष्पादकः स एव रश्मिः

अवस्तात् अवरो भूम्यभिमुखः प्रयतिः प्रयत्नात्सोर्ध्वमुखः सन् परस्तात् परः उत्कृष्टः दर्शनमात्रेण देवानां तृप्तिदः तथोक्तं छान्दोग्यश्रुतौ [छान्दोग्योपनिष॰ ५. १-६.] असौ वाऽआदित्यो देवमधित्युपक्रम्य न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्तीति ॥ ॥ अथाध्यात्मपक्षे व्याख्या। नासदासीदिति सप्तर्चेऽध्यात्मप्रतिपादके सूक्ते [अष्ट॰ ८. ७. १७. मण्ड॰ १०. ११. १.] बह्वृचा इमामृचं पठन्ति तत्र नासदासीदिति निरस्तसमस्तप्रपञ्चां प्रलयावस्थामनूद्य विश्ववीजमविद्योक्ता। कामस्तदग्रे समवर्ततेति पादेन च काम उक्तः। मनसो रेतः प्रथमं यदासीदिति पादेन पुण्यापुण्यात्मकं कर्मोक्तम्। एवमविद्याकामकर्माणि सृष्टिहेतून्युक्त्वा तेषां स्वकार्य जनने शैघ्यमाह तिरश्चीन इति। एषामविद्याकामकर्मणां रश्मिरिव रश्मिः कार्यवर्गो वियदादि विततः विस्तृतः सन् तिरश्चीनः तिर्यगवस्थितो मध्ये स्थितः अधश्चासीदुपरि चासीत् सूर्यरश्मिवद्युगपत्सर्वं व्यापेत्यर्थः। तदेव विभज्यते रेतोधा इति। सृष्टे कार्यवर्गे के चन रेतोधाः रेतसो वीजभूतस्य कर्मणो विधातारः कर्तारो भोक्तारश्च जीवाः आसन् अन्ये महिमानः महान्तो विपुला वियदादयो भोग्या आसन् महिमान इति स्वार्थे इमनिच्। एवं मायायामीश्वरः (39.) सर्वं जगत्सृष्ट्वा स्वयं चानुप्रविश्य भोक्तृभोग्यरूपेण विभागं कृतवानित्यर्थः। तयोर्भोक्तृभोग्ययोर्मध्ये स्वधान्नं भोग्यप्रपञ्चोऽवस्तादवरो निकृष्ट (40.) आसीत् प्रयतिः प्रयतिता भोक्ता (41.) परस्तात् परः उत्कृष्टः भोक्तृप्रपञ्चाधीनं भोग्यप्रपञ्चं कृतवानित्यर्थः। विभाषा परावराभ्यामिति [पा॰ ५. ३. २९.] प्रथमार्थेऽस्तातिप्रत्ययः अस्ताति चेति [पा॰ ५. ३. ४०.] अवरशब्दस्यावादेशः। एतद्वाऽइदꣳ सर्वमन्नं चैवान्नादश्चेति श्रुतेः ॥७४॥

आ रोद॑सीऽअपृणादा स्व॒र्म॒हज्जा॒तं यदे॑नम॒पसो॒ऽअधा॑रयन्।
सोऽअ॑ध्व॒राय॒ परि॑णीयते क॒विर॒त्यो॒ न वाज॑सातये॒ चनो॑हितः ॥७५॥

तमेव वैश्वानराख्यं भोक्तारं परमात्मानं स्तौति। विश्वामित्रदृष्टा जगती वैश्वानरदेवत्या। यत् यदा जातमरणीत उत्पन्नमात्रमेनं वैश्वानरमपसोऽपस्विनः कर्मवन्तो यजमाना अधारयन् कर्मणि स्थापितवन्तः। तदा स रोदसी द्यावाभूमी

आ सर्वतः अपृणात् पूरयति स्म स्थावराणां प्रस्तरादा तदुपलब्धेः (42.)। न केवलं रोदसी किं तु महत् प्रभूतं स्वः अन्तरिक्षमापृणात् सूर्यात्मना। त्रैलोक्यं (43.) जाठरात्मना पूरितमित्यर्थः। गार्हपत्यादीनां लोकत्वं श्रुत्योक्तम् अयं वै लोको गार्हपत्यो द्यौराहवनीय इति। उक्तार्थमेव विवृणोति स इति सोऽग्निरध्वराय यागाय परिणीयते सर्वतोऽतिप्रणीताग्नीध्रीयादिधिष्ण्यादिषु प्रकर्षेण प्राप्यते। नयने दृष्टान्तः अत्यो न यथाश्वो वाजसातयेऽन्नलाभाय सर्वतो नीयते। राजाश्ववान्भोगजातं लभते यथा तद्वद्विप्रोऽग्निं सेवमानो ब्रह्मलोकान्तभोगानिति भावः। कीदृशोऽग्निः कविः सर्वज्ञः। चनोहितः चन इत्यन्ननामेति [निरु॰ ६. १६.] यास्कः चनसेऽन्नाय भोग्याय हितः सर्वभोगसम्पादक इत्यर्थः ॥ ७५॥

उक्थेभिर्वृत्रहन्तमा या मन्दाना चिदा गिरा। आङ्गूषैराविवासतः ॥ ७६॥

वसिष्ठदृष्टेन्द्राग्निदेवत्या गायत्री। या यौ इन्द्राग्नी आङ्गूषैः आघोषैः चित् लौकिकवाक्स्तोमैरपि (44.) स्तुतौ आ आगच्छतः आङ्गूष स्तोम आघोष इति [निरु॰ ५. ११.] यास्कः तौ उक्थेभिः उक्थैः गिरा स्तोत्रात्मिकया स्तुत्या आविवासतः आविवस्येते (45.) परिचर्येते यजमानैरिति शेषः व्यत्ययेन कर्तरि लट् विवासतिः परिचर्यायामिति [निरु॰ ११. २३.] यास्कः। कीदृशौ तौ वृत्रहन्तमा वृत्राणामावरकाणां पाप्मनां हन्तृतमौ नाद्घस्येति [पा॰ ८. २. १७.] नुम्। मन्दाना मन्दानौ मोदमानौ स्वभावतः। सर्वत्र विभक्तेर्डादेशः ॥ ७६॥

उप नः सूनवो गिरः शृण्वन्त्वमृतस्य ये। सुमृडीका भवन्तु नः ॥ ७७॥

सुहोत्रदृष्टा वैश्वदेवी गायत्री। ये अमृतस्य मरणाहीनस्य प्रजापतेः सूनवः पुत्राः विश्वे देवाः ते नोऽस्माकं गिरः उप शृण्वन्तु समीपमागत्यावधारयन्तु श्रुत्वा च नोऽस्माकं सुमृडीकाः सुखकाराः भवन्तु शोभनं मृडीकं सुखं येभ्यस्ते ॥ ७७॥

ब्रह्माणि मे मतयः शꣳ सुतासः शुष्म इयर्ति प्रभृतो मेऽअद्रिः।
आशासते प्रतिहर्यन्त्युक्थेमा हरी वहतस्ता नोऽअच्छ ॥ ७८॥

तिस्रस्त्रिष्टुभः द्वे इन्द्रमरुत्संवादे इन्द्रमरुद्देवत्ये आद्येऽगस्त्यदृष्टे (46.)। इन्द्रो

मरुतः सहचरानाह हे मरुतः ब्रह्माणि मन्त्रवाक्यात्मकानि स्तुतिवचांसि हवींषि वा सोमाज्यादीनि मे मम स्वभूतानि चोदनावाक्येऽग्न्यादिदेवतान्तरसम्बन्धेन प्रतीयमानान्यपि सर्वदेवताप्राणात्मनो (47.) ममेन्द्रस्यैव तानीति भावः । मतयः मननयुक्ताः स्तुतयोऽपि शं मम सुखोत्पादिकाः अतो यज्ञे गन्तव्यमिति भावः (48.) । किं च मे मया प्रभृतः प्रकर्षेण धृतः अद्रिः वज्रः इयर्ति गच्छत्येव लक्ष्यं प्रति न प्रतिहन्यतऽइत्यर्थः कीदृशः शुष्मः शोषयति शत्रूनिति शुष्मः अत एव गमने राक्षसाद्युपद्रवो नास्तीत्यर्थः । न केवलं हविरादीनां मदीयत्वेन गन्तव्यम् अपि तु आशासते प्रार्थयन्ते यजमाना यानि (49.) उक्था उक्थानि ता तानि स्तोत्रशस्त्राणि मां प्रतिहर्यन्ति कामयन्ते हर्यतिः प्रेप्साकर्मेति यास्कः । किं च नोऽस्माकमिमा इमौ हरी अश्वौ अह्न यज्ञाभिमुखं वहतः मां प्रापयतः अत एवास्माभिर्गन्तव्यमिति भावः । यद्वार्थान्तरम् ब्रह्माणि मतयः सुताः सोमाः (50.) प्रहृतः अद्रिः सोमाभिषवग्रावा शुष्मः सुखरूपः एतत्सर्वं मम शं सुखमियर्ति अर्पयति उद्गमयति णिजन्तर्भूतः समानमन्यत् ॥ शुष्मः अविसिविशुषिभ्यः (51.) किदिति [उणा° १. १४२.] मन्प्रत्ययः कित्वाद्गुणाभावः नित्वादाद्युदात्तः । अत्ति भक्षयति रिपूनित्यद्रिः अदिशदिभूशुभिभ्यः क्रिन्निति [उणा° ४. ६६.] क्रिन्प्रत्ययः आद्युदात्तः ॥७८॥

अनु॑त्त॒मा ते॑ मघवन्न॒कि॒र्नु न त्वावाँ॑२॥ऽअस्ति दे॒वता॒ विदा॑नः ।
न जाय॑मानो॒ नश॑ते॒ न जा॒तो यानि॑ करि॒ष्या कृ॑णु॒हि प्र॑वृद्ध ॥७९॥

एवमिन्द्रेणोक्ता मरुतः प्रत्याहुः । नुद प्रेरणे अस्य निष्ठायां नसत्तनिषत्तेत्यादिना [पा° ८. २. ६१.] अनुत्तमिति निपातः । आ इति स्मरणे स्मृतवन्तो वयम् हे मघवन्धनवन् इन्द्र ते तव अनुत्तं न केनापि नुत्तं नाशितं महाभाग्यमिति शेषः । नु निश्चये न किः न कोऽपि त्वन्महाभाग्यनाश इति शेषः । न केवलं त्वदैश्वर्यमात्रं किंतु सर्वज्ञत्वमपीत्याह (52.) न त्वेति वतुरत्र सादृश्ये त्वावान् त्वत्सदृशो विदानः विद्वान् देवता देवो नास्ति (53.) स्वार्थे तल् विदेः शानन् नित्वादाद्युदात्तः । किं च हे प्रवृद्ध प्रकर्षेण वृद्ध पुराण पुरुष यानि कर्माणि वृ-

त्रबधादीनि त्वं कृणुहि करोषि व्यत्ययेन लोट् तानि कर्माणि जायमानः वर्तमानः जातो भूतपूर्वश्च देवमनुष्येषु कश्चित् न नशते न व्याप्नोति न करोतीत्यर्थः नशतिर्व्याप्तिकर्मा । न करिष्या न च करिष्यति उत्पत्स्यमान इति शेषः तिलोपो दीर्घश्च छान्दसः । कालत्रये त्वादृशो नास्तीत्यर्थः अतो यज्ञेशस्त्वम् ॥ ७९ ॥

तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो निरिणाति शत्रूननु यं विश्वे मदन्त्यूमाः ॥ ८० ॥

बृहद्दिवदृष्टा माहेन्द्री त्रिष्टुप् । भुवनेषु भूतजातिषु तत् इत् तदेव ज्येष्ठं श्रेष्ठमास बभूव छन्दस्युभयथेति [पा॰ ३. ४. ११७.] लिटः सर्वधातुत्वादस्तेर्भूभावो न सर्वोत्कृष्टं ब्रह्मैवासीत् यतो ज्येष्ठात् उग्रः उत्कृष्टः इन्द्रो जज्ञे जातः । कीदृशः त्वेषनृम्णः त्वेषः कान्तिः नृम्णं धनं यस्य तेजोधनः कार्यं दृष्ट्वा कारणमहत्वं कल्प्यते । किं च य इन्द्रो जज्ञानः जायमान एव सद्यः तत्क्षणं शत्रून्निरिणाति नितरां हन्ति री बधे क्र्यादिः प्वादित्वाद्धस्वः । किं च विश्वे सर्वे देवाः यमिन्द्रमनुमदन्ति अनुतृप्यन्ति अनुर्लक्षणऽइति [पा॰ १. ४. ८४.] द्वितीया यद्वृत्तान्नित्यमिति [पा॰ ८. १. ६६.] मदन्तीत्यत्र निघातो न । कीदृशा विश्वे ऊमाः अवन्ति रक्षन्ति ऊमाः रक्षकाः अवतेर्मन्प्रत्ययः ज्वोः शूडिति [पा॰ ६. ४. २१.] ऊठ् ॥ ८० ॥

इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम ।
पावकवर्णाः शुचयो विपश्चितोऽभि स्तोमैरनूषत ॥ ८१ ॥

मेधातिथिदृष्टे आदित्यदेवत्ये द्वे बृहत्यौ । पुरु बहु वसु धनं यस्य स पुरुवसुः संहितायां छान्दसो दीर्घः पुरुशब्दस्य हे पुरुवसो बहुधनादित्य या मम गिरः शस्त्ररूपा वाचः इमाः त्वा त्वां वर्धन्तु वर्धयन्तु । किं च विपश्चितो विद्वांसः तव स्वरूपाभिज्ञा उद्गातारश्च स्तोमैः स्तोत्रैः बहिष्पवमानादिभिः त्वमभ्यनूषत अस्तुवत नू स्तुतौ लुङ् कुटादित्वाद्गुणाभावः [पा॰ १. २. १.] । कीदृशा विपश्चितः पावकवर्णाः अग्नितुल्यतेजसः ब्रह्मवर्चसवन्तोऽत एव शुचयः शुद्धागमाः स्तोत्रशस्त्ररूपा गिरस्त्वां स्तुवन्तीत्यर्थः ॥ ८१ ॥

यस्यायं विश्व आर्यो दासः शेवधिपा अरिः ।
तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत्सोऽअज्यते रयिः ॥ ८२॥

हे आदित्य यस्य तवायं विश्वः सर्वोऽपि आर्यः वर्णाश्रमविहितकर्मानुष्ठाता सन् दासः दासवत् सर्वदा रक्षणीयः शेवधिपाः निधिरक्षकः कृपणो यस्य तवारिः शत्रुः निधिः शेवधिरिति [निरु° २.४.] यास्कः । किं च एवंविधे कृपणे अर्ये धनस्वामिनि वैश्ये वा तिरश्चित् तिरोऽन्तर्धौ चिदप्यर्थे अन्तर्भूतो भूमिगर्तादौ निक्षिप्तोऽपि तस्य रयिर्धननिचयः तुभ्य इत् मलोपश्छान्दसः तुभ्यमेव त्वदर्थमेवाज्यते व्यक्तो भवति कर्मकर्तरि यक् । कृपणस्य धनं त्वदर्थमेवोपयुज्यते पक्षहरणादिना न तु कृपणभोगाय भवतीत्यर्थः । कीदृशेऽर्ये रुशमे रुशतिर्हिंसाकर्मा औणादिकोऽमप्रत्ययः रुशति हिनस्तीति रुशमः तस्मिन्धनापहर्तॄणां हिंसके अतिथ्यादितिरस्कारिणात्मनोऽपि हिंसके । पवीरवि पविः शल्यमस्यास्ति पवीरमायुधम् रो मत्वर्थीयः पवीरं वाति गच्छति पवीरवाः तस्मिन् धनरक्षार्थमायुधधारके तथा यास्कः [निरु° १२.३१.] पविः शल्यो भवति यद्विपुनाति कायं तद्वत् पवीरमायुधं तद्वानिन्द्रः पवीरवानिति । धनिनातियत्नेन गुप्तमपि धनं तत आछिद्य धर्मिष्ठाय ददासीति भावः ॥ ८२॥

अयꣳ सहस्रमृषिभिः सहस्कृतः समुद्र-इव पप्रथे ।
सत्यः सोऽअस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये ॥ ८३॥

मेधातिथिदृष्टादित्यदेवत्या सतोबृहती । अयमादित्यरूप इन्द्रः समुद्र-इव उदधिवत् पप्रथे प्रथितो विस्तीर्णो व्यापकोऽभूत् कीदृशोऽयम् ऋषिभिरतीन्द्रियार्थदर्शिभिः सहस्कृतः सहसा बलेन युक्तः कृतः स्तुत्या हि देवता बलं वर्धन्ते (54.) । किं च अस्यादित्यस्य स महिमा सत्योऽवितथः । शवो बलं च सत्यम् । यज्ञेषु विप्रराज्ये विप्राणां राज्ये स्तोत्रशस्त्रसंदोहे गृणे स्तौमि तं महिमानमिति शेषः । यज्ञेषु विप्राः स्वतन्त्राः राजान इव भवन्ति राज्ञां कर्मराज्यम् । स्तोत्रशस्त्राणां संसदि पठनेन सोऽयं (55.) स्तूयतऽइत्यर्थः ॥ ८३॥

अदब्धेभिः सवितः पा° ॥ ८४॥

व्याख्याता [३३. ६१.] । षष्ठः पुरोरुग्गणः समाप्तः ॥ ८४ ॥

VII. आ नो॑ य॒ज्ञं दि॑वि॒स्पृशं॒ वायो॑ या॒हि सु॒मन्म॑भिः ।
अ॒न्तः प॒वित्र॑ऽ उ॒परि॑ श्री॒णा॒नो॒ऽयꣳ शु॒क्रोऽअ॑यामि ते ॥ ८५ ॥

इतोऽध्यायसमाप्त्यन्तं त्रयोदश ऋचः प्रतीकोक्ताश्चतस्रश्चेति ऐन्द्रवायवादिसावित्रान्तानां ग्रहाणां ग्रहणमन्त्राः पूर्ववत् ॥ जमदग्निदृष्टा वायुदेवत्या । बृहत्य आद्या नव द्वादशी च दशम्येकादशीत्रयोदश्यः सतोबृहत्यः । हे वायो नोऽस्माकं यज्ञमायाहि आगच्छ कीदृशं यज्ञं दिविस्पृशं द्युलोकव्यापिनम् (56.) ऋत्विग्यजमानवैदुष्याद्दक्षिणासम्पन्नत्वाच्च (57.) स्वर्गेऽपि श्रूयमाणमित्यर्थः । आगम्य किं फलमत आह अन्तरिति अन्तः पात्रमध्यस्थः पवित्रे दशापवित्रस्योपरि श्रीणानः श्रयमाणः होतृचमसेन विषिच्यमानोऽयं शुक्रः शुद्धः ऋजीषकल्करहितः सोमो रसात्मा ते तुभ्यं त्वदर्थमयामि नियतः त्वदीयभागत्वेन मया संस्कृतः यमु उपरमे (58.) कर्मणि चिण् ॥ ८५ ॥

इन्द्र॑वा॒यू सु॑स॒न्दृशा॑ सु॒हवे॒ह ह॑वामहे ।
यथा॑ नः॒ सर्व॒ इज्जनो॑ऽनमी॒वः स॒ङ्गमे॑ सु॒मना॒ अस॑त् ॥ ८६ ॥

तापसदृष्टैन्द्रवायवी । इह यज्ञे वयमिन्द्रवायू हवामहे आह्वयामः उभयत्र वायोः प्रतिषेध इति [पा॰ ६. ३. २६. वा॰ १.] आनङ्भावः । कीदृशौ सुसंदृशा सुसंदृशौ सुतरां सम्यक् पश्यतस्तौ । सुहवा सुहवौ शोभनाह्वानौ । तथा हवामहे यथा नोऽस्माकं सर्व इत् सर्व एव जनः पुत्रपौत्रादिरीदृशः असत् भवेत् अस्तेर्लेट्यडागमः कीदृशः अनमीवः व्याधिरहितः संगमे धनप्राप्तौ बहूनां समागमे वा सुमनाः शोभनचित्तः उदारो वक्ता चेत्यर्थः ॥ ८६ ॥

ऋध॑गि॒त्था स मर्त्यः॑ शश॒मे दे॒वता॑तये ।
यो नू॒नं मि॒त्रावरु॑णाव॒भिष्ट॑यऽआच॒क्रे ह॒व्यदा॑तये ॥ ८७ ॥

जमदग्निदृष्टा मैत्रावरुणी । नूनं निश्चितं यो मर्त्यो मनुष्यो मित्रावरुणौ आचक्रे आकुरुते सेवते गन्धनावक्षेपणेत्यादिना [पा॰ १. ३. ३२.] करोतेः सेवनार्थे

आत्मनेपदम् । किमर्थम् अभिष्टये अभिमतलाभाय पृषोदरादित्वादिलोपः हव्यदातये हविषो दानाय च । स नरः इत्था अनेन हेतुना सेवनरूपेण शशमे शाम्यति यमनियमशमदमादियुक्तो भवतीत्यर्थः । कीदृक् सः देवतातये देवस्य कर्म देवतातिः तस्मै यज्ञाय ऋधक् ऋध्नोतीति ऋधक् समृद्धिमान् यज्ञसम्पत्तिज्ञमधनाढ्यः सन् शान्तो भवतीत्यर्थः । बट् अत् सत्रा इत्थेति [निघ° ३.१०.] निपातः सत्यवचनो वा सत्यं शाम्यति । एवाभ्यासलोपाभाव आर्षः शशमेऽत्र ॥ ८७॥

आयातमुपभूषतं मध्वः पिबतमश्विना ।
दुग्धं पयो वृषणा जेन्यावसू मा नो मर्धिष्टमागतम् ॥ ८८॥

वसिष्ठदृष्टाश्विदेवत्या । हे अश्विना अश्विनौ युवामायातं यज्ञं प्रत्यागच्छतम् आगत्य च उपभूषतमलंकुरुतं यज्ञम् । मध्वः मधुरं सोमं पिबतम् कर्मणि षष्ठी नुमभावश्छान्दसः । किं च हे वृषणा वृषणौ वर्षकौ यज्ञफलस्य सेक्तारौ हे जेन्यावसू जेन्यं जेतव्यं जितं वा आ समन्तात् वसु धनं याभ्यां तौ जेन्यावसू वशीकृतधनौ तादृशौ युवां पयः वृष्ट्युदकम् दुग्धमन्तरिक्षात्प्रक्षारयतम् दुहेर्लोण्मध्यमद्विवचनं (59.) दुग्धमिति । किं च नोऽस्मान्मा मर्धिष्टं मा हिंस्तम् मृधिर्हिंसार्थः लुङ् । किं बहुना युवामागतमागच्छतम् आदरार्थं पुनर्वचनम् ॥ ८८॥

प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता ।
अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥ ८९॥

कण्वदृष्टा वैश्वदेवी । ब्रह्मणो वेदस्य पतिः हिरण्यगर्भः नोऽस्माकं यज्ञमच्छ यज्ञाभिमुखं प्रैतु प्रकर्षेणागच्छतु ब्रह्मणस्पतिः ब्रह्मणः पाता पालयिता वेति [निरु° १०.१२.] यास्कः । तथा देवी देवतात्मा सूनृता प्रियसत्यस्वरूपा तस्यैव वाक् त्रयीरूपा यज्ञं प्रैतु । किं च देवा यष्टव्या नोऽस्मान्यज्ञं नयन्तु प्रापयन्तु यज्ञं कारयन्त्वित्यर्थः । कीदृशं यज्ञं वीरं विशेषेणेरयति वीरस्तम् शत्रूणां विशेषोन्मूलयितारम् वीरो वीरयत्यमित्रानिति [निरु° १.७.] यास्कः । नर्यं नृभ्यो मनुष्येभ्यो हितम् उगवादिभ्य इति [पा° ५.१.२.] यत् । पङ्क्तिराधसम् इन्द्रस्य पुरोडाशः हर्योधानाः पूषः करम्भः सरस्वत्यै दधि मित्रावरुणयोः पयस्या एषा हविःपङ्क्तिः ।

द्विनाराशंसं प्रातःसवनं द्विनाराशंसं माध्यन्दिनं सवनं सकृन्नाराशंसं तृतीयं सवनम् एषा नाराशंसपङ्क्तिः त्रीणि सवनानि पशुरुपवसथ्यः पशुरनुबन्ध्यः एषा सवनपङ्क्तिः एताभिः पङ्क्तिभिः राधः समृद्धिर्यस्य पङ्क्त्यो राध्यन्ते साध्यन्ते यत्रेति वा पङ्क्तिराधाः तम् । ब्रह्मणस्पत्यादयः ईदृशं यज्ञमस्माभिः कारयन्त्विति सर्वार्थः ॥ ८९ ॥

चन्द्रमा॑ अ॒प्स्व॑न्तरा सु॑प॒र्णो धा॑वते दि॒वि ।

र॒यिं पि॒शंगं॑ ब॒हुलं॑ पु॑रु॒स्पृह॒ꣳ हरि॑रेति॒ कनि॑क्रदत् ॥ ९० ॥

त्रितदृष्टाहुतिपरिणामवादिन्यैन्द्री । आहुतेर्होमद्रव्यस्य परिणामो द्युपर्जन्यपृथिवीपुरुषयोषात्मकपञ्चाग्निक्रमेण परिपाकः इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति श्रुत्योक्तः (60.) तं वदत्येषा ऋक् । अधियज्ञं तावदर्थः । चन्द्रं देवानामाह्लादं मिमीते करोति चन्द्रमाः लतारूपः सोमोऽभिषुतः सन् अप्सु वसतीवरीनिग्राभ्यादिजलेषु अन्तर्मध्ये रसरूपेण स्थिताऽग्नौ हुतः सन् सुपर्णः गरुडाकृतिः साधुपतनो भूत्वा दिवि आधावते शीघ्रं गच्छति सृ गतावित्यस्य शीघ्रगतौ धावादेशः तृतीयस्यामितो दिवि सोम आसीदिति श्रुतेः । हरिः सोमो हरितवर्ण इति [निरु॰ ४. ११.] यास्कोक्तेर्हरिः पूर्वोक्तः सोम एव दिवि गतः पर्जन्यरूपमास्थायोदकदानद्वारेण रयिमेति रयिरिति धननामेति [निरु॰ ४. १७.] यास्कः धान्यभावं प्राप्नोति व्रीहियवाद्यन्नरूपो भवतीत्यर्थः । कीदृशं रयिं पिशंगम् परिपाकेन व्रीहियवादिकं धान्यं पीतवर्णं भवति । बहुलमसंख्यातम् चतुर्विधभूतग्रामजीवनपर्याप्तमित्यर्थः । पुरुस्पृहं पुरूणां बहूनामपि स्पृहा लिप्सा यत्र तम् बहवोऽपि यद्धान्यमिच्छन्ति तद्रूपो भवतीत्यर्थः । कीदृशो हरिः कनिक्रदत् पर्जन्यरूपात्यर्थस्तनितं कुर्वन् दाधर्तीत्यादि [पा॰ ७. ४. ६३.] निपातः ॥ ९० ॥

दे॒वं-दे॑वं॒ वोऽव॑से दे॒वं-दे॑वम॒भिष्ट॑ये ।

दे॒वं-दे॑वं हुवेम॒ वाज॑सातये गृ॒णन्तो॑ दे॒व्या धि॒या ॥ ९१ ॥

मनुदृष्टा वैश्वदेवी । वीप्सार्थोऽभ्यासः यावन्तो देवास्तान्वो युष्मानवसेऽवनाय पालनाय वयं हुवेम आह्वयामः । अभिष्टयेऽभिलषितफलाप्तये देवं-देवं हु-

xx xx x*

वेम । वाजसातयेऽन्नलाभाय देवं देवं हुवेम । अभ्यासे भूयांसमर्थं मन्यन्तऽइति [निरु॰ १०.४२.] यास्कः । कीदृशा वयम् देवया देवतायाथात्म्यानुसंधानपरया धिया बुद्ध्या गृणन्तः स्तुवन्तः यद्वा देव्या स्वरादिसौष्ठवेन दीप्यमानया धिया स्तुत्या गृणन्तः ॥ ११॥

दि॒वि पृ॒ष्टोऽअ॑रोचता॒ग्निर्वै॑श्वान॒रो बृ॒हन् ।

क्ष्म॒या वृ॒धान॒ ओज॑सा॒ चनो॑हितो॒ ज्योति॑षा बाधते॒ तमः॑ ॥ १२॥

मेधदृष्टा वैश्वानरी । योऽग्निः दिवि द्युलोके पृष्टः सिक्तः आदित्यात्मना स्थितः सन् अरोचत दीप्यते पृषु सेके निष्ठान्तः सेकः स्थितिरेव । कीदृशोऽग्निः वैश्वानरः विश्वेषां नराणां हितः । बृहन् महान् । किं च सोऽग्निः ज्योतिषा स्वप्रकाशेन तमः नैशं बाधते लोकानुग्रहायान्धकारं निवर्तयति । कीदृशः क्ष्मया वृधानः क्ष्मा पृथिवी तया तत्स्था मनुष्या उपलक्ष्यन्ते मञ्चाः क्रोशन्तीति वत् भूस्थैर्वर्णाश्रमिभिः नरैर्दत्तेन हविषा वर्धमानः अत एव ओजसो चनोहितः ओषधिपाकक्षमेण तेजसा चनसेऽन्नाय हितः चन इत्यन्ननाम [निरु॰ ६.१८.] अन्ननिष्पादक इत्यर्थः ॥ १२॥

इन्द्रा॑ग्नीऽअ॒पादि॒यं पूर्वागा॑त्प॒द्वती॑भ्यः ।

हि॒त्वी शिरो॑ जि॒ह्वया॒ वाव॑द॒च्चर॑त्त्रि॒ꣳशत्प॒दा न्य॑क्रमीत् ॥ १३॥

सुहोत्रदृष्टा इन्द्राग्निदेवत्या प्रवह्लिका । हे इन्द्राग्नी अपात् स्वयं पादरहितापि इयमुषाः पद्वतीभ्यः पादयुक्ताभ्यः सुप्ताभ्यः प्रजाभ्यः पूर्वा प्रथमभाविनी सती आ अगात् आगच्छति सा च तासां प्रजानां शिरो हित्वी निद्रात्याजनेन प्रेरयित्री यद्वा शिरो हित्वी हित्वा त्यक्त्वा स्वयमशिरस्का सती जिह्वया प्राणिनां वागिन्द्रियेन वावदत् यङ्लुगन्तं भृशं शब्दं कुर्वती सती चरत् चरति प्रसरति अडभावः । एवं चरन्ती उषाः एकदिनेन त्रिंशत्संख्यानि पदा पदानि गमनसाधनभूतान्मुहूर्तान् नि अक्रमीत् नितरां क्रमते अहोरात्रेण त्रिंशन्मुहूर्तान्क्रामतीत्यर्थः ॥ यद्वा वाक्पक्षेऽर्थः । इन्द्रः प्राणः अग्निः पुरुषः हे इन्द्राग्नी युवयोरेवैतत्कर्म यत् अपात् पादरहिता गद्यात्मिका त्रयीलक्षणेयं वाक् पूर्वा प्रथमभाविनी सती आ

अगात् पद्धतीभ्यः पादयुक्ताभ्यो रामायणभारतादिश्लोकात्मकवाल्मीकिव्यासादिवाणीभ्यः सकाशात् । वेदवाचः प्राथम्यं श्रुत्योक्तम् ततो ब्रह्मैव प्रथममसृज्यतेति । एवं प्रथमजाया वाचोऽविकृतत्वं निर्णीय मानुष्या वाचो विकृतत्वमाह हित्वी शिर इति शिर इति प्राधान्यादाख्यातपदमुच्यते अभ्याज गां दण्डेन शुक्लां गां दण्डेनाभ्याजेत्येवं लौकिक्या वाचः पदप्रयोगनियमाभावात् शिरः शिरःस्थानीयमाख्यातपदं हित्वा त्यक्त्वा जिह्वया विदुषी वागिन्द्रियेण वावदत् अतिवदन्ती सती चरति प्रकाशीभवति । एवं चरन्ती सा त्रिंशत्पदानि न्यक्रमीत् क्रमति अत्र पदशब्दोऽङ्गुलवचनः मूलाधारादारभ्य मुखपर्यन्तं त्रिंशदङ्गुलानि क्रामति । एवं वाग्विषयोऽर्थः ॥ १३ ॥

दे॒वासो॒ हि ष्मा॒ मन॑वे॒ सम॑न्यवो॒ विश्वे॑ सा॒कꣳ सरा॑तयः ।
ते नो॑ऽअ॒द्य ते॑ऽअ॒प॒रं तु॒चे तु नो॒ भव॑न्तु वरिवो॒विदः॑ ॥ १४ ॥

मनुदृष्टा वैश्वदेवी । हि स्म एतौ निपातौ प्रसिद्ध्यतिशयार्थौ छान्दसौ षत्वदीर्घौ ते प्रसिद्धा विश्वे देवासः अद्य वर्तमानकाले नोऽस्माकं साकं सहैव वरिवोविदः भवन्तु वरिवो धनं वेदयन्ति लम्भयन्ति वरिवोविदः एकीभूय धनप्रापका भवन्तु । तु पुनः अपरं भविष्यति काले नोऽस्माकं तुचे अपत्याय पुत्रपौत्रादिकाय ते वरिवोविदः भवन्तु तुगित्यपत्यनाम [निघ॰ २. २.] । कीदृशास्ते मनवे समन्यवः मनुनामकाय मुनये मन्त्रदर्शिने मह्यं समानो मन्युर्दीप्तिर्येषां ते मन्युर्मन्यतेर्दीप्तिकर्मण इति [निरु॰ १०. २९.] यास्कः मदर्थमैकमत्यं प्राप्ताः यद्वा मन्युना क्रोधेन सह वर्तमानाः अस्मच्छत्रुहननाय क्रोधयुक्ता इत्यर्थः । तथा सरातयः रातिर्दानं तत्सहिताः दातार इत्यर्थः ॥ १४ ॥

अपा॑धमद॒भिश॑स्तीरशस्ति॒हाथेन्द्रो॑ द्यु॒म्न्याभ॑वत् ।
दे॒वास्त॑ऽइन्द्र स॒ख्याय॑ येमिरे॒ बृह॑द्भानो॒ मरु॑द्गण ॥ १५ ॥

नृमेधदृष्टे द्वे मरुत्वद्गुणविशिष्टेन्द्रदेवत्ये । बृहन्तो महान्तो भानवो दीप्तयो यस्य स बृहद्भानुः मरुतां गणो यस्य स मरुद्गणः हे बृहद्भानो हे मरुद्गण हे इन्द्र देवाः वसुरुद्रादित्याः ते तव सख्याय मैत्रे येमिरे कथं नु नामेन्द्रोऽस्मान्सखिभा-

वाय वृणीतऽइत्यभिप्राया आत्मानं संयतं कृतवन्तऽइत्यर्थः (61.) स भवान् अभिशस्तीः अभिशापान् शत्रुप्रयुक्तानपवादान् अपाधमत् अपगमयति निवर्तयति धमतिर्गतिकर्मेति [निरु० ६. २.] यास्कः । अथ पश्चात् द्युम्नी अन्नवान् यशस्वी वा आ अभवत् सर्वतो धनवान्भवति । कीदृशो भवान् अशस्तिहा शंसनं शस्तिः प्रशंसा सा नास्ति येषां ते अशस्तयः निन्द्या असुरास्तान्हन्तीत्यशस्तिहा । इन्द्रः ऐश्वर्यवान् इन्दतीतीन्द्रः । यो दुष्टहन्ताभिशापनाशको यशस्वी तेजस्वी बहुभृत्यसेव्यस्तस्य सख्यायान्ये यतन्तऽइति युक्तमिति भावः ॥ १५॥

प्र व॒ इन्द्रा॑य बृह॒ते मरु॑तो॒ ब्रह्मा॑र्चत ।

वृ॒त्रꣳ ह॑नति वृ॒त्र॒हा श॒तक्र॑तु॒र्वज्रे॑ण श॒तप॑र्वणा ॥ १६॥

हे मरुतः वो युष्माकं स्वामिने इन्द्राय यूयं ब्रह्म वेदं सामरूपस्तोत्रं प्रर्चत प्रोच्चारयत । कीदृशायेन्द्राय बृहते महते । ततो वृत्रहा वृत्रस्यासुरस्य पाप्मनो वा हन्तेन्द्रो वृत्रं हनति हन्तु बहुलं छन्दसीति [पा० २. ४. ७३.] शपो लुगभावः केन वज्रेण स्वायुधेन कीदृशेन वज्रेण शतपर्वणा शतसंख्याकानि पर्वाणि धारा ग्रन्थयो वा यस्य स शतपर्वा तेन । कीदृशो वृत्रहा शतक्रतुः शतं क्रतवो यस्य बहुकर्मा बहुप्रज्ञो वा ॥ १६॥

अ॒स्येदिन्द्रो॑ वावृधे॒ वृष्ण्य॒ꣳ शवो॒ मदे॑ सु॒तस्य॒ विष्ण॑वि ।

अ॒द्या तम॑स्य महि॒मान॑मा॒यवो॑ऽनु॑ष्टुवन्ति पू॒र्वथा॑ ॥

इ॒मा उ॑ त्वा । यस्या॒यम् । अ॒यꣳ स॒हस्र॑म् । ऊ॒र्ध्व ऊ॒ षु णः॑ ॥ १७॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां त्रयस्त्रिंशोऽध्यायः ॥ ३३॥ ॥

मेधातिथिदृष्टा माहेन्द्री सतोबृहती । इन्द्रः अस्य इत् अस्यैव यजमानस्य वृष्ण्यं शवः च वावृधे वर्धयति णिजन्तत्वं बोध्यम् वर्षति सिञ्चति वृषा तस्येदं वृष्ण्यं वीर्यम् यप्रत्यये उपधालोपः शवः बलम् । क्व सति सुतस्याभिषुतस्य सोमस्य मदे सति कीदृशे मदे विष्णवि वेवेष्टि व्याप्नोति विष्णुस्तस्मिन् सर्वशरीरव्यापके सप्तम्येकवचने घेर्ङितीति [पा० ७. ३. १११.] गुणेऽवादेशः यद्वा विष्णवि

विष्णौ यज्ञेऽभिषुतस्येति सम्बन्धः यज्ञो वै विष्णुरिति श्रुतेः । सोमपानेन मत्त इन्द्रो यजमानस्य महात्म्यं बलं च वर्धयतीत्यर्थः । किं च अस्येन्द्रस्य तमुक्तं यज्वनो वीर्यादिवर्धनरूपं महिमानमद्यास्मिन्कालेऽपि आयवः मनुष्याः अनुष्टुवन्ति आनुपूर्व्येण स्तुवन्ति तत्र दृष्टान्तः पूर्वथा पूर्वमिव यथा पूर्वमृषयोऽस्तुवन्नेवमिदानीमपि नराः स्तुवन्तीत्यर्थः प्रत्नपूर्वविश्वेमाच्छन्दसीति [पा° ५.३.१११.] पूर्वशब्दादिवार्थे थाल्प्रत्ययः ॥ इमा उ त्वा यस्यायम् अयं सहस्रम् [३३.८१-८३.] ऊर्ध्व ऊ षु णः [११.४२.] एताः प्रतीकोक्ताः ॥ १७॥

श्रीमन्महीधरकृते वेददीपे मनोहरे । त्रयस्त्रिंशत्तमोऽध्यायो गतोऽयं सार्वमेधिकः ॥ ३३ ॥ ॥

अथ काण्वशाखायां पाठविशेषः ॥

I. ॥ १-१६ [सुमृ॒ली॒को] - १७ ॥ १-१७॥ ॥

II. ॥ १८-२९ ॥ १८-२९ ॥ ॥

III. ॥ ३० [य॒ज्ञप॑ता॒ऽअवि॑°] - ३२ [दै॒व्याँ॑ऽअध॑°] - ३४ [इ॒ला॑°] - ३९ [बला॑°] ४३ ॥ ३०-४३ ॥ ॥

IV. ॥ ४४-४७ [इ॒ला॑°] - ५४ ॥ ४४-५४ ॥ ॥

V. ॥ ५५-६१ [मृ॒लात] - ६३ [ग॒ऽइ॒ष्टौ] - ६८ [मृ॒लय॑°] - ६९ ॥ ५५-६९ ॥ ॥

VI. ॥ ७०-७७ [सु॒मृ॒ली॒का] - ८४ ॥ ७०-८४ ॥ ॥ षडनुवाकेषु चतुरशीतिः ॥ ॥

इति काण्वीयायां वाजसनेयसंहितायां द्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥

I. यज्जाग्र॑तो दू॒रमु॒दैति॒ दैवं॒ तदु॑ सु॒प्तस्य॒ तथै॒वैति॑ ।

दू॒र॒ङ्ग॒मं ज्योति॑षां॒ ज्योति॒रेकं॒ तन्मे॒ मनः॑ शि॒वस॑ङ्कल्पमस्तु ॥ १ ॥

अनारभ्याधीतोऽध्यायः आ पितृमेधात् आदित्ययाज्ञवल्क्यदृष्टा मन्त्राः पाठे (1.) विनियुक्ताः ॥ षडृचस्त्रिष्टुभो मनोदेवत्याः शिवसंकल्पदृष्टाः । ऋषिर्वदति । तन्मे मनः शिवसंकल्पमस्तु शिवः कल्याणकारी धर्मविषयः संकल्पो यस्य तत् तादृशं

भवतु मन्मनसि सदा धर्म एव भवतु न कदाचित्पापमित्यर्थः । तत्किम् यत् मनो जाग्रतः पुरुषस्य दूरमुदैति उद्गच्छति चक्षुराद्यपेक्षया मनो दूरगामीत्यर्थः । यच्च दैवं दीव्यति प्रकाशते देवो विज्ञानात्मा तत्र भवं दैवमात्मग्राहकमित्यर्थः मनसैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवमिति श्रुतेः । तत् उ यदः स्थाने तच्छब्दः उकारश्चार्थः । यच्च मनः सुप्तस्य पुंसः तथैव एति यथा गतं तथैव पुनरागच्छति स्वापकाले सुषुप्तावस्थायां पुनरागच्छति । यच्च दूरंगमं दूरं गच्छतीति दूरंगमम् खश्प्रत्ययः अतीतानागतवर्तमानविप्रकृष्टव्यवहितपदार्थानां ग्राहकमित्यर्थः । यच्च मनो ज्योतिषां प्रकाशकानां श्रोत्रादीन्द्रियाणामेकमेव ज्योतिः प्रकाशकं प्रवर्तकमित्यर्थः प्रवर्तितान्येव श्रोत्रादीन्द्रियाणि स्वविषये प्रवर्तन्ते । आत्मा मनसा संयुज्यते मन इन्द्रियेणेन्द्रियमर्थेनेति न्यायोक्तेर्मनःसम्बन्धमन्तरा तेषामप्रवृत्तेः । तादृशं मे मनः शान्तसंकल्पमस्तु ॥ १ ॥

येन॒ कर्मा॑ण्य॒पसो॑ मनी॒षिणो॑ य॒ज्ञे कृ॒ण्वन्ति॑ वि॒दथे॑षु॒ धीरा॑ः ।
यद॑पू॒र्वं य॒क्षम॒न्तः प्र॒जानां॒ तन्मे॒ मन॑ः शि॒वसं॑कल्पमस्तु ॥ २ ॥

मनीषिणः मेधाविनः यज्ञे येन मनसा सता (2.) कर्माणि कृण्वन्ति कुर्वन्ति कृ करणे स्वादिः मनःस्वास्थ्यं (3.) विना कर्माप्रवृत्तेः । केषु सत्सु विदथेषु ज्ञानेषु सत्सु विद्यन्ते ज्ञायन्ते तानि विदथानि तेषु वेत्तेरौणादिकोऽथप्रत्ययः प्रत्ययोदात्तत्वेन मध्योदात्तं पदम् प्रत्ययः परश्च आद्युदात्तश्चेति पाणिन्युक्तेः [पा॰ ३. १. १-३.] यज्ञसम्बन्धिनां हविरादिपदार्थानां ज्ञानेषु सत्स्वित्यर्थः । कीदृशा मनीषिणः अपसः अप इति कर्मनाम [निघ॰ २. १.] अपो विद्यते येषां ते अपस्विनः कर्मवन्तः अस्मायामेधास्रजो विनिरिति [पा॰ ५. २. १२१.] विन्प्रत्ययः विन्मतोर्लुगितीष्ठाभावेऽपि छान्दसो विनो लुक् [पा॰ ५. ३. ६५.] सदा कर्मनिष्ठा इत्यर्थः । तथा धीराः धीमन्तः धीर्विद्यते येषां ते धीराः कर्मण्यण् [पा॰ ३. २. १. (4.)] । यच्च मनः अपूर्वम् न विद्यते पूर्वमिन्द्रियं यस्मात्तदपूर्वम् इन्द्रियेभ्यः पूर्वं मनसः सृष्टेः यद्वा अपूर्वमनपरमवाह्यमित्युक्तेरपूर्वमात्मरूपमित्यर्थः । यच्च यक्षं यष्टुं शक्तं यक्षम् यजतेरौणादिकः सन्प्रत्ययः ञ्नित्यादिर्नित्यमिति [पा॰ ६. १. १९७.] आद्युदात्तं पदम् । यच्च

प्रज्ञायन्ते इति प्रज्ञास्तासां प्राणिमात्राणामन्तः शरीरमध्ये आस्ते इतरेन्द्रियाणि बहिःस्थानि मनस्त्वन्तरिन्द्रियमित्यर्थः । तत् तादृशं मे मनः शिवसंकल्पमस्त्विति व्याख्यातम् ॥ २॥

यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु ।

यस्मान्नऽऋते किं चन कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु ॥ ३॥

यत् मनः प्रज्ञानं विशेषेण ज्ञानजनकम् प्रकर्षेण ज्ञायते येन तत् प्रज्ञानम् करणाधिकरणयोश्चेति [पा॰ ३.३.११७.] करणे ल्युट्प्रत्ययः । उत अपि यत् मनः चेतः चेतयति सम्यक् ज्ञापयति तच्चेतः चिती संज्ञाने अस्मात् एयन्तादसुन्प्रत्ययः सामान्यविशेषज्ञानजनकमित्यर्थः । यच्च मनो धृतिर्धैर्यरूपम् मनस्येव धैर्योत्पत्तेर्मनसि धैर्यमुपचर्यते कार्यकारणयोरभेदात् । यच्च मनः प्रजासु जनेषु अन्तर्वर्तमानं सत् ज्योतिः प्रकाशकं सर्वेन्द्रियाणाम् उक्तमपि पुनरुच्यते आदरार्थम् अभ्यासे भूयांसमर्थं मन्यन्तऽइति [निरु॰ १०.४२.] यास्कोक्तेः । यच्चामृतममरणधर्मि आत्मरूपत्वात् । यस्मान्मनसः ऋते यन्मनो विना किं चन किमपि कर्म न क्रियते जनैः सर्वकर्मसु प्राणिनां मनः पूर्वं प्रवृत्तेर्मनःस्वास्थ्यं विना कर्माभावादित्यर्थः । अन्यारादितरर्ते इत्यादिना [पा॰ २.३.२९.] यस्मादिति ऋते-योगे पञ्चमी । तन्मे मन इति व्याख्यातम् ॥ ३॥

येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम् ।

येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसंकल्पमस्तु ॥ ४॥

येन मनसा इदं सर्वं परिगृहीतम् परितः सर्वतो ज्ञातम् । इदं किम् भूतम् भूतकालसम्बन्धि वस्तु । भुवनं भवतीति भुवनम् भवतेः क्युप्रत्ययः वर्तमानकालसम्बन्धि । भविष्यत् भविष्यतीति भविष्यत् लृटः सद्वेति [पा॰ ३.३.१४.] शतृप्रत्ययः तौ सदित्युक्तेः [पा॰ ३.२.१२७.] । त्रिकालसम्बद्धवस्तुषु मनः प्रवर्ततऽइत्यर्थः श्रोत्रादीनि तु प्रत्यक्षमेव गृह्णन्ति । कीदृशेन येन । अमृतेन शाश्वतेन मुक्तिपर्यन्तम् श्रोत्रादीनि नश्यन्ति मनस्त्वनश्वरमित्यर्थः । येन च मनसा यज्ञोऽग्निष्टोमादिः तायते विस्तार्यते तनोतेर्यकीति [पा॰ ६.४.४४.] आकारः । कीदृशो

यज्ञः सप्तहोता सप्त होतारो देवानामाह्वातारो होतृमैत्रावरुणादयो यत्र स सप्तहोता अग्निष्टोमे सप्त होतारो भवन्ति । तन्मे मनः इति व्याख्यातम् ॥ ४॥

यस्मिन्नृचः साम यजूꣳषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः ।
यस्मिꣳश्चित्तꣳ सर्वमोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥ ५॥

यस्मिन्मनसि ऋचः प्रतिष्ठिताः यस्मिन् साम सामानि प्रतिष्ठितानि यस्मिन्यजूंषि प्रतिष्ठितानि । मनसः स्वास्थ्ये एव वेदत्रयीस्फूर्तेर्मनसि शब्दमात्रस्य प्रतिष्ठितत्वम् अन्नमयं हि सोम्य मन इति छान्दोग्ये मनस एव स्वास्थ्ये वेदोच्चारणशक्तिः प्रतिपादिता । तत्र दृष्टान्तः रथनाभौ आराः-इव यथा आराः रथचक्रनाभौ मध्ये प्रतिष्ठितास्तद्वच्छब्दजालं मनसि । किं च प्रजानां सर्वं चित्तं ज्ञानम् सर्वपदार्थविषयि ज्ञानं यस्मिन्मनसि ओतं प्रोतं निक्षिप्तम् तन्तुसंततिः पटे-इव सर्वं ज्ञानं मनसि निहितम् मनःस्वास्थ्ये एव ज्ञानोत्पत्तिर्मनोवैयग्र्ये ज्ञानाभावः । तन्मे मम मनः शिवसंकल्पं शान्तव्यापारमस्तु ॥ ५॥

सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन-इव ।
हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसंकल्पमस्तु ॥ ६॥

यत् मनो मनुष्यान्नरान्नेनीयते अत्यर्थमितस्ततो नयति नयतेः क्रियासमभिहारे यङ् मनःप्रेरिता एव प्राणिनः प्रवर्तन्ते मनुष्यग्रहणं प्राणिमात्रोपलक्षणकम् । तत्र दृष्टान्तः सुषारथिः अश्वानिव शोभनः सारथिर्यन्ता यथा कशया अश्वान्नेनीयते । द्वितीयो दृष्टान्तः अभीशुभिर्वाजिन इव यथा सुसारथिरभीशुभिः प्रग्रहैः वाजिनोऽश्वान्नेनीयतऽइत्यनुषङ्गः रश्मिभिर्नियच्छतीत्यर्थः । उपमाद्वयम् प्रथमायां नयनं द्वितीयायां नियमनम् तथा मनः प्रवर्तयति नियच्छति च नरानित्यर्थः । यच्च मनः हृत्प्रतिष्ठं हृदि प्रतिष्ठा स्थितिर्यस्य तत् हृद्येव मन उपलभ्यते । यच्च मनः अजिरं जरारहितम् बाल्ययौवनस्थाविरेषु मनसस्तदवस्थत्वात् । यच्च जविष्ठम् अतिजववद्वेगवत् जविष्ठम् न वै वातात्किं चनाशीयोऽस्ति न मनसः किं चनाशीयोऽस्तीति श्रुतेः । तन्मऽइत्युक्तम् ॥ ६॥

पितुं नु स्तोषं महो धर्माणं तविषीम् ।
यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ॥७॥

उष्णिक् अन्नस्तुतिः । तं पितुमन्नं स्तोषं स्तौमि किम्भूतम् महो महसः तविषीं तविष्याः बलस्य धर्माणं धारयितारम् तविषीति [निघ° २.९.] बलनाम विभक्तिव्यत्ययः अन्नेनैवं बलोत्पत्तेः । तं कम् यस्य पितोरोजसा बलेन त्रितः त्रिस्थान इन्द्रः वृत्रं दैत्यं विपर्वं विगतसम्बन्धनं कृत्वा वि अर्दयत् विविधमर्दितवान् इन्द्रेण वृत्रोऽन्नबलेनैव हत इत्यर्थः ॥ स्तोषं स्तौतेर्मिपि इतश्च लोपः परस्मैपदेष्विति [पा° ३.४.९७.] इकारलोपे लेटोऽडाटाविति [पा° ३.४.९४.] अडागमे सिब्बहुलं लेटीति [पा° ३.१.३४.] सिप्प्रत्यये गुणे च रूपम् । महः महच्छब्दस्य ङसि छान्दसष्टिलोपः । धर्माणम् धरतेर्मन् । विपर्वम् विगतानि पर्वाणि यस्य तम् उप्रत्यये टिलोपः । अर्दयत् बहुलं छन्दस्यमाङ्योगेऽपीति [पा° ६.४.७५] अडभावः । व्यवहिताश्चेति [पा° १.४.८२.] वेरुपसर्गस्य व्यवधानम् ॥७॥

अन्विदनुमते त्वं मन्यासै शं च नस्कृधि ।
क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषः ॥८॥

चतस्रोऽनुष्टुभः द्वयोरनुमतिर्देवता । इत् निपातोऽनर्थकः हे अनुमते त्वमनुमन्यासै अनुमन्यस्वास्मदुक्तं बुध्यस्व नोऽस्माकं शं च शमेव सुखमेव कृधि कुरु । च पुनः नोऽस्माकं क्रत्वे क्रतवे संकल्पाय दक्षाय तत्समृद्ध्ये संकल्पसिद्ध्ये च नोऽस्मान्हिनु गमय नोऽस्माकमायूंषि प्रतारिषः प्रतारय वर्धय । लेटोऽडाटाविति [पा° ३.४.९४.] आट् वैतोऽन्यत्रेति [पा° ३.४.९६.] ऐकारः । कृधि श्रुशृणुपृकृवृभ्यश्छन्दसी ति [पा° ६.४.१०२.] हेर्धिः बहुलं छन्दसीति [पा° २.४.७३.] शपो लुक् । क्रत्वे गुणाभावे यणादेशः । तारिषः सिब्बहुलं छन्दसि णिद्वक्तव्य इति [पा° ३.२.३४. वा° ३.] वृद्धिः अन्यत्पूर्ववत् प्रपूर्वस्तरतिर्वृद्ध्यर्थः ॥८॥

अनु नोऽद्यानुमतिर्यज्ञं देवेषु मन्यताम् ।
अग्निश्च हव्यवाहनो भवतं दाशुषे मयः ॥९॥

अनुमतिः अद्य नोऽस्माकं यज्ञं देवेषु यज्ञियेषु अनुमन्यताम् अग्निश्च यज्ञं देवेषु अनुमन्यताम् किम्भूतोऽग्निः हव्यवाहनः हविषो वोढा । किं च दाशुषे हवींषि दत्तवते यजमानाय मयः सुखरूपौ अनुमत्यग्नी भवतं भवतामिति पुरुषव्यत्ययः । हव्यं वहतीति हव्यवाहनः हव्येऽनन्तःपादमिति [पा° ३.२.६६.] वहेर्ण्युट् । दाशुषे दाश्वान्साह्वानिति [पा° ६.१.१२.] साधुः ॥ ९ ॥

सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।
जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥ १० ॥

सिनीवाली देवता । हे सिनीवालि हे पृथुष्टुके स्तुकं केशभारः स्तुतिः कामो वा हे पृथुकेशभारे महास्तुते वा पृथुकामे वा या त्वं देवानां स्वसा असि भगिनी भवसि सा त्वमाहुतं हव्यं जुषस्व प्रीत्या गृह्णीष्व हे देवि नोऽस्मभ्यं प्रजां च दिदिड्ढि (5.) दिश देहि बहुलं छन्दसीति [पा° २.४.७६.] दिशतेः शपः श्लुः ततो द्वित्वादि ॥ १० ॥

II. पञ्च नद्यः सरस्वतीमपियन्ति सस्रोतसः ।
सरस्वती तु पञ्चधा सो देशेऽभवत्सरित् ॥ ११ ॥

सरस्वतीनदीदेवत्या । याः दृषद्वत्याद्याः पञ्च नद्यः सरस्वतीमपियन्ति गच्छन्ति किम्भूताः सस्रोतसः समानं स्रोतः प्रवाहो यासां ताः । तुरवधारणे सा उ (6.) सैव सरस्वत्येव पञ्चधा देशे सरिन्नदी अभवत् पञ्चापि स्वनामानि त्यक्त्वा सरस्वत्येवाभवत् ॥ ११ ॥

त्वमग्ने प्रथमोऽअङ्गिरा ऋषिर्देवो देवानामभवः शिवः सखा ।
तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः ॥ १२ ॥

चतस्र आग्नेय्यः द्वे जगत्यौ अन्ये त्रिष्टुबनुष्टुभौ । हे अग्ने त्वं देवानां प्रथमः सखा अभवः भूतोऽसि आद्यो मित्रभूतो देवानां त्वमेवेत्यर्थः । किम्भूतस्त्वम् अङ्गिराः अङ्गानां रसः यद्वा अङ्गिभ्य आत्मभ्यो यजमानेभ्यो राति सुखमित्यङ्गिराः । ऋषिर्द्रष्टा । देवो द्योतमानः । शिवः कल्याणः । किं च तव व्रते कर्मणि वर्त-

माने मरुतः ईदृशा अजायन्त । कीदृशाः कवयः क्रान्तदर्शिनः । विद्मनापसः अप इति कर्मनाम [निघ° २.१.] विद्मना विदितानि अपांसि कर्माणि यैस्ते विद्मनापसः विदितकर्माणः । भ्राजदृष्टयः भ्राजन्त्यः शोभमानाः ऋष्टयः आयुधानि येषां ते तथा शत्रुघातकत्वात् । विद्मनेति वेत्तेः कर्मणि मनिन्प्रत्ययः बहुलग्रहणात् ततो विभक्तेराकारः तस्य चालुक् विद्मनापसः । अजायन्त जनेर्लङ् जादेशश्च श्यन् ॥१२॥

त्वं नो॑ऽअग्ने तव॑ देव पा॒युभि॑र्म॒घोनो॑ रक्ष त॒न्व॑श्च वन्द्य ।

त्रा॒ता तो॒कस्य॒ तन॑ये॒ गवा॑म॒स्यनि॑मेष॒ꣳ रक्ष॑माण॒स्तव॑ व्र॒ते ॥१३॥

रक्षणार्थो मन्त्रः । हे अग्ने हे देव द्योतमान हे वन्द्य स्तुत्य तव व्रते कर्मणि वर्तमानान्मघोनो धनवतो यजमानान्रक्ष पालय । नोऽस्माकं तन्वः शरीराणि च रक्ष । कैः तव पायुभिः त्वदीयैः पालनैः यतस्त्वमनिमेषं सावधानं रक्षमाणः पालयन्सन् तोकस्य पुत्रस्य तनये विभक्तिव्यत्ययः तनयस्य पौत्रस्य गवां च त्राता रक्षकोऽसि ॥१३॥

उ॒त्ता॒नाया॒मव॑भरा चिकि॒त्वान्त्स॒द्यः प्रवी॑ता॒ वृष॑णं जजान ।

अ॒रु॒षस्तू॑पो॒ रुश॑दस्य॒ पाज॒ इडा॑यास्पु॒त्रो व॒युने॑ऽजनिष्ट ॥१४॥

यः इडायाः पृथिव्याः पुत्रोऽग्निर्वयुने प्रज्ञाने कर्तव्ये अजनिष्ट जातः । किम्भूतः अरुषस्तूपः रुष वधे रोषति रुषः अरुषोऽहिंसकः स्तूपो ज्वालोच्छ्रायो यस्य स तथा ष्टुप उच्छ्राये । अस्याग्नेः रुशत् दीप्तं पाजः बलमुत्तानायामरण्यामवभर अवाचीनं हर द्व्यचोऽतस्तिङ इति [पा° ६.३.१३५.] दीर्घः । चिकित्वान् अरणिबलं जानन् किं बलमिति चेत् यारणिः प्रवीता कामिता सती वृषणं सेक्तारमग्निं सद्यः तत्कालं जजान जनयति छन्दसि लुङ्लङ्लिट इति [पा° ३.४.६.] लिट् । सो ऽग्निर्जात इत्यर्थः ॥१४॥

इडा॑यास्त्वा प॒दे व॒यं नाभा॑ पृथि॒व्या अधि॑ ।

जात॑वेदो॒ नि धी॑मह्य॒ग्निं ह॒व्याय॒ वोढ॑वे ॥१५॥

हे जातवेदः जातप्रज्ञान हे अग्ने इडायाः पृथिव्याः स्थाने देवयजनाख्ये पृथिव्या नाभा अधि उत्तरवेद्या मध्ये वयं त्वा त्वां निधीमहि स्थापयामः किमर्थम् हव्याय वोढवे हव्यं वोढुम् विभक्तिव्यत्ययः वहतेस्तुमर्थे सेसेनिति [पा° ३.४.९.] तवेप्रत्ययः सहिवहोरिति [पा° ६.३.११२.] ओकारः ॥ १५ ॥

प्र॑म॑न्महे॒ शव॒सा॒नाय॑ शू॒षमा॑ङ्गू॒षं॒ गिर्व॑णसेऽअङ्गि॒र॒स्वत् ।
सु॒वृ॒क्तिभिः॑ स्तुव॒त॒ऽऋ॒ग्मि॒यायार्चा॑मा॒र्कं नरे॒ विश्रु॑ताय ॥ १६ ॥

चतस्र ऐन्द्यस्त्रिष्टुभः । वयमिन्द्राय इन्द्रार्थमाङ्गूषं स्तोमं त्रिवृदादिकं प्रमन्महे जानीमः किम्भूतं स्तोमम् शूषं बलहेतुम् । अर्कं मन्त्रं च अर्चाम उच्चारयाम धातूनामनेकार्थत्वादर्चतिरुच्चारणार्थः अङ्गिरस्वत् अङ्गिरस-इव तैर्यथा स्तोमो ज्ञातो मन्त्रश्च पठितस्तस्मै तद्वत् । किम्भूतायेन्द्राय शवसानाय शवो बलमात्मन इच्छति शवस्यति शवस्यतीति शवसानः तस्मै बलमभिलषमाणाय सुप आत्मनः क्यजिति [पा° ३.१.८.] क्यच् तदन्ताच्छानच् शप् बहुलं छन्दसीति [पा° २.४.७२.] तस्य लुक् छन्दस्युभयथेति [पा° ३.४.११७.] तस्य शानचोऽप्यार्धधातुकत्वात् क्यस्य विभाषेति [पा° ६.४.५०.] क्यचो लोपः शवसान इति सिध्यति । पुनः कीदृशाय गिर्वणसे गिरा स्तुत्या वनयति सम्भाजयति आत्मानमभिलषितदानात्स्तोतृभ्य इति गिर्वणाः गीःशब्दोपपदाद्वनोतेर्ण्यन्तादसुनि वनेर्घटादित्वेन मित्संज्ञत्वात् [पा° ६.४.९२.] ह्रस्वत्वम् णिचो लोपः गीर्वणा इति प्राप्ते दीर्घाभावश्छान्दसः यद्वा स्वार्थे णिच् गीर्भिरेनं देवा भजन्ति इति गिर्वणाः तस्मै गीर्वाणशशब्देन (7.) समानार्थो गिर्वणाःशब्दः । पुनः किम्भूताय सुवृक्तिभिः शोभनाभिः स्तुतिभिः स्तुवते स्तौतीति स्तुवन् तस्मै यजमानानिति शेषः तदुक्तम् त्वमङ्ग प्रशंसिषो देवः शविष्ठ मर्त्यमिति [६.३७.] । पुनः कीदृशाय ऋग्मियाय ऋग्मयाय वेदमयाय मयडर्थे छान्दसो मियट् यद्वा ऋच स्तुतावित्यस्माद्भावे औणादिको मक् कुत्वं जश्त्वम् ऋग्मः स्तुतिः तमर्हति ऋग्मियः अर्हार्थे घच् स्तुतियोग्याय । पुनः कीदृशाय नरे नररूपाय नृशब्दस्य ङे परे छान्दसो गुणः । पुनः कीदृशाय विश्रुताय शौर्यदानबलादिभिर्लब्धख्यातये ॥ १६ ॥

प्र वो मुहे महि नमो भरध्वमाङ्गूष्य७ शवसानाय साम ।
येना नः पूर्वे पितरः पदज्ञा अर्चन्तोऽअङ्गिरसो गा अविन्दन् ॥ १७॥

महे महते शवसानाय बलमभिलषमाणायेन्द्राय महि महत् नमोऽन्नं वः यूयं प्रभरध्वं प्रहरतम् समर्पयत यूयमित्यर्थे व इत्यव्ययम् मुनीनां पुत्रादीन्प्रति वचः । आङ्गूष्यमाङ्गूषाय हितं साम प्रभरध्वमुच्चारयत । नोऽस्माकं पूर्वे पितरः अङ्गिरसः येनान्नेन साम्ना चार्चन्तः स्तुवन्तः सन्तः गाः सूर्यकिरणानविन्दन् लेभिरे स हि साम्नां लोकः तत्साम प्रभरध्वम् । कीदृशाः अङ्गिरसः पदज्ञाः पदमात्मस्वरूपं जानन्तीति पदज्ञाः ॥ १७॥

इच्छन्ति त्वा सोम्यासः सखायः सुन्वन्ति सोमं दधति प्रयांसि ।
तितिक्षन्तेऽअभिशस्तिं जनानामिन्द्र त्वदा कश्चन हि प्रकेतः ॥ १८॥

हे इन्द्र त्वत् त्वत्तः सकाशात् कश्चन चनशब्दोऽप्यर्थे कोऽपि लोकोत्तरः प्रकेतः प्रकृष्टो ज्ञानविशेषः आ समन्तात् हि यतो भवति अतः सखायो विप्राः त्वामिच्छन्ति अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवा इत्युक्तेर्देवानां विप्राणां च सखित्वम् । किम्भूताः सखायः सोम्यासः सोमसम्पादिनः । इच्छन्तीति कथं ज्ञातं तत्राह यतस्ते सोमं सुन्वन्ति अभिषुण्वन्ति प्रयांसि अन्नानि दधति च प्रय इत्यन्ननाम [निघ॰ २. ७.] हवींषि धारयन्ति । किं च जनानामभिशस्तिं दुर्वचनं तितिक्षन्ते सहन्ते मनोवाक्कायसंयताः क्षान्तिपरा इत्यर्थः ॥ १८॥

न ते दूरे परमा चिद्रजांस्या तु प्रयाहि हरिवो हरिभ्याम् ।
स्थिराय वृष्णे सवना कृतेमा युक्ता ग्रावाणः समिधानेऽअग्नौ ॥ १९॥

हे हरिवः हरी अश्वौ विद्येते यस्य स हरिवान् तस्य सम्बोधनम् मतुवसोरिति [पा॰ ८. ३. १.] रुत्वम् हे हरिवः स्थिराय दृढसौहृदाय वृष्णे सेक्त्रे तुभ्यम् इमा सवना कृता इमानि सवनानि प्रातःसवनादीनि कृतानि । क्व सति अग्नौ समिधाने समिध्यमाने सति छान्दसो यको लुक् । ग्रावाणः च युक्ताः योजिताः अभिषवकर्मणि । तुशब्दो हेत्वर्थे अतो हेतोः हरिभ्यामश्वाभ्यामा प्रयाहि आगच्छ ।

ननु स्वर्गात्कथमतिदूरे मया गन्तव्यमित्यत आह परमा परमाणि दूरदेशस्थानि रजांसि स्थानानि ते तव दूरे न चित् दूरे न सन्ति चित्शब्दोऽप्यर्थे (8.) अतिदूरमपि ते निकटम् अत आयाहीत्यर्थः ॥१९॥

अषाढं युत्सु पृतनासु पप्रिं स्वर्षामप्सां वृजनस्य गोपाम् ।
भरेषुजां सुक्षितिं सुश्रवसं जयन्तं त्वामनु मदेम सोम ॥२०॥

चतस्रः सोमदेवत्यास्त्रिष्टुभः । हे सोम त्वां जयन्तमुत्कर्षेण वर्तमानमनु (9.) वयं मदेम हृष्टाः स्याम । किम्भूतं त्वां युत्सु युद्धेषु अषाढमसहनमनभिभूतम् । पुनः कीदृशं पृतनासु सेनासु पप्रिं पालयितारम् । स्वर्षाम् स्वर्दिवं सनोति सम्भजते स स्वर्षाः तम् । अप्साम् अपो जलानि सनोतीत्यप्साः तम् । वृजनस्य बलस्य गोपां रक्षकम् । भरेषुजां संग्रामेषु जेतारम् । सुक्षितिं सुनिवासम् । सुश्रवसं शोभनं श्रवः कीर्तिर्यस्य स सुश्रवाः तम् ॥ अषाढम् सह्यतेऽसौ साढः न साढः असाढस्तम् सहेः क्तः ढत्वं [पा॰ ८.२.३१.] धत्वं [पा॰ ८.२.४०.] ष्टुत्वम् [पा॰ ८.४.४१.] ढो ढे लोपः [पा॰ ८.३.१३.] ढ्रलोपे पूर्वस्य दीर्घोऽणः [पा॰ ६.३.१११.] बाहुलकात् सहिवहोरोदवर्णस्येति [पा॰ ६.३.११२.] अस्याप्रवृत्तिः षत्वं छान्दसम् । पप्रिम् पृ पालनपूरणयोः आदृगमहनेति [पा॰ ३.२.१७१.] किः द्वित्वादि । स्वर्षाम् स्वःपूर्वात्सनोतेर्विट् विड्वनोरनुनासिकस्यात् [पा॰ ६.४.४१.] । एवमप्साम् । गोपायतीति गोपाः क्विप् अतो लोपः यलोपः । भरेषुजाम् भरेषु संग्रामेषु जयति शत्रूनिति भरेषुजाः हलदन्तात्सप्तम्या इति [पा॰ ६.३.९.] अलुक् जयतेरौणादिको डाप्रत्ययः । मदेम मदी हर्षे लिङ् व्यत्ययेन शप् ॥२०॥

III. सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति ।
सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै ॥२१॥

यो यजमानोऽस्मै सोमाय ददाशत् ददाति हविः तस्मै सोमो धेनुं ददाति । आशुं शीघ्रमर्वन्तमश्वं च सोमो ददाति । सोमश्च तस्मै वीरं पुत्रं ददाति कीदृशं वीरं कर्मण्यं कर्मणि साधुम् । सादन्यं सदने गृहे साधुम् । विदथ्यं विदथो यज्ञस्तत्र साधुम् । सभेयं सभामर्हति सभेयस्तम् । पितृश्रवणं पितरं शृणोति पितृश्रव-

णः पित्राज्ञाकारिणं विनीतमित्यर्थः ॥ कर्मण्यमित्यादौ तत्र साधुरिति [पा° ४.४.९८.] यत् । सभेयं ऽछन्दसीति [पा° ४.४.१०६.] सभायाः साधर्थे ऽप्रत्ययः तस्येयादेशः [पा° ७.१.२.] । ददाशत् दाशृ दाने बहुलं छन्दसीति [पा° २.४.७६.] शपः श्लुः द्वित्वम् इतश्च लोपः परस्मैपदेष्विति [पा° ३.४.९७.] तिप इलोपः लेटो ऽडाटावित्यडागमः [पा° ३.४.९४.] ॥ २१ ॥

त्वमिमा ओषधीः सोम विश्वास्त्वमपो ऽअजनयस्त्वं गाः ।
त्वमाततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥ २२ ॥

हे सोम त्वमिमाः विश्वाः सर्वाः ओषधीः अपो जलानि गाः (10.) धेनूः अजनयः जनितवानसि । त्वमुरु विस्तीर्णमन्तरिक्षमाततन्थ विस्तारितवानसि त्वं च ज्योतिषा तेजसा तमोऽन्धकारं विववर्थ विवृणोषि आदित्यात्मना सर्वं तमो ऽपनयसीति सर्वात्मा त्वमित्यर्थः बभूथाततन्थ जगृम्भ ववर्थेति निगमऽइति [पा° ७.२.६४.] निपातः ॥ २२ ॥

देवेन नो मनसा देव सोम रायो भागꣳ सहसावन्नभियुध्य ।
मा त्वातनदीशिषे वीर्यस्योभयेभ्यः प्रचिकित्सा गविष्टौ ॥ २३ ॥

हे देव सोम हे सहसावन् बलवन् देवेन मनसा देवसम्बन्धिना मनसा सह रायो धनस्य भागं नोऽस्मभ्यमभियुध्य युध्यतिर्गतिकर्मा अन्तर्भावितण्यर्थः अभिगमय देहीत्यर्थः । एवं दानप्रवृत्तं त्वां कश्चित् मा आतनत् त्वा त्वां मा आतनोतु मा प्रतिबध्नातु तनोतिः प्रतिबन्धार्थः । कुतस्त्वमेव मुच्यसऽइति चेत् यतस्त्वं वीर्यस्य ईशिषे वीरकर्मण ईश्वरो भवसि अधीगर्थदयेशामिति [पा° २.३.५२.] कर्मणि षष्ठी । किं च गविष्टौ गोः स्वर्गस्य इष्टौ इच्छायां स्वर्गैषणायां विषयभूतायां सत्यामुभयेभ्यः प्रचिकित्स उभयलोकप्राप्त्यर्थं चिकित्सां कुरु व्याध्यपगमं कुरु उभयलोकप्रतिबन्धकं विघ्नं निवर्तयेत्यर्थः । दैवं मनः प्राप्य लब्धधना अरोगाश्च सत्कर्म कुर्वाणा यथा स्वर्गं यास्यामस्तथा कुर्विति वाक्यार्थः ॥ देवेन देवानामिदं देवम् तद्धितप्रत्ययलोपः । सहसावन् प्रथमार्थे तृतीया सहसा सहो बलमस्यास्तीति सहसावान् अलुक् । तनत् तनोतेः परस्य लेटोऽडागम इलो-

पश्च । चिकित्स गुप्तिज्किद्भ्यः सन् [पा° ३. १. ५.] अन्येषामपि दृश्यतऽइति [पा° ६. ३. १३७.] दीर्घः ॥ २३ ॥

अष्टौ व्यख्यत्ककुभः पृथिव्यास्त्री धन्व योजना सप्त सिन्धून् ।
हिरण्याक्षः सविता देव आगाद्दधद्रत्ना दाशुषे वार्याणि ॥ २४ ॥

चतस्रः सावित्र्यः द्वितीया जगती त्रिष्टुभोऽन्याः हिरण्यस्तूपदृष्टाः । स सविता देवः आगात् आगच्छतु इणो गा लुङीति [पा° २. ४. ४५.] इणो गादेशः । किं कुर्वन् दाशुषे हवींषि दत्तवते यजमानाय वार्याणि वरणीयानि रत्ना रत्नानि दधत् ददत् स्थापयन्वा । कीदृशः हिरण्याक्षः हिरण्यमिव कान्तियुक्ते अक्षिणी यस्य स हिरण्याक्षः अमृतदृष्टिर्वा । स कः यः सविता पृथिव्याः सम्बन्धिनीः अष्टौ ककुभो दिशः व्यख्यत् प्रकाशितवान् । यश्च त्री त्रीणि धन्व धन्वानि लोकान् व्यख्यत् । धन्वेत्यन्तरिक्षनाम [निघ° १. ३.] तेन तदुपलक्षिताविवितरावपि लोकौ लक्ष्येते छत्रिणो गच्छन्तीति वत् । यश्च योजना योजनानि योजनगव्यूतिक्रोशादीनध्वपरिमाणविशेषान् व्यख्यत् । यश्च सप्त सिन्धून्समुद्रान्क्षीरोदाद्यान् व्यख्यत् । उपलक्षणमेतत् सर्वजगत्प्रकाशकः सविता रत्नानि ददान आयात्वित्यर्थः ॥ अख्यत् ख्या प्रकथने अस्यतिवक्तिख्यातिभ्योऽङिति [पा° ३. १. ५२.] च्लेरङ् आलोपश्च धातूनामनेकार्थत्वादत्र प्रकाशनार्थो ग्राह्यः । त्री योजना सुपां सुलुगित्यादिना [पा° ७. १. ३९.] पूर्वसवर्णदीर्घो विभक्तेः । धन्व सुपो लुक् । रत्ना सुप आकारः । दाशुषो दाश्वान्साह्वानिति [पा° ६. १. १२.] निपातः । वार्याणि ऋहलोर्ण्यदिति [पा° ३. १. १२४.] वृणोतेर्ण्यत् ॥ २४ ॥

हिरण्यपाणिः सविता विचर्षणिरुभे द्यावापृथिवीऽअन्तरीयते ।
अपामीवां बाधते वेति सूर्यमभि कृष्णेन रजसा द्यामृणोति ॥ २५ ॥

सविता प्रसविता सूर्यं सूर्यः विभक्तिव्यत्ययः उभे उभयोः द्यावापृथिवी द्यावापृथिव्योः अन्तर्मध्ये ईयते आगच्छति यदा तदा अमीवां व्याधिमपबाधते अन्धकारलक्षणरोगं निवर्तयति । अथ यदा वेति अस्तमयसमये गच्छति तदा कृष्णेन रजसा अन्धकारलक्षणेन द्यां द्युलोकमभि-ऋणोति अभिव्याप्नोति । कीदृशः सूर्यः हि-

रण्यपाणिः सुवर्णपाणिः । विचर्षणिः विविधं द्रष्टा कृताकृतप्रत्यवेक्षकः । उभे द्यावापृथिवी षष्ठ्यर्थे द्वितीया । अन्तर्योगे वा । ईयते ईङ् गतौ दिवादिः ॥२५॥

हिरण्यहस्तोऽअसुरः सुनीथः सुमृडीकः स्ववाँ यात्वर्वाङ् ।
अपसेधन्रक्षसो यातुधानानस्थाद्देवः प्रतिदोषं गृणानः ॥२६॥

यो देवो रविः रक्षसो राक्षसान् यातुधानान् असुखकारांश्च अपसेधन् अपगमयन्सन् अस्थात् उदस्थात् उदेति स देवः अर्वाङ् अर्वागच्छन् अस्मदभिमुखः यातु आयात्वित्यर्थः । कीदृशो देवः हिरण्यहस्तः हिरण्यं दानार्थं हस्ते यस्य स तथोक्तः रूपेण वा स्तुतिः । असुरः असून्प्राणान्राति ददातीत्यसुरः । सुनीथः नीथा स्तुतिः कल्याणस्तुतिः । सुमृडीकः साधु सुखयिता । स्ववान्धनवान् । प्रतिदोषम् प्रतिजनं यो दोषः प्रतिदोषः तम् श्रुतिस्मृतिविहितधर्मपराङ्मुखानां यावन्तो दोषास्तावतः गृणानः उच्चारयन् उपभोगार्थमित्यभिप्रायः । स्ववान् यातु इत्यत्र दीर्घादटि समानपादऽइति [पा° ८.३.९.] नस्य रुत्वे भोभगोऽ[अघोऽ]अपूर्वस्य योऽशीति [पा° ८.३.१७.] तस्य रोर्यादेशे हलि सर्वेषामिति [पा° ८.३.२२.] तस्य लोपः । रक्षस्शब्दस्य व्यत्ययेनाक्लीवत्वम् ॥२६॥

ये ते पन्थाः सवितः पूर्व्यासोऽरेणवः सुकृता अन्तरिक्षे ।
तेभिर्नोऽअद्य पथिभिः सुगेभी रक्षा च नोऽअधि च ब्रूहि देव ॥२७॥

हे सवितः हे देव पन्थाः पन्थानो मार्गाः अन्तरिक्षे सुकृताः साधुकृताः धात्रा वर्तन्ते । कीदृशास्ते पूर्व्यासः पूर्वेषु कालेषु भवाः पूर्व्याः । अरेणवः नास्ति रेणुर्यत्र अपांसुलाः । तेभिः तैः पथिभिः मार्गैः नोऽस्मान् अद्य नयेति शेषः । च पुनः गच्छतो नोऽस्मान् रक्ष पालय । अधिब्रूहि च अधि अङ्गीकृत्य ब्रूहि एते मदीया इति यद्वा अधिब्रूहि उपदिशास्माकं यद्धितं पथ्यं तत् यद्वा अधि अधिकान्वद एते महायाज्ञिका दातार इत्यादि । किम्भूतैः पथिभिः सुगेभिः सुगैः सुखेन गम्यते येषु सुगाः तैः अन्नपानप्रभूतैरित्यर्थः अधिकरणे गच्छतेर्डप्रत्ययः ॥ पूर्व्यासः पूर्वैः कृताः पूर्वैः कृतमिनियौ चेति [पा° ४.४.१३३.] यप्रत्ययः ॥२७॥

zzzz

उभा पिबतमश्विनोभा नः शर्म यच्छतम् । अविद्रियाभिरूतिभिः ॥ २८ ॥

आश्विन्यस्तिस्रः एका गायत्री द्वे अनुष्टुभौ । हे [अश्विना] अश्विनौ उभा उभौ द्वावपि युवां पिबतम् सोममिति शेषः । उभा द्वौ युवां नोऽस्मभ्यं शर्म शरणं सुखं वा यच्छतम् काभिः सह अविद्रियाभिः अविदीर्णाभिः अखण्डिताभिः ऊतिभिः अवनैः पालनैः सह । सुखं दत्तं पालयतं चेत्यर्थः ॥ उभा अश्विना विभक्तेराकारः । विदीर्यन्तीति विद्रियाः दृ विदारे औणादिक इयक्प्रत्ययः ॥ २८ ॥

अप्नस्वतीमश्विना वाचमस्मे कृतं नो दस्रा वृषणा मनीषाम् ।
अद्यूत्येऽवसे निह्वये वां वृधे च नो भवतं वाजसातौ ॥ २९ ॥

हे अश्विना अश्विनौ हे दस्रा दर्शनीयौ हे वृषणा वर्षितारौ सेक्तारौ युवानौ अस्मे अस्माकं वाचम् अप्नस्वतीं कर्मवतीं युवां कृतं कुरुतम् तथा नोऽस्माकं मनीषां मनस इच्छामप्नस्वतीमेव कुरुतम् । मनसा वचसा च यज्ञं कुर्मस्तथा कुरुतमित्यर्थः । यतो ह वां युवां निह्वये आह्वयामि किंनिमित्तम् अद्यूत्ये सन्मार्गागते अवसे अन्ने अन्ननिमित्तम् तद्दानार्थमित्यर्थः द्यूतादागतं द्यूते भवं वा द्यूत्यम् न द्यूत्यमद्यूत्यम् तस्मिन् द्यूतादागतं कर्मण्यं न भवतीत्येवमुच्यते द्यूतमन्येषामप्यन्याय्यधनागमानामुपलक्षकम् । किं च वाजसातौ वाजानामन्नानां सातिः सम्भजनं यस्मिन् स वाजसातिः तस्मिन्यज्ञे नोऽस्माकं वृधे वृद्ध्यै भवतम् ॥ अस्मे विभक्तेः शे-आदेशः । कृतम् करोतेः बहुलं छन्दसीति [पा॰ २.४.७३.] शपि लुप्ते लोण्मध्यमद्विवचने रूपम् । वृषणा वृषणौ वा षपूर्वस्य निगमऽइति [पा॰ ६.४.९.] उपधादीर्घाभावः । वृधे वर्धनं वृतु सम्पदादित्वाद्भावे क्विप् ॥ २९ ॥

द्युभिरक्तुभिः परि पातमस्मानरिष्टेभिरश्विना सौभगेभिः ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवीऽउत द्यौः ॥ ३० ॥

हे अश्विना अश्विनौ द्युभिः दिवसैः अक्तुभिः रात्रिभिः सतम्यर्थे तृतीया दिवसेषु रात्रिषु च अहोरात्रम् अस्मान्परिपातं सर्वतो रक्षतम् । कैः सौभगेभिः सौभगैः भग इति धननाम [निघ॰ २.१०.] शोभनैः धनैः किम्भूतैः अरिष्टेभिः अनुपहिं-

सितैः अखण्डितैर्धनैरस्मात्रक्षतमित्यर्थः । किं च मित्रः वरुणः अदितिः सिन्धुः समुद्रः उतापि च द्यौः एते नोऽस्माकं तत् भवत्कृतं रक्षणं मामहन्तां पूजयन्ता-मनुमन्यन्ताम् (11.) इत्यर्थः ॥ द्युरित्यह्नो नाम अक्तुरिति रात्रेः । मामहन्ताम् मह पूजायाम् बहुलं छन्दसीति [पा° २.४.७६.] शपः श्लुः श्लाविति [पा° ६.१.१०.] द्वित्वम् तुजादीनां दीर्घोऽभ्यासस्येति [पा° ६.१.७.] अभ्यासदीर्घः ॥३०॥

IV. आ कृष्णेन रजसा वर्त° ॥३१॥

व्याख्याता [३३.४३.] ॥३१॥

आ रात्रि पार्थिवꣳ रजः पितुरप्रायि धामभिः ।

दिवः सदाꣳसि बृहती वितिष्ठसऽआ त्वेषं वर्तते तमः ॥३२॥

रात्रिदेवत्या पथ्याबृहती । हे रात्रि यया त्वया पार्थिवं रजः पृथिवीसम्बन्धि-लोकः पितुः मध्यमलोकस्य धामभिः स्थानैः सह आ अप्रायि समन्तात्पूर्यते । या च त्वं दिवो द्युलोकस्य सदांसि स्थानानि बृहती महती सती वितिष्ठसे आक्र-मसे व्याप्नोषि । तस्यास्तव तमः आवर्तते तथापि प्रवर्तते किम्भूतं तमः त्वेषं दीप्तं महाप्राग्भारमित्यर्थः । रजःशब्दो लोकवचनः । अप्रायि प्रा पूरणे कर्मणि लुङि चिणि रूपम् ॥३२॥

उषस्तच्चित्रमाभरास्मभ्यं वाजिनीवति । येन तोकं च तनयं च धामहे ॥३३॥

उषोदेवत्या पुरोष्णिक् । हे उषः हे वाजिनीवति हे अन्नवति अस्मभ्यं तत् प्रसिद्धं चित्रं चायनीयमाश्चर्यकारि महनीयं धनमाभर आहर देहि येन धनेन व-यं तोकं पुत्रं तनयं पौत्रं च सर्वं संतानवर्गं धामहे दध्महे पुष्णीमः ॥ धामहे द-धातेः शपो लुकि रूपम् ॥३३॥

प्रातरग्निं प्रातरिन्द्रꣳ हवामहे प्रातर्मित्रावरुणा प्रातरश्विना ।

प्रातर्भगं पूषणं ब्रह्मणस्पतिं प्रातः सोममुत रुद्रꣳ हुवेम ॥३४॥

जगती बहुदेवत्या । प्रातःशब्दो वीप्सावचनः । वयं प्रातः पुनः-पुनः एता-न्देवान्हवामहे आह्वयाम इति प्रत्येकं सम्बध्यते । कान् अग्निम् इन्द्रम् मित्राव-

रुणौ अश्विनौ भगम् पूषणम् ब्रह्मणस्पतिम् सोमम् उत अपि च रुद्रं हुवेम आ-ह्वयाम ॥ हवामहे हुवेम ह्वयतेः सम्प्रसारणे रूपद्वयम् ॥ ३४॥

प्रातर्जितं भगमुग्रꣳ हुवेम वयं पुत्रमदितेर्यो विधर्ता ।

आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह ॥ ३५॥

पञ्च भगदेवत्यास्त्रिष्टुभः । वयं तं भगमादित्यं हुवेम आह्वयाम । किम्भूतम् प्रातर्जितं प्रातर्जयतीति प्रातर्जित् तम् प्रातर्जयनशीलम् । उग्रमुत्कृष्टमुद्गूर्णदानं वा । अदितेः पुत्रं तनयम् । तं कम् यो विधर्ता जगतो धारयिता । यं च आध्रश्चित् चिच्छब्दोऽप्यर्थे न ध्यायति धै तृप्तौ न तृप्यति स अध्रः नञो दीर्घश्छान्दसः यद्वा आ समन्तात् ध्रः आध्रः यद्वा अध्र एवाध्रः स्वार्थे तद्धितः आध्रः अतृप्तः बुभुक्षितो दरिद्रो वापि यं भगं भक्षि भजस्व अर्थाद्उदयम् इत्याह किं कुर्वन् मन्यमानः पूजयन् स्वार्थसिद्धये मन्यतिरर्चतिकर्मा स हि सूर्योदये भिक्षादिना किंचिल्लभते तत उदयं वाञ्छति । तुरश्चित् आतुरोऽपि यं भगं मन्यमानो भक्षि उदयं भजस्वेत्याह दिवसे तस्य सुखोदयात् रोगिणो रात्रिः कष्टेन याति यद्वा तुरो यमः स हि मारणाय दिनानि गणयति । राजा चित् राजापि यं भगं भक्षि इत्याह तदुदये हि राज्ञां व्यवहारदर्शनादिना सर्वेष्टसिद्धिः ॥ भक्षि भजतेः शपि लुप्ते लटि मध्यमे रूपम् ॥ ३५॥

भग प्रणेतर्भग सत्यराधो भगेमां धियमुदवा ददन्नः ।

भग प्र णो जनय गोभिरश्वैर्भग प्र नृभिर्नृवन्तः स्याम ॥ ३६॥

हे भग हे प्रणेतः प्रकर्षेण नयति प्रापयति धनमिति प्रणेता तस्य सम्बोधने हे प्रणेतः । आदरार्थं पुनः सम्बोधनम् हे भग हे सत्यराधः सत्यमनश्वरं राधो धनं यस्य स सत्यराधाः तत्सम्बुद्धौ हे सत्यराधः हे भग त्वं ददत् धनं प्रयच्छन्सन् नोऽस्माकमिमां धियं प्रज्ञां कर्म वा उदव उद्गमय यथा सूक्ष्मार्थान्पश्यामस्तथा कुर्विति भावः । किं च हे भग नोऽस्मान्गोभिः अश्वैः प्रजनय प्रवर्धय गा अश्वांश्च बह्वन्देहीत्यर्थः । हे भग वयं नृभिः पुत्रादिभिः नृवन्तः मनुष्यवन्तः प्रकर्षेण स्याम भवेम ॥ ३६॥

उतेदानीं भगवन्तः स्यामोत प्रपित्व उत मध्ये अह्नाम् ।

उतोदिता मघवन्त्सूर्यस्य वयं देवानां सुमतौ स्याम ॥ ३७॥

हे मघवन् धनवन् त्वे उत अपि च वयमिदानीं भगवन्तः धनवन्तो ज्ञानवन्तो वा स्याम भवेम । उतापि च सूर्यस्य प्रपित्वे प्रपतने अस्तमये भगवन्तः स्याम । उत अह्नां मध्ये मध्यन्दिने भगवन्तः स्याम उत सूर्यस्य उदिता उदितौ उदयसमये भगवन्तः स्याम । किं बहुना सर्वदास्माकं धनवत्तास्त्वित्यर्थः । किं च देवानां सुमतौ कल्याण्यां बुद्धौ वयं स्याम देवा अस्मासु शोभनामनुग्रहविषयां बुद्धिं दधत्वित्यर्थः ॥ ३७॥

भग एव भगवाँ२॥ अस्तु देवास्तेन वयं भगवन्तः स्याम ।

तं त्वा भग सर्व इज्जोहवीति स नो भग पुरएता भवेह ॥ ३८॥

हे देवाः भग एव भगवान्धनवानस्तु किमन्यैरदातृभिर्धनिभिर्दैवैरिति भावः । तेन भगदत्तेन धनेन वयं भगवन्तः स्याम । एवं देवानुक्त्वाथ भगमाह हे भग सर्व इत् सर्व एव जनः तं प्रसिद्धं त्वा जोहवीति अत्यन्तमाह्वयति इष्टसिद्धये हे भग स त्वमिह नोऽस्माकं कर्मणि पुरएता पुरोऽग्रे एतीति पुरएता अग्रयायी भव अग्रेसरो भूत्वा सर्वकार्याणि साधयेत्यर्थः ॥ ३८॥

समध्वरायोषसो नमन्त दधिक्रावेव शुचये पदाय ।

अर्वाचीनं वसुविदं भगं नो रथमिवाश्वा वाजिन आवहन्तु ॥ ३९॥

उषसः प्रातःकालाधिष्ठातारो देवाः अध्वराय संनमन्त संनमन्ते प्रह्वीभवन्ति कथमिव दधिक्रावा अश्वः इव यथा अश्वः शुचये पदाय अग्न्याधानार्थं शुचि पदम् (12.) । ता उषसः भगमादित्यं नोऽस्माकमर्वाचीनमभिमुखमावहन्तु आगमयन्तु किम्भूतं भगम् वसुविदम् वसु धनं विन्दतीति वसुविदः इगुपधेति [पा॰ ३. १. १३५.] कः । (13.) यथा वाजिनोऽन्नवन्तो वेगवन्तो वा अश्वा रथमावहन्ति तद्वत् ॥ ३९॥

अश्वावतीर्गोमतीर्न उषासो वीरवतीः सदमुच्छन्तु भद्राः ।

घृतं दुहाना विश्वतः प्रपीता यूयं पात स्वस्तिभिः सदा नः ॥४०॥

उषोदेवत्या त्रिष्टुप् । उषसः सदं सदाकालं नोऽस्मानुहन्तु विपाशयन्तु अज्ञानलक्षणं पाशं मोचयन्तु उक्षी विपाशे । किम्भूता उषसः अश्ववतीः अश्ववत्यः गोमतीः गोमत्यः वीरवतीः वीरवत्यः भद्राः भन्दनीयाः कल्याणरूपाः घृतमवश्यायजलं दुहानाः क्षरन्त्यः विश्वतः सर्वतः प्रपीताः धर्मार्थकामैराप्यायिताः प्यायः पीआदेशः । एवं परोक्षं प्रार्थ्य प्रत्यक्षमाह हे उषसः यूयं स्वस्तिभिः अविनाशैः सदा नोऽस्मान्पात पालयत ॥४०॥

V. पूषन्तव व्रते वयं न रिष्येम कदा चन । स्तोतारस्तऽइह स्मसि ॥४१॥

हे पौष्ण्यौ गायत्रीत्रिष्टुभौ । हे पूषन् तव व्रते कर्मणि वर्तमाना वयं कदा चन कदापि न रिष्येम न विनश्येम । किं च इह कर्मणि ते तव स्तोतारः स्तुतिकर्तारः स्मसि भवामः इदन्तो मसि ॥४१॥

पथस्पथः परिपतिं वचस्या कामेन कृतोऽअभ्यानडर्कम् ।
स नो रासच्छुरुधश्चन्द्राग्रा धियं-धियꣳ सीषधाति प्र पूषा ॥४२॥

यः पूषा अर्कं देवमभ्यानट् अभिव्याप्नोति किम्भूतः कामेन काम्यतऽइति कामं तेन वाञ्छितेन वचस्या वचसा वेदोक्तेन कृतः अभिमुखीकृतः । किम्भूतमर्कम् पथस्पथः मार्गस्य-मार्गस्य सर्वेषां मार्गाणां परिपतिमधिपतिं स्वामिनम् । सः पूषा नोऽस्मभ्यं शुरुधः शुचं रुन्धन्ति वर्णनाशाः पृषोदरादित्वात् शोकनाशकराणि साधनानि रासत् ददातु लिङ्गव्यत्ययः किम्भूताः शुरुधः चन्द्राग्राः चन्द्रमाह्लादकमग्रं यासां ताः साधने कृते आह्लादो भवति । पुनः पूषा धियं-धियं कर्माणि सर्वाणि प्रसीषधाति प्रकर्षेण साधयतु ॥ पथस्पथः धियं-धियमिति नित्यवीप्सयोरिति [पा° ८.१.४.] द्विवम् । वचस्या विभक्तेर्यादेशः । आनट् व्याप्तिकर्मसु दशस्वयं पठितः [निघ° २.१८.] । सीषधाति साध संसिद्धौ शपः श्लुश्छान्दसः द्विवम् लेटोऽडाटौ तुजादीनां दीर्घोऽभ्यासस्य उपधाह्रस्वश्छान्दसः ॥४२॥

त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥४३॥

वैष्णव्यौ गायत्र्यौ द्वयोर्ऋचोरेकवाक्यम् । यो विष्णुः यज्ञः त्रीणि पदा पदानि विचक्रमे विक्रान्तवान् अग्निवाय्वादित्याख्यानि पदानि व्याप्तवान् । किम्भूतो विष्णुः गोपाः जगतो रक्षकः अदाभ्यः अहिंस्यः । किं कुर्वन् अतः अस्मादेव पदत्रयात् धर्माणि पुण्यानि कर्माणि धारयन् । धर्ममस्त्रियाम् ॥४३॥

तद्विप्रा॑सो विप॒न्यवो॑ जागृ॒वांस॒: समि॑न्धते । विष्णो॒र्यत्प॑र॒मं प॒दम् ॥४४॥

तस्य विष्णोः यज्ञस्य यत् परमं पदं ब्रह्मलक्षणम् तद्विप्रासः विप्राः ब्राह्मणाः समिन्धते णिचो लोपः समिन्धयन्ति दीपयन्ति उपासते इत्यर्थः । किम्भूताः विप्राः विपन्यवः विगतः पन्युः संसारव्यवहारो येभ्यः निष्कामाः । जागृवांसः जागरणशीलाः अप्रमत्ताः ज्ञानकर्मसु समुच्चयकारिण इत्यर्थः ॥४४॥

घृ॒तव॑ती॒ भुव॑नानामभि॒श्रियो॒र्वी पृ॒थ्वी म॑धु॒दुघे॑ सु॒पेश॑सा ।
द्यावा॑पृथि॒वी वरु॑णस्य॒ धर्म॑णा॒ विष्क॑भिते॒ऽअ॒जरे॒ भूरि॑रेतसा ॥४५॥

जगती द्यावापृथिवीदेवत्या । द्यावापृथिवी द्यावापृथिव्यौ वरुणस्यादित्यस्य धर्मणा धारणेन धरणशक्त्या विष्कभिते स्तम्भिते स्कभ्नातिर्दृढीकरणार्थः वरुणेन स्वशक्त्या दृढीकृते इत्यर्थः । किम्भूते ते घृतवती उदकवत्यौ घृतमित्युदकनाम [निघ॰ १.१२] । भुवनानां भूतजातानामभिश्रिया अभिश्रियौ आश्रयणीये कर्मणि क्विप् विभक्तेराकारः । उर्वी उर्व्यौ विस्तीर्णे पृथ्वी पृथ्व्यौ पृथुले आयामविस्ताराभ्यां महत्त्वं विशेषणद्वयेनोक्तम् । मधुदुघे मधु उदकं तस्य दोग्ध्र्यौ । सुपेशसा सुरूपे । अजरे जरारहिते । भूरिरेतसा भूरि रेतो ययोस्ते भूरिरेतसौ बहुरेतस्के सर्वभूतानां हि रेतांसि ताभ्यामेवोत्पद्यन्ते ॥४५॥

ये न॑: स॒पत्ना॒ अप॒ ते भ॑वन्त्विन्द्रा॒ग्निभ्या॒मव॑बाधामहे॒ तान् ।
वस॑वो रु॒द्रा आ॑दि॒त्या उ॑परि॒स्पृशं॑ मो॒ग्रं चेत्ता॑रमधिरा॒जम॑क्रन् ॥४६॥

जगती लिङ्गोक्तदेवता । ये नोऽस्माकं सपत्नाः शत्रवः ते अपभवन्तु अपगतवीर्या निरुद्यमा भवन्तु पराभवं यान्त्वित्यर्थः । यतो वयं तान्सपत्नान् इन्द्राग्निभ्यां कृत्वा अवबाधामहे इन्द्राग्निबलेन नाशयामः । किं च वसवोऽष्टौ रुद्रा एकादश

आदित्या द्वादश एते मा मामितादृशमक्रन् कुर्वन्तु । कीदृशमुपरिस्पृशम् उपरि स्पृशतीति उपरिस्पृक् तमुच्चस्थानस्थितम् । उग्रमुत्कृष्टम् । चेत्तारं ज्ञातारं ज्ञेयस्य । अधिराजम् अधिकश्चासौ राजा च अधिराजस्तम् अधिपतिमीश्वरं कुर्वन्त्वित्यर्थः ॥४६॥

आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातं मधुपेयमश्विना ।
प्रायुस्तारिष्टं नी रपांꣳसि मृक्षतꣳ सेधतं द्वेषो भवतꣳ सचाभुवा ॥४७॥

जगती अश्विदेवत्या । हे नासत्या नासत्यौ हे अश्विनौ त्रिभिः एकादशैः त्रिगुणैरेकादशभिः त्रयस्त्रिंशत्संख्याकैः देवेभिः देवैः इह स्थाने मधुपेयं सोमपानं प्रति आयातमागच्छतम् मधुः सोमस्तस्य पेयं पानम् । किं च आयुः प्रतारिष्टम् तरतिर्वृद्ध्यर्थः प्रवर्धयतम् । रपांसि पापानि निर्मृक्षतं निःशेषं शोधयतम् नाशयतमित्यर्थः । द्वेषः दौर्भाग्यं सेधतं षिधु गत्याम् गमयतं नाशयतम् । सचाभुवा भवतम् सचा इत्यव्ययं सहार्थे सचा सह भवतस्तौ सचाभुवौ क्विप् कार्येषु संयुक्तौ भवतम् । अष्टौ वसव इत्यादिना त्रयस्त्रिंशद्देवा गणिताः । तारिष्टम् तरतेर्लुङि मध्यमद्विवचनम् बहुलं छन्दस्यमाङ्योगेऽपीति [पा° ६.४.७५.] अडभावः । मृक्षतम् मृजूष् शुद्धौ लेटोऽडाटौ सिब्बहुलं लेटीति [पा° ३.१.३४.] सिप् तस्थस्थमिपामिति [पा° ३.४.१०१.] व्यत्ययेन थसः तमादेशः ॥४७॥

एष वः स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः ।
एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥४८॥

मारुती त्रिष्टुप् हे मरुतः कारोः कर्तुर्यजमानस्य एषः स्तोमः इयं च गीः सत्या च प्रिया च वो युष्मभ्यं युष्मदर्थं वर्ततऽइति शेषः । किम्भूतस्य कारोः मान्दार्यस्य मां ममेति स्वस्वामिसम्बन्धं (14.) दारयति इति मान्दार्यः तस्य वीतरागस्येत्यर्थः । यद्वा मां दारयतीत्येवं यः शत्रूणां प्रत्ययमादधाति मान्दार्यः । यद्वा मन्दारः कल्पवृक्षः तत्तुल्यो मान्दार्यः तस्य अथ कामपूरकस्येत्यर्थः । मान्यस्य मानार्हस्य । किं च हे मरुतः यूयमिषा अन्नेन निमित्तेन आयासीष्ट आगच्छत किमर्थं वयां वयसाम् आमि टिलोप आर्षः बाल्ययौवनस्थाविराणां वयसां सम्ब-

न्धिन्यै तन्वे शरीराय सर्वदा शरीरस्थित्यर्थमित्यर्थः अस्मच्छरीरं दृढीकर्तुमिति भावः । किं च इषमन्नं वृजनं बलं च वयं विद्याम लभेमहि किम्भूतमिषं वृजनं च जीरदानुं जीवयतीति जीरदानुस्तम् जीवेरौणादिको रदानु प्रत्ययः लोपो व्योर्वलीति [पा॰ ६. १. ६६.] वलोपः जीवितदातृ बलमन्नं च वयं प्राप्नुयामेति प्रार्थना ॥ ४८ ॥

सहस्तोमाः सहछन्दस आवृतः सहप्रमा ऋषयः सप्त दैव्याः ।
पूर्वेषां पन्थामनुदृश्य धीरा अन्वालेभिरे रथ्यो न रश्मीन् ॥ ४९ ॥

ऋषिसृष्टिप्रतिपादिका त्रिष्टुप् । दैव्याः सप्त ऋषयः देवस्य प्रजापतेः इमे दैव्याः प्रजापतिप्राणाभिमानिनः सप्त ऋषयः भरद्वाजकश्यपगोतमात्रिवसिष्ठविश्वामित्रजमदग्निसंज्ञाः । अन्वालेभिरे सृष्टवन्तः सृष्टियज्ञमिति शेषः । किं कृत्वा पूर्वेषां पन्थां पन्थानमनुदृश्य अधस्तनकल्पोत्पन्नानामवसिताधिकाराणां मार्गं विलोक्य पूर्वकल्पोत्पन्नैर्ऋषिभिर्यथा सृष्टम् तथा सृष्टवन्त इत्यर्थः सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदित्युक्तेः । कथमिव रथ्यो न रश्मीन् नकार उपमार्थः रथे साधुः रथ्यः रथीर्यथा इष्टदेशप्राप्त्यर्थं प्रथमं रश्मीन्प्रग्रहानालभते स्पृशति सृजति वा तथा तेऽपि सृष्टियज्ञं सृष्टवन्तः । किम्भूता ऋषयः सहस्तोमाः स्तोमसहिताः । सहछन्दसः छन्दोभिर्गायत्र्यादिभिः सहिताः । आवृतः अत्रापि सहशब्दाध्याहारः आवृत्शब्देन कर्मोच्यते सहावृतः कर्मसहिताः श्रद्धासत्यप्रधानानां कर्मणामनुष्ठातारः । सहप्रमाः प्रमाणं प्रमा तत्सहिताः शब्दप्रमाणपरीक्षणतत्पराः । धीराः धीमन्तः ॥ ४९ ॥

आयुष्यं वर्चस्य७ रायस्पोषमौद्भिदम् ।
इद७ हिरण्यं वर्चस्वज्जैत्रायाविशतादु माम् ॥ ५० ॥

तिस्रः उष्णिक्शक्करीत्रिष्टुभः दक्षदृष्टाः । हिरण्यस्तुतिः । इदं हिरण्यं कनकं जैत्राय जयाय मामु मामेवाविशतात् आविशतु मयि तिष्ठतु । कीदृशमायुष्यमायुषे हितम् वर्चस्यं वर्चसे तेजसे हितम् रायो धनस्य पोषं पोषयितृ वर्धकम् औद्भि-

AA AAA*

दम् उद्भिनत्तीति उद्भित् उद्भिदेवौद्भिदमुद्भेत्तृ धनस्य स्वर्गस्य वा प्रकाशकम् वर्चस्वत् अन्नसंयुक्तम् ॥५०॥

VI. न तद्रक्षा॑ꣳसि॒ न पि॑शा॒चास्त॑रन्ति दे॒वाना॒मोजः॑ प्रथम॒जꣳ ह्येतत् ।
यो बि॒भर्ति॑ दाक्षाय॒णꣳ हिर॑ण्य॒ꣳ स दे॒वेषु॑ कृणुते दी॒र्घमायुः॒ स म॑नु॒ष्ये॒षु कृणुते दी॒र्घमायुः॑ ॥५१॥

रक्षांसि पिशाचाश्च तत् हिरण्यं न तरन्ति न हिंसन्ति हि यस्मात् एतत् हिरण्यं देवानां प्रथमजमोजः प्रथमोत्पन्नं देवानां तेज एवेदम् । अत एव यो हिरण्यं दाक्षायणं बिभर्ति अलंकारत्वेन धारयति दाक्षायणशब्दोऽलंकारार्थः स देवेषु देवलोकेषु दीर्घमायुः कृणुते कुरुते देवलोके चिरं वसतीत्यर्थः स च मनुष्येषु मनुष्यलोकेषु (15.) स्वमायुर्दीर्घं कृणुते मनुष्यायुरतिक्रम्य जीवति ॥५१॥

यदाब॑ध्नन्दाक्षाय॒णा हिर॑ण्य॒ꣳ श॒तानी॑काय सुमन॒स्यमा॑नाः ।
तन्म॒ऽआब॑ध्नामि श॒तशा॑रदा॒यायु॑ष्माञ्ज॒रद॑ष्टि॒र्यथास॑म् ॥५२॥

दाक्षायणाः दक्षस्यापत्यानि नडादित्वात्फक् दक्षवंशोत्पन्ना ब्राह्मणा यत् हिरण्यं शतानीकाय राज्ञे अवध्नन् बबन्धुः शतं बहूनि अनीकानि सैन्यानि यस्य सः शतानीकस्तस्मै । किम्भूताः दाक्षायणाः सुमनस्यमानाः मनसि शोभनं ध्यायन्तः शोभनं मनः कुर्वन्ति सुमनस्यन्ते सुमनस्यन्ते सुमनस्यमानाः । तत् हिरण्यं मे मयि आबध्नामि किमर्थं शतशारदाय शतं शरदो जीवनाय । यथा येन प्रकारेण हिरण्यबन्धनाख्येन अहमायुष्मान्दीर्घजीवी जरदष्टिश्च आसं भूयासम् तथा आबध्नामि । जरत् जरामश्नुते व्याप्नोति जरदष्टिः यद्वा जरन्ती जरां प्राप्ता अष्टिः शरीरं यस्य स जरदष्टिः ॥५२॥

उ॒त नो॒ऽहि॑र्बु॒ध्न्यः॑ शृणोत्व॒ज एक॑पात्पृथि॒वी स॑मु॒द्रः ।
विश्वे॑ दे॒वा ऋ॑ता॒वृधो॑ हुवा॒ना स्तु॒ता मन्त्राः॑ कविश॒स्ता अ॑वन्तु ॥५३॥

बहुदेवत्या त्रिष्टुप् । उत अपि च अहिर्बुध्न्यः रुद्रविशेषः शृणोतु नः अस्माकं वचांसीति शेषः अज एकपात् रुद्रः प्राणो वा शृणोतु पृथिवी च शृणोतु

समुद्रश्च शृणोतु विश्वे देवाश्च शृण्वन्तु । श्रुत्वा च ते अहिर्बुध्न्यादयः अवन्तु पालयन्तु अस्मान् । किम्भूतास्ते ऋतवृधः सत्यवृधो यज्ञवृधो वा । हुवाना आहूयमानाः । मन्त्राः मन्त्रैरिति विभक्तिव्यत्ययः स्तुताः । कविशस्ताः मेधाविभिः पूजिताः ॥५३॥

इमा गिर॑ आदि॒त्येभ्यो॑ घृ॒तस्नूः॑ स॒नाद्राज॑भ्यो जु॒ह्वा॑ जुहोमि ।
शृणोतु॑ मि॒त्रोऽअर्य॒मा भगो॑ नस्तुविजा॒तो वरु॑णो॒ दक्षो॒ऽअंशः॑ ॥५४॥

आदित्यदेवत्या त्रिष्टुप् । इमा गिरो वाचः जुह्वा स्रुचा कृत्वा आदित्येभ्यो जुहोमि स्तुतिलक्षणा वाणीर्बुद्धिरूपया स्रुचादित्येभ्यः समर्पयामीत्यर्थः । किम्भूता गिरः घृतस्नूः घृतं स्नुवन्ति स्रवन्ति (16.) ताः घृतस्नवः ता घृतस्नूः तुगभावश्चार्षः घृतप्रसारिणीर्घृतहोमसहचरिता वा । किम्भूतेभ्य आदित्येभ्यः सनात् चिरकालं राजभ्यः दीप्यमानेभ्यः । ताः स्रुचाहूयमाना गिरो नोऽस्माकं गिरः शृणोतु कः मित्रः अर्यमा भगश्च । तुविजातो बहुजातः त्वष्टा वातो वा स हि बहुशः प्रजायते । वरुणः दक्ष अंशश्च । एते सूर्यविशेषाः ॥५४॥

स॒प्तऽऋष॑यः॒ प्रति॑हिताः॒ शरी॑रे स॒प्त र॑क्षन्ति॒ सद॒मप्र॑मादम् ।
स॒प्तापः॒ स्वप॑तो लो॒कमी॑युस्तत्र॑ जागृ॒तो॒ऽअस्व॑प्नजौ सत्र॒सदौ॑ च दे॒वौ ॥५५॥

अध्यात्मवादिनी जगती । सप्त ऋषयः प्राणाः त्वक्चक्षुःश्रवणरसनाघ्राणमनोबुद्धिलक्षणाः शरीरे प्रतिहिताः व्यवस्थिताः ते एव सप्त सदं सदाकालमप्रमादं सावधानं यथा तथा शरीरं रक्षन्ति । ते सप्त स्वपतो नरस्य लोकमात्मानमीयुः प्राप्नुवन्ति लोकशब्देन विज्ञानात्मा हृदयाकाशप्रतिष्ठ उच्यते । किम्भूताः सप्त आपः आप्नुवन्ति व्याप्नुवन्ति देहमित्यापः व्यापनाः । तत्र तस्यामृषीणां लोकगमनावस्थायां देवौ दीप्यमानौ प्राणापानौ जागृतः जागरणं कुर्वाते कीदृशौ अस्वप्नजौ न स्वप्नो निद्रा जायते ययोस्तौ अस्वप्नजौ । तथा सत्रसदौ सतां जीवानां त्राणं रक्षणं सत्रम् तत्र सीदतः तौ सत्रसदौ जीवितदातारावित्यर्थः ॥५५॥

उत्ति॑ष्ठ ब्रह्मणस्पते दे॒व॒यन्त॑स्त्वेमहे ।

उप प्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ॥५६॥

तृचो ब्रह्मणस्पतिदैवतः द्वे बृहत्यौ तृतीया त्रिष्टुप् । हे ब्रह्मणो देवस्य पते पालक उत्तिष्ठ ऊर्ध्वः आरब्धकार्यो भव । यतो वयं देवयन्तो देवान्कामयमानाः त्वा त्वामीमहे याचामहे आगहेति । मरुतः भवन्तमागच्छन्तमुप समीपे प्रयन्तु आगच्छन्तु किम्भूताः मरुतः सुदानवः शोभनं ददति ते सुदानवः । हे इन्द्र त्वमपि सचा सह गमनाय प्राशूः प्रकर्षेण शीघ्रो भव ॥ देवान्कामयन्ते देवयन्ति ततः शतृप्रत्ययः सुप आत्मनः क्यच् [पा° ३.१.८.] न छन्दस्यपुत्रस्येति [पा° ७.४.३५.] निषेधात्क्यचि चेतीत्वाभावः [पा° ७.४.३३.] अश्वाघस्यादिति [पा° ७.४.३७.] अश्वाघयोरेवाकारविधानादकृत्सार्वधातुकयोरिति [पा° ७.४.२५.] दीर्घोऽपि न स्यात् । ईमहे याचतिकर्मसु पठितः [निघ° ३.१९.] ई गतौ दिवादित्वादागतस्य श्यनश्छान्दसो लोपः । सुदानवः दाभाभ्यां नुः [उणा° ३.३२.] । प्राशूः आशुशब्दो दीर्घश्छान्दसः । भवा संहितायां द्व्यचोऽतस्तिङ इति [पा° ६.३.१३५.] दीर्घः ॥५६॥

प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ।
यस्मिन्निन्द्रो वरुणो मित्रोऽअर्यमा देवा ओकांसि चक्रिरे ॥५७॥

ब्रह्मणस्पतिः नूनं निश्चितमुक्थ्यं शस्त्रयोग्यं मन्त्रं प्रवदति प्रकर्षेणोच्चारयति यस्मिन्मन्त्रे इन्द्रः वरुणः मित्रः अर्यमा अन्ये च देवाः ओकांसि निवासान् चक्रिरे कृतवन्तः । सर्वदेवाधारभूतं शस्त्रं पठनीयं मन्त्रवदित्यर्थः (17.) ॥५७॥

ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयं च जिन्व ।
विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः ॥
य इमा विश्वा । विश्वकर्मा । यो नः पिता । अन्नपतेऽन्नस्य नो देहि ॥५८॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां चतुस्त्रिंशोऽध्यायः ॥३४॥ ॥

हे ब्रह्मणस्पते त्वं यतोऽस्य जगतो यन्ता नियन्ता अतः प्रार्थ्यते सूक्तस्यास्मदुक्तस्य साधुवचनस्य कर्मणि षष्ठी सूक्तम् बोधि बुध्यस्व अस्मदुक्ता स्तुतिर्भवता ज्ञायतामित्यर्थः । तनयं च अस्मदपत्यानि जिन्व प्रीणीहि जिन्वतिः प्रीतिकर्मा ।

देवा यत् भद्रं कल्याणमवन्ति पालयन्ति तत् विश्वं सर्वं भद्रमस्माकमस्त्विति शेषः । किं च सुवीराः कल्याणपुत्राः सन्तो वयं विदथे यज्ञे बृहत् महत् वदेम दीयतां भुज्यतामित्यादि उच्चारयेम ॥ अथ चतस्रः कण्डिकाः प्रतीकोक्ताः य इमा विश्वा भुवनानि जुह्वत् [१७.१७.] विश्वकर्मा विमनाः [१७.२६.] यो नः पिता [१७.२७.] अन्नपतेऽन्नस्य नो देहि [११.८३.] इति । ता ब्रह्मयज्ञेऽध्येयाः ॥५८॥

श्रीमन्महीधरकृते वेददीपे मनोहरे । चतुस्त्रिंशोऽयमध्यायो ब्रह्मयज्ञार्थको ऽगमत् ॥३४॥

अथ काण्वशाखायां पाठविशेषः ।

I. ॥ १ (18.) ॥१॥ ७ ॥२॥ ८ ॥३॥ १०-१४ [इलां॰] - १५ [इलां॰ - वोल्हंवे] - २० [अर्षाल्हं] - २३ [गऽइंष्टौ] - २६ [सुमृलीकः] - ३१ ॥४-२५॥ ॥

II. ॥ ३२ ॥२६॥ ३३ ॥२७॥ ३५ ॥२८॥ ४१ ॥२९॥ ४२ [॰भ्यानल॰] - ५८ ॥३०-४६॥ ॥ अनुवाकयोः षट्चत्वारिंशत् ॥ ॥

इति काण्वीयायां वाजसनेयसंहितायां त्रयस्त्रिंशोऽध्यायः ॥३३॥ ॥

1. a. अपेतो यन्तु पणयोऽसुम्ना देवपीयवः । अस्य लोकः सुतावतः ॥
b. द्युभिरहोभिरक्तुभिर्व्यक्तं यमो ददात्ववसानमस्मै ॥१॥

त्रयस्त्रिंशेऽध्याये सर्वमेधसम्बन्धिनः कियतो मन्त्रानुक्त्वा प्र वायुमहेत्यारभ्य [३३.५५.] अनारभ्याधीतान्मन्त्रानुक्त्वा (1.) चतुस्त्रिंशेऽध्याये तानेव समाप्येदानीं पञ्चत्रिंशेऽध्याये पितृमेधसम्बन्धिनो मन्त्रा उच्यन्ते स च पितृमेधो मृतस्य वर्षास्मरणे भवति वर्षस्मृतौ तु विषमवर्षेषु भवति एकतारकनक्षत्रे चित्रादौ दर्शे वा ग्रीष्मे शरदि माघे भवति ॥ पितृमेधं करिष्यता द्विजेन कुम्भेऽस्थिसंचयः कार्यः । मृतस्य च यावन्तोऽमात्यपुत्रपौत्रास्तावन्तः कुम्भाः कर्मदिने आनेयाः कुम्भेभ्योऽधिकानि छत्राणि च । ततोऽरण्ये कुम्भे कृतमस्थिसंचयनं ग्रामसमीपे समानीय शय्यायां कुम्भं संस्थाप्याहतवस्त्रैकदेशेन संवेष्ट्य लोहमयवादित्रेषु वाद्यमानेषु वीणायां च

वाद्यमानायां मृतस्य पुत्रपौत्रा उत्तरीयैर्व्यजनैश्चास्थिकुम्भं वीजयन्तस्त्रिस्त्रिः प्रदक्षिणं परियन्ति । स्त्रियोऽपीति केचित् । रात्रेः पूर्वमध्यापरभागेषु तद्दिने बह्वन्नदानं कुर्वन्ति नृत्यगीतवादित्राणि च कारयन्ति अस्थिकुम्भायान्नमुपहरन्ति च । तत उपप्रातरस्थिकुम्भसहिताः पूर्वोक्तान्कुम्भान् छत्राणि चादाय ग्रामाद्दक्षिणस्यां बहिर्गच्छन्त्यध्वर्युयजमानामात्याः । श्मशानान्तं (2.) कर्म कुर्वतो यथा रविरुदयेत्तथा रात्रावारब्धव्यम् तत्र वने गत्वा ग्रामान्मार्गादश्वत्थतिल्वकखदिरकुस्फूर्जकविभीतकश्लेष्मातककोविदारादिभ्यश्च दूरे अन्यवृक्षगुल्मादिवृते ऊषरे वोदक्प्रवणे दक्षिणप्रवणे समे वा सुखकारिणि रम्ये वनादुदकाद्वा पूर्वभागे उत्तरभागे वा वर्तमाने गर्तवति वीरणतृणवति प्रदेशे श्मशानार्थं दिक्कोणं पुरुषप्रमाणं क्षेत्रं मिमीते । पैतृक्यां द्विपुरुषं समचतुरस्रं कृत्वा करणीमध्येषु शङ्कवः स समाधिरिति शुल्वोक्तविधिना [यजुःपरिशिष्ट° ७. २.] तच्चतुरस्रमुत्तरतः पश्चाच्च पृथु भवति । तत्र साधनप्रकारः पूर्वदक्षिणपार्श्वयोर्नवाङ्गुलानि स्वत्रयोदशांशेनाङ्गुलचतुर्थभागसहितानि पुरुषप्रमाणमध्ये न्यूनानि कार्याणि (3.) पश्चिमोत्तरपार्श्वयोस्तावन्ति पुरुषप्रमाणादधिकानि (4.) तथाहि पुरुषमात्रक्षेत्रस्याक्षणया प्राचीं कृत्वा तत्प्रान्तयोः शङ्कू निखाय सार्धाष्टदशाङ्गुलहीनां पुरुषद्वयप्रमाणामुभयतःपाशां रज्जुं मध्यमदेशे सलक्षणां कृत्वा पूर्वापरयोः शङ्क्वोस्तस्याः पाशौ प्रतिमुच्य मध्यलक्षणेन दक्षिणत आयम्य दक्षिणः कोणः साधनीयः ततः सार्धाष्टदशाङ्गुलाधिकां पुरुषद्वयप्रमाणां रज्जुमुभयतःपाशां मध्यलक्षणयुतां कृत्वा शङ्क्वोः पाशौ प्रतिमुच्य मध्यलक्षणेनोत्तरत आयम्योत्तरकोणः साध्य इति । ततः पूर्वादिकोणेषु पालाशशमीवारणाश्ममयाश्चत्वारः (5.) शङ्कवो निखेयाः । एतत्कुर्वतां (6.) निकटे कश्चिद्यजमानपुरुषस्तृणपूलकमुच्छ्रित्य (7.) धारयेत् । कर्मसमाप्तौ गृहमागत्य तं गृहेषूच्छ्रयेत् (8.) प्रजावृद्ध्यै । इत्यादि बोध्यम् ॥ कात्यायनः [२१. ३. ३२.] अपसलवि सृष्टया रज्ज्वा परितत्यापेतो यन्त्विति पलाशशाखया व्युदूहतीति । अपसलवि अप्रादक्षिण्येन निष्पादितया रज्ज्वा तत्क्षेत्रं समन्तादप्रदक्षिणं संवेष्ट्यापेतो यन्त्विति मन्त्रेण क्षेत्रमध्यपतितं तृणपर्णादिकं पलाशशाखया कृत्वा क्षेत्राद्बहिर्निःकाशयतीति सूत्रार्थः ॥ अस्याध्यायस्य पितरो देवता आदित्या ऋषयो देवा वा । आद्या गायत्री ।

पणान्ति परद्रव्यैर्व्यवहरन्तीति पणयोऽसुराः इतोऽपयन्तु अपगच्छन्तु व्यवहिताश्चेति [पा° १.४.८२.] उपसर्गस्य यन्त्विति क्रियापदेन व्यवधानम् । किम्भूताः पणयः असुम्नाः सुम्नमिति सुखनाम [निघ° ३.६.] नास्ति सुम्नं येभ्यस्ते असुखकराः । तथा देवपीयवः पीयतिर्हिंसाकर्मा देवान्पीयन्ति हिंसन्ति ते देवपीयवः देवद्विषः । किमित्यसुराणामपगमोऽर्थ्यते तत्राह अस्य लोकः अस्य यजमानस्यास्थिभूतस्यायं लोकः स्थानम् किम्भूतस्यास्य सुतवतः सोमाभिषवं कृतवतः सुप्रावेति सुतवान् तस्य षुञ् अभिषवे क्तवतुप्रत्ययान्तः अश्वरश्मिमतिसुमतीत्यादिना प्रातिशाख्यसूत्रेण [३.६.२.] संहितायां सुतशब्दस्याकारे दीर्घः ॥ द्युभिरहोभिरिति यजुः । यमोऽस्मै यजमानायावसानं ददातु अवस्यत्यस्मिन्नित्यवसानं स्थानम् किम्भूतं द्युभिर्ऋतुभिः अहोभिः दिवसैः अक्तुभिः रात्रिभिश्च व्यक्तं स्पष्टीकृतम् द्युशब्देन श्रुतौ ऋतव उक्ताः तदेनमृतुभिश्चाहोरात्रैश्च सलोकं करोतीति श्रुतेः [१३.८.२.३.] । ऋत्वाद्यधिष्ठातृदेवताभिः प्रकटितमस्मै यमो ददावित्यर्थः ॥ १ ॥

सविता ते शरीरेभ्यः पृथिव्यां लोकमिच्छतु । तस्मै युज्यन्तामुस्रियाः ॥ २ ॥

का° [२१.३.३४.] औदुम्बरसीरऽउत्तरतो वा षड्गवे युज्यमाने युङ्क्तेति सम्प्रेष्य सविता तऽइति जपतीति । ततोऽध्वर्युस्तां पलाशशाखां दक्षिणस्यां निरस्य परिश्रिद्भिर्वेष्टयित्वा तत्क्षेत्रस्य दक्षिणत उत्तरतो वा षड्भिरनडुद्भिः सीरं युनक्ति तस्मिन्युज्यमाने युङ्क्तेति सम्प्रेष्य सवितेति मन्त्रं जपति ॥ गायत्री । हे यजमान सविता सूर्यः ते तव शरीरेभ्यः शरीराणां विभक्तिव्यत्ययः पृथिव्यां लोकं स्थानमिच्छतु सवित्रनुज्ञां विना न केनापि स्थातुं शक्यते । द्वितीयं वाक्यमाह तस्मै इति तस्मै सवित्रा दत्ताय क्षेत्राय संस्कारार्थम् उस्रियाः अनड्वाहो युज्यन्तां युक्ता भवन्तु ॥ २ ॥

a. वायुः पुनातु । b. सविता पुनातु । c. अग्नेर्भ्राजसा ।

d. सूर्यस्य वर्चसा । e. विमुच्यन्तामुस्रियाः ॥ ३ ॥

का° [२१.४.१.२.] अनुरज्जु चतस्रः सीताः कृषति वायुः पुनात्विति प्रतिमन्त्रमुत्तरतः प्रतीचीं प्रथमामिति । अध्वर्युः परितो वेष्टितां रज्जुमनुलक्षीकृत्य वायुः

पुनात्विति प्रतिमन्त्रं पादेन-पादेन चतस्रः सीताः अप्रदक्षिणं कृषति तत्र प्रथमां सीतामुत्तरपार्श्वे प्रतीचीं कृषति दक्षिणतः सीरयोजनपक्षेऽपि तत्सीरमप्रदक्षिणमुत्तरत आनीय प्रथममुत्तरत एव कृषति । तदपसलवि पर्याहृत्योत्तरतः प्रतीचीं प्रथमाᳫं सीतां कृषति वायुः पुनात्विति सविता पुनात्विति जघनार्धेन दक्षिणामग्नेर्भ्राजसेति (9.) दक्षिणार्धेन प्राचीᳫं सूर्यस्य वर्चसेत्यग्रेणोदीचीमिति [१३. ८.२.६.] श्रुतेः ॥ चत्वारि यजूंषि लिङ्गोक्तदेवतानि । हे पृथिवि वायुः त्वां पुनातु विदारयतु सूर्यः त्वां पुनातु अग्नेर्भ्राजसा दीप्त्या सूर्यस्य वर्चसा तेजसा च त्वां विदारयतु ॥ का॰ [२१.४.४.] अनडुहो विमुच्य विमुच्यन्तामिति । एवं पूर्वोक्तचतुर्मन्त्रैः पार्श्वचतुष्के कर्षणं कृत्वा मध्येऽपि सर्वं क्षेत्रं यथा कृष्टं भवति तथा परिमिताः सीताः कृत्वा वृषभान्सीराद्विमुञ्चति ॥ यजुः वृषदैवतम् । उस्रा धेनुः तदपत्यानि उस्रियाः अनड्वाहो विमुच्यन्तां सीराद्वियुज्यन्ताम् ॥ ३ ॥

अ॒श्व॒त्थे वो॑ नि॒षद॑नं प॒॰ ॥ ४ ॥

का॰ [२१.४.४.] दक्षिणा सीरं निरस्याश्वत्थे व इति सर्वौषधं वपतीति । हलं दक्षिणदिशि तूष्णीं प्रक्षिप्य कृष्टक्षेत्रमध्ये सर्वौषधं वपति ॥ अनुष्टुप् व्याख्याता [१२.७९.] ॥ ४ ॥

स॒वि॒ता ते॒ शरी॑राणि मा॒तुरु॒पस्थ॒ऽआव॑पतु । तस्मै॑ पृथिवि॒ शं भ॑व ॥ ५ ॥

का॰ [२१.४.५.] सविता तऽइति शरीराणि निवपति मध्ये इति । तस्य पुरुषमात्रस्य क्षेत्रस्य मध्ये शरीराणि मृतस्यास्थीनि राशीकरोति एतच्च सूर्योदयकालं कर्तव्यम् यथा कुर्वतोऽभ्युदियादिति [१३.८.३.२.] श्रुतेः ॥ गायत्री सवितृदेवत्या । हे यजमान सविता सूर्यः ते तव शरीराणि अस्थीनि मातुः पृथिव्याः उपस्थे उत्सङ्गे आवपतु स्थापयतु । हे पृथिवि भूमि तस्मै सवित्रोप्तायास्थिरूपाय यजमानाय शं भव सुखरूपा भव ॥ ५ ॥

प्र॒जाप॑तौ त्वा दे॒वता॑या॒मुपो॑दके लो॒के नि द॑धाम्यसौ ।
अप॑ नः॒ शोशु॑चद॒घम् ॥ ६ ॥

उष्णिक् प्रजापतिदेवत्या अस्थिनिवापे एव विनियुक्ता । असाविति नामग्रहणम् अनुदात्तत्वादामन्त्रितम् हे देवदत्त उपोदके उदकसमीपवर्तिनि लोके स्थाने प्रजापतौ देवतायां त्वां निदधामि स्थापयामि । स प्रजापतिर्नोऽस्माकमघं पापं शोशुचत् अत्यर्थं दहतु शुच शोके यङ्लुगन्तं रूपम् ॥ ६॥

परं मृत्योऽअनु परेहि पन्थां यस्तेऽअन्य इतरो देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाᳮ रीरिषो मोत वीरान् ॥ ७॥

का° [२१.४.७.] प्रत्यागते परं मृत्यविति जपतीति । दक्षिणां गत्वानुद्धसन्कुम्भं प्रक्षिप्यैहीति कश्चिद्विप्रः प्रेषितोऽस्ति तस्मिन्कुम्भं क्षिप्त्वा प्रत्यागते सति यजमानोऽध्वर्युर्वा जपति ॥ मृत्युदेवत्या त्रिष्टुप् संकसुकदृष्टा । हे मृत्यो परा पराङ्मुखो भूत्वा परमन्यं पन्थां पन्थानं मार्गमन्विहि अनुगच्छ । तमेव दर्शयति यस्ते तव त्वदीयः पन्था देवयानात्पथः इतरः तुच्छः अन्यः पितृयानाख्यः देवा यान्ति यस्मिन्स देवयानः । किं च चक्षुष्मते ज्ञानिने शृण्वते च ते तुभ्यं मृत्यो किंचिद्ब्रवीमि वदामि आदरार्थं वचनम् न हि तस्यादृष्टमश्रुतं वास्ति षष्ठ्यर्थे चतुर्थी चक्षुष्मतः शृण्वतस्तव वदामि किम् हे मृत्यो नोऽस्माकं प्रजां संततिं वंशपरम्परां मा रीरिषः मा हिंसीः रिष वधे स्वार्थे णिजन्तस्य लुङि रूपम् उत अपि च वीरान्पुत्रान्मा हिंसीः ॥ ७॥

शं वातः शᳮ हि ते घृणिः शं ते भवन्त्विष्टकाः ।
शं ते भवन्त्वग्नयः पार्थिवासो मा त्वाभिशूशुचन् ॥ ८॥

का° [२१.४.८.] शं वात इति यथाङ्गं कल्पयित्वेष्टकां (10.) निदधाति मध्ये तूष्णीमिति शं वात इति मन्त्रद्वयेन तानि मध्ये न्युप्तान्यस्थीनि यथाङ्गं कल्पयित्वा यदस्थि यस्याङ्गस्य तेनास्थ्ना तदङ्गकल्पनया प्राक्शिरसं पुरुषाकृतिं कृत्वा तन्मध्ये पादमात्रीमिष्टकां तूष्णीं निदधाति ॥ द्वे ऋचावनुष्टुब्बृहत्यौ विश्वेदेवदेवते । हे यजमान वातो वायुस्ते तव शं सुखरूपो भवतु । हि पुनः घृणिः सूर्यकिरणः ते तव शं सुखरूपो भवतु । इष्टका मध्ये प्रतिदिशं च तिस्रस्तिस्रः प्रक्षिप्तास्ते तव

BB BB BB*

शं सुखरूपा भवन्तु । अग्नयश्च ते शं भवन्तु । पार्थिवासः पृथिव्यां भवाश्चाग्नयः त्वा त्वां माभिशूशुचन् मा शोचयन्तु अभितापयन्तु ॥ ८॥

कल्पन्तां ते दिशस्तुभ्यमापः शिवतमास्तुभ्यं भवन्तु सिन्धवः ।
अन्तरिक्षꣳ शिवं तुभ्यं कल्पन्तां ते दिशः सर्वाः ॥ ९॥

दिशः [ते] तुभ्यं त्वदर्थं कल्पन्तां क्लृप्ता भवन्तु आपो जलानि तुभ्यं शिवतमाः कल्याणकारिण्यो भवन्तु सिन्धवः समुद्राश्च शिवतमास्तुभ्यं भवन्तु । अन्तरिक्षमाकाशं तुभ्यं शिवं कल्याणकारि भवतु सर्वाः दिशः ते तुभ्यं कल्पन्ताम् । आदरार्थं कार्त्स्न्यार्थं वा पुनर्वचनम् ॥ ९॥

अश्मन्वती रीयते सꣳरभध्वमुत्तिष्ठत प्रतरता सखायः ।
अत्र जहीमोऽशिवा येऽअसञ्छिवान्वयमुत्तरेमाभि वाजान् ॥ १०॥

का° [२१.४.२१.] अध्यधिगच्छन्त्यश्मन्वतीरिति । गर्तान्मृदमानीय पूर्ववर्जदिग्भ्यः कृष्ट्वा वा मृदमानीय ततू श्मशानं विप्रस्य मुखमितं क्षत्रस्योरोमितं वैश्यस्योरुमितं स्त्रिया भगमितं शूद्रस्य जानुमितं सर्वेषां वा जानुमितं मृदा कृत्वा शैवलैः कुशैश्च प्रछाद्य तद्दक्षिणतो गर्तौ खात्वा क्षीरोदकाभ्यां सम्पूर्य श्मशानोत्तरे सप्त गर्तान्खात्वा दक्षिणोत्तरान्जलेन सम्पूर्योत्तरगर्तेषु अध्वर्युयजमानामात्यास्त्रीन्पाषाणान्प्रक्षिप्याश्मन्वतीरिति (11.) मन्त्रेण तद्गर्तोपरि गच्छन्ति ॥ विश्वदेवदेवत्या त्रिष्टुप् सुचीकदृष्टा । हे सखायः मित्राणि एषा अश्मन्वती पाषाणवती नदी रीयते गच्छति री गतौ दिवादिः आत्मनेपदी अतो यूयं संरभध्वमुत्तरणाय प्रयतध्वम् । उत्तिष्ठत अभिमुखा भवत प्रतरत प्रकर्षेण तां नदीं तरत । किमिति यतोऽत्र प्रदेशे ये अशिवाः अशान्ता दुष्टा राक्षसादयः असन् स्युः तान्वयं जहीमः परित्यजामः तेषु त्यक्तेषु शिवान् सुखकरान्वाजानन्नविशेषान्वयमुत्तरेम प्राप्नुयाम ॥ १०॥

II. अपाघमप किल्विषमप कृत्यामपो रपः ।
अपामार्ग त्वमस्मदप दुःष्वप्न्यꣳ सुव ॥ ११॥

का° [२१.४.२२.] अपाघमित्यपामार्गैरपमृजतऽइति । ते अमात्या यज्ञोपवीति-

नो भूत्वाप उपस्पृश्य हस्तगृहीतैरपामार्गैः स्वशरीरं शोधयन्ते अपामार्गबीजैरुद्वर्तयन्तीति केचित् ॥ लिङ्गोक्तदेवतानुष्टुप् शुनःशेपदृष्टा दुःस्वप्ननाशनी । हे अपामार्ग त्वमस्मत् अस्मत्तः सकाशादघं मानसं पापमपसुव षू प्रेरणे अपगमयेत्यर्थः । किल्विषं कीर्तिभेदकं कायिकं च पापमपसुव । कृत्यां परकृतमभिचारमपसुव । अप उ रपः रपो रिप्रमिति पापनामनी भवत इति [निरु° ४. २१.] यास्कः रपः पापं वाचिकं च अपसुव उ चार्थे । दुःस्वप्न्यम् (12.) दुष्टः स्वप्नो दुःस्वप्नः तत्र भवं दुःस्वप्नोत्थमसुखरूपं फलं चास्मत्तोऽपसुव ॥ ११ ॥

सुमित्रिया न आप ओष° ॥ १२ ॥

का° [२१. ४. २३.] सुमित्रिया न इति स्नात्वाहतवाससोऽनडुत्पुछमन्वारभ्यानड्वाहमित्युद्वयमित्यागछन्तीति । सुमित्रिया इति मन्त्रेण स्नात्वा नूतनवस्त्राणि परिहितवन्तोऽनड्वाहमिति मन्त्रेण वृषपुछमन्वारभ्य उद्वयं तमिति (13.) मन्त्रेण यजमानामात्या ग्राममागछन्ति यद्यप्यत्र सुमित्रिया इति मन्त्रेण स्नानमुक्तं तथापि सुमित्रिया इत्यपोऽञ्जलिनादाय दुर्मित्रिया इति द्वेष्यं परिषिञ्चतीति [का° ११. ५. १५.] द्वयं विधेयम् । दुर्मित्रिया -- द्विष्म इति यामस्य दिशं द्वेष्यः स्यात्तां दिशं परासिञ्चेत्तेनैव तं पराभावयतीति [१३. ८. ४. ५.] श्रुतिः ॥ व्याख्याता [६. २२. २०, ११.] ॥ १२ ॥

अनड्वाहमन्वारभामहे सौरभेय७ स्वस्तये ।
स न इन्द्र-इव देवेभ्यो वह्निः संतरणो भव ॥ १३ ॥

अनुष्टुप् अनडुद्देवत्या उत्तरोऽर्धर्चः प्रत्यक्षकृतः ततः सर्वनाम्नोऽध्याहारेण सामर्थ्यम् वयं यमनड्वाहमन्वारभामहे आलभामहे स्पृशामः किम्भूतं सौरभेयं सुरभ्याः अपत्यम् स्त्रीभ्यो ढगिति [पा° ४. १. १२०.] ढक् । किमर्थं स्वस्तये अविनाशाय । हे अनड्वन् स त्वं नोऽस्माकं संतरणः तारको दुःखनाशको भव । किं च त्वं वह्निः देवानां वोढा । तत्र दृष्टान्तः देवेभ्यः इन्द्र इव इन्द्रो यथा देवार्थं तारको भवति ॥ १३ ॥

उद्वयं तमसस्परि स्वः प° ॥ १४ ॥

उद्वयं तमिति (13.) ग्राममागछन्ति । व्याख्याता [२०. २१.] ॥ १४ ॥

इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरोऽअर्थमेतम् ।
शतं जीवन्तु शरदः पुरूचीरन्तर्मृत्युं दधतां पर्वतेन ॥ १५ ॥

का° [२१. ४. २४.] ग्रामश्मशानान्तरे मर्यादालोष्टं निदधातीमं जीवेभ्य इति । स्वनिवासग्रामस्य श्मशानस्य च मध्ये मर्यादालोष्टं महत्तरं मृत्खण्डमध्वर्युरेव निदधाति ॥ मनुष्यदेवत्या त्रिष्टुप् संकसुकदृष्टा । जीवेभ्यः विद्यमानजन्त्वर्थमिमं परिधिं मर्यादां दधामि स्थापयामि कथमिति चेत् एषां जीवानां मध्ये अपरः कश्चित् नु क्षिप्रं वेदोक्तादायुषोऽर्वाक् एतमर्थं (14.) पितृलोकगमनलक्षणं कार्यमुद्दिश्य मा गात् मा गच्छतु । एते जीवाः शतं शरदः जीवन्तु शतवर्षायुषो भवन्तु । किम्भूताः (15.) शरदः पुरूचीः पुरु बहु अञ्चन्तीति पुरूच्यः दानाध्ययनयागानुकूलाः । किं च (16.) पर्वतेन लोष्टेनैव मृत्युमन्तर्दधताम् मृत्युमन्तर्हितं कुर्वन्तु एते जीवाः ॥ १५ ॥

अग्नऽआयूंषि पव° ॥ १६ ॥

का° [२१. ४. २५.] आञ्जनाभ्यञ्जने कृत्वौपासनं परिस्तीर्य वारणान्परिधीन्परिधाय वारणेन स्रुवेणैकामाहुतिं जुहोत्यग्नऽआयुंष्यायुष्मानग्नऽइति । कज्जलादिना नेत्राञ्जनमाञ्जनम् तैलेन पादाञ्जनमभ्यञ्जनम् तद्द्वयं कृत्वा औपासनं कर्तुरावसथ्याग्निं दर्भैः परिस्तीर्य वारणवृक्षावयवांश्चतुरः परिधींश्चतुर्दिक्षु तूष्णीमेव परिधाय वारणेन स्रुवेणैकामाहुतिं जुहोति ऋग्द्वयेन । औपासनः प्रेतस्यैव तस्यैवाद्वारेण (17.) निरसनीयत्वादिति हरिस्वामिनः कर्तुरेवौपासने होमस्तस्यैकदेशनिरसनमिति कर्कादयः ॥ व्याख्याता [१९. ३८.] ॥ १६ ॥

आयुष्मानग्ने हविषा वृधानो घृतप्रतीको घृतयोनिरेधि ।
घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमान्त्स्वाहा ॥ १७ ॥

अग्निदेवत्या त्रिष्टुब्वैखानसदृष्टा । हे अग्ने त्वमेवम्भूत एधि भव किम्भूतः आयुष्मान् चिरंजीवी । तथा हविषा वृधानः वर्धतेऽसौ वृधानः बहुलं छन्दसीति [पा° २. ४. ७३.] शानचि शपो लुक् । तथा घृतप्रतीकः घृतं प्रतीकं मुखं यस्य ।

घृतयोनिः घृतं योनिरुत्पत्तिस्थानं यस्य उत्तरवेद्याघारणाभिप्रायमेतत् । स त्वं गव्यं गोसम्बन्धि घृतं पीत्वा इमान् जीवान् अभिरक्षतादभिरक्ष तुह्योस्तातङ्ङाशिष्यन्यतरस्यामिति [पा° ७.१.३५.] ह्वेस्तातङ्ङादेशः । तत्र दृष्टान्तः पिता पुत्रमिव यथा पिता पुत्रं रक्षति । किम्भूतं घृतं मधु मधुरं चारु सुगन्धि स्वाहा सुहुतमस्तु ॥१७॥

परी॒मे गाम॑नेषत॒ पर्य॒ग्निम॑हृषत ।

दे॒वेष्व॑क्रत॒ श्रवः॒ क इ॒माँ२॥ऽआद॑धर्षति ॥१८॥

का° [२१.४.२६.] अथैषां परिदां वदन्ति परीमे गामनेषतेति । अध्वर्युर्यजमानामात्यानां परिदाम् परिदा रक्षणम् तत्संज्ञं मन्त्रं वदति दाङ् पालने परिदीयते समन्ताद्रक्ष्यतेऽनेनेति परिदाः रक्षणः तम् ॥ इन्द्रदेवत्यानुष्टुप् भरद्वाजात्मजशिरिम्बिठदृष्टा । इमे जीवाः गामनड्वाहं पर्यनेषत परिणीतवन्तः अनडुत्पुच्छालम्भनाभिप्रायम् नयतेर्लुङि तङि सिचि प्रथमबहुवचने रूपम् व्यवहिताश्चेति [पा° १.४.८२.] परेर्व्यवधानं क्रियापदेन । इमे जीवाः अग्निं च पर्यहृषत परिहृतवन्तः यस्मिन्नग्नावेतत्कर्म कृतं तं परिजह्रुः अहारेणौपासनं निरस्यतीत्येतदभिप्रायम् । इमे देवाः दीव्यन्ति कर्मसु दीप्यन्ते ते देवाः ऋत्विजः तेषु श्रवः धनं दक्षिणालक्षणमक्रत कृतवन्तः अकृषतेति प्राप्ते सिचो लोपे अक्रतेति रूपम् । अत एतैः कर्मभिः कृतकृत्यानिमान् जीवान् को नाम आदधर्षति आधर्षयितुं पराभवितुं शक्नुयात् अशक्यप्रतिक्रिया एते जाता इति भावः ॥१८॥

क्र॒व्याद॑म॒ग्निं प्रहि॑णोमि दू॒रं य॑म॒राज्यं॑ गच्छतु रिप्रवा॒हः ।

इ॒हैवायमित॑रो जा॒तवे॑दा दे॒वेभ्यो॑ ह॒व्यं व॑हतु प्रजा॒नन् ॥१९॥

का° [२१.४.२७.] अहारेणौपासनं निरस्यति क्रव्यादमिति । आहुतिहोमानन्तरं यत्र हुतं तस्यौपासनस्यैकशेषं निरस्यति प्रेतस्यैवोपासन इति पक्षे सर्वमपि निरस्यति ॥ अग्निदेवत्या त्रिष्टुप् दमनदृष्टा । येन पुरुषो दह्यते स क्रव्यात् तं क्रव्यादमग्निमहं दूरम् अपुनरागमनाय प्रहिणोमि प्रेषयामि स प्रहितः क्रव्यादग्निः यमराज्यं गच्छतु यमस्य राज्यं प्रति व्रजतु किम्भूतः रिप्रवाहः रिप्रमिति पापनाम

[निरु° ४.२१.] रिप्रं पापं वहति नाशयति रिप्रवाहः ॥ का° [२१.४.२८.] इहैवा-यमिति जपति । यजमानो जपति ॥ अयमितरः क्रव्यादादन्यो जातवेदाः जातप्र-ज्ञानोऽग्निः इहैवास्मिन्नेव गृहे सदने देवेभ्योऽर्थाय हव्यं हविः वहतु प्रापयतु किं कुर्वन् प्रजानन् स्वाधिकारं जानानः ॥ ॥ इति पितृमेधः समाप्तः । उपधाना-सन्दीवृषभयवानजीर्णान् तद्दक्षिणात्वेन दद्यात् इच्छन्हेमाद्यपि दद्यात् ॥१९॥ ॥

वह॑ व॒पां जा॑तवेदः पि॒तृभ्यो॒ यत्रै॑ना॒न्वेत्थ॒ निहि॑ताम्परा॒के ।

मेद॑सः कु॒ल्या उप॒ तान्त्स्र॑वन्तु स॒त्या ए॑षामा॒शिषः॒ संन॑मन्ता॒ᳪ स्वाहा॑ ॥२०॥

जातवेदोदेवत्या त्रिष्टुप् । अस्या विनियोगः श्रौतसूत्रे नास्ति । गृह्यसूत्रेऽस्ति तथा हि [पारस्कर° ३.३.] मध्यमा गवा तस्यै वपां जुहोति वह वपां जातवेदः पि-तृभ्य इति अस्यार्थः मध्यमाष्टका गोपशुना कार्या तस्या धेनोर्वपां जुहोति वह वपामिति मन्त्रेणेत्यर्थः ॥ हे जातवेदः जातं वेदो धनं यस्मात्स जातवेदाः तत्सम्बो-धने हे जातवेदः पितृभ्योऽर्थाय त्वं वपां धेनुसम्बन्धिनीं चर्मविशेषत्वं वह प्रापय । पराके पराक्रान्ते दूरेऽपि यत्र यस्मिन्देशे निहितान् स्थापितानेनान्पितॄन् (18.) त्वं वेत्थ जानासि तत्र वहेत्यर्थः । तस्याः वपायाः निःसृत्य मेदसः धातुविशेषस्य कु-ल्याः नद्यः तान्पितॄन्प्रति उपस्रवन्तु प्रसरन्तु । किं च एषां दातॄणामाशिषः मनो-रथाः सत्याः अवितथाः संनमन्तां प्रह्वीभवन्तु । स्वाहा सुहुतमस्तु स्वाहेति ऋ-ग्भिन्नं यजुः ॥२०॥

स्यो॒ना पृ॑थिवि नो भवानृक्ष॒रा नि॒वेश॑नी । यच्छा॑ नः॒ शर्म॑ स॒प्रथाः॑ ॥

अप॑ नः॒ शोशु॑चद॒घम् ॥२१॥

पृथिवीदेवत्या गायत्री मेधातिथिदृष्टा यजुरन्ता । अस्या अपि श्रौते विनियो-गो नास्ति स्मार्ते स्रस्तरारोहणे शयने (19.) विनियोगः तथा हि [पारस्कर° ३.२.] स्योना पृथिवि नो भवेति दक्षिणपार्श्वैः प्राक्शिरसः संविशन्तीति ॥ हे पृथिवि त्वं नोऽस्माकं स्योना सुखरूपा भव । किम्भूता त्वम् अनृक्षरा ऋक्षरः कण्टकः ऋच्छतेः कण्टकः कन्तपो वा कण्टतेर्वा कृन्ततेर्वा स्याद्गतिकर्मण इति [निरु° ९.३२.] यास्कः तद्रहितां चौरदायादादिदुःखनिवृत्त्यर्थम् न सन्ति ऋक्षराः कण्टकाः दुःखदायिनो यस्यां

सा अनृक्षरा । तथा निवेशनी निविशन्ति जनाः यस्यां सा निवेशनी साधुप्रतिष्ठाना करणाधिकरणयोश्चेति [पा° ३.३.११७.] ल्युट् । तथा सप्रथाः प्रथनं प्रथः विस्तारः प्रथसा सह वर्तमाना सप्रथाः सर्वतः पृथुः । किं च नोऽस्मभ्यं शर्म शरणं यच्छ देहि ॥ अतः परं यजुः तद्विनियोगो गृह्यसूत्रे सम्बन्धिमरणनिमित्ते स्नाने जलापनोदने तथा हि [पारस्कर° ३.१०.] सव्यस्यानामिकया अपनोद्याप नः शोशुचदघमिति । इदं जलं नोऽस्माकमघं पापमपशोशुचत् अपशोचयतु दहतु ॥२१॥

अस्मात्त्वमधि जातोऽसि त्वदयं जायतां पुनः ।
असौ स्वर्गाय लोकाय स्वाहा ॥२२॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां पञ्चत्रिंशोऽध्यायः ॥३५॥ ॥

का° [२५.७.३७.] आहुतिं जुहोति पुत्रो भ्रातान्यो वा ब्राह्मणोऽस्मात्त्वमधि जातोऽसीति । साग्निकस्य पात्रप्रतिपत्त्यन्ते दाहात्पूर्वमाज्याहुतिं (20.) पुत्रादिर्जुहोति ॥ अग्निदेवत्या गायत्री अनिरुक्ता । हे अग्ने त्वमस्मात् यजमानात् आधानकाले अधिजातोऽसि (21.) उत्पन्नोऽसि अतोऽयं यजमानः पुनः त्वत् त्वत्तः जायतामुत्पद्यताम् । असाविति विशेषनामवचनः (22.) तथा हि देवदत्तः स्वर्गाय लोकाय स्वर्गलोकप्राप्त्यर्थं त्वत्तो जायतां त्वदंश एव भवत्विति भावः । स्वाहा सुहुतमस्तु ॥२२॥ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे । पञ्चत्रिंशोऽयमध्यायः पितृमेधाभिधोऽगमत् ॥३५॥ ॥

अथ काण्वशाखायां पाठविशेषः ।

I. ॥ ३१. १-५ [विराल°] - १६ ॥१-१६॥ ॥

II. ॥ ३१. १७-२२ [पत्न्योऽअहो°] ॥१७-२२॥ ॥

III. ॥ ३२. १ [तदापस्तत्प्रजा°] ॥२३॥ २ ॥२४॥ ३ - °गर्भ इत्येषः ॥२५॥
४ । यस्मान्न जात इत्येषः ॥२६॥ ८ [एकनीलम्] - १६ ॥२७-३५॥ ॥

IV. ॥ ३५. १-४ ॥३६-३९॥ ५. ६ - °म्यसौ ॥४०॥ ७-१३ [°भामहे स्व-

स्तये । -] - १७ [चारु॑ ग॒व्यम् K.] - १८ [॰मर्षत K. ॰मंहर्षत J.] - १९ [हुतं K.] - २० [॰माशिषः॑ सन्तु॒ कामाः॒ स्वाहा॑] - २२ । अयं॑ नः॒ शोशु॑चद॒घम् ॥४१-५६॥ [२३. ३२ ॥५७॥ ३६. १७ - वन॒स्पत॑यः॒ शान्तिः॒ शान्ति॑रे॒व शान्तिः॑ ॥५८॥] ॥ चतुरनुवाकेषु षट्पञ्चाशत् (23.) ॥ ॥

इति काण्वीयायां वाजसनेयसंहितायां पञ्चत्रिंशोऽध्यायः ॥३५॥ ॥

I. ऋचं॒ वाचं॒ प्रप॑द्ये॒ मनो॒ यजुः॒ प्रप॑द्ये॒ साम॑ प्रा॒णं प्रप॑द्ये॒ चक्षुः॒ श्रोत्रं॒ प्रप॑द्ये । वागोजः॑ स॒हौजो॒ मयि॑ प्राणापा॒नौ ॥१॥

श्रीगणेशाय नमः ॥ पञ्चाध्यायी आथर्वणेन दधीचा दृष्टा दध्यङ् ह वाऽआथर्वण एतछ् शुक्रमेतं यज्ञं विदां चकारेति [१४. १. १. २०.] श्रुतेः । उग्रश्चेत्याग्निको मन्त्रः [३१. ७. १७, ८६.] अग्निं हृदयेनेत्याद्यध्यायसमाप्तिपर्यन्तमाश्वमेधिकम् [३१. ८-१३.] तद्वयं वर्जयित्वा ॥ का॰ [अनुक्रमण्याम्] शान्तिकरणमाद्यन्तयोः । ऋचं वाचमित्यध्यायेन शान्तिकरणं कार्यम् स्वाध्याये मन्त्रपाठे प्रवर्ग्यमन्त्रादावस्याध्यायस्य (1.) दर्शनात् ॥ अथ मन्त्रार्थः । पञ्च यजूंषि लिङ्गोक्तदेवतानि । ऋचमृग्रूपां वाचमहं प्रपद्ये प्रविशामि शरणं व्रजामि । यजुः यजूरूपं मनः प्रविशामि । प्राणं प्राणरूपं साम प्रपद्ये । चक्षुरिन्द्रियं श्रोत्रेन्द्रियं च प्रपद्ये । वागादिग्रहणं सप्तदशावयवोपलक्षणम् सप्तदशावयवं प्रजापतेर्लिङ्गं प्रपद्ये इत्यर्थः त्रयीविद्यां लिङ्गशरीरं च प्रपन्नं प्रवर्ग्यो न नाशयेदिति भावः ॥ तथा वागिन्द्रियमोजो मानसं बलं धार्ढ्यम् पुनरोजोग्रहणाच्छारीरं च बलम् प्राणापानौ उच्छ्वासनिश्वासवायू च एते सह एकीभूताः सन्तो मयि वर्तन्ते । अतोऽपि प्रवर्ग्योऽस्मान्न हन्तीति भावः ॥१॥

यन्मे॑ छि॒द्रं चक्षु॑षो॒ हृद॑यस्य॒ मन॑सो॒ वाति॑तृण्णं॒ बृह॒स्पति॑र्मे॒ तद्द॑धातु । शं नो॑ भवतु॒ भुव॑नस्य॒ यस्पतिः॑ ॥२॥

बृहस्पतिदेवत्या पङ्क्तिः । मे मम चक्षुषः चक्षुरिन्द्रियस्य यत् छिद्रमवखण्डनं जातम् प्रवर्ग्याचरणेन (2.) । हृदयस्य बुद्धेर्वा यत् छिद्रं जातम् । मनसो वा यत्

अतितृषामतिहिंसितम् । प्रवर्ग्याचरणेन यत् चक्षुर्बुद्धिमनसां व्याकुलत्वं जातम् बृहस्पतिर्देवगुरुः मे मम तत् छिद्रमतितृणं च दधातु संदधातु छिद्रं निवर्तयतु । भुवनस्य भूतजातस्य यः पतिरधिपतिः प्रवर्ग्यरूपो यज्ञः स नोऽस्माकं शं सुखरूपो भवतु । बृहस्पतिना छिद्रापाकरणात्प्रवर्ग्यः कल्याणरूपोऽस्त्वित्यर्थः ॥२॥

a. भूर्भुवः स्वः । b. तत्सवितुर्वरेण्यं भर्गो दे° ॥३॥

कया नश्चित्र आभुवदू° ॥४॥ कस्त्वा सत्यो म° ॥५॥

अभी षु णः स° - - °स्यूतिभिः ॥६॥

भूर्भुवः स्वः त्रीणि यजूंषि । तत्सवितुः कया नः कस्त्वा अभी षु णः एताश्चतस्र ऋचो व्याख्याताः [३, ३५.२७, ३१-४१.] । अभी षु ण इत्यस्यामृचि शतं भवास्यूतिभिरिति बहुवचनम् पूर्वमूतयऽइत्येव पाठः ऊतिभिः अवनैर्हेतुभिः शतमसंख्यरूपो भवसीत्यर्थः ॥३॥४॥५॥६॥

कया त्वं न ऊत्याभि प्रमन्दसे वृषन् । कया स्तोतृभ्य आभर ॥७॥

इन्द्रदेवत्या गायत्री अनिरुक्तेन्द्रपदहीना । आद्यपादे व्यूहद्वयम् । हे वृषन् वर्षतीति वृषा हे सेक्तः इन्द्र वासवो वृत्रहा वृषेत्यभिधानम् [अमर° १.१.४२.] कया ऊत्या केन तर्पणेन हविर्दानेन नोऽस्मानभिप्रमन्दसे अभिमोदयसि मदि स्तु स्वपने (3.) जाड्ये मदे मोदे स्तुतौ गतौ लट् । कया च ऊत्या तृप्त्या स्तोतृभ्यः स्तुतिकर्तृभ्यो यजमानेभ्यः आभर आहर आहरसि धनं दातुमिति शेषः तद्रूपेन तथा वयं कुर्म इति भावः । आभरेति लडर्थे लोट् ॥७॥

इन्द्रो विश्वस्य राजति । शं नोऽअस्तु द्विपदे शं चतुष्पदे ॥८॥

द्विपदा विराट् इन्द्रदेवत्या । विंशत्यक्षरा द्विपदा विराट् कथ्यते । विश्वस्य सर्वस्य जगतः इन्द्रः इदि परमैश्वर्ये इन्दतीतीन्द्रः परमेश्वरः महावीरः आदित्यो वा यो राजति देदीप्यते ईष्टे वा स नोऽस्माकं द्विपदे विभक्तिव्यत्ययः द्विपदां पुत्रादीनां शं सुखरूपोऽस्तु चतुष्पदे चतुःपदां गवादीनां च शं सुखरूपोऽस्तु ॥८॥

शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा ।

शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥ ९ ॥

द्वे अनुष्टुभौ मित्रवरुणादयो देवताः । मित्रो देवो नोऽस्माकं शं सुखरूपो भवतु महावीरप्रसादात् मेद्यति भक्तेषु स्निह्यतीति मित्रः । वरुणः शं सुखरूपो भवतु वृणोत्यङ्गीकरोति भक्तमिति वरुणः । अर्यमा नोऽस्माकं शं भवतु इयर्ति गच्छति भक्तं प्रतीत्यर्यमा । इन्द्रो देवेशो नोऽस्माकं शं भवतु । बृहस्पतिर्देवगुरुर्नः शं भवतु बृहतां वेदानां पतिः पालकः । उरुर्विस्तीर्णः क्रमः पादन्यासो यस्य स विष्णुः नोऽस्माकं शं भवतु वेवेष्टि व्याप्नोतीति विष्णुः ॥ ९ ॥

शं नो वातः पवता७ शं नस्तपतु सूर्यः ।
शं नः कनिक्रदद्देवः पर्जन्योऽअभिवर्षतु ॥ १० ॥

वातो वायुर्नोऽस्माकं शं सुखकारी अपरुषः अव्याधिजनकश्च पवतां वहताम् पव गतौ लोट् । सुवति जनान्स्वस्वव्यापारेषु प्रेरयति सूर्यः शं सुखरूपोऽदहनो भेषजरूपश्च नोऽस्माकं तपतु किरणान्प्रसारयतु । पर्जन्यः पिपर्ति पूरयति जनमिति पर्जन्यः परोऽम्भः पुरो (4.) जन्यतेऽनेन वा पर्जन्यौ रसदब्देन्द्राविति (5.) अभिधानम् [अमर॰ ३. ३. १५१.] पर्जन्यः पर्जन्येशो (6.) देवः नोऽस्माकं शं सुकरं काशनिनादरहितं यथा तथा अभिवर्षतु सिञ्चतु कीदृशः कनिक्रदत् अत्यन्तं क्रन्दतीति शब्दं कुर्वन् दाधर्तिदर्धर्तीत्यादिना [पा॰ ७.४. ६५.] यङ्लुगन्तो निपातः ॥१०॥

a. अहानि शं भवन्तु नः श७ रात्रीः प्रतिधीयताम् ।
b. शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या ।
शं न इन्द्रापूषणा (7.) वाजसातौ शमिन्द्रासोमा सुविताय शं योः ॥११॥

द्विपदा गायत्री अहानि रात्रयश्च देवताः । अहानि दिनानि नोऽस्माकं शं सुखरूपाणि भवन्तु रात्रीः शं सुखरूपाः अस्मासु प्रतिधीयतां प्रतिदधातु महावीर इति शेषः कर्तरि यक् छान्दसः ॥ शं न इन्द्राग्नी । त्रिष्टुप् इन्द्राग्नी इन्द्रावरुणौ इन्द्रापूषणौ इन्द्रासोमौ देवताः । इन्द्राग्नी अवोभिः पालनैः कृत्वा नोऽस्माकं शं सुखरूपौ भवताम् । रातं दत्तं हव्यं ययोस्तौ रातहव्यौ हविस्तृप्तौ इन्द्रावरु-

णौ नः शं भवताम् । वाजसातौ वाजस्यान्नस्य सातौ दाने निमित्तभूते इन्द्रापूषणा इन्द्रपूषसंज्ञौ देवौ नोऽस्माकं सुखरूपौ भवताम् । इन्द्रासोमा इन्द्रसोमौ देवौ शं सुखरूपौ भवताम् । किमर्थम् सुविताय सुष्ठु इतं सुवितम् साधुगमनाय साधुप्रसवाय वा । तथा शं रोगाणां शमनाय । योः यवनाय (४.) पृथक्करणाय च भयानाम् रोगं भयं च निवर्त्य सुखरूपौ भवतामित्यर्थः । देवताद्वन्द्वे चेति [पा° ६.३.२६.] सर्वत्र पूर्वपदस्य दीर्घः ॥ ११ ॥

शं नो॑ दे॒वीर॒भिष्ट॑य॒ऽआपो॑ भवन्तु पी॒तये॑ । शं योर॒भिस्र॑वन्तु नः ॥ १२ ॥

अब्दैवत्या गायत्री । देवीः देव्यो दीप्यमाना आपो नोऽस्माकमभिष्टये अभिषेकायाभीष्टाय वा पीतये पानाय च शं सुखरूपा भवन्तु अस्माकं स्नाने पाने चापः सुखयित्र्यो भवन्तु । आपः शं योः रोगाणां शमनं भयानां यवनं पृथक्करणं च अभिस्रवन्तु नोऽस्माकं भयरोगनाशं कुर्वन्त्वित्यर्थः ॥ १२ ॥

स्यो॒ना पृ॑थिवि नो भवा° - - स॒प्रथः॑ ॥ १३ ॥ आपो॒ हि ष्ठा म॑° ॥ १४ ॥

यो वः॑ शि॒वत॑° ॥ १५ ॥ तस्मा॒ऽअरं॑ ग° ॥ १६ ॥

स्योना पृथिवि । व्याख्याता [३५.२१.] ॥ आपो हि ष्ठा । तृचो व्याख्यातः [११,५०-५२.] ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

II. द्यौः शान्ति॑र॒न्तरि॑क्ष॒ꣳ शान्तिः॑ पृथि॒वी शान्ति॒रापः॒ शान्ति॒रोष॑धयः॒ शान्तिः॑ । वन॒स्पत॑यः॒ शान्ति॒र्विश्वे॑ दे॒वाः शान्ति॒र्ब्रह्म॒ शान्तिः॒ सर्व॒ꣳ शान्तिः॒ शान्ति॑रे॒व शान्तिः॒ सा मा॒ शान्ति॑रेधि ॥ १७ ॥

यजूंषि संदृशि जीव्यासमित्यन्तानि [क° ११.] । एकाधिका शक्वरी (९.) । द्यौः द्युलोकरूपा या शान्तिः अन्तरिक्षरूपा च या शान्तिः पृथिवी भूलोकरूपा या शान्तिः आपो जलरूपा या शान्तिः ओषधयः ओषधिरूपा या शान्तिः वनस्पतयः वृक्षरूपा या शान्तिः विश्वे देवाः सर्वदेवरूपा या शान्तिः ब्रह्म त्रयीलक्षणं परं वा तद्रूपा या शान्तिः सर्वं सर्वजगद्रूपा या शान्तिः शान्तिरेव शान्तिः या स्वरूपतः शान्तिः सा शान्तिः मा मां प्रति एधि अस्तु पुरुषव्यत्ययः । महावीरप्रसादात्सर्व

शान्तिरूपं मां प्रत्यस्त्वित्यर्थः । यद्वा द्यौरित्यादिषु विभक्तिव्यत्ययः सप्तम्यर्थे प्रथमा दिव्यन्तरिक्षे पृथिव्यामप्स्वोषधिषु वनस्पतिषु विश्वदेवेषु (10.) ब्रह्मणि सर्वस्मिंश्च या शान्तिः सा मां प्रत्यस्त्वित्यर्थः ॥ १७ ॥

दृते (11.) दृꣳह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् । मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे । मित्रस्य चक्षुषा समीक्षामहे ॥ १८ ॥

दृते दृ विदारे विदीर्णे जराजर्जरितेऽपि शरीरे हे महावीर मा मां त्वं दृंह दृढीकुरु यद्वा दृते विदीर्णे कर्मणि मां दृंह अच्छिद्रं कर्म कुरु यद्वा ससुषिरत्वात् सेक्तृवाच्च दृतिशब्देन महावीरः हे दृते (12.) महावीर मां दृंह दृढीकुरु । कथं दार्ढ्यम् तदाह सर्वाणि भूतानि प्राणिनो मा मां मित्रस्य चक्षुषा समीक्षन्तां सम्यक् पश्यन्तु मित्रदृष्ट्या सर्वे मां पश्यन्तु नारिदृष्ट्या सर्वेषां प्रियो भूयासमित्यर्थः । किं च अहमपि सर्वाणि भूतानि मित्रस्य चक्षुषा समीक्षे पश्यामि सर्वे मे प्रियाः सन्तु । मित्रचक्षुः शान्तं भवति मित्रः कं चन न हन्ति मित्रं च कश्चन न हन्ति एवं परस्पराद्रोहेण सर्वानहिंसन्तो मित्रस्य चक्षुषा वयं समीक्षामहे पश्यामः ॥ १८ ॥

दृते दृꣳह मा । ज्योक्ते संदृशि जीव्यासं ज्योक्ते संदृशि जीव्यासम् ॥ १९ ॥

हे दृते वीर मां दृंह आदरार्थं पुनर्वचनम् । हे महावीर ते तव संदृशि संदर्शने अहं ज्योक् चिरं जीव्यासं जीवेयम् जीवेराशीर्लिङि रूपम् । ज्योगिति निपातश्चिरार्थः । पुनरुक्तिरादरार्था ते संदृशि ज्योग्जीव्यासम् ॥ १९ ॥

नमस्ते हरसे शोचिः ॥ २० ॥

व्याख्याता [१७. ११.] ॥ २० ॥

नमस्तेऽअस्तु विद्युते नमस्ते स्तनयित्नवे ।
नमस्ते भगवन्नस्तु यतः स्वः समीहसे ॥ २१ ॥

हे अनुष्टुभौ विद्युत्स्तनयित्नुरूपभगवद्देवते । हे भगवन् महावीर विद्युते विद्युद्रूपाय ते तुभ्यं नमोऽस्तु स्तनयित्नवे स्तनयित्नुर्गर्जितं तद्रूपाय ते नमो

ऽस्तु । यतः कारणात् स्वः स्वर्गं गत्तुं त्वं समीहसे चेष्टसे अतस्ते तुभ्यं नमोऽस्तु ॥२१॥

यतो॑-यतः स॒मीह॑से (13.) ततो॑ नो॒ऽअभ॑यं कुरु ।

शं नः॑ कुरु प्र॒जाभ्योऽभ॑यं नः प॒शुभ्यः॑ ॥२२॥

हे महावीर यतो-यतः यस्माद्यस्माद्दुश्चरिताद्वं समीहसे अस्मास्वपकर्तुं चेष्टसे ततस्ततो नोऽस्माकमभयं कुरु । किं च नोऽस्माकं प्रजाभ्यः शं सुखं कुरु नोऽस्माकं पशुभ्यः चाभयं भीत्यभावं कुरु ॥२२॥

सु॒मि॒त्रि॒या न॒ आप॒ ओष॑° ॥२३॥

यजुः । व्याख्यातम् [६.२२.] ॥२३॥

तच्चक्षु॑र्दे॒वहि॑तं पु॒रस्ता॑च्छु॒क्रमु॒च्चर॑त् । पश्ये॑म श॒रदः॑ श॒तं जीवे॑म श॒रदः॑ श॒त॒७ शृणु॑याम श॒रदः॑ श॒तं प्रब्र॑वाम श॒रदः॑ श॒तमदी॑नाः स्याम श॒रदः॑ श॒तं भूय॑श्च श॒रदः॑ श॒तात् ॥२४॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां षट्त्रिंशोऽध्यायः ॥३६॥ ॥

सूर्यदेवत्या ब्राह्मी त्रिष्टुप् । एतैर्मन्त्रैर्यो महावीरोऽस्माभिः स्तुतः तत् चक्षुः जगतां नेत्रभूतमादित्यरूपं पुरस्तात् पूर्वस्यां दिशि उच्चरत् उच्चरति उदेति इतश्च लोपः परस्मैपदेष्विति [पा° ३.४.९७.] इकारलोपः । कीदृशं तत् देवहितं देवैर्हितं स्थापितम् यद्वा देवानां हितं प्रियम् शुक्रं शुक्लं पापासंसृष्टं शोचिष्मद्वा । तस्य प्रसादात् शतं शरदः वर्षाणि वयं पश्येम शतवर्षपर्यन्तं वयमव्याहतचक्षुरिन्द्रिया भवेम प्रार्थनायां लिङ् अत्यन्तसंयोगे द्वितीया । शतं शरदः जीवेम अपराधीनजीवना भवेम । शतं शरदः शृणुयाम स्पष्टश्रोत्रेन्द्रिया भवेम । शतं शरदः प्रब्रवाम अस्खलितवागिन्द्रिया भवेम । शतं शरदः अदीनाः स्याम न कस्याप्यग्रे दैन्यं कुर्याम । शतात् शरदः शतवर्षोपर्यपि भूयश्च बहुकालम् पश्येमेत्यादि योज्यम् ॥२४॥

श्रीमन्महीधरकृते वेददीपे मनोहरे । अध्यायः शान्तिपाठार्थः षट्त्रिंशोऽयं प्रकाशितः ॥३६॥ ॥

अथ काण्वशाखायां पाठविशेषः ॥

१ [सहोजो] - ५ [दुल्हा] - ११ [रात्रिः] - १६ ॥ १-१६ ॥ १७ - - वनस्पतयः शान्तिः शान्तिरेव शान्तिः ॥ १७ ॥ १८-२४ -भृणुयाम शरदः शतम् ॥ १८-२४ ॥ ॥ अनुवाके चतुर्विंशतिः ॥ ॥

इति काण्वीयायां वाजसनेयसंहितायां षट्त्रिंशोऽध्यायः ॥ ३६ ॥ ॥

I. a. देवस्य त्वा सवितुः प्रस° । b. आददे नारिरसि ॥ १ ॥

युञ्जते मन उत युं° ॥ २ ॥

श्रीगणेशाय नमः (1.) । का° [२६. १. ३.] देवस्य त्वेत्यभ्रिमादायौदुम्बरीं वैकङ्कतीं वारत्निमात्रीं सव्ये कृत्वा दक्षिणेनालभ्य जपति युञ्जतऽइति । उदुम्बरतरुत्थां विकङ्कततरुत्थां वा हस्तप्रमाणामभ्रिं देवस्य त्वा नारिरसीति मन्त्रेणादाय वामहस्ते तां कृत्वा दक्षिणहस्तेन स्पृष्ट्वा युञ्जते मन इति मन्त्रं जपतीति सूत्रार्थः ॥ देवस्य त्वा । अभ्रिदेवत्यं यजुः । हे (2.) अभ्रे सवितुर्देवस्याज्ञायां स्थितोऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां त्वामाददे गृह्णामि त्वं च नारिरसि स्त्रीनाम्नी भवसि ॥ युञ्जते मनः । व्याख्याता [५. १४.] ॥ १ ॥ २ ॥

a. देवी द्यावापृथिवी मखस्य वामद्य शिरो राध्यासं देवयजने पृथिव्याः ।
b. मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ ३ ॥

द्यावापृथिवीदेवतं यजुः ब्राह्मी गायत्री ॥ का° [२६. १. ४.] मृदमादत्ते पिण्डवद्देवी द्यावापृथिवी इति । अध्वर्युर्देवीति मन्त्रेण विघणं (4.) मृत्पिण्डमादत्ते पिण्डवदिति (5.) पाणिभ्यां गृह्णाति दक्षिणः (6.) साभ्रिरिति लभ्यतऽइति सूत्रार्थः ॥ मन्त्रार्थस्तु हे देवी देव्यौ दीप्यमाने द्यावापृथिवी द्यावापृथिव्यौ अद्यास्मिन्दिने पृथिव्याः देवयजने देवा इज्यन्ते अत्रेति देवयजनस्थाने मखस्य यज्ञस्य शिरो राध्यासं साधयेयम् राध साध संसिद्धौ । महावीरो यज्ञशिरः । किं कृत्वा वां युवां द्यावापृथिव्यौ आदायेति शेषः दिवोंऽशं जलं पृथिव्यंशं मृदमादायेत्यर्थः । एवं द्यावापृथिव्यौ प्रार्थ्य मृदमाह मखाय हे मृत् यज्ञाय त्वां गृह्णामि । एवं सा-

मान्येनोक्ता विशेषमाह मखस्य यज्ञस्य शीर्ष्णे शिरसे महावीराय त्वां गृह्णामीति शेषः । तं मृत्पिण्डमुत्तरस्थापिते कृष्णाजिने निदध्यात् ॥३॥

a. दे॒व्यो॑ व॒म्र्यो भू॒तस्य॑ प्रथम॒जा म॒खस्य॑ वो॒ऽद्य शिरो॑ राध्यासं दे॒व॒यज॑ने पृथि॒व्याः । b. म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे ॥४॥

का० [२६. १. ५. ६.] उत्तरतो देव्यो वम्र्य इति वल्मीकवपाम् । उपदीकृतो मृत्संचयो वल्मीकस्तस्य वपेव वपा तां मध्यस्थं लोष्टमादाय कृष्णाजिने मृत्पिण्डादुत्तरे तूष्णीं निदध्यादिति सूत्रार्थः ॥ वल्मीकवपादेवता आर्षी पङ्क्तिः । हे देव्यो दीप्यमानाः वम्र्यः उपजिह्विकाः वो युष्मानादाय पृथिव्याः देवयजने मखस्य शिरो महावीरमद्य राध्यासं सम्पादयेयम् । मखाय त्वामाददे मखस्य शीर्ष्णे त्वामाददे इति व्याख्यातम् । किम्भूता वम्र्यः भूतस्य प्राणिजातस्य प्रथमजाः प्रथमोत्पन्नाः पृथिवी जन्तूनां प्रथमजा तत्सम्बन्धात् वम्र्योऽपि प्रथमजा उच्यन्ते ॥४॥

a. इ॒यत्यग्र॑ऽआसीन्म॒खस्य॑ (7.) ते॒ऽद्य शिरो॑ राध्यासं दे॰ पृ॰ ।

b. म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे ॥५॥

का० [२६. १. ७.] इयत्यग्रऽइति वराहविहतम् । वराहोत्खातमृदमादाय तूष्णीं कृष्णाजिने वल्मीकवपोत्तरे निदध्यादिति सूत्रार्थः ॥ वराहविहतमृद्दैवतं यजुः ब्राह्मी गायत्री । हे पृथिवि भवती अग्रे आदौ वराहोद्धरणसमये इयती प्रादेशमात्राभिनयेन प्रदर्श्यते एतत्प्रमाणा आसीत् इयती ह वाऽइयमग्रे पृथिव्यास प्रादेशमात्रीत्यादि वराह उज्जघानेति श्रुतेः [१४. १. २. ११.] । ते इति द्वितीयार्थे षष्ठी तां त्वामादाय पृथिव्याः देवयजनेऽद्य मखस्य शिरो राध्यासम् । मखायेति व्याख्यातम् ॥५॥

a. इन्द्र॒स्यौज॑ स्थ म॒खस्य॑ वो॒ऽद्य शिरो॑ राध्यासं दे॒व॒यज॑ने पृथि॒व्याः ।

b. म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे ॥६॥

का० [२६. १. ८.] इन्द्रस्यौजः स्थेति पूतीकान् । पूतीकान् रोहिषतृणान्यादाय

तूष्णीं कृष्णाजिने वराहविहतोत्तरे निदध्यादिति सूत्रार्थः ॥ आदारदेवत्यम् अक्त्रि-ष्टुप् । हे पूतीका यूयमिन्द्रस्य ओजः तेजोरूपाः स्थ भवथ वो युष्मानादाय पृथिव्याः देवयजने अद्य मखस्य शिरो राध्यासम् मखाय वो गृह्णामि मखस्य शीर्ष्णे महावीराय च गृह्णामीत्युक्तम् ॥ का° [२६. १. ९.] मखायेति पयः । पय आदाय तूष्णीं कृष्णाजिने पूतीकोत्तरे निदध्यादिति सूत्रार्थः ॥ पयोदेवत्यम् । हे पयः मखाय मखशीर्ष्णे त्वां गृह्णामि ॥ तूष्णीं गवेधुका अपि ग्राह्याः ॥ का° [२६. १. ११.] सम्भृतानभिमृशति मखायेति । सम्भृतान्सम्भारान्करेण (8.) स्पृशेदित्यर्थः ॥ सम्भारदेवत्यम् । हे सम्भाराः मखाय तच्छीर्ष्णे च वः स्पृशामि ॥ ६॥

a. प्रैतु ब्रह्मणस्पतिः प्र दे° ॥

b. मखाय त्वा मखस्य त्वा शीर्ष्णे मखाय त्वा मखस्य त्वा शीर्ष्णे मखाय त्वा मखस्य त्वा शीर्ष्णे ॥७॥

का° [२६. १. १२.] कृष्णाजिनं परिगृह्योत्तरतः परिवृतं गच्छन्ति प्रैतु ब्रह्मणस्पतिरिति । अध्वर्युप्रतिप्रस्थात्राद्यः कृष्णाजिनं समन्तादादाय प्रैत्विति जपन्तोऽन्तःपात्यादुत्तरे परिवृतं प्रति गच्छन्ति । पञ्चारत्निमितः समचतुरस्रः प्राग्द्वारः सिकतोपकीर्णः पूर्वमेव कृतः सप्तभूसंस्कारसंस्कृतश्छादितप्रदेशः परिवृत उच्यते । इति सूत्रार्थः ॥ बृहती । व्याख्याता [३३. ८९.] ॥ का° [२६. १. १३. १४.] परिवृते निदधाति सम्भारानुद्धतावोक्षिते सिकतोपकीर्णे प्राग्द्वारे मखायेति । अध्वर्युः कृष्णाजिनस्थानेव सम्भारान्परिवृते निदधाति कीदृशे उद्धतावोक्षिते उल्लिखितजलसिक्ते एतत्संस्कारद्वयं पञ्चाधिकम् सिकतायुक्ते प्राग्द्वारे चेति सूत्रार्थः ॥ हे सम्भारा मखाय युष्मान्निदधामि ॥ का° [२६. १. १५.] सम्भारैः संसृजति मखायेति । गवेधुकाजापयसी पृथक्कृत्य वल्मीकवपादित्रिसम्भारैर्मृत्पिण्डं मिश्रयतीत्यर्थः ॥ हे सम्भारा युष्मान्मखाय मृत्पिण्डेन संसृजामि ॥ का° [२६. १. १६.] मृदमादाय मखायेति महावीरं करोति प्रादेशमात्रमूर्ध्वमासेचनवन्तं मेखलावन्तं मध्यसंगृहीतमूर्ध्वं मेखलायास्त्र्यङ्गुलम् । महावीरपर्याप्तं तूष्णीं मृत्पिण्डमादाय मन्त्रेण महावीरं करोति कीदृशम् प्रादेशोच्चं (9.) गर्तवन्तं मेखलायुतं मध्ये संकुचितं मेखलो-

परि त्र्यङ्गुलोच्चमिति सूत्रार्थः ॥ हे महावीर मखाय तच्छीर्ष्णे त्वां करोमि ॥७॥

मखस्य शिरोऽसि । मखाय त्वा मखस्य त्वा शीर्ष्णे । मखस्य शिरोऽसि । मखाय त्वा मखस्य त्वा शीर्ष्णे । मखस्य शिरोऽसि । मखाय त्वा मखस्य त्वा शीर्ष्णे ।

मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे ॥८॥

का° [२६.१.१७.] निष्ठितमभिमृशति मखस्य शिर इति । निष्पन्नं महावीरं वामकरस्थं दक्षिणेन स्पृशतीत्यर्थः ॥ हे महावीर त्वं मखस्य शिरो मूर्धासि भवसि ॥ का° [२६.१.१९.] एवमितरौ प्रतिमन्त्रम् । इतरौ द्वौ महावीरौ प्रतिमन्त्रमेवमेव करोति अभिमृशति चेत्यर्थः ॥ मखाय द्वितीयं महावीरं करोमि मखस्य निष्पन्नं स्पृशामि मखाय तृतीयं महावीरं करोमि मखस्येति निष्पन्नं स्पृशति । मखस्य शिरोऽसि मखाय त्वा मखस्य शीर्ष्णे (10.) त्वामभिमृशामि ॥ का° [२६.१.२२.] गवेधुकाभिः श्लक्ष्णयति मखायेति प्रतिमन्त्रम् । गवेधुकाभिः महावीरान् घर्षणेन (11.) मृद्वन्करोति मखायेति प्रतिमन्त्रमेकैकम् ॥ मखाय मखस्य शीर्ष्णे च त्वां गवेधुकाभिः श्लक्ष्णयामि । एवमग्रिमौ मन्त्रौ ॥८॥

a. अश्वस्य त्वा वृष्णः शक्ना धूपयामि देवयजने पृथिव्याः । b. मखाय त्वा मखस्य त्वा शीर्ष्णे । c. d = a. b. । e. f = a. b. । g. मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे ॥९॥

का° [२६.१.२३.] अश्वशकृता धूपयत्यश्वस्येति प्रतिमन्त्रम् । दक्षिणाग्निदीप्तेनाश्वपुरीषेण त्रिभिर्मन्त्रैस्त्रीन्महावीरान्धूपयेत् एकैकधूपने सप्तसप्ताश्वशकृन्ति गृह्णाति (12.) ॥ हे महावीर पृथिव्याः देवयजने मखाय मखस्य शीर्ष्णे च वृष्णः सेक्तुरश्वस्य शक्ना शकृता पुरीषेण त्वा त्वां धूपयामि पद्दन्न इति सूत्रेण [पा° ६.१.६३.] शकृच्छब्दस्य शकन्नादेशः । एवमितरमन्त्राभ्यामितरौ धूपयेत् ॥ का° [२६.१.२४.]

प्रदहनं च मखायेति प्रतिमन्त्रम् । मखायेति त्रिभिर्मन्त्रैस्त्रीन्महावीरानुखावत् श्र-पयेत् पिन्वनरौहिणीः सहेत्यर्थः ॥ मखाय मखस्य शीर्ष्णे त्वा त्वां निर्दहामि । ए-वमितरौ ॥ १ ॥

a. ऋजवे॑ त्वा । b. साधवे॑ त्वा । c. सुक्षित्यै॒ त्वा॑ ।

d. मखाय॑ त्वा मखस्य॑ त्वा शीर्ष्णे मखाय॑ त्वा मखस्य॑ त्वा शीर्ष्णे मखाय॑ त्वा मखस्य॑ त्वा शीर्ष्णे ॥ १० ॥

का॰ [२६.१.२५.] पञ्चानुद्धरत्यृजवे त्वेति प्रतिमन्त्रम् । पञ्चान्महावीरानापाकादिवोद्धरति (13.) त्रिभिर्मन्त्रैरित्यर्थः ॥ ऋजवे । असौ लोक ऋजुः तत्र सत्यमेव न तु कौटिल्यम् सत्यमादित्यः हे महावीर ऋजवे सत्यायादित्याय त्वा त्वामुद्धपामीति शेषः तथा च श्रुतिः [१४.१.२.२२.] स उद्धपत्यृजवे त्वेत्यसौ वै लोक ऋजुः सत्यꣳ ह्यृजुः सत्यमेष य एष तपत्येष उ प्रथमः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाहर्जवे त्वेति ॥ अथ द्वितीयम् साधवे त्वा । साधवे वायवेऽर्थाय वायुप्रीत्यै त्वामुद्धपामि तथा च श्रुतिः [१४.१.२.२३.] साधवे त्वेत्ययꣳ साधुर्योऽयं पवतऽएष हीमां लोकान्त्सिद्धोऽनुपवतऽएष उ द्वितीयः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह साधवे त्वेति ॥ अथ तृतीयम् सुक्षित्यै त्वा । सुतरां क्षियन्ति निवसन्ति सर्वभूतानि यस्यां सा सुक्षितिर्भूमिः तथा च श्रुतिः [१४.१.२.२४.] सुक्षित्यै त्वेत्ययं वै लोकः सुक्षितिरस्मिन्हि (14.) लोके सर्वाणि भूतानि क्षियन्त्यथो ऽग्निर्वै सुक्षितिरग्निर्ह्येवास्मिं लोके सर्वाणि भूतानि क्षियन्त्येष उ तृतीयः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह सुक्षित्यै त्वेति ॥ का॰ [२६.१.२६.] अजापयसावसिञ्चति मखायेति प्रतिमन्त्रम् । अजादुग्धेन त्रीन्महावीरांस्त्रिभिः तुल्यमन्त्रैः सिञ्चतीत्यर्थः ॥ मखाय मखशीर्ष्णे चाजापयसा त्वां सिञ्चामीत्यर्थः ॥ १० ॥ इति महावीरसम्भरणं समाप्तम् ॥ ॥

II. a. यमाय॑ त्वा । b. मखाय॑ त्वा । c. सूर्य॑स्य त्वा तप॑से ।

d. देवस्त्वा॑ सविता मध्वा॑नक्तु । e. पृथिव्याः सꣳस्पृश॑स्पाहि ।

f. अर्चिरसि शोचिरसि तपोऽसि ॥११॥

का° [२६.२.१३.] ब्रह्मानुज्ञातो यमाय त्वेति महावीरं प्रोक्षति । प्रचरेति ब्रह्मणानुज्ञातोऽध्वर्युरुपविश्य यमाय त्वेति मन्त्रत्रयेण प्रचरणीयं महावीरं वारत्रयं प्रोक्षतीत्यर्थः ॥ त्रीणि यजूंषि । यमयति नियच्छति सर्वमिति यम आदित्यस्तत्प्रीत्यै त्वा त्वां प्रोक्षामि तथा च श्रुतिः [१४.१.३.४.] स प्रोक्षति यमाय त्वेत्येष वै यमो य एष तपत्येष हीद७ सर्वं यमयत्येतेनेद७ सर्वं यतमेष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह यमाय त्वेति ॥ मखाय त्वा । मखो यज्ञः प्रवर्ग्यः सूर्यरूपस्तस्मै त्वां प्रोक्षामि तथा च श्रुतिः [१४.१.३.५.] एष वै मखो य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह मखाय त्वेति ॥ सूर्यस्य त्वा तपसे । तपतीति तपस्तेजः सूर्यतेजोरूपाय प्रवर्ग्याय त्वां प्रोक्षामि तथा च श्रुतिः [१४.१.३.६.] एष वै सूर्यो य एष तपत्येष उ प्रवर्ग्यस्तदेवमेवैतत्प्रीणाति तस्मादाह सूर्यस्य त्वा तपसऽइति ॥ का° [२६.२.२०.] अञ्जन्तीत्युच्यमाने देवस्त्वेत्यनक्ति महावीरमाज्यं संस्कृत्य । होत्रा अञ्जन्ति यं प्रथयन्तीति मन्त्रे पठ्यमानेऽध्वर्युराज्यं विधिना संस्कृत्य तेनाज्येन प्रचरणीयं महावीरं मन्त्रेणानक्ति ॥ सविता देवः मधा मधुना मधुरेण सर्वजगद्रूपेणाज्येन हे महावीर त्वामनक्तु लिम्पतु मध्वेति नुमभावः आगमस्यानित्यत्वात् तथा च श्रुतिः [१४.१.३.१३.] सर्वं वाऽइदं मधु यदिदं किं च तदेनमनेन सर्वेण समनक्तीति ॥ का° [२६.२.२१.] रजतशतमानं खरऽउपगूहति पृथिव्याः स७स्पृश इति । रजतस्य शतमानं शतरक्तिकामितं रजतं खरे सिकतान्तरुपगूहतीत्यर्थः ॥ प्राजापत्या गायत्री रजतदेवत्या । संस्पृशति उपद्रवार्थं स्पर्शं करोति संस्पृक् राक्षसः क्विबन्तम् पृथिव्याः सम्बन्धिनः संस्पृशः राक्षसात् महावीरं हे रजत त्वं पाहि रक्ष । देवा राक्षसेभ्यो भीताः सन्तो यज्ञरक्षार्थमग्नेरपत्यं रजतं रक्षसां घाताय खरे निदधुः अथ च पृथिवी महावीरपाकेऽग्नेर्भीता ततोऽसौ मा दह्यतामिति रजतं खरेऽन्तर्हितमिति श्रुतौ कथा तथा च श्रुतिः [१४.१.३.१४.] देवा अबिभयुर्यद्वै न इममधस्तादृक्षा७सि नाष्ट्रा न हन्युरित्यग्नेर्वाऽएतद्रेतो यद्धिरण्यं नाष्ट्राणा७ रक्षसामपहत्याऽइति तथा [१४.१.३.१४.] अथो पृथिव्यु ह वाऽएतस्माद्बिभयां चकार यद्वै मायं तप्तः शुशुचानो न

हिᳬस्यादिति तदेवास्याऽएतदन्तर्दधाति रजतमिति ॥ का° [२६. ३, ३. ४.] सᳬसीद-स्वेत्युच्यमाने मुञ्जप्रलवान्हिगुणानादीप्य प्रतिदिशं खरे करोति तेषु महावीरमा-ञ्यवन्तमर्चिरसीति । होत्रा संसीदस्वेति [११. ३७.] पठ्यमानेऽध्वर्युर्द्विगुणितान्मुञ्ज-खण्डान्गार्हपत्ये प्रदीप्य खरे चतुर्दिक्षु कृत्वा तेषु मुञ्जेषु संस्कृताज्यपूर्णं प्रचर-णीयं महावीरं निदधातीति सूत्रार्थः ॥ यजुस्त्रिष्टुप् घर्मदेवत्या । हे महावीर त्व-मर्चिश्चन्द्रकान्तिरूपोऽसि शोचिरग्नितेजोरूपोऽसि तपः सूर्यतपरूपोऽसि एष वै घर्मो य एष तपति सर्वं वाऽएतदेष तदेतमेवैतत्प्रीणातीति श्रुतेः [१४. १. ३. १७.] यदादित्यगतं तेजो जगद्भासयतेऽखिलं यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक-मिति स्मृतेश्च [भगवद्गीता° १५. १२.] ॥ ११ ॥

a. अनाधृष्टा पुरस्तादग्नेराधिपत्यऽआयुर्मे दाः ।

b. पुत्रवती दक्षिणत इन्द्रस्याधिपत्ये प्रजां मे दाः ।

c. सुषदा पश्चाद्देवस्य सवितुराधिपत्ये चक्षुर्मे दाः ।

d. आश्रुतिरुत्तरतो धातुराधिपत्ये रायस्पोषं मे दाः ।

e. विधृतिरुपरिष्टाद्बृहस्पतेराधिपत्यऽओजो मे दाः ।

f. विश्वाभ्यो मा नाष्ट्राभ्यस्पाहि । g. मनोरश्वासि ॥ १२ ॥

का° [२६. ३. ५.] अनाधृष्टेति वाचयति प्रादेशमध्यधि धारयन्तम् । महावीरोप-र्यङ्गुष्ठाङ्गुलिदेशं धरन्तं यजमानमध्वर्युर्मन्त्रान्वाचयतीति सूत्रार्थः ॥ सप्त यजूंषि पृथि-वीदेवत्यानि यजमानस्याशीः । हे पृथिवि या त्वं पुरस्तात् पूर्वस्यां दिशि अना-धृष्टा रक्षोभिरनाधर्षिता अग्नेराधिपत्ये स्वामित्वे सति मे मह्यमायुर्दाः देहि ददा-तेर्लुङि मध्यमैकवचनेऽडभाव आर्षः अग्निमेवास्याऽअधिपतिं करोतीति [१४. १. ३. १६.] श्रुतेः ॥ या त्वं दक्षिणस्यां दिशि इन्द्रस्याधिपत्ये सति पुत्रवती पुत्रयुता सा मे मह्यं प्रजां पुत्रादिकां दाः देहि इन्द्रमेवास्याऽअधिपतिं करोति नाष्ट्राणाᳬ र-क्षसामपहत्याऽइति [१४. १. ३. २०.] श्रुतेः ॥ या त्वं पश्चात् पश्चिमायां दिशि सुष-दा भवसि सुष्ठु अस्यां सीदन्ति जना इति सुषदा ईषद्दुःसुष्विति [पा° ३. ३. १२६.]

खल्प्रत्ययः सवितुर्देवस्याधिपत्ये सति सा त्वं मे चक्षुः नेत्रेन्द्रियं दाः देहि देवमेवास्यै सवितारमधिपतिं करोतीति [१४. १. ३. २१.] श्रुतेः ॥ हे पृथिवि या त्वमुत्तरतः उत्तरस्यां दिशि धातुर्ब्रह्मण आधिपत्ये सति आश्रुतिरसि आश्रावयन्ति ऋत्विजो यस्यां सा आश्रुतिः यज्ञियो ह्युत्तरदेशः सा त्वं मे रायो धनस्य पोषं पुष्टिं दाः देहि धातारमेवास्याऽअधिपतिं करोतीति [१४. १. ३. २२.] श्रुतेः ॥ या त्वमुपरिष्टादुपरिप्रदेशे बृहस्पतेराधिपत्ये सति विधृतिरसि विशेषेण धारयतीति विधृतिः उपरिष्टाज्जुह्वादिकं ध्रियते सा त्वं मे मह्यमोजो बलं दाः देहि बृहस्पतिमेवास्याऽअधिपतिं करोतीति [१४. १. ३. २३.] श्रुतेः ॥ का° [२६. ३. ७.] विश्वाभ्यो मेति दक्षिणात उत्तानं पाणिं निदधाति । महावीराद्दक्षिणभूमौ (15.) यजमानो मन्त्रं पठन्स्वकरं निदधात्युत्तानम् ॥ यजुर्बृहती । हे महावीरदक्षिणभूमे विश्वाभ्यः सर्वाभ्यः नाष्ट्राभ्यः नाशकर्त्रीभ्यः पिशाचादिभ्यो लोकप्रसिद्धं नो (16.) ऽस्मान् पाहि रक्ष सर्वाभ्यो मार्त्तिभ्यो गोपायेति [१४. १. ३. २४.] श्रुतेः छन्दसि वाप्राम्रेडितयोरिति [पा° ८. ३. ४९.] विसर्गस्य सत्वम् ॥ का° [२६. ३. ८.] मनोरश्वेति प्रादेशमुत्तरतः । महावीरादुत्तरतो यजमानो निम्नप्रदेशं निदधातीति सूत्रार्थः ॥ दैवी पङ्क्तिः । हे घर्मोत्तरभूमि त्वं मनोः राज्ञः अश्वा वडवासि वहनाय अश्वा ह वाऽइयं भूत्वा मनुमुवाहेति [१४. १. ३. २५.] श्रुतेः ॥१२॥

a. स्वाहा॑ म॒रुद्भिः॒ परि॑श्रीयस्व ।

b. दि॒वः स॒ꣳस्पृश॑स्पाहि । मधु॒ मधु॒ मधु॑ ॥१३॥

का° [२६. ३. ९. १०.] धृष्टिभ्यां भस्मना परिकीर्याङ्गारैश्च विकङ्कतशकलैः परिश्रयति त्रयोदशभिः प्रागुदग्भिः स्वाहा मरुद्भिरित्यधिकं (17.) दक्षिणतो द्वौ मन्त्रेण । अध्वर्युर्धृष्टिभ्यां गार्हपत्यस्य भस्माङ्गारांश्च महावीरं परितो निक्षिप्य प्रागग्रैरुदगग्रैस्त्रयोदशविकङ्कतशकलैर्महावीरं वेष्टयति अङ्गारोपरि शकलान्निक्षिपतीत्यर्थः तन्मध्याद्द्वौ शकलौ मन्त्रेण प्राञ्चौ निदधाति शेषांस्तूष्णीम् एवं प्रतिदिशं त्रिषु त्रिषु स्थितेषु अधिकं त्रयोदशं दक्षिणतो निदधातीति सूत्रार्थः ॥ मासानां त्रयोदशत्वात्त्रयोदशशकलैराच्छादनम् त्रयोदश वै मासाः संवत्सरस्य संवत्सर एष

य एष तपत्येष उ प्रवर्ग्य इति [१४.१.३.२८.] श्रुतेः । यजुःपङ्क्तिर्घर्मदेवत्या । हे घर्म त्वं स्वाहाकारोऽसि हविराधारत्वात् सूर्यरूपोऽसि एष वै स्वाहाकारो य एष तपत्येष उ प्रवर्ग्य इति [१४.१.३.२६.] श्रुतेः अतस्त्वं मरुद्भिः प्रजाभिरस्मद्रूपाभिः परिश्रीयस्व सेव्यस्व कर्मणि यक्रू मरुतस्त्वामाश्रयन्त्वित्यर्थः विशो वै मरुतो विशैवैतत्क्षत्रं परिवृण्ढति तदिदं क्षत्रमुभयतो विशा परिवृढमिति [१४.१.३.२७.] श्रुतिः ॥ का० [२६.३.१०.] सुवर्णशतमानेनापिदधाति दिवः सण्स्पृश इति । शतरक्तिकामितेन सुवर्णेन महावीरमाच्छादयतीति सूत्रार्थः ॥ दैवी जगती सुवर्णदेवत्या । हे शतमान दिवः द्युलोकसम्बन्धिनः संस्पृशः स्पर्शकर्त्तॄन्दिवान्याहि देवा राक्षसेभ्यो भीता महावीररक्षायै स्वर्णं स्थापितवन्त इति श्रुतौ कथा देवा अबिभयुरित्यादिकार्या [१४.१.३.२१.] । का० [२६.४.२.] कृष्णाजिनावकृत्तैर्धवित्रैरुपवाजयति त्रिभिर्दण्डवद्भिर्मधु मधिति । कृष्णाजिनकृतैर्दण्डयुक्तैस्त्रिभिर्व्यजनैरग्निं वीजयति दीपनायेति सूत्रार्थः ॥ त्रीणि यजूंषि प्राणदेवत्यानि दैव्युष्णिक् । मधुररससाम्यात्प्राणो मधु उच्यते मधु मधु मधु प्राणोदानव्यानत्रयं महावीरे स्थापयामीत्यर्थः तथा च श्रुतिः [१४.१.३.३०.] अथ धवित्रैराधूनोति मधु मधिति त्रिः प्राणो वै मधु प्राणमेवास्मिन्नेतद्दधाति त्रीणि भवन्ति त्रयो वै प्राणाः प्राण उदानो व्यानस्तानेवास्मिन्नेतद्दधातीति ॥ १३ ॥

गर्भो॑ दे॒वानां॑ पि॒ता म॑ती॒नां पतिः॑ प्र॒जाना॑म् ।
सं दे॒वो दे॒वेन॑ सवि॒त्रा ग॑त॒ सᳪ सूर्ये॑ण रोचते ॥ १४ ॥

का० [२६.४.११.] परिक्रम्योपतिष्ठन्तेऽकृतं चेद्गर्भो देवानामिति । धवित्रैर्वीजनसमये उत्तरं देववत्परिक्रमणं प्रागकृतं चेदिह त्रिः परिक्रम्येतरथावृत्तिं सकृत् कृत्वा गर्भो देवानामित्यादिभिर्नमस्तेऽअस्तु मा मा हिंसीरित्यन्तैरवकाशसंज्ञकैर्मन्त्रैः सयजमाना ऋत्विजो महावीरमुपतिष्ठन्तऽइति सूत्रार्थः ॥ घर्मदेवत्या अवकाशमन्त्रा मा मा हिंसीरित्यन्ताः आद्या ऋचां पङ्क्तिः । अथ मन्त्रार्थः देवो दीप्यमानो महावीरः सवित्रा देवेन सह संगत संगच्छते गमेर्लुङि वा गमऽइति [पा० १.२.१३.] आत्मनेपदे विकल्पेन सिचः कित्वादनुदात्तोपदेशेति [पा० ६.४.३७.]

मलोपे ह्रस्वादङ्गादिति [पा° ८.२.२७.] सिचो लोपः बहुलं छन्दस्यमाङ्योगेऽपीति [पा° ६.४.७५.] अडभावः समो गमीत्यादिना [पा° १.३.२९.] तङ् । यश्च घर्मः सूर्येण सहैकीभूतः सन् संरोचते सम्यग्दीप्यते तं वयं स्तुम इति शेषः । कीदृशः देवानां दीप्तानां रश्मीनां दृश्यमानानां सर्वेषां वा गर्भः गृह्णातीति गर्भः ग्रहीता एष वै गर्भो देवानां य एष तपत्येष हीद७ सर्व७ संगृभ्णात्येतेनेद७ सर्वं गृभीतमेष उ प्रवर्ग्य इति [१४.१.४.२.] श्रुतिः । तथा मतीनां बुद्धीनां पिता पालकः बुद्धिप्रवर्तकः प्रजानां पतिः पालकः ॥ १४ ॥

a. समग्निरग्निना गत सं दैवेन सवित्रा स७ सूर्येणारोचिष्ट ।

b. स्वाहा समग्निस्तपसा गत सं दैव्येन सवित्रा स७ सूर्येणारूरुचत ॥ १५ ॥

ब्राह्म्यनुष्टुप् । यः अग्निः घर्मः अग्निना सह संगत संगच्छते एकीभवति देव एव दैवः सवित्रा दैवेन देवेन सह संगच्छते यश्च सूर्येण सह समरोचिष्ट संरोचते ॥ अवरं स्वाहाकारं करोति परां देवतामसावेव बन्धुरिति [१४.१.४.६.] श्रुतेः । स्वाहा अग्निः । स्वाहासहितोऽग्निर्घर्मस्तपसा सूर्यतेजसा संगत संगच्छते दैव्येन देवेन सवित्रा च संगच्छते सूर्येण सह समरूरुचत सर्वं सम्यक् रोचयति प्रकाशयति रोचतेर्णिजन्ताल्लुङ् वयं तं स्तुम इति शेषः ॥ १५ ॥

धर्ता दिवो विभाति तपसस्पृथिव्यां धर्ता देवो देवानाममर्त्यस्तपोजाः ।

वाचमस्मे नियच्छ देवायुवम् ॥ १६ ॥

ऊर्ध्वबृहती । त्रिजागतोर्ध्वबृहती अत्राद्यौ त्रयोदशवर्णौ तृतीय एकादशवर्णस्तेनैकाधिका । स देवो घर्मः अस्मे अस्मासु विभक्तेः शे-आदेशः वाचं नियच्छ पुरुषव्यत्ययः यज्ञं नियच्छतु स्थापयतु किम्भूतां वाचम् देवयुवं देवान्यौति मिश्रयति देवयुः ताम् क्विपि तुगभाव आर्षः अनित्यमागमशासनमिति वचनात् देवसमूहमाह्वयन्तं यज्ञं समापयत्वित्यर्थः यज्ञो वै वाग्यज्ञमस्मभ्यं प्रयच्छ येन देवान्प्रीणामेत्येवैतदाहेति [१४.१.४.८.] श्रुतेः देवयुवमित्यत्र संहितायां वकारस्य दीर्घः । स कः यो देवः पृथिव्यां विभाति शोभते । कीदृशः दिवो धर्ता द्युलोकस्य धारयिता । तपसः रश्मिजालस्य च धर्ता । देवानां च धर्ता । अमर्त्यः मनुष्यधर्मरहितः

अजरामरः । तपोजाः तप आदित्यस्तस्माज्जायतऽइति तपोजाः सूर्योत्पन्नः ॥ १६ ॥

अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीचीः स विषूचीर्वसान आवरीवर्त्ति भुवनेष्वन्तः ॥ १७ ॥

त्रिष्टुब्दीर्घतमोदृष्टा । स घर्मो भुवनेषु त्रिलोकेषु अन्तर्मध्ये व्यवस्थितः आवरीवर्त्ति पुनः पुनरावर्तते वृतेर्यङ्लुकि रूपम् । कीदृशः सध्रीचीः सह अञ्चन्तीति सध्रीच्यः सहस्य सध्रिरादेशः सहाञ्चना दिशो रश्मीन्वा वसानः आच्छादयन् वस आच्छादने शानच्प्रत्ययः (17.) । विषूचीः विषुनिपातो नानार्थः विषु अञ्चन्तीति विषूच्यः ताः नानाञ्चना दिशो रश्मीन्वा वसानः क्विन्नन्ताडुगितश्चेति [पा° ४. १. ६.] ङीपि अचश्चेति [पा° ६. ४. १३८. (18.)] अलोपे चाविति [पा° ६. ३. १३८.] पूर्वपददीर्घः । सध्रीचीश्च ह्येष विषूचीश्च दिशो वस्तेऽथो रश्मीनिति [१४. १. ४. १०.] श्रुतिः । एकः सशब्दः पादपूरणः । स कः यमहमपश्यमादित्यरूपं पश्यामि । कीदृशं गोपाम् गोपायतीति (19.) गोपास्तम् क्विपि यलोपः । अनिपद्यमानं निपद्यते पततीति निपद्यमानः न निपद्यमानोऽनिपद्यमानस्तम् अन्तरिक्षे गच्छन्तमपि नाधः पतन्तम् । च पुनः पथिभिः देवमार्गैः आचरन्तमागच्छन्तम् पराचरन्तं परागच्छन्तं च गमनागमने कुर्वाणम् ॥ १७ ॥

a. विश्वासां भुवां पते विश्वस्य मनसस्पते विश्वस्य वचसस्पते सर्वस्य वचसस्पते । b. देवश्रुत्त्वं देव घर्म देवो देवान्पाहि । c. अत्र प्रावीरनु वां देववीतये । d. मधु माध्वीभ्यां मधु माधूचीभ्याम् ॥ १८ ॥

अत्यष्टिः । हे विश्वासां भुवां पते सर्वासां पृथिवीनां स्वामिन् विश्वस्य सर्वप्राणिगतस्य मनसः पतेऽधिपते विश्वस्य वचसः पते सर्वप्राणिवचनस्य पालक सर्वस्य त्रयीलक्षणस्य वचसः पते प्रवर्तक हे देवश्रुत् (20.) देवैः श्रूयतऽइति देवश्रुत् देवप्रसिद्धः हे देव दीप्यमान हे घर्म देवस्त्वं देवान्पाहि रक्ष । एवं घर्मं सम्प्रार्थ्याश्विनावाह हे अश्विनौ अत्र यज्ञे देववीतये देवतर्पणाय अनु अनन्तरं घर्मो वां प्रावीः प्रावीत् तर्पयतु लोडर्थे लुङ् पुरुषव्यत्ययश्च युवयोस्तृप्त्या सर्वदे-

वास्तृप्यन्तीति भावः याभ्यां युवाभ्यां दध्यङ्ङाथर्वणो मधुसंज्ञकं ब्राह्मणमुवाच दध्यङ् ह वाऽआभ्यामाथर्वणो मधुनाम ब्राह्मणमुवाचेति [१४. १. ४. १३.] श्रुतेः । कीदृशाभ्यां युवाभ्यां माधीभ्यां मधुब्राह्मणमीयाते तौ माध्यौ ताभ्याम् ई गतौ क्विप् । तथा माधूचीभ्यां मधुब्राह्मणमञ्चतः पूजयतस्तौ मध्वञ्चौ ताभ्यां मध्वग्भ्यामिति प्राप्ते ङीपि अलोपे मधूचीभ्यामिति लिङ्गव्यत्ययः आदिदीर्घश्छान्दसः ॥१८॥

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा । ऊर्ध्वोऽअध्वरं दिवि देवेषु धेहि ॥१९॥

परोष्णिक् । आद्यावष्टार्णौ तृतीयो द्वादशार्णः सा परोष्णिक् परोष्णिक्परत इत्युक्तेः । आद्ययोर्व्यूहः । हे घर्म हृदे त्वा हृदयस्वास्थ्याय त्वा त्वां स्तुम इति शेषः मनसे मनःशुद्ध्यर्थं त्वा त्वां स्तुमः दिवे स्वर्गप्राप्त्यै त्वा त्वां स्तुमः सूर्याय सूर्यतृप्त्यै त्वा त्वां स्तुमः हृदयं संशोध्य मनो निर्मलं कृत्वा दिवमस्मान्नीत्वा सूर्यं तर्पयेति भावः । किं च ऊर्ध्वः सावधानः सन् अध्वरमस्मदीयं यज्ञं दिवि द्युलोके वर्तमानेषु देवेषु धेहि स्थापय यज्ञे गते यजमानो गच्छत्येवेति भावः ॥१९॥

a. पिता नोऽसि पिता नो बोधि नमस्तेऽअस्तु मा मा हिꣳसीः ।
b. त्वष्टृमन्तस्त्वा सपेम पुत्रान्पशून्मयि धेहि प्रजामस्मासु धेह्यरिष्टाहꣳ सहपत्न्या भूयासम् ॥२०॥

ऋग्गायत्री । हे महावीर त्वं नोऽस्माकं पितासि पालको भवसि पितेव नोऽस्मान् बोधि बोधय सर्वथा नमस्ते अस्तु मा मां मा हिंसीः मा जहि ॥ ॥ महावीरोपस्थानं समाप्तम् ॥ ॥ का° [२६. ४. १३.] त्वष्टृमन्त इत्येनां वाचयति । महावीरमीक्षमाणामपनीतशिरोवस्त्रां घर्मं पश्यन्तीं पत्नीमध्वर्युर्वाचयतीत्यर्थः ॥ ऋचां त्रिष्टुप् घर्मदेवत्या पत्न्याशीः । हे घर्म वयं त्वा त्वां सपेम सपतिः स्पृशतिकर्मा मैथुनाय त्वामुपस्पृशामः । कीदृशा वयं त्वष्टृमन्तः त्वष्टा विद्यते येषां ते त्वष्टृमन्तः त्वष्टा रेतसामधिकारी तत्सहिताः मैथुनार्थोपस्पर्शे वीर्याधिष्ठातापेक्षितोऽत एतद्युताः (21,) । अतः पुत्रान् पशून् च मयि विषये त्वं धेहि स्थापय प्रजामुत्त-

EE EE EE*

रोत्तरवंशवृद्धिमस्मासु धेहि स्थापय । किं च पत्या (22.) भर्त्रा सहारिष्टा अनुपहिंसिता अहं भूयासं भवेयम् भर्तृमती चिरं जीवेयमित्यर्थः । वृषा वै प्रवर्ग्यो योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियतऽइति [१४.१.४.१६.] श्रुतेः ॥२०॥

a. अहः॑ केतुना॑ जुषताꣳ सुज्योति॒र्ज्योति॑षा॒ स्वाहा॑ ।

b. रात्रिः॑ केतुना॑ जुषताꣳ सुज्योति॒र्ज्योति॑षा॒ स्वाहा॑ ॥२१॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां सप्तत्रिंशोऽध्यायः ॥३७॥ ॥

का° [२६.४.१४.] अहः केतुनेति दक्षिणाꣳ रौहिणं जुहोति । उपस्थानगानयोः समाप्तौ रौहिणहवन्या स्रुचा दक्षिणं रौहिणं पुरोडाशं सर्वहुतं जुहोतीत्यर्थः ॥ घर्मदेवत्ये यजुषी सामानुष्टुभौ । केतुः प्रज्ञा कर्म वा केतुना प्रज्ञया कर्मणा वा सहितमहः दिनं जुषतां रौहिणहोमेन प्रीयताम् कीदृशमहः ज्योतिषा स्वकीयेनैव तेजसा सुज्योतिः शोभनं ज्योतिर्यस्य तत् विशिष्टतेजस्कम् स्वाहा एतद्धविः सुहुतमस्तु । रोहति स्वर्गं यजमानो याभ्यां तौ रौहिणौ अग्न्यादित्यौ अहोरात्रे वा इमौ लोकौ वा चक्षुषी वा शिरः प्रवर्ग्यो रौहिणौ चक्षुषी (23.) तत्र दधातीत्यादिरौहिणप्रशंसा श्रुतौ [१४.२.१.१-५.] ज्ञेया ॥ का° [२६.४.१४.] रात्रिरिति सायम् । सायंकालीने प्रवर्ग्ये रात्रिरिति मन्त्रेण द्वावपि प्रवर्ग्यौ यथाकालं जुहोतीत्यर्थः ॥ केतुना सहिता रात्रिः जुषतां प्रीयताम् ज्योतिषा कृत्वा सुज्योतिरित्युक्तम् ॥२१॥

श्रीमन्महीधरकृते वेददीपे हरिप्रिये (24.) । अभ्र्यादिरौहिणान्तोऽयं सप्तत्रिंशो निरूपितः ॥३७॥ ॥

अथ काण्वशाखायां पाठविशेषः ॥

I. ॥ १-४ [वम्रियो] - १० ॥१-१०॥ ॥ II. ॥ ११-१३ ॥११-१३॥

III. ॥ १४-१७ ॥१४-१७॥ १८. १९ ॥१८॥ २० [- पशू॒न्मयि॑ धे॒ह्यरि॑ष्टा॰ -] ॥१९॥ २१ ॥२०॥ ॥ त्र्यनुवाकेषु विंशतिः ॥ ॥

इति काण्वीयायां वाजसनेयसंहितायां सप्तत्रिंशोऽध्यायः ॥३७॥ ॥

I. a. देवस्य त्वा सवितुः प्रसवे॰ । b. आददेऽदित्यै रास्नासि ॥१॥

श्रीगणेशाय नमः (1.) ॥ का॰ [२६.५.१.] देवस्य त्वेति रज्जुसंदानमादायेडऽए-हीति गामाह्वयति नाम्ना च त्रिरुच्चैरपरेण गार्हपत्यं गच्छन् । अध्वर्युर्देवस्य त्वेति रज्जुसंदानमादाय गार्हपत्यस्य पश्चाद्गच्छन् इडऽएहीति वाक्यत्रयेण घर्मदुघां गामा-ह्वयति असावेहीति गोर्नाम्ना चोच्चैस्त्रिवारमाह्वयतीति सूत्रार्थः ॥ रज्जुदेवत्यं यजुः प्राजापत्या गायत्री । हे रज्जो सवितुर्देवस्याज्ञायां वर्तमानोऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां त्वामाददे गृह्णामि यतः त्वमदित्यै अदित्या देवमातुः रास्ना रसना मेख-लासि भवसि षष्ठ्यर्थे चतुर्थी ॥१॥

a. इडऽएहि । b. अदितऽएहि । c. सरस्वत्येहि । d. असावे-हि । e. असावेहि । f. असावेहि ॥२॥

हे इडे (2.) मानवि एहि आगच्छ हे अदिते देवमातः एहि हे सरस्वति वाक् एहि । अतस्मिंस्तच्छब्दस्तत्सादृश्यार्थः । इडा हि गौरदितिर्हि गौः सरस्वती हि गौरिति [१४.२.१.७.] श्रुतेः ॥ नाम्ना त्रिरुच्चैराह्वयति असौ धवलि एहि एवं त्रिः ॥२॥

a. अदित्यै रास्नासीन्द्राण्याऽउष्णीषः । b. पूषासि । c. घर्माय दीष्व ॥३॥

का॰ [२६.५.३.] अदित्यै रास्नेति गां पाशेन प्रतिमुच्य स्थूणायां बद्ध्वा पूषासी-ति वत्समुत्सृजति । आगतां गामदित्याऽइति मन्त्रेण पाशेन बद्ध्वा तं पाशं स्तम्भे बद्ध्वा पूषासीति वत्सं मुञ्चतीत्यर्थः ॥ हे रज्जुपाश त्वमदित्यै रास्ना रसनासि इ-न्द्राण्यै इन्द्रपत्न्याः उष्णीषः शिरोवेष्टनमसि एतेन पाशमिन्द्राण्युष्णीषं करोतीत्य-र्थः तमेवैनमेतत्करोतीति [१४.२.१.८.] श्रुतेः ॥ वत्सं मुञ्चति पूषासि दैव्यनुष्टुप् वत्सो देवता हे वत्स त्वं पूषा वायुरसि वायुर्यथा वृष्टिमाप्याययति तथा त्वं प्र-स्रवेण पय आप्याययस्वेति भावः अयं वै पूषा योऽयं पवतऽएष हीदꣳ सर्वं पु-ष्यत्येष उ प्रवर्ग्य इति [१४.२.१.९.] श्रुतेः ॥ का॰ [२६.५.४.] संदाय घर्माय दीष्वे-ति वत्समुन्नयति । धेनुं रज्ज्वा पश्चिमपादयोर्बद्ध्वा वत्समपाकरोतीत्यर्थः ॥ दैवी

पङ्क्तिः वत्सो देवता हे वत्स घर्माय घर्मार्थं दीध देहि पयः पयः शेषय मा सर्वं पासीरित्यर्थः दी दाने बहुलं छन्दसीति [पा° २.४.७३.] शपो लुक् ॥३॥

a. अश्विभ्यां पिन्वस्व। b. सरस्वत्यै पिन्वस्व। c. इन्द्राय पिन्वस्व।
d. स्वाहेन्द्रवत्। e. स्वाहेन्द्रवत्। f. स्वाहेन्द्रवत् ॥४॥

का° [२६.५.५.] अश्विभ्यां पिन्वस्वेति पिन्वने दोग्धि। पिन्वने पात्रे प्रतिमन्त्रं गां दोग्धीत्यर्थः ॥ अश्विभ्यां पिन्वस्व इन्द्राय पिन्वस्व यजुर्गायत्र्यौ सरस्वत्यै पिन्वस्व यजुरनुष्टुप् लिङ्गोक्ता देवताः। हे पयः अश्विभ्यामर्थाय त्वं पिन्वस्व सम्प्लवस्व सरस्वत्यै च पिन्वस्व अश्विनौ वाऽएतद्यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणातीति श्रुतिः [१४.२.१.१३.] सरस्वत्या वाचा कृत्वा इन्द्राय यज्ञशिरोऽश्विभ्यां संहितमिति तयोरर्थे क्षरस्वेति भावः ॥ का° [२६.५.६.] स्वाहेन्द्रवदिति विप्रुषोऽभिमन्त्रयते। पिन्वनपतितान्पयःकणानभिमन्त्रयतऽइत्यर्थः ॥ यजुर्जगती विप्रुषो देवता। यत् दुह्यमाने स्कन्नं तत्स्वाहा सुकृतमस्तु इन्द्रवत् इन्द्रसंयुक्तं चास्तु ॥४॥

a. यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः।
येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेऽकः ॥
b. उर्वन्तरिक्षमन्वेमि ॥५॥

का° [२६.५.७.] यस्ते स्तन इति स्तनमालभते। गोस्तनानालभते जातावेकवचनमित्यर्थः ॥ वाग्देवत्या त्रिष्टुप् दीर्घतमोदृष्टा। हे सरस्वति तं स्तनमिहास्मिन्स्थाने धातवे धेट् पाने तुमर्थे तवेप्रत्ययः पानार्थमकः कुरु मम पानाय प्रयच्छेत्यर्थः लोडर्थे लङ् शपि लुप्ते गुणः। तं कम् यस्ते तव स्तनः स्तन इव स्तनः (3.) शशयः शेते इति शशयः अच्प्रत्यये द्वित्वम् पूर्वस्यात्वं च छान्दसम् सुप्त इवास्ते अन्यैरनुपभुक्तत्वात् यस्ते स्तनो निहितो गुहायामिति [१४.२.१.१५.] श्रुतेः। यश्च स्तनो मयोभूः मयः सुखं भावयति प्रापयति सर्वभूतानामिति मयोभूः। यश्च रत्नधाः रत्नानि दधाति रत्नधाः रमणीयानां धनानां धारयिता। यश्च

वसुवित् वसु धनं विन्दति वेत्ति वा वसुवित् । यश्च सुदत्रः सुष्ठु ददातीति सुदत्रः दाता धनवानन्यो दातुं न शक्नोति बत्स्तनस्तु धनवान्दाता चेति अन्येभ्य आधिक्यम् । किं च येन स्तनेन विश्वा विश्वानि सर्वाणि वार्याणि वरणीयानि वस्तूनि त्वं पुष्यसि पुष्णासि तं स्तनं मत्पानाय प्रयच्छेत्यर्थः ॥ का॰ [२६.५.११.] उपद्रव पयसेत्युच्यमाने गच्छत्युर्वन्तरिक्षमिति । उपद्रवेति मन्त्रे होत्रोच्यमाने उर्विति मन्त्रेणाध्वर्युर्गोसमीपाद्गार्हपत्यं प्रति गच्छतीत्यर्थः ॥ प्राजापत्या गायत्री । विशालमन्तरिक्षमनु एमि गच्छामि ॥५॥

a. गायत्रं छन्दोऽसि । b. त्रैष्टुभं छन्दोऽसि । c. द्यावापृथिवीभ्यां त्वा परिगृह्णामि । d. अन्तरिक्षेणोपयच्छामि । e. इन्द्राश्विना । f. मधुनः सारघस्य घर्मं पात वसवो यजत वाट् । g. स्वाहा सूर्यस्य रश्मये वृष्टिवनये ॥६॥

का॰ [२६.५.१२.] परीशासावादत्ते गायत्रं छन्दोऽसीति प्रतिमन्त्रम् । गायत्रमिति मन्त्राभ्यां परीशासौ (4.) गृह्णातीत्यर्थः ॥ यजुर्गायत्र्यौ परीशासौ देवते । हे परीशास त्वं गायत्रं छन्दोऽसि गायत्र्येव गायत्रं स्वार्थेऽण् गायत्रीछन्दोरूपोऽसि । त्रिष्टुबेव त्रैष्टुभं त्रिष्टुप्छन्दरूपोऽसीति द्वितीयम् ॥ का॰ [२६.५.१४.] ताभ्यां महावीरं परिगृह्णाति द्यावापृथिवीभ्यां त्वा परिगृह्णामीति । ताभ्यां परीशासाभ्यां महावीरमादत्तऽइत्यर्थः ॥ यजुर्जगती महावीरो देवता । हे महावीर द्यावापृथिवीभ्यां द्युभूमिभ्यां कृत्वा (5.) त्वा त्वां परिगृह्णामि परीशासयोर्द्यावाभूमी अध्यस्ते महावीरे चादित्योऽध्यस्तः तथा च श्रुतिः [१४.२.१.१६.] इमे वै द्यावापृथिवी परीशासावादित्यः प्रवर्ग्योऽमुं तदादित्यमाभ्यां द्यावापृथिवीभ्यां परिगृह्णातीति ॥ का॰ [२६.५.१५.] उद्यम्य मुञ्जवेदेनोपमृज्योपयमन्योपगृह्णात्यन्तरिक्षेणोपयच्छामीति । परीशासगृहीतं महावीरमूर्ध्वं कृत्वा मुञ्जकृतवेदेन संमार्ज्योपयमन्या स्रुचा तं गृह्णातीत्यर्थः ॥ यजुर्बृहती घर्मो देवता । हे घर्मान्तरिक्षेणाकाशेनोदरेण वा त्वामुपयच्छामि निगृह्णामि उपयमन्यन्तरिक्षत्वेनोदरत्वेन च स्तूयते तथा च श्रुतिः [१४.२.१.१७.] अन्तरिक्षं वाऽउपयमन्यन्तरिक्षेण हीद७ सर्वमुपयतमथोऽउदरं वा उप-

यमन्नुदरेण ह्रीद७ सर्वमन्नाद्यमुपयतं (6.) तस्मादाहान्तरिक्षेणोपयच्छामीति ॥ का° [२६.५.१६.] अन्नापयसावसिच्य शान्ते गोः पयोऽवनयतीन्द्राश्विनेति । अन्नादुग्धेन महावीरं तूष्णीं सिक्त्वा शान्ते क्षीणज्वाले तत्र गोपयः सिञ्चतीत्यर्थः ॥ ब्राह्मी गायत्री विश्वे देवा देवताः । हे इन्द्र हे अश्विना अश्विनौ हे वसवः वासयितारो यूयं मधुनो मधुरस्य पयसो घर्मं रसं पात पिबत पिबादेशाभावश्छान्दसः कीदृशस्य मधुनः सारघस्य सरघा मधुमक्षिका अत्र सरघा मधुकृतो भ्रमरा-इव ऋत्विजः तैः कृतं सारघं तस्य । घर्मं पातेति रसं पातेत्येवैतदाहेति [१४.२.१.२०.] श्रुतिः । किं च हे इन्द्रादयः वाट् वषट्कारेण स्वाहा सुष्ठु हुतं सारघं मधु सूर्यस्य रश्मये किरणाय यूयं यजत दत्त यजतिर्दानार्थः वषट्कृत७ हुतमेवमस्यैतद्भवतीति श्रुतेः [१४.२.१.२०.] । किम्भूताय रश्मये वृष्टिवनये वृष्टिं वनति ददाति वृष्टिवनिस्तस्मै यो रश्मिर्वृष्टिं दत्ते तस्मै मधु दत्तेत्यर्थः । तथा च श्रुतिः [१४.२.१.२१.] सूर्यस्य ह वाऽएको रश्मिर्वृष्टिवनिर्नाम येनेमाः सर्वाः प्रजा बिभर्ति तमेवैतत्प्रीणातीति ॥ ६॥

a. समुद्राय॑ त्वा वाता॑य स्वाहा॑ । b. सरिरा॑य त्वा वाता॑य स्वाहा॑ ।
c. अनाधृष्याय॑ त्वा वाता॑य स्वाहा॑ । d. अप्रतिधृष्याय॑ त्वा वाता॑य स्वाहा॑ ।
e. अवस्यवे॑ त्वा वाता॑य स्वाहा॑ । f. अशिमिदाय॑ त्वा वाता॑य स्वाहा॑ ॥७॥

का° [२६.६.१.] प्रैतु ब्रह्मणस्पतिरित्युच्यमाने समुद्राय त्वेति वातनामानि जपति गच्छन्नाहवनीयम् । प्रैत्विति होत्रोच्यमाने आहवनीयं प्रति गच्छन्नध्वर्युः समुद्रायेत्यादीनि द्वादश वातनामानि स्वरेण जपतीत्यर्थः ॥ द्वादश यजूंषि वातनामदेवत्यानि । हे घर्म वाताय त्वा त्वां स्वाहा जुहोमि कीदृशाय वाताय समुद्राय समुद्रवन्त्युद्भवन्ति सर्वाणि भूतानि यस्मात्स समुद्रस्तस्मै अयं वै समुद्रो योऽयं पवतऽएतस्माद्धि समुद्रात्सर्वे देवाः सर्वाणि भूतानि समुद्रवन्ति तस्माऽएवैनं जुहोतीति [१४.२.२.२.] श्रुतेः ॥ सरिराय । सह ईरते-गच्छन्ति सर्वभूतानि सिद्धार्थानि यस्मात् सरिरस्तस्मै वाताय घर्म त्वां जुहोमि अयं वै सरिरो योऽयं पवतऽएतस्माद्धि सरिरात्सर्वे देवाः सर्वाणि भूतानि सहेरतऽइति [१४.२.२.३.] श्रुतेः ॥ अ-

नाधृष्याय । न आधर्षितुं पराभवितुं शक्योऽनाधृष्यः तस्मै । अप्रतिधृष्याय । न प्रतिधर्षितुं प्रतियोद्धुं शक्योऽप्रतिधृष्यस्तस्मै वातायेत्युक्तम् अयं वाऽअनाधृष्यो ऽप्रतिधृष्यो योऽयं पवतऽइति [१४.२.२.४.] श्रुतेः ॥ अवस्यवे । अवो रक्षणमिच्छति अवस्यति अवस्यतीत्यवस्युः सुप आत्मनः क्यच् क्याच्छन्दसीति [पा° ३.२.१७०.] उप्रत्ययः अवनशीलाय ॥ अशिमिदाय । क्लेशात्मकं कर्म शिमि तन्न ददातीत्यशिमिदस्तस्मै क्लेशनिवर्तकाय वाताय अयं वाऽअवस्युरशिमिदो योऽयं पवतऽइति [१४.२.२.५.] श्रुतेः ॥७॥

a. इन्द्राय त्वा वसुमते रुद्रवते स्वाहा । b. इन्द्राय त्वादित्यवते स्वाहा । c. इन्द्राय त्वाभिमातिघ्ने स्वाहा । d. सवित्रे त्वऽऋभुमते विभुमते वाजवते स्वाहा । e. बृहस्पतये त्वा विश्वदेव्यावते स्वाहा ॥८॥

वसवो विद्यन्ते यस्य स वसुमान् रुद्रा विद्यन्ते यस्य रुद्रवान् तस्मै वसुयुताय रुद्रयुतायेन्द्राय वाताय हे घर्म त्वां स्वाहा जुहोमि अयं वाऽइन्द्रो योऽयं पवतऽइति [१४.२.२.६.] श्रुतेः ॥ आदित्या विद्यन्ते यस्य स आदित्यवान् तस्मै आदित्ययुक्तायेन्द्राय वाताय स्वाहा ॥ अभिमातीन्सपत्नान्हन्तीत्यभिमातिहा सपत्नो वाऽअभिमातिरिति [१४.२.२.८.] श्रुतेः शत्रुनाशकायेन्द्राय वाताय त्वां जुहोमि ॥ सूते स सविता तस्मै चेष्टयित्रे वाताय त्वां जुहोमि अयं वै सविता योऽयं पवतऽइति [१४.२.२९.] श्रुतेः कीदृशाय ऋभुमते ऋभुरस्यास्ति ऋभुमान् विभुरस्यास्ति विभुमान् वाजोऽस्यास्ति वाजवान् आङ्गिरसस्य सुधन्वनस्त्रयः पुत्रा ऋभुविभुवाजास्तद्युक्ताय वाताय ॥ बृहस्पतये बृहतां महतां पतिर्वातस्तस्मै अयं बृहस्पतिर्योऽयं पवतऽइति [१४.२.२.१०.] श्रुतेः कीदृशाय विश्वदेव्यावते विश्वेषां देवानां समूहो विश्वदेव्यम् तदस्यास्ति विश्वदेव्यवान् तस्मै मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मताविति [पा° ६.३.१३१.] दीर्घः सर्वदेवसहिताय जुहोमि ॥८॥

II. a. यमाय त्वाङ्गिरस्वते पितृमते स्वाहा ।
b. स्वाहा घर्माय । c. स्वाहा घर्मः पित्रे ॥१॥

यमाय वायवे हे घर्म त्वां जुहोमि अयं वै यमो योऽयं पवतऽइति [१४. २. २. ११.] श्रुतेः । कीदृशाय यमाय अङ्गिरस्वते अङ्गिरसो मुनयोऽस्य सन्ति अङ्गिरस्वान् अयस्मयादीनि छन्दसीति [पा° १.४.२०.] भसंज्ञायां सस्य विसर्गाभावः । पितृमते पितरोऽस्य सन्ति पितृमान् अङ्गिरःपितृयुताय वातायेत्यर्थः ॥ ॥ वातनामानि समाप्तानि ॥ ॥ का° [२६. ६. २.] स्वाहा घर्मायेत्युपयमन्या सिञ्चति घर्मे । उपयमन्या स्रुचा स्रुक्स्थं घृतं घर्मे सिञ्चतीत्यर्थः ॥ घर्माय स्वाहा एतदाज्यं सुहुतमस्तु ॥ का° [२६. ६. ३.] स्वाहा घर्मः पित्रऽइति जपित्वातिक्रम्याश्राव्याह घर्मस्य यजेति । अपसव्यवान्दक्षिणास्यः स्वाहेति मन्त्रं स्वरेण जपित्वा सव्येन जलं स्पृष्ट्वा घर्महस्तोऽतिक्रम्याश्राव्य घर्मस्य यजेत्याहेत्यर्थः ॥ स्वाहा घर्मः पित्रे पित्र्यर्थायास्तु ॥ ९ ॥

विश्वा॒ आशा॑ दक्षिण॒सद्विश्वा॑न्दे॒वानया॑डि॒ह ।
स्वाहा॑कृतस्य घ॒र्मस्य॒ मधो॑ः पिबतमश्विना ॥ १० ॥

का° [२६. ६. ४.] वषट्कृते जुहोति विश्वा आशा इति । वषट्कृते सति घर्मं जुहोतीत्यर्थः ॥ अश्विदेवत्यानुष्टुप् । इह यज्ञे दक्षिणसत् दक्षिणस्यां दिशि सीदन्ति तिष्ठति दक्षिणसत् सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः दक्षिणतः स्थितोऽध्वर्युर्विश्वाः सर्वाः आशाः दिशो विश्वान् सर्वान् देवान् च अयाट् अयाक्षीत् यजेर्लुङि च्लेर्लोपे रूपम् इष्टवान् दक्षिणतः स्थितो व्याहृतीर्जुहोति (7.) । अतो ब्रवीमि हे अश्विना अश्विनौ स्वाहाकृतस्य वषट्कारानन्तरं हुतस्य मधोर्मधुरास्वादस्य घर्मं युवां पिबतम् कर्मणि षष्ठी ॥ १० ॥

a. दि॒वि धा॑ इ॒मं य॒ज्ञमि॒मं य॒ज्ञं दि॒वि धा॑ः ।
b. स्वाहा॒ग्नये॑ य॒ज्ञिया॑य॒ शं यजु॑र्भ्यः ॥ ११ ॥

का° [२६. ६. ५.] दिवि धा इति त्रिरुत्कम्पयति । महावीरं त्रिरूर्ध्वं कम्पयति सकृन्मन्त्रेण द्विस्तूष्णीमिति सूत्रार्थः ॥ यजुर्घर्मदेवत्यं सामोष्णिक् । हे महावीर इमं मदीयं यज्ञं त्वं दिवि द्युलोके धाः धेहि स्थापय इमं यज्ञं दिवि धा इति पुनरुक्तिरादरार्था अभ्यासे भूयांसमर्थं मन्यन्तऽइति [निरु° १०. ४२.] वचनात् ॥

का° [२६. ६. ६.] स्वाहाग्नयऽइत्यनुवषट्कृते । अनुवषट् स्वाहेति मन्त्रेण घर्मं जुहोतीत्यर्थः ॥ यज्ञियाय यज्ञहितायाग्नये स्वाहा सुहुतमस्तु यजुर्भ्यः सकाशात् अस्माकं शं सुखमस्तु ॥ ११॥

अश्विना घर्मं पातꣳ हार्द्वानमहर्दिवाभिरूतिभिः ।

तन्त्रायिणे नमो द्यावापृथिवीभ्याम् ॥ १२॥

का° [२६. ६. ७.] अश्विना घर्ममिति ब्रह्मानुमन्त्रयते । ब्रह्मा घर्ममभिमन्त्रयतऽइत्यर्थः ॥ स्वराडुष्णिक् । अश्विनावादित्यो द्यावापृथिव्यौ च देवताः । हे अश्विना अश्विनौ युवां घर्मं पातं पिबतम् काभिः ऊतिभिरवनैः निमित्तैः अवनं कृत्वा पिबतमित्यर्थः कीदृशीभिरूतिभिः अहर्दिवाभिः (8.) अहः शब्देन प्रातःकालः दिवाशब्देन सायंकालः प्रातःसायंकालोपलक्षिताभिः प्रवर्ग्यकालः स एव यतः । कीदृशं घर्मं हार्द्वानम् वा गतिगन्धनयोः ल्युट् हृदि वानं गमनं यस्य स हृद्वानः हृद्वान एव हार्द्वानस्तम् स्वार्थेऽण् हृदयप्रियमित्यर्थः । एवं घर्मपानायाश्विनौ सम्प्रार्थ्य तत्साहाय्याय सूर्यादीन्नमति तन्त्रायिणे नमः तन्यते तन्त्रम् पटरचनाय तुरीशलाकाप्रोतास्तन्तवस्तन्त्रमुच्यते तद्वन्नभसि कालचक्रमपि तन्त्रमुच्यते तथा चाभिधानम् (9.) तन्त्रे राष्ट्रे परच्छन्दाप्रधानयोः (10.) अगदे कुटुम्बकृत्ये तन्तुवाने परिच्छदे श्रुतिशाखान्तरे शास्त्रे करणे ह्यर्थसाधके (11.) इतिकर्तव्यतातन्त्वोरिति तन्त्रे कालचक्रे एति निरन्तरं गच्छति तन्त्रायी तस्मै आदित्याय नमोऽस्तु एष वै तन्त्रायी य एष तपत्येष हीमां लोकाँस्तन्त्रमिवानुसंचरतीति [१४. २. २. २२.] श्रुतेः । द्यावापृथिवीभ्यामुभाभ्यां लोकाभ्यां तदधिष्ठात्रीभ्यां नमः ॥ १२॥

अपातामश्विना घर्ममनु द्यावापृथिवीऽअमꣳसाताम् ।

इहैव रातयः सन्तु ॥ १३॥

का° [२६. ६. ८.] अपातामिति यजमानः । यजमानः घर्ममभिमन्त्रयतऽइत्यर्थः । ककुबुष्णिक् अश्विदेवत्या मध्यमः पादो द्वादशार्णः आद्यन्तावष्टार्णौ सा ककुप् मध्यमश्चेत्ककुबित्युक्तेः । अश्विना घर्ममपातामपिबतां लुङ् द्यावापृथिवी अन्वमंसातामनुमतवत्यौ साधु कृतमिति अनुमेनाते इत्यर्थः अत एवास्म्यादिप्रसादात् इहै-

वास्मद्गृहे स्थितानामस्माकं रातयो धनानि सन्तु इहैव रातयः सन्त्वितीहैव नो धनानि सन्त्वित्येवैतदाहेति [१४.२.२.२६.] श्रुतेः ॥१३॥

a. इषे पिन्वस्व। b. ऊर्जे पिन्वस्व। c. ब्रह्मणे पिन्वस्व। d. क्षत्राय पिन्वस्व। e. द्यावापृथिवीभ्यां पिन्वस्व। f. धर्मासि सुधर्म। g. अमेन्यस्मे नृम्णानि धारय ब्रह्म धारय क्षत्रं धारय विशं धारय ॥१४॥

का° [२६.६.१.] इषे पिन्वस्वेति पिन्वमानमनुमन्त्रयते। पिन्वमानमतितप्तं घर्ममभिमन्त्रयतऽइत्यर्थः ॥ ऋचां पङ्क्तिः घर्मदेवत्या। हे पिन्वमान घर्म इषे वृष्टौ पिन्वस्व पुष्टो भव वृष्ट्यर्थम् ऊर्जेऽन्नाय पिन्वस्व अन्नं वर्धय ब्रह्मणे ब्राह्मणेभ्यः पिन्वस्व क्षत्राय क्षत्रियेभ्यः पिन्वस्व द्यावापृथिवीभ्यां पिन्वस्व ब्राह्मणक्षत्रियद्यावापृथिवीस्तर्पयेत्यर्थः ॥ का° [२६.६.१०.] धर्मासीत्युत्क्रामत्युत्तरपूर्वार्धम्। ऐशानीं दिशं प्रत्युत्क्रामतीत्यर्थः ॥ यजुर्गायत्री घर्मदेवत्या। हे घर्म हे सुधर्म (12.) सुष्ठु धारयतीति सुधर्मः हे साधुधरणशील त्वं धर्म असि सर्वजगतो धारणमसि आहुतिपरिणामद्वारेण सर्वं धरसीत्यर्थः ॥ का° [२६.६.११.] अमेन्यस्मेऽइति खरे करोति। महावीरं खरे आसादयतीत्यर्थः ॥ अनुबृहती घर्मदेवत्या। हे घर्म अमेनि मिञ् हिंसायां मिनोति हिनस्तीति मेनिः न मेनिरमेनिः सुपां सुलुगिति [पा° ७.१.३९.] सुलोपः अमेनिः अहिंसन् अक्रुध्यन् सन् अस्मे अस्मासु नृम्णानि धनानि धारय स्थापय नृन्नमयतीति नृम्णाम् अक्रुध्यन्नो धनानि धारयेति [१४.२.२.३०.] श्रुतिः ब्रह्म क्षत्रं विशं च धारय विप्रादीनस्मद्वशान्कुर्वित्यर्थः ॥१४॥

a. स्वाहा पूष्णे शरसे। b. स्वाहा ग्रावभ्यः। c. स्वाहा प्रतिरवेभ्यः। d. स्वाहा पितृभ्य ऊर्ध्वबर्हिर्भ्यो घर्मपावभ्यः। e. स्वाहा द्यावापृथिवीभ्याम्। f. स्वाहा विश्वेभ्यो देवेभ्यः ॥१५॥

का° [२६.६.१२.] विकङ्कतशकलैर्जुहोति घर्मे न्यज्य-न्यज्य स्वाहा पूष्णे शरसऽइति प्रतिमन्त्रम्। घर्मे नितरामक्त्वा विकङ्कतशकलैर्घर्माज्यं जुहोति स्वाहा पूष्णऽइति प्रतिमन्त्रमित्यर्थः ॥ सप्त लिङ्गोक्तदेवतानि यजूंषि। शरःशब्दो दध्युपरिस्थ-

स्नेहवाचकः अत्र स्नेहमात्रवाची शरसे स्नेहकर्त्रे पूष्णे वाताय प्राणरूपाय स्वाहा सुहुतमस्तु । अवरꣳ स्वाहाकारं करोति परां देवतामिति [१४. २. २. ३२.] श्रुतेरादौ स्वाहाकारस्ततो देवतापदानि । अयं वै पूषा योऽयं पवत एष हीदꣳ सर्वं पुष्यत्येष उ प्राणः प्राणमेवास्मिन्नेतद्दधातीति [१४. २. २. ३२.] श्रुतिः ॥ गृह्णन्ति ते ग्रावाणः प्राणा विषयग्रहणशीलाः तेभ्यः स्वाहा प्राणा वै ग्रावाणः प्राणानेवास्मिन्नेतद्दधातीति [१४. २. २. ३३.] श्रुतिः ॥ प्रतिरुवन्ति शब्दं कुर्वन्ति प्रतिरमन्ते वा यान्प्राप्येति प्रतिरवाः प्राणाः तेभ्यः स्वाहा प्राणा वै प्रतिरवाः प्राणान्हीदꣳ सर्वं प्रतिरतमिति [१४. २. २. ३४.] श्रुतिः ॥ का° [२६. ६. १४.] चतुर्थमहुतमुदङ्ङीक्षमाणो दक्षिणतो बर्हिष्युपगूहति । चतुर्थं शकलमहुतमेवोदीचीं पश्यन्वेदेर्दक्षिणभागे आतिथ्याबर्हिषि प्रवेशयतीत्यर्थः ॥ पितृभ्यः स्वाहा कीदृशेभ्यः ऊर्ध्वबर्हिर्भ्यः ऊर्ध्वं प्रागग्रं बर्हिर्येषां ते ऊर्ध्वबर्हिषः तेभ्यः सोमपाभ्य इत्यर्थः तथा घर्मपावभ्यः घर्मं पिबन्ति घर्मपावानः तेभ्यः स्वाहा ॥ द्यावापृथिवीशब्देन प्राणोदानावुच्येते ताभ्यां सुहुतमस्तु प्राणोदानौ वै द्यावापृथिवी प्राणोदानावेवास्मिन्नेतद्दधातीति [१४. २. २. ३६.] श्रुतिः ॥ विश्वेभ्यो देवेभ्यः स्वाहा प्राणा वै विश्वे देवाः प्राणानेवास्मिन्नेतद्दधातीति [१४. २. २. ३७.] श्रुतिः ॥ १५ ॥

a. स्वाहा॑ रु॒द्राय॑ रु॒द्रहू॑तये । b. स्वाहा॒ सं ज्योति॑षा॒ ज्योतिः॑ ।

c. अह॒ः केतु॑ना जुषताꣳ सु॒ज्योति॒र्ज्योति॑षा॒ स्वाहा॑ ।

d. रात्रिः॒ केतु॑ना जुषताꣳ सु॒ज्योति॒र्ज्योति॑षा॒ स्वाहा॑ ।

e. मधु॑ हु॒तमिन्द्र॑तमेऽअ॒ग्नाव॒श्याम॑ ते देव घर्म॒ नम॑स्तेऽअस्तु मा मा॑ हिꣳसीः ॥ १६ ॥

का° [२६. ६. १५.] सप्तमं च सर्वलेपाक्तं दक्षिणोक्षमाणः प्रतिप्रस्थात्रे प्रयच्छति । मूलाग्रावधि घर्मघृताभ्यक्तं सप्तमं शकलं दक्षिणां पश्यन्प्रतिप्रस्थात्रे ददातीत्यर्थः ॥ रुद्र इति स्तोतृनामसु [निघ° ३. १६.] पठितम् रुद्रैः स्तोतृभिर्हूयते आहूयत इति रुद्रहूतिः तस्मै स्तोतृस्तुताय रुद्राय सुहुतमस्तु ॥ एवं सप्तयजुषां मध्ये चतुर्थसप्तमयोर्विनियोग उक्तः शेषैः पञ्चशकलैराज्यहोमः ॥ का° [२६. ६. १७.] स्वाहा सं

ज्योतिषेत्युपयमन्यामासिञ्चति घर्म्यम् । घर्मसम्बन्धि घृतमुपयमन्यामासिञ्चति पूर्वं स्रुक्स्थं घर्मे नीतमधुना घर्मस्थं स्रुचि नयतीत्यर्थः ॥ पयोदेवत्यम् यजुरनुष्टुप् । ज्योतिः घर्मस्थं घृतं ज्योतिषोपयमनीस्थेन घृतेन संगच्छताम् स्वाहा सुहुतमस्तु ज्योतिर्वाऽइतरस्मिन्पयो भवति ज्योतिरितरस्यां ते ह्येतदुभे ज्योतिषी संगच्छेते इति [१४. २. २. ४०.] श्रुतेः पयो देवता ॥ का॰ [२६. ६. १८.] मन्त्रक्रमेणोत्तरᳬ रौहिणं जुहोति । उत्तरं रौहिणं मन्त्रक्रमेण सं ज्योतिषा ज्योतिरेतन्मन्त्रकर्मणोऽनन्तरं जुहोतीत्यर्थः ॥ अह्नः केतुना । व्याख्याते यजुषी [३७. २१.] ॥ का॰ [२६. ६. २०.] अग्निहोत्रावृता हुत्वा वाजिनवद्भक्षयन्ति मधु हुतमिति । उपयमन्यामानीतं घर्माज्यमग्निहोत्रहोमप्रकारेण समन्त्रकं हुत्वा वाजिनवदुपहवप्रार्थनपूर्वकं भक्षयन्ति होत्रध्वर्युब्रह्मप्रस्तोतृप्रतिप्रस्थात्राग्नीध्रयजमानाः ॥ घर्मदेवत्यम् ऋग्बृहती । अग्नौ मधु मधुरं घर्माज्यं हुतमस्माभिः कीदृशेऽग्नौ इन्द्रतमे इन्द्रं वीर्यमस्यास्ति इन्द्रवान् अत्यन्तमिन्द्रवानिन्द्रतमः वत्प्रत्यये लोपः वीर्यवत्तमे इत्यर्थः मधु हुतमिन्द्रियवत्तमेऽग्नावित्येवैतदाहेति [१४. २. २. ४२.] श्रुतेः । हे घर्म हे देव ते तव हुतशेषमंशं वयमश्याम भक्षयाम अश्नोतेर्विकरणव्यत्ययेन बहुलं छन्दसीति [पा॰ २. ४. ७३.] शपो लुक् लिङि उत्तमबहुवचने । ते तुभ्यं नमोऽस्तु मा मां हिंसीः आत्मनः परित्राणमर्थ्यते ॥ १६ ॥

a. b. अ॒भीमं म॑हि॒मा दिवं॒ विप्रो॑ बभूव स॒प्रथाः॑ । उ॒त श्रव॑सा पृथि॒वीᳬ सᳬसी॑दस्व म॒हाँ२॥ऽअ॑सि॒ रोच॑स्व दे॒ववी॑ः ॥ १७ ॥

का॰ [२६. ६. २५.] अभीममिति महावीरम् । प्रचरणीयं घर्ममासन्द्यां करोति मन्त्रेणेतराणि तूष्णीम् ततः शान्तिपाठ इत्यर्थः ॥ गायत्रीबृहत्यौ मध्येऽवसानहीने अभीमं गायत्री संसीदस्व बृहती यद्वावसानत्रयोपेतातिशक्वरी षष्ठ्यक्षराग्निदेवत्या एकैव ऋक् ऋग्द्वयं वेत्यर्थः । हे अग्ने तव महिमा इमं दिवमभिबभूव अभिभवति छन्दसि लुङ्लङ्लिटः [पा॰ ३. ४. ६.] दिवशब्दः पुंल्लिङ्गः अर्धर्चादित्वात् । कीदृशो महिमा विप्रः विशेषेण प्राति पूरयति सर्वमिति विप्रो मेधावी । सप्रथाः प्रथनं प्रथो विस्तारस्तेन सहितः सप्रथाः । उतापि च श्रवसा धनेन यशसा वा

पृथिवीमभिभवतीत्यनुषङ्गः ॥ संसीदस्वेति व्याख्यातैकादशेऽध्याये षट्त्रिंशी कण्डिका तत्र शोचस्वेति पाठेऽत्र रोचस्वेति अर्थ एक एव ॥ १७॥

a. या ते घर्म दि॒व्या शुग्या गा॑यत्र्या॑ हवि॒र्धाने॑ । सा त॒ऽआप्या॑यतां॒ नि-ष्ट्या॑यतां॒ तस्यै॑ ते॒ स्वाहा॑ ॥

b. या ते॑ घर्मा॒न्तरि॑क्षे॒ शुग्या त्रि॒ष्टुभ्या॒ग्नीध्रे॑ । सा त॒ऽआप्या॑° ॥

c. या ते॑ घर्म पृथि॒व्याᳬ शुग्या जग॑त्याᳬ सद॒स्या॑ । सा त॒ऽआप्या॑° ॥ १८॥

का° [२६. ७. ४.] चतुर्गृहीतेनाभिजुहोति या ते घर्म दिव्या शुगिति प्रतिमन्त्रम् । अध्वर्युराज्यं संस्कृत्य चतुर्गृहीतं कृत्वा तेन जुहोति अग्नीधा ध्रियमाणेषु त्रिषु शलाकात्रिकेषु त्रिभिर्मन्त्रैस्तृतीयेनोपविश्येत्यर्थः ॥ त्रीणि यजूंषि घर्मदेवत्यानि ऋक्पङ्क्तयः । हे घर्म या ते तव दिव्या दिवि भवा शुक् दीप्तिः या गायत्र्यां छन्दसि प्रविष्टा या हविर्धाने यज्ञगृहे प्रविष्टा सा ते तव शुक् आप्यायतां वर्धताम् निष्ट्यायतां (13.) संहता दृढा भवतु ष्ट्यै स्त्यै शब्दसंघातयोः लोट् तस्यै शुचे ते तुभ्यं च स्वाहा ॥ हे घर्म या ते तवान्तरिक्षे शुक् त्रिष्टुभि छन्दसि आग्नीध्रे सदने च प्रविष्टा सा तऽइति पूर्ववत् ॥ या ते हे घर्म पृथिव्यां शुक् जगत्यां छन्दसि प्रविष्टा कीदृशी सदस्या सदसि प्रविष्टा यज्ञगृहे स्थिता सा तऽइत्युक्तम् ॥ १८॥

III. क्ष॒त्रस्य॑ त्वा प॒रस्पा॑य॒ ब्रह्म॑णस्त॒न्वं॑ पाहि । वि॒शस्त्वा॒ धर्म॑णा व॒यमनु॑क्रामाम सुवि॒ताय॒ नव्य॑से ॥ १९॥

का° [२६. ७. ६.] क्षत्राय त्वेति निष्क्रमणं पुरस्तात्पत्नीमन्तर्धाय । होमानन्तरमध्वर्युः पत्नीमग्रे कृत्वा शालायाः निष्क्रामतीत्यर्थः ॥ उपरिष्टाद्बृहती घर्मदेवत्या । हे घर्म वयं त्वा त्वामनुक्रामाम अनुगच्छाम त्वं ब्रह्मणः तन्वं शरीरं पाहि पालय । किमर्थमनुगमनम् क्षत्रस्य क्षत्रियस्य दैवस्य सूर्यस्य परस्पाय परमपालनाय परःशब्दोऽव्ययम् पर उत्कृष्टं पायते रक्ष्यतऽइति परस्पम् तस्मै एतद्वै दैवं क्षत्रं य एष तपतीति [१४. ३. १. ९.] श्रुतेः । किं च विशः यज्ञस्य धर्मणा धारणेन

निमित्तेन वयं त्वामनुक्रामाम यज्ञो वै विष्णुर्यज्ञस्य त्वारिष्ट्यै इति [१४. ३. १. १.] श्रुतेः। किमर्थम् नव्यसे सुविताय नवीयसे नूतनाय सुगताय सुप्रसूताय कर्मणे कर्मसिद्ध्यर्थं त्वामनुगच्छामित्यर्थः सुष्ठु इतं सुवितम् इण् गतौ क्तः उपसर्गस्योवङ्गा-देशः यद्वा षू प्रेरणे सूयते प्रेर्यते सुवितम् इडागमे धातोरुवङ् ॥ १९॥

चतुःस्रक्तिर्नाभिर्ऋतस्य सप्रथाः स नो विश्वायुः सप्रथाः स नः सर्वायुः सप्रथाः। अप द्वेषोऽअप ह्वरोऽन्यव्रतस्य सश्चिम ॥ २०॥

का० [२६. ७. १४.] नाभिस्पृशं प्रवृञ्जनीयं निदधाति चतुःस्रक्तिरिति। प्रवृञ्जनीयं महावीरमुत्तरवेदौ नाभिलग्नं स्थापयतीत्यर्थः ॥ महाबृहती घर्मदेवत्या। स घर्मो नोऽस्माकं सर्वायुरस्तु सर्वं पूर्णमायुर्यस्मात्स सर्वायुः पूर्णायुःप्रदोऽस्त्वित्यर्थः पुनरुक्तिरादरार्था। कीदृशः सः चतुःस्रक्तिः चतस्रः स्रक्तयः कोणा दिग्रूपा यस्य सः एष वै चतुःस्रक्तिर्य एष तपति दिशो ह्येतस्य स्रक्तय इति [१४. ३. १. १७.] श्रुतेः। तथा ऋतस्य सत्यस्य यज्ञस्य वा नाभिः नहनं बन्धनस्थानम्। सप्रथाः सविस्तारः। विश्वायुः विश्वस्य जगतः आयुर्यस्मात् जगत आयुर्दाता। सप्रथाः सर्वतः प्रथयिता च। हे घर्म त्वत्प्रसादात् द्वेषः अप गच्छत्विति शेषः अस्मत्तो द्वेषः गच्छतु वीतरागाः स्यामिति भावः। ह्वर चलने ह्वरः चलनं जन्ममरणलक्षणं चास्मत्तोऽपगच्छतु। वयमन्यव्रतस्य सश्चिम अन्यत् मनुष्यकर्मणः सकाशाद्भिन्नं व्रतं कर्म जगदनुग्रहरूपं यस्य सोऽन्यव्रतः परमात्मा तस्य कर्मणि षष्ठी सश्च सेवने धातुः अन्यव्रतं परमात्मानं सेवामहे सायुज्यं प्राप्नुम इति भावः अन्यद्वाऽएतस्य व्रतमन्यन्मनुष्याणामिति [१४. ३. १. १९.] श्रुतेः ॥ २०॥

घर्मैतत्ते पुरीषं तेन वर्धस्व चा च प्यायस्व।
वर्धिषीमहि च वयमा च प्यासिषीमहि ॥ २१॥

का० [२६. ७. ३२.] आसेचनवन्ति पयसः पूरयति घर्मैतत्तऽइति। आसेचनं गर्तः तद्युतानि पात्राणि दुग्धेन पूरयति तानि सप्त महावीरत्रयं द्वे पिन्वने उपयमनी स्रुवश्चेत्यर्थः ॥ अनुष्टुप् घर्मदेवत्या। हे घर्म एतत्पयः ते तव पुरीषम् पृणाति पूरयति पुरीषं पूरयितृ अन्नम् अन्नं वै पुरीषमन्नमेवास्मिन्नेतद्दधातीति [१४. ३. १.

२३.] श्रुतेः तेन पयसा वर्धस्व आप्यायस्व च भवत्प्रसादाद्वयं वर्धिषीमहि आप्यासिषीमहि चेति व्याख्यातम् [२.१४.] ॥२१॥

अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः ।
सꣳ सूर्येण दिद्युतदुदधिर्निधिः ॥२२॥

का° [२६.७.१२.] त्रिः परिषिच्याचिक्रददिति । सामगानानन्तरमुत्सादनदेशे परिषिच्य वक्ष्यमाणं करोतीत्यर्थः ॥ परोष्णिक् घर्मदेवत्या । घर्मः सूर्यात्मना स्तूयते । वृषा आकृतिद्वारेण वृष्टिकर्ता घर्मः प्रवर्ज्यमानः सन् अचिक्रदत् क्रदि शब्दे पुनः पुनः शब्दमकरोत् । कीदृशः हरिः हरितवर्णः रसानां हर्ता वा एष वै वृषा हरिर्य एष तपत्येष उ प्रवर्ग्य इति [१४.३.१.२६.] श्रुतिः । महान् प्रभावान् (14.) । मित्रो न दर्शतः न उपमार्थः मित्र-इव दर्शनीयः अत एव सूर्येण सह संदिद्युतत् सूर्यतुल्यो द्योतते द्युतेर्लुङि णिजन्तस्य रूपमडभावः सूर्यवत्सर्वं द्योतयतीत्यर्थः उदधिः उदकं धीयते यस्मिन् जलस्य धर्ता निधिः सुखानामिति शेषः सुखनिधिः ॥२२॥

सुमित्रिया न आप ओष° ॥२३॥

का° [२६.७.३७.] चात्वाले मार्जयन्ते सपत्नीकाः सुमित्रिया न इति । सपत्नीकाः ऋत्विग्यजमानाः चात्वाले मार्जनं कुर्वते । पत्न्या अपि मन्त्रपाठः ॥ व्याख्याता [६.२२.२०, ११.३५, १२.३६, २३.] ॥२३॥

उद्वयं तमसस्परि स्वः प° ॥२४॥

का° [२६.७.३८.] उद्वयमित्युत्क्रामन्त्युत्तरपूर्वार्धम् । ऐशानीं दिशं प्रति यजमानो गच्छतीत्यर्थः ॥ व्याख्याता [२०, २१.२७, १०.३५, १४.] ॥२४॥

a. एधोऽस्येधिषीमहि । b. समिदसि तेजोऽसि तेजो मयि धेहि ॥२५॥

का° [२६.७.३५.] अनपेक्षमेत्यैधोऽसीति समिधमादायाहवनीयेऽभ्यादधाति समिदसीति । यजमानः पश्चादनवलोकयन्नीशानदेशादेत्यैधोऽसीति मन्त्रेणैकां समिधं

गृहीत्वा समिदसीति मन्त्रेणाहवनीये दधातीत्यर्थः ॥ मन्त्रद्वयं व्याख्यातम् [२०.२३.] ॥२५॥

यावती द्यावापृथिवी यावच्च सप्त सिन्धवो वितस्थिरे ।
तावन्तमिन्द्र ते ग्रहमूर्जा गृह्णाम्यक्षितं मयि गृह्णाम्यक्षितम् ॥२६॥

का° [२६.७.५४.] यावती द्यावापृथिवीऽइति दधिघर्मग्रहणम् । सपवित्रायामग्निहोत्रहवण्यां दधिघर्मं गृह्णातीत्यर्थः ॥ ब्राह्मी उष्णिक् दधिघर्मदेवत्या इन्द्रदेवत्या च । हे इन्द्र ऊर्जा अन्नेन सह अक्षितमनुपक्षीणं ते तव ग्रहं तावन्तं तत्परिमाणमहं गृह्णामि मयि च अक्षितं यथा स्यात्तथा गृह्णामि तव ग्रहग्रहणेन मयि यज्ञक्षयो मास्त्वित्यर्थः । तावन्तं कियन्तम् द्यावापृथिवी यावती द्यावाभूमी यत्परिमाणे च पुनः सप्त सिन्धवः सप्त समुद्राः क्षीरोदाद्याः (15.) यावत् यत्परिमाणे देशे वितस्थिरे विशेषेण स्थिताः तावन्तमतिमहत्तरं दधिघर्मं गृह्णामीत्यर्थः ॥२६॥

मयि त्यदिन्द्रियं बृहन्मयि दक्षो मयि क्रतुः ।
घर्मस्त्रिशुग्विराजति विराजा ज्योतिषा सह ब्रह्मणा तेजसा सह ॥२७॥

का° [२६.७.५५.] मयि त्यदिति भक्षणम् । हुतशेषं दधिघर्मं यजमानऽर्त्विजः सोपहवं भक्षयन्तीत्यर्थः ॥ पङ्क्तिः अष्टाक्षरपञ्चपादा दधिघर्मदेवत्या यजमानाशीर्देवतेति केचित् । बृहत् महत् त्यत् तत् इन्द्रियं प्रसिद्धं वीर्यं मयि विराजति विराजतु लकारव्यत्ययः । दक्षः संकल्पसिद्धिः मयि विराजतु । क्रतुः सत्संकल्पो मयि विराजतु । विशेषेण राजते विराट् तेन जगत्प्रसिद्धेन ज्योतिषा तेजसा आदित्याख्येन सह ब्रह्मणा त्रयीलक्षणेन ज्योतिषा च सह घर्मो मयि विराजतु । कीदृशो घर्मः त्रिशुक् तिस्रः शुचः दीप्तयो यस्य सः तास्तिस्रः शुचो या ते घर्म दिव्या शुगित्यष्टादश्यां कण्डिकायां शालाकमन्त्रे व्याख्याताः ॥२७॥

a. पयसो रेत आभृतं तस्य दोहमशीमह्युत्तरामुत्तराᳬ समाम् ।
b. त्विषः संवृक् क्रत्वे दक्षस्य ते सुषुम्णस्य ते सुषुम्णाग्निहुतः ।

इन्द्रपीतस्य प्रजापतिभक्षितस्य मधुमत उपहूत उपहूतस्य भक्षयामि ॥२८॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायामष्टात्रिंशोऽध्यायः ॥३८॥ ॥

गायत्र्यवसानहीना । दधिघर्मभक्षणे एव विनियुक्ता । पयसो रेतो वीर्यं सारं जगदुत्पत्तिबीजं यत् आभृतमाहृतम् दधिघर्मरूपं यत् तस्य दोहं प्रपूरणं वयमुत्तरामुत्तरां समामुत्तरोत्तरमस्मिन्वर्षे अशीमहि व्याप्नुयाम कालाधनोरिति [पा° २. ३.५.] द्वितीया वयं सर्वदा यायजूकाः स्यामित्यर्थः ॥ का° [२६.७.५६.] त्विषः संवृगिति महाव्रतीये । महाव्रतीयेऽहनि त्विष इति मन्त्रेण हुतशेषदधिघर्मभक्षणं कार्यमित्यर्थः ॥ अतिजगती दधिघर्मदेवत्या । संवृणक्ति स्वीकरोतीति संवृक् स्वीकर्ता सम्पूर्वो वृजिः स्वीकरणार्थः हे त्विषः संवृक् (16.) कान्तेः स्वीकर्तः हे सुषुम्णा शोभनं सुम्नं सुखं यस्मात् सुषुम्णाः तत्सम्बोधनम् हे सुखदातः हे दधिघर्म अहमुपहूतः कृतोपहवः सन् ते तवांशं भक्षयामि कर्मणि षष्ठी वा त्वां भक्षयामि एकस्ते-शब्दः पादपूरणः । कीदृशस्य ते क्रत्वे दक्षस्य चतुर्थी षष्ठ्यर्थे क्रतोः संकल्पस्य दक्षः सिद्धिदाता तस्य संकल्पसिद्धिदातुः क्रतुशब्दस्य चतुर्थ्येकवचने गुणाभाव आर्षः । तथा सुषुम्णस्य शोभनसुखभूतस्य । अग्निहुतः अग्नौ हूयतऽ इत्यग्निहुत् तस्य अग्नौ हुतस्य । इन्द्रपीतस्य इन्द्रेण पीतो भक्षितस्तस्य । प्रजापतिभक्षितस्य प्रजापतिना भक्षितस्तस्य । मधुमतः मधुरस्वादोपेतस्य । उपहूतस्य कृतोपहवस्य । एवंविधस्य तवांशं हे दधिघर्माहं भक्षयामीत्यर्थः ॥ ॥ समाप्ता घर्मेतिकर्तव्यता ॥२८॥

श्रीमन्महीधरकृते वेददीपे निरूपितः (17.) । अष्टात्रिंशोऽयमध्यायो महावीरनिरूपणः ॥३८॥ ॥

अथ काण्वशाखायां पाठविशेषः ॥

I. ॥ १ ॥१॥ २ [इल्] - ३ [इन्द्राण्याः J] - ६ ॥२-६॥ ॥

II. ॥ ७-९ ॥७-९॥ १० [सर्वान्देवानयालिह] - १४ ॥१०-१४॥ ॥

III. ॥ १५. १६ [अमाऽअस्या°] ॥१५. १६॥ ॥

IV. ॥ १७ ॥१७॥ ॥

GG GG GG*

V. ॥ १८-२३ ॥१८-२३॥ २४. २५ ॥२४॥ ॥

VI. ॥ २६ ॥२५॥ २७. २८ a ॥२६॥ ॥ VII. ॥ २८ b ॥२७॥ ॥

॥ सप्तानुवाकेषु सप्तविंशतिः ॥ ॥

इति काण्वीयायां वाजसनेयसंहितायामष्टात्रिंशोऽध्यायः ॥३८॥ ॥

I. a. स्वाहा प्राणेभ्यः साधिपतिकेभ्यः । b. पृथिव्यै स्वाहा । c. अग्नये स्वाहा । d. अन्तरिक्षाय स्वाहा । e. वायवे स्वाहा । f. दिवे स्वाहा । g. सूर्याय स्वाहा ॥१॥

श्रीगणेशाय नमः (1.) ॥ प्रवर्ग्ये घर्मभेदे प्रायश्चित्तम् तत्र का° [२६.७.४१.] स्वाहा प्राणेभ्यः साधिपतिकेभ्य इति पूर्णाहुतिमाद्यामुत्तमां च मनसः काममाकूतिमिति । तदर्थोऽयम् अध्वर्युः भूमिर्भूमिम् यऽऋतेचिदिति मन्त्राभ्यां भग्नं घर्ममभिमृश्य परमेष्ठ्यादिचतुस्त्रिंशदाहुतीर्हुत्वा स्वाहा प्राणेभ्य इत्याद्यां पूर्णाहुतिं हुत्वा पृथिव्यै स्वाहेत्याहुतिविंशतिं सकृद्गृहीतेन हुत्वा मनस इत्यन्त्यां पूर्णाहुतिं करोतीति ॥ मन्त्रार्थो यथा । साधिपतिकेभ्यः अधिपतिना हिरण्यगर्भेण सह वर्तमानेभ्यः प्राणेभ्यः स्वाहा सुहुतमस्तु इति पूर्णाहुतिमन्त्रः । ततो विंशतिः स्पष्टा मन्त्राः पृथिव्यै सुहुतमस्तु । एवमग्रेऽपि अग्नये अन्तरिक्षाय वायवे दिवे सूर्याय ॥१॥

a. दिग्भ्यः स्वाहा । b. चन्द्राय स्वाहा । c. नक्षत्रेभ्यः स्वाहा । d. अद्भ्यः स्वाहा । e. वरुणाय स्वाहा । f. नाभ्यै स्वाहा । g. पूताय स्वाहा ॥२॥

दिग्भ्यः चन्द्राय नक्षत्रेभ्यः अद्भ्यः वरुणाय नाभ्यै देवतायै पूताय शोधकाय पुनाति पूतः देवस्तस्मै ॥२॥

a. वाचे स्वाहा । b. प्राणाय स्वाहा । c. प्राणाय स्वाहा । d. चक्षुषे स्वाहा । e. चक्षुषे स्वाहा । f. श्रोत्राय स्वाहा । g. श्रोत्राय स्वाहा ॥३॥

वाचे वागधिष्ठात्रे एवमग्रेऽपि । प्राणाय प्राणेन्द्रियाधिष्ठात्रे प्राणादीनां द्वित्वान्मन्त्रावृत्तिः । चक्षुषे तदधिष्ठात्रे । श्रोत्राय ॥ ३ ॥

मन॑सः॒ काम॒माकू॑तिं वा॒चः स॒त्यम॑शीय ।

प॒शू॒नाᳬ रू॒पमन्न॑स्य॒ रसो॒ यशः॒ श्रीः श्र॑यतां॒ मयि॒ स्वाहा॑ ॥ ४ ॥

द्वितीयः पूर्णाहुतिमन्त्रः । अहं मनसः काममभिलाषम् आकुञ्चनमाकूतिः प्रयत्नस्तं चाशीय प्राप्नुयाम् वाचः सत्यं चाशीय यद्वाक् सत्यं वदतु । मयि एतत्सर्वं श्रयतां तिष्ठतु पशूनां रूपं पशुसम्बन्धिनी शोभा अन्नस्य रसः स्वादुत्वम् यशः कीर्तिः श्रीर्लक्ष्मीश्च ॥ ४ ॥

प्र॒जाप॑तिः सम्भ्रि॒यमा॑णः स॒म्राट् सम्भृ॑तो वैश्वदे॒वः सᳬस॒न्नो घ॒र्मः प्रवृ॑क्त॒स्तेज॒

उद्य॑त आश्वि॒नः पय॑स्यानी॒यमा॑ने पौ॒ष्णो विष्य॒न्दमा॑ने मारु॒तः क्लथ॑न् ।

मै॒त्रः शर॑सि संता॒य्यमा॑ने वाय॒व्यो॒ ह्रि॒यमा॑ण आग्ने॒यो हू॒यमा॑नो॒ वाग्घु॒तः

॥ ५ ॥

का० [२६.७.५०.] प्रजापतिः सम्भ्रियमाण इति यथाकालमिति । सम्भ्रियमाणाद्यवस्थायां महावीरभेदे प्रजापतये स्वाहेत्याद्या यथाकालमाहुतयो होतव्या इति सूत्रार्थः ॥ तद्यथा मन्त्रो दर्शयति सम्भ्रियमाणो महावीरो यदि भिद्यते तदा प्रायश्चित्तहोमे प्रजापतिर्देवता प्रजापतये स्वाहेति प्रायश्चित्ताहुतिर्होतव्येत्यर्थः प्रजापतिः सम्भ्रियमाणो यथाकालं प्रायश्चित्तदेवतेत्युक्तत्वात् [अनुक्रम० ४.८.] ॥ निष्ठिताभिमर्शनादारभ्याजापयोऽवसेचनान्तं सम्भ्रियमाणः ॥ सम्राट् सम्भृतः । पयोऽवसेकानन्तरं कुशासादनात्प्राक् सम्भृत इत्युच्यते तत्र भेदे सम्राट् प्रायश्चित्तदेवता सम्राजे स्वाहेति ॥ वैश्वदेवः संसन्नः । आसादनादारभ्य मुञ्जप्रलवैरधिश्रयणात्प्राक् संसन्नः तत्र भेदे विश्वदेवदैवतः विश्वेभ्यो देवेभ्यः स्वाहेति ॥ घर्मः प्रवृक्तः । अधिश्रयणादारभ्य परिशासाभ्यां ग्रहणात्प्राक् प्रवृक्तः प्रवृज्यतऽइति तत्र भेदे घर्माय स्वाहेति ॥ तेज उद्यतः । उद्यम्यतऽइत्युद्यतः उद्यमनादारभ्य प्रागजापयोऽवसेकादुद्यतः तत्र भेदे तेजसे स्वाहेति ॥ आश्विनः पयस्यानीयमाने । अ-

जायपयस्यासिच्यमाने घर्मभेदे आश्विनः अश्विदेवत्यो घर्मः अश्विभ्यां स्वाहेति जुहोति ॥ पौष्णो विष्यन्दमाने स्यन्दू (2.) स्रवणे विशेषेण स्यन्दमाने घृते बहिर्निःसरति सति भेदे घर्मः पौष्णः पूषदेवत्यः पूष्णे स्वाहेति जु° ॥ मारुतः क्लथन् । क्लथनं मध्ये घृतस्यावर्तनम् (3.) तदा मरुद्देवत्यः तत्र भेदे मरुद्भ्यः स्वाहेति जु° ॥ मैत्रः शरसि संताय्यमाने । पयोऽवसेके योपरि तरिका जायते सा शरःशब्देनोच्यते तस्मिन्संताय्यमाने एध्यमाने मैत्रो मित्रदेवत्यः तायृ पालनसंतत्योः कर्मणि यकि शानचि रूपम् तत्र शरआदिहरणात्प्राक् भेदे मित्राय स्वाहेति जु° ॥ वायव्यो ह्रियमाणः । आहवनीयं ह्रियमाणो होमात्प्राक् वायुदेवतः तत्र भेदे वायवे स्वाहेति जु° ॥ आग्नेयो हूयमानः । हूयमानो घर्मोऽग्निदेवतः तत्र तद्भेदे अग्नये स्वाहेति जु° ॥ वाग्घुतः । हुतो हुतहोमादूर्ध्वं प्रागुत्तरघर्मारम्भात् वाक् वाग्देवतः तत्र भेदे वाचे स्वाहेति जु° ॥ एता आहुतयः सकृद्गृहीताज्यैः ॥५॥

सविता प्रथमेऽहन्नग्निर्द्वितीये वायुस्तृतीयऽआदित्यश्चतुर्थे चन्द्रमाः पञ्चमऽऋतुः षष्ठे मरुतः सप्तमे बृहस्पतिरष्टमे । मित्रो नवमे वरुणो दशमऽइन्द्रऽएकादशे विश्वे देवा द्वादशे ॥६॥

का° [२६.७.५१.] सविता प्रथमेऽहन्निति च प्रत्यहमिति । प्रथमे अहन् दिने घर्मभेदे सविता देवता सवित्रे स्वाहेति जु° । एवमग्रेऽपि । अग्निर्द्वितीये द्वितीयेऽहनि घर्मभेदेऽग्निर्देवता । वायुस्तृतीये तृतीयेऽहनि वायुर्देवता । चतुर्थे आदित्यो देवता । चन्द्रमाः पञ्चमेऽह्नि । ऋतुः षष्ठेऽह्नि । मरुतः सप्तमेऽह्नि । बृहस्पतिरष्टमेऽह्नि । मित्रो नवमेऽह्नि । वरुणो दशमेऽह्नि । इन्द्र एकादशेऽह्नि । विश्वे देवाः द्वादशेऽह्नि देवता तत्र भेदे विश्वेभ्यो देवेभ्यः स्वाहेति जु° । उपसत्प्रवृद्धौ एता एवाहुतयः पुनरादित आरभ्यावर्त्यन्ते ॥६॥

उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च । सासह्वाँश्चाभियुग्वा च विक्षिपः स्वाहा ॥७॥

का° [१८.४.२४.] विमुखेनारण्येऽनूच्यमिति । चयने मारुतान्षट् पुरोडाशान् शुक्रज्योतिश्चेत्यादिषण्मारुतमन्त्रैः [१७.८०-८५.] हुत्वारण्येऽनूच्यसंज्ञं सप्तमं पुरोडाशं विमुखसंज्ञिनोग्रश्चेति मन्त्रेण जुहुयात् तथाचानुक्रमणी [४.८.] उग्रश्च मारुती

गायत्री विमुखाख्यो मन्त्रोऽग्नौ विनियुक्तस्तस्मादाग्निक एवास्यऽर्षिः परमेष्ठी प्राजापत्यो वेति । आग्निकः प्रजापतिर्ऋषिः । अस्य मन्त्रस्यात्र पाठोऽरण्ये पाठयोग्यत्वात् । अथ मन्त्रार्थः य ऽएते उग्रादिनामकाः सप्त मरुतः तेभ्यः स्वाहा सुहुतमस्तु । उग्रः उत्कृष्टः । बिभेत्यस्मादसौ भीमः । ध्वनति शब्दं करोतीति ध्वान्तः । धूनयति कम्पयति शत्रूनिति धुनिः । सहते शत्रूनभिभवति ससह्वान् सहतेः क्वसुश्चेति [पा॰ ३.२.१०७.] क्वसुप्रत्ययः संहितायामभ्यासदीर्घश्छान्दसः । अभियुनक्ति अस्मत्संमुखं योगं प्राप्नोतीत्यभियुग्वा अन्येभ्योऽपि दृश्यन्तऽइति [पा ३.२.७५.] युजेः क्वनिप्प्रत्ययः । विक्षिपः विविधं क्षिपति रिपूनिति विक्षिपः इगुपधेति [पा॰ ३.१.१३५.] कप्रत्ययः ॥७॥

अ॒ग्निᳯ हृद॑येना॒शनि॑ᳯ हृदया॒ग्रेण॑ पशु॒पतिं॑ कृत्स्न॒हृद॑येन भ॒वं य॒क्ना ।
श॒र्वं मत॑स्नाभ्या॒मीशा॑नं म॒न्युना॑ महादे॒वम॑न्तःपर्श॒व्येनो॒ग्रं दे॒वं व॑नि॒ष्ठुना॑
वसि॒ष्ठहनुः शिङ्गी॑नि को॒श्याभ्या॑म् ॥८॥

का॰ [२०.८.६-८.] विमुखाद्य परेभ्यो मा नो मित्र इति प्रत्यृचमनुवाकाभ्यामन्त्यां द्यावापृथिवीयामिति । अस्यार्थः उग्रश्चेति मन्त्रो विमुखः ततः परेभ्यो देवताश्वाङ्गेभ्योऽग्निं हृदयेणेत्यादिभ्यश्चतुर्गृहीतमाज्यं गृहीत्वा गृहीत्वा जुहोति । तत्रापि पक्षद्वयम् । अग्नये स्वाहा हृदयाय स्वाहा अशनये स्वाहा हृदयाग्राय स्वाहा इत्यादि कात्यायनादीनामभिप्रायः अग्निं हृदयेन प्रीणामि स्वाहेत्यादि हरिहरस्वामिमते प्रयोगः । ततश्चाग्निं हृदयेनेत्यादीन्विश्वेभ्यो देवेभ्यः स्वाहेत्यन्तान्होमान्कृत्वा मा न इत्यनुवाकाभ्यां [२५.२४-३१.] षोडशाहुतीर्हुत्वा द्यावापृथिवीभ्यां स्वाहेति चरमामाहुतिं जुहोतीति सूत्रार्थः ॥ अरण्येऽनूच्यान्हुत्वा द्यावापृथिव्यामुत्तमामाहुतिं जुहोतीति श्रुतेः अरण्येऽनूच्यानरण्ये पठितानग्निं हृदयेनेत्यादीन्विश्वेभ्यो देवेभ्यः स्वाहेत्येवमन्तान्होमान्कृत्वा द्यावापृथिवीयामुत्तमामाहुतिं जुहोतीति श्रुतेरर्थः । तथा चानुक्रमणी [४.८.] अग्निᳯ हृदयेणाश्वमेधिकानि तत्रत्य (4.) एवऽर्षिर्लोमभ्यः स्वाहेति प्रायश्चित्ताहुतयो द्विचत्वारिᳯशत् । तत्राग्निं हृदयेण उग्रं लोहितेन द्वे कण्डिके ब्राह्मणरूपे देवताश्चावयवसम्बन्धविधानात्

अरण्येऽध्येयत्वादिह पाठः । लोमादीन्यङ्गान्येव पठितानि आयासादयो देवता ए-व ॥ अथ मन्त्रार्थः हृदयेनाङ्गिनाग्निं देवं प्रीणामि । हृदयस्याग्रभागेनाशनिं देवं प्रीणामि । समग्रहृदयेन पशुपतिं देवं प्रीणामि । यक्ना यकृता कालखण्डेन भवं देवं प्रीणामि पद्दन्न इत्यादिना [पा° ६. १. ६३.] यकृच्छब्दस्य यकन्नादेशः । मतस्ने हृदयास्थिविशेषौ ताभ्यां शर्वं देवं प्रीणामि । मन्युना अश्वसम्बन्धिक्रोधेन ईशा-नं देवं प्रीणामि । अन्तर्वर्तमानेन पर्शव्येन पार्श्वास्थिसम्बन्धिना मांसेन महादेवं देवं प्रीणामि पर्शवः पार्श्वास्थीनि । वनिष्ठुः (5.) स्थूलान्त्रं तेनोग्रं देवं प्रीणा-मि । वसिष्ठहनुः वसिष्ठस्य देवस्य हनुः कपोलैकदेशो ज्ञातव्यः यद्वा वसिष्ठा या हनुः कपोलाधोदेशः तत्परा हनुरित्यमरः [२. ६. ९०.] तत्परा कपोलाधोभागस्था हन्त्याहारमिति हनुः लिङ्गव्यत्ययः वसिष्ठहन्वा कोश्याभ्यां (6.) कोशो हृदय-कोशः तत्स्थाभ्यां मांसपिण्डाभ्यां च शिङ्गीनि (7.) शिङ्गिसंज्ञानि दैवतानि प्री-णामि ॥ ८ ॥

उ॒ग्रं लोहि॑तेन मि॒त्रꣳ सौव्र॑त्येन रु॒द्रं दौर्व्र॑त्ये॒नेन्द्रं॑ प्रक्री॒डेन॑ म॒रुतो॑ बले॑न सा॒ध्यान्प्र॒मुदा॑ । भ॒वस्य॑ कण्ठ्यꣳ रु॒द्रस्या॑न्तःपा॒र्श्व्यं म॒हादे॒वस्य॑ यकृ॑च्छ॒र्वस्य॑ व-नि॒ष्ठुः प॑शु॒पतेः॑ पुरी॒तत् ॥ ९ ॥

लोहितेनासृजा उग्रं देवं प्रीणामि । शोभनं व्रतं कर्म यस्य स सुव्रतस्तस्य भावः सौव्रत्यं शोभनगत्यादिकर्मकर्तृत्वम् (8.) तेन मित्रं देवं प्रीणामि । दुष्टं स्खलनोच्छलनादि व्रतं (9.) यस्य स दुर्व्रतः तस्य भावो दौर्व्रत्यम् तेन रुद्रं देवं प्रीणामि । प्रकृष्टं क्रीडनं प्रक्रीडः तेनेन्द्रं देवं प्रीणामि । बलेन सामर्थ्येन मरु-तो देवान्प्रीणामि । प्रमुदा प्रकृष्टा मुत् हर्षः प्रमुत् तया साध्यान्देवान्प्रीणामि ॥ भवस्य कण्ठ्यम् अत्र षष्ठ्यन्तो देवः अङ्गं प्रथमान्तम् कण्ठ्यं कण्ठे भवं मांसं भव-स्यास्तु विभक्तिव्यत्ययो वा कण्ठ्येन भवं देवं प्रीणामि । एवमग्रेऽपि । पार्श्वस्या-न्तर्मध्ये भवं मांसमन्तःपार्श्व्यं तद्रुद्रस्यास्तु । यकृत् कालखण्डं महादेवस्यास्तु । व-निष्ठुः स्थूलान्त्रं शर्वस्यास्तु । पुरीतत् हृदयाच्छादकमन्त्रं पशुपतेर्देवस्यास्तु ॥ ९ ॥

लोम॑भ्यः॒ स्वाहा॒ लोम॑भ्यः॒ स्वाहा॑ त्व॒चे स्वाहा॑ त्व॒चे स्वाहा॒ लोहि॑ताय

स्वाहा लोहिताय स्वाहा मेदोभ्यः स्वाहा मेदोभ्यः स्वाहा । माᳮसेभ्यः स्वाहा माᳮसेभ्यः स्वाहा स्नावभ्यः स्वाहा स्नावभ्यः स्वाहास्थभ्यः स्वाहास्थभ्यः स्वाहा मज्जभ्यः स्वाहा मज्जभ्यः स्वाहा । रेतसे स्वाहा पायवे स्वाहा ॥१०॥

लोमभ्यः स्वाहेति प्रायश्चित्ताहुतयो द्विचत्वारिंशत् । लोमादीन्यङ्गानि । लोमभ्यः स्वाहा लोमानि जुहोमीत्यर्थः २. त्वचे ४. लोहिताय ६. मेदोभ्यः मेदो धातुविशेषः ८. मांसेभ्यः १०. स्नावभ्यः स्नावानः स्नायवो नसाः १२. अस्थभ्यः छन्दस्यपि दृश्यते [पा° ७.१.७६.] इत्यस्थिशब्दस्य हलादिविभक्तावप्यनङादेशः १४. मज्जभ्यः मज्जा षष्ठो धातुः १६. रेतसे रेतो वीर्यम् १७. पायवे पायुर्गुदम् १८. ॥१०॥

आयासाय स्वाहा प्रायासाय स्वाहा संयासाय स्वाहा वियासाय स्वाहोद्यासाय स्वाहा ।
शुचे स्वाहा शोचते स्वाहा शोचमानाय स्वाहा शोकाय स्वाहा ॥११॥
तपसे स्वाहा तप्यते स्वाहा तप्यमानाय स्वाहा तप्ताय स्वाहा घर्माय स्वाहा ।
निष्कृत्यै स्वाहा प्रायश्चित्यै स्वाहा भेषजाय स्वाहा ॥१२॥
यमाय स्वाहान्तकाय स्वाहा मृत्यवे स्वाहा ब्रह्मणे स्वाहा ब्रह्महत्यायै स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा द्यावापृथिवीभ्याᳮ स्वाहा ॥१३॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायामेकोनचत्वारिंशोऽध्यायः ॥३९॥ ॥

आयासाय आयासादयो देवविशेषाः १९. प्रायासाय (10.) २०. संयासाय २१. वियासाय २२. उद्यासाय २३. शुचे २४. शोचते २५. शोचमानाय २६. शोकाय २७. तपसे २८. तप्यते २९. तप्यमानाय ३०. तप्ताय ३१. घर्माय ३२. निष्कृत्यै ३३. प्रायश्चित्यै ३४. भेषजाय ३५. यमाय ३६. अन्तकाय ३७. मृत्यवे ३८. ब्रह्मणे ३९. ब्रह्महत्यायै ४०. विश्वेभ्यो देवेभ्यः ४१. एतेभ्यो देवेभ्यः सुहुतमस्तु । एता आ-

HH HH HH

PARS I.

हुतीर्हुत्वा द्यावापृथिवीभ्यां स्वाहेत्यन्त्यामाहुतिं जुहुयात् ४२. ॥ एतावता कर्मकाण्डं समाप्तम् ॥ ११ ॥ १२ ॥ १३ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे । गतोऽध्याय उपान्त्योऽयं प्रोक्तधर्मादिनिष्कृतिः ॥ ३१ ॥ ॥

अथ काण्वशाखायां पाठविशेषः ॥

I. ॥ १.२ ॥ १ ॥ ॥ II. ॥ ३ ॥ २ ॥ ॥ ४ ॥ ३ ॥ ॥

III. ॥ ५ [पूषा विष्य॰ - - क्षयंन् । - -] ॥ ४ ॥ ॥ IV. ॥ ६ ॥ ५ ॥ ॥

V. ॥ ७ [॰श्च धान्तश्च] ॥ ६ ॥ ॥ VI. ॥ ८ ॥ ७ ॥ ॥

VII. ॥ ९ [प्रक्रीलिनं] ॥ ८ ॥ ॥ VIII. ॥ १० [मिदंस] ॥ ९ ॥ ॥

IX. ॥ ११ [शोचंते स्वाहा शोकाय स्वाहा] ॥ १० ॥ १२ [तपंसे स्वाहा तप्यमानाय स्वाहा तप्ताय स्वाहा । निष्कृ॰] ॥ ११ ॥ १२ [मृत्यवे स्वाहा ब्रह्महत्यायै स्वा॰] ॥ १२ ॥ ॥ नवानुवाकेषु द्वादश ॥ ॥

इति काण्वीयायां वाजसनेयसंहितायामेकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ॥

ईशा वास्यमिदꣳ सर्वं यत्किं च जगत्यां जगत् ।
तेनं त्यक्तेनं भुञ्जीथा मा गृधः कस्यं स्विद्धनम् ॥ १ ॥

श्रीगणेशाय नमः ॥ गणेशनरहरिलक्ष्मीन्नत्वा (1.) तत्कृपया मया । संहिताचरमाध्याये (2.) वेददीपो वितन्यते ॥ एकोनचत्वारिंशताध्यायैः कर्मकाण्डं निरूपितम् इदानीं कर्माचरणशुद्धान्तःकरणं प्रति ज्ञानकाण्डमेकेनाध्यायेन निरूप्यते । ईशा वास्यमित्यादिमन्त्राणां कर्मसु विनियोगो नास्ति तेषां शुद्धत्वैकत्वापापविद्धत्वाशरीरत्वसर्वगतत्वाद्यात्मयाथात्म्यप्रतिपादनात् तच्च कर्मणा विरुध्यते न ह्येदृगात्मोत्पाद्यो विकार्य आप्यः संस्कार्यः कर्ता भोक्ता वा भवेद्येन कर्मशेषता स्यात् तस्मादविद्याकृतमात्मनोऽनेकत्वकर्तृत्वभोक्तृत्वाशुद्धत्वपापविद्धत्वाद्यङ्गीकृत्य लोकबुद्धिसिद्धानि कर्माणि विहितानि यो हि दृष्टेन ब्रह्मवर्चसादिनादृष्टेन स्वर्गादिना

कर्मफलेनार्थी सन्नहं द्विजातिः कर्माधिकारवानित्यात्मानं मन्यते तस्य कर्माधिकारः तस्मादेते मन्त्रा आत्मयाथात्म्यप्रकाशनेन शोकमोहादिसाधनमज्ञानं विनिवर्त्यात्मज्ञानं जनयन्तीत्यभिधेयसम्बन्धप्रयोजनानि । इदानीं ते मन्त्रा व्याख्यायन्ते । ईशा वास्यम् । आत्मदेवत्य अनुष्टुप्छन्दस्कोऽध्यायो दधीचाथर्वणेन दृष्टः । गर्भाधानादिसंस्कारसंस्कृतमधीतवेदं जनितसुतं यथाशक्तिकृतयज्ञं निष्पापं निःस्पृहं यमनियमोपेतं मुमुक्षुमुपसन्नं शिष्यं पुत्रं वा ऋषिरुपदिशन्नाह । ईश ऐश्वर्ये क्विप् ईष्टेऽइतीट् ईशिता परमेश्वरः स हि सर्वजन्तूनामात्मा सन्सर्वमीष्टे तेन स्वेनात्मनेशा इदं प्रत्यक्षतो दृश्यमानं सर्वं वास्यम् वस आच्छादने ऋहलोर्ण्यदिति [पा॰ ३. १. १२४.] ण्यत्प्रत्ययः आच्छादनीयम् परमात्माहमेवेदं सर्वमिति परमार्थसत्यरूपेणात्मना सर्वमिदमनृतमाच्छादनीयम् परमात्माहमेवास्मि नान्यदस्तीति चिन्तयेदित्यर्थः । यत् किम् चेति भिन्नक्रमः किं च यत् जगत्यां लोकत्रये जगत् जङ्गमादिकं स्वामिसम्बन्धालिङ्गितं भवेत् तेन सर्वेण त्यक्तेन त्यक्तस्वस्वामिसम्बन्धेन भुञ्जीथाः भोगमनुभवेः मा गृधः गृधु अभिकाङ्क्षायाम् आकाङ्क्षां मा कृथाः ममेदमिति धियं त्यजेत्यर्थः । किमिति स्विदिति निपातो वितर्के धनं कस्य स्वित् न कस्यापीत्यर्थः सर्वाणि द्रव्याण्यन्योऽन्यमुपगच्छन्ति दृश्यन्ते अतो ममेदमिति बुद्धिरविद्या तां त्यजतो योगेऽधिकार इत्यर्थः ॥ १ ॥

कु॒र्वन्ने॒वेह कर्मा॑णि जिजीवि॒षेच्छ॒तꣳ समाः॑ ।
ए॒वं त्वयि॒ नान्यथे॒तो॒ऽस्ति॒ न कर्म॑ लिप्यते॒ नरे॑ ॥ २ ॥

आत्मज्ञानाशक्तस्य कर्मोपदेशमाह । कर्माणि अग्निहोत्रादीनि निष्कामानि (4.) मुक्तिहेतुकानि कुर्वन्नेवेह लोके शतं समाः शतवर्षपर्यन्तं जिजीविषेत् पुरुषव्यत्ययः त्वं जिजीविषेः जीवितुमिच्छेः पुरुषायुषः शतवर्षत्वाच्छतग्रहणम् । त्वयीति विभक्तिव्यत्ययः तवैवं कर्म कुर्वतो जिजीविषतो मुक्तिरस्तीति शेषः इतः प्रकारादन्यथा प्रकारान्तरेण मुक्तिर्नास्ति अयमर्थः स्वर्गादिप्राप्तौ यथा नानाप्रकारा न तथा मुक्तावित्यर्थः निष्कामकर्मानुष्ठानेन शुद्धान्तःकरणस्यैव मुक्तिरित्यर्थः न तु कर्मणः फलेन भाव्यम् कथं मुक्तिरित्यत आह न कर्मेति मुक्त्यर्थं क्रियमाणं कर्म

नरे मनुष्ये न लिप्यते न सम्बध्यते मुक्तिकारणान्तःकरणशुद्ध्यापादकत्वेनोपघ्नी-णाशक्तित्वात् यावदिह तावत्कर्मस्वधिकार इति दर्शितम् । उत्तरार्धस्यार्थान्तरं वा एवं प्रकारे त्वयि जिजीविषति नरे नरमात्राभिमानिनि इतः एतस्मात्कर्मकरणा-दन्यथा प्रकारान्तरं नास्ति येन प्रकारेणाशुभं कर्म न लिप्यते अतः शास्त्रवि-हितं कर्म कुर्वन्नेव जीवितुमिच्छेत् प्रत्यवायपरिहारायेत्यर्थः तदुक्तम् द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः प्रवृत्तिलक्षणो धर्मो निवृत्तौ च विभाषित इति ॥२॥

असुर्या नाम ते लोका अन्धेन तमसावृताः ।
ताँस्ते प्रेत्यापिगच्छन्ति ये के चात्महनो जनाः ॥ ३ ॥

अथ काम्यकर्मपरान्निन्दति । ये के च ये केचित् [जनाः] नराः आत्महनः आ-त्मानं घ्नन्तीत्यात्महनः अविद्वांसः काम्यकर्मपराः विद्यमानस्याजरामरस्यात्मनोऽवि-द्यादोषेण तिरस्कारणादात्महन्तारः ते प्रेत्य मृत्वा देहं त्यक्त्वा तान् लोकान् ज-न्मानि (5.) स्थावरान्तानि अपिगच्छन्ति प्राप्नुवन्ति । तान् कान् नाम प्रसिद्धं ते ये यत्तदोर्व्यत्ययः ये लोकाः लोक्यन्ते दृश्यन्ते भुज्यन्ते कर्मफलानि यत्रेति लोका जन्मानि असुर्याः असुराणामिमे असुर्याः असुषु प्राणेषु रमन्तेऽसुराः प्राणपोषणप-राः अद्वैतमपेक्ष्य देवा अपि असुराः । कीदृशाः लोकाः अन्धेन तमसा अदर्श-नात्मकेनाज्ञानेन आवृताः आच्छादिताः । अनात्मज्ञाः पुनर्जायन्ते म्रियन्ते चेत्यर्थः ॥ ३ ॥

अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्शत् ।
तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥

मुमुक्षुभिर्यादृशं ब्रह्मात्मत्वेनोपास्यम् यस्याज्ञानात्संसारस्तदात्मस्वरूपमाह (6.)। त्रिष्टुप्छन्दस्केयमृक् । यत् ब्रह्म अनेजत् एजृ कम्पने न एजतीत्यनेजत् अचलत् स्वावस्थाप्रच्युतिः कम्पनम् तद्रहितम् सदैकरूपमित्यर्थः एकमद्वितीयं सर्वभूतेषु विज्ञानघनरूपेण । मनसः संकल्पादिलक्षणाज्जवीयः वेगवत्तरम् जवोऽस्यास्ती-ति जववत् अत्यन्तं जववत् जवीयः ईयसुनि कृते विन्मतोर्लुगिति [पा॰ ५.३.६५.] मतुपो लुक् । नन्वनेजद्वेगवतोर्विरोधः नैवम् निरुपाधित्वेनानेजत् संकल्प-

विकल्परूपान्तःकरणस्योपाधेरनुवर्तनाज्जविष्ठम् देहस्थस्य मनसो दूरस्थब्रह्मलोकादिसंकल्पनं क्षणमात्राद्भवतीति मनो वेगवत्तरं लोके प्रसिद्धम् मनसि दूरं गच्छत्यात्मचैतन्यावभासः (7.) प्रथमप्राप्त-इव गृह्यतेऽतो मनसो जवीय इत्युक्तम्। देवा द्योतनात्मकाश्चक्षुरादीन्द्रियाणि एनत् प्रकृतमात्मतत्त्वं नाप्नुवन् न प्राप्तवन्तः चक्षुरादिभ्यो मनो जवीयोऽतो मनोव्यापारे व्यवहितत्वादात्मन आभासमात्रमपि (8.) देवानां गोचरो न भवतीत्यर्थः यतः पूर्वमर्शत् वेगवन्मनसोऽपि प्रथममेव गच्छत् ऋश गतौ व्योमवद्व्यापित्वात्सर्वसंसारधर्मवर्जितं तदात्मतत्त्वं निरुपाधिकेन स्वरूपेणाविक्रियमेव सदुपाधिकृताः सर्वाः संसारविक्रिया अनुभवतीवेत्यविवेकिनां प्रतिदेहमनेकमिव प्रतिभासतऽइति भावः यद्वा पूर्वम् पूर्वमपि विद्यमानम् अर्शत् रिश हिंसायां रिशति नश्यति रिशत् न रिशदरिशत् अर्शत् धातोरिकारलोपश्छान्दसः। किं च तत् तदः स्थाने यदो वृत्तिः यदात्मतत्त्वं धावतो द्रुतं गच्छतोऽन्यान् मनोवागिन्द्रियादीनात्मविलक्षणान् अत्येति अतीत्य गच्छतीव कीदृशम् तिष्ठत् स्वयमविक्रियमेव सद्गच्छतीव। मातरि अन्तरिक्षे श्वसिति गच्छतीति मातरिश्वा वायुः तस्मिन्नित्यचैतन्यस्वभावे आत्मतत्त्वे सति अपः कर्माणि दधाति धारयति कार्यकारणजातानि यस्मिन्नोतानि प्रोतानि यः सूत्रसंज्ञः सर्वस्य जगतो विधारयिता सर्वप्राणभृत्क्रियात्मकः सोऽपि वायुः प्राणिनां चेष्टालक्षणानि अग्निरविमेघादीनां ज्वलनदहनप्रकाशाभिवर्षणादीनि च कर्माणि यस्मिन्ब्रह्मणि सत्यवद्धाति विभजति धारयति वा भीषास्माद्वातः पवते भीषोदेति सूर्य इत्यादिश्रुतेः [तैत्तिरी॰ आरण्य॰ ८. ८.] सर्वा हि कार्यकारणादिक्रियाः सर्वास्पदे नित्यचैतन्यरूपे ब्रह्मणि सत्येव भवन्तीत्यर्थः। यद्वा मातरिश्वा वायुरपः कर्माणि आप्यन्ते प्राप्यन्ते सुखदुःखानि याभिस्ता आपः कर्माणि आप्नोतेर्ह्रस्वश्चेति [उणा॰ २. ५९.] क्विप् धातोर्ह्रस्वश्च तानि कर्माणि यज्ञहोमादीनि यस्मिन्दधाति स्थापयति स्वाहा वाते धा इति [८. २१.] समिष्टयजुषि वायुस्थत्वोक्तेः कर्माणि तावद्वायौ स्थाप्यन्ते समष्टिरूपोऽसौ वायुरपि यस्मिन्कर्माणि स्थापयति यागहोमदानादिकर्मणां परमं निधानमित्यर्थः ॥४॥

तदे॑जति॒ तन्नैज॑ति॒ तद्दू॒रे तद्व॑न्ति॒के।

तद॒न्तर॑स्य॒ सर्व॑स्य॒ तदु॒ सर्व॑स्यास्य बाह्य॒तः ॥५॥

रहस्यं सकृदुक्तं चित्ते नायातीति पूर्वमन्त्रोक्तमप्यर्थं पुनर्वदति । तत् प्रकृतमात्मतत्त्वमेजति चलति तदेव च न एजति स्वतो नैव चलति अचलमेव सत् मूढदृष्ट्या चलतीवेत्यर्थः । किं च तत् दूरे अविदुषामब्दकोट्याप्यप्राप्यत्वाद्दूरे इवेत्यर्थः । तत् उ तदेव अन्तिके समीपे विदुषामात्मत्वेन भासमानत्वान्न केवलं दूरेऽन्तिके च । अस्य सर्वस्य नामरूपक्रियात्मकजगतोऽन्तरभ्यन्तरे तदेव । अस्य सर्वस्य बाह्यतः बहिरपि तदु तदेव ब्रह्म नभोवद्व्यापकत्वात् ॥ अस्य मन्त्रस्यार्थान्तरम् यथा पूर्वमन्त्रेण कारणरूपमात्मानमुद्दिश्य कार्यरूपमुद्दिश्यति । तदेजति । तिस्रोऽनुष्टुभः । तत् आत्मतत्त्वमेजति सर्वजन्तुरूपेण स्थितं सत् कम्पते क्रियावद्भवति तदेव च न एजति स्थावररूपावस्थं न चलति । तदेव दूरे आदित्यनक्षत्रादिरूपेण स्थितत्वात् तदु अन्तिके समीपे धरादिरूपत्वात् सर्वं खल्विदं ब्रह्मेति श्रुतेः । अस्य सर्वस्य प्राणिजातस्यान्तर्मध्ये तदेवास्ति विज्ञानघनरूपेण । अस्य सर्वस्य बहिः तदु तदेव जडरूपत्वात् चेतनाचेतनरूपमनन्तं ब्रह्मेत्यर्थः एतदुपासितुरर्चिरादिमार्गेण गमनं नास्ति इहैव ब्रह्मप्राप्तेः न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन्ब्रह्माप्येतीति श्रुतेः ॥५॥

यस्तु सर्वा॑णि भू॒तान्या॒त्मन्ने॒वानु॒पश्य॑ति ।
सर्व॒भू॒तेषु॑ चा॒त्मान॒ं तत॒ो न विचि॑कित्सति ॥६॥

अथोपासनप्रकारमाह । यस्तु यः पुनः मुमुक्षुः सर्वाणि भूतानि अव्यक्तादीनि स्थावरान्तानि चेतनानि आत्मन् सप्तम्या लुक् आत्मनि एवानुपश्यति मय्येव सर्वभूतानि (9.) स्थितानि न मद्व्यतिरिक्तानीति पश्यति आत्मव्यतिरिक्तानि न पश्यतीत्यर्थः सर्वभूतेषु चात्मानमवस्थितमव्यतिरिक्तं पश्यति (10.) तेषां भूतानां स्वं आत्मानमात्मत्वेन पश्यतीत्यर्थः । अयमर्थः । अस्य कार्यकारणसंघातस्यात्माहं सर्वप्रत्ययसाक्षीभूतश्चेतयिता निर्गुणश्च तथा तेनैव स्वरूपेणाव्यक्तादीनां स्थावरान्तानामहमेवात्मेति सर्वेषु चात्मानं निर्विशेषं पश्यति । ततस्तस्माद्दर्शनात् न विचिकित्सति न संशेते किद्रोगापनयने संशये चेति धातोः गुप्तिज्किद्भ्यः सन्निति

[पा° ३. १. ५.] स्वार्थे सन्प्रत्ययः आत्मनोऽन्यत्पश्यतः सर्वः संदेहो भवत्यात्मानमेवात्यन्तं शुद्धं निरन्तरं पश्यतो न संदेहावकाश इति भावः अत आत्मज्ञस्य विचारनिवृत्तिः ॥ ६॥

यस्मिन्त्सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ७॥

इममेवार्थमन्यो मन्त्रो वदति । यस्मिन्नवस्थाविशेषे विजानतः आत्मैवेदम् सर्वं खल्विदं ब्रह्मेत्यादिवाक्यविचारेणावधृतपरमार्थस्य सतः सर्वाणि भूतानि आत्मैवाभूत् परमार्थदर्शनादात्मैव संवृत्तः तत्र तस्यामवस्यायामेकत्वं विशुद्धं गगणोपममात्मैकत्वं पश्यतः जानतः को मोहः कः शोकश्च अविद्याकार्ययोः शोकमोहयोरसम्भवात्सकारणस्य संसारस्यात्यन्तमुच्छेद इति भावः ॥ ७॥

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम् ।
कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ ८॥

एवम्भूतात्मज्ञस्य फलमाह । य एवमात्मानं पश्यति स ईदृशं ब्रह्म पर्यगात् परिगच्छति प्राप्नोतीत्यर्थः । कीदृशम् शुक्रं शुक्लं शुद्धं विज्ञानानन्दस्वभावमचिन्त्यशक्ति । अकायम् न कायः शरीरं यस्य तत् । अकायत्वादेवाव्रणमक्षतम् । अस्नाविरं न विद्यन्ते स्नावाः शिरा यत्र तदस्नाविरं स्नायुरहितम् अकायत्वादेव । शुद्धमनुपहतं सत्त्वरजस्तमोभिः । अपापविद्धं न पापैर्विद्धं क्लेशकर्मविपाकाशयैरस्पष्टम् । अकायमव्रणमस्नाविरमिति पुनरुक्तमर्थातिशयद्योतनाय अभ्यासे भूयांसमर्थं मन्यन्तऽइति यास्कोक्तेः [निरु° १०. ४२.] । ईदृशं ब्रह्मात्मज्ञः प्रतिपद्यतऽइत्यर्थः । पुनस्तस्यैव फलान्तरमाह य ईदृश उपासकः स शाश्वतीभ्यः समाभ्यः निरन्तरमनन्तवर्षेभ्योऽर्थाय (11.) अनन्तवर्षप्राप्तये याथातथ्यतः यथातथाभावो याथातथ्यं तेन यथास्वरूपमर्थान्व्यदधात् विहितवान् त्यक्तस्वस्वामिसम्बन्धैश्चेतनाचेतनैरर्थैरुपभोगं कृतवानित्यर्थः । कीदृशः कविः क्रान्तदर्शी । मनीषी मेधावी ।

परि सर्वतो भवतीति परिभूः ज्ञानबलात्सर्वरूपः । स्वयं भवतीति स्वयम्भूः ब्रह्मरूपेण भविता । ईदृशोऽपि पूर्वोक्तं शुक्रमकायमित्यादिविशेषणविशिष्टं ब्रह्म प्राप्नोतीत्यर्थः ॥ एतस्या ऋचोऽर्थान्तरम् । यथा । योऽयमतीतमन्त्रोक्त आत्मा स पर्यगात् परितः सर्वत्र गच्छति नभोवत्सर्वं व्याप्नोति व्याप्य च शाश्वतीभ्यो नित्याभ्यः समाभ्यः संवत्सराख्येभ्यः प्रजापतिभ्यो याथातथ्यतः यथाभूतकर्मफलसाधनतोऽर्थान्कर्तव्यपदार्थान्व्यदधात् यथानुरूपं व्यभजदित्यर्थः । स कीदृशः शुक्रमित्यादिविशेषणानि लिङ्गव्यत्ययेन पुल्लिङ्गे नेतव्यानि शुक्रः शुद्धो दीप्तिमान् अकायोऽशरीरः लिङ्गशरीरवर्जित इत्यर्थः (12.) अव्रणोऽक्षतः अस्नाविरः शिरारहितः अव्रणोऽस्नाविर इति विशेषणद्वयेन स्थूलशरीरप्रतिषेधः शुद्धो निर्मलः अपापविद्धोऽधर्मादिवर्जितः कविः सर्वदृक् नान्यदतोऽस्ति द्रष्टृ इति (13.) श्रुतेः मनीषी मनस ईशिता सर्वज्ञः परिभूः परि सर्वेषामुपर्युपरि भवतीति परिभूः स्वयम्भूः स्वयमेव भवतीति येषामुपरि भवति यश्चोपरि भवति स स्वयमेव भवतीति स्वयम्भूः । स नित्य ईश्वरः सर्वं कृतवानित्यर्थः ॥ ८॥

अ॒न्धं तमः॒ प्र वि॑शन्ति॒ येऽसं॑भूतिमु॒पास॑ते ।
ततो॑ भू॒य॑ इव॒ ते तमो॒ य उ॑ स॒म्भू॑त्या॒ᳩ र॒ताः ॥ ९ ॥

अतः परमुपासनामन्त्रा उच्यन्ते । षडनुष्टुभः । यमनियमसम्बन्धवान्विज्ञानात्मा कश्चिन्नास्ति जलबुद्बुदवज्जीवाः (14.) मदशक्तिवद्विज्ञानमित्यादिमतवादिनो बौद्धाः प्रस्तूय निन्द्यन्ते । ये नराः असम्भूतिमसम्भवमुपासते मृतस्य पुनः सम्भवो नास्ति अतः शरीरान्तेऽस्माकं मुक्तिरेवेति वदन्ति ते अन्धं तमोऽज्ञानलक्षणं प्रविशन्ति । ये उ ये च सम्भूत्यामेव रताः सम्भवत्यस्या इति सम्भूतिरात्मा तत्रैवासक्ताः कर्मपराङ्मुखाः स्वबुद्धिलाघवमज्ञानाना आत्मज्ञानमात्ररताः आत्मैवास्ति नान्यत् कर्मादीनि कर्मकाण्डज्ञानकाण्डयोः सम्बन्धो नास्तीत्यभिप्रायवन्त इत्यर्थः ते नराः ततोऽन्धात्तमसो भूय इव इवशब्दोऽनर्थकः बहुतरं तमोऽज्ञानं विशन्ति ॥ अस्या ऋचोऽर्थान्तरमुच्यते अधुना व्याकृताव्याकृतोपासनयोः समुच्चिचीषया प्रत्येकं निन्दोच्यते । सम्भवनं सम्भूतिः कार्यस्योत्पत्तिः त-

स्या अन्या असम्भूतिः प्रकृतिः कारणमव्याकृताख्यम् तामसम्भूतिमव्याकृताख्यां प्रकृतिं कारणमविद्याकामकर्मबीजभूतामदर्शनात्मिकां ये उपासते ते तदनुरूपमेवान्धं तमोऽदर्शनात्मकं संसारं प्रविशन्ति । ये सम्भूत्यां कार्यब्रह्मणि हिरण्यगर्भाख्ये रताः ते ततस्तस्मादपि भूयो बहुतरमिव तमः प्रविशन्ति ॥ ९ ॥

अ॒न्यदे॒वाहुः स॑म्भ॒वाद॒न्यदा॑हु॒रस॑म्भवात् ।
इति॑ शुश्रुम॒ धीरा॑णां॒ ये न॒स्तद्वि॑चचक्षि॒रे ॥ १० ॥

अथोभयोरुपासनयोः समुच्चयकारणमवयवफलभेदमाह । सम्भवात् सम्भूतेः कार्यब्रह्मोपासनात् अन्यदेव पृथगेवाणिमाद्यैश्वर्यलक्षणं फलमाहुः कथयन्ति धीराः । तथा असम्भवात् असम्भूतेरव्याकृतादव्याकृतोपासनादन्यदेव फलमुक्तम् अन्धं तमः प्रविशन्तीत्युक्तं प्रकृतिलय इति पौराणिकोक्तं फलमाहुः । इत्येवंविधं धीराणां विदुषां वचः शुश्रुम वयं श्रुतवन्तः ये धीराः नोऽस्माकं तत्पूर्वोक्तं सम्भूत्यसम्भूत्युपासनाफलं विचचक्षिरे व्याख्यातवन्तः ॥ १० ॥

सम्भू॑तिं च विना॒शं च॒ यस्तद्वेदो॒भय॑७ स॒ह ।
वि॒ना॒शेन॑ मृ॒त्युं ती॒र्त्वा सम्भू॑त्या॒मृत॑मश्नुते ॥ ११ ॥

सम्भूतिं सर्वजगत्सम्भवैकहेतुं परं ब्रह्म । विनाशं विनाशोऽस्यास्तीति विनाशः अर्शआदित्वादच्प्रत्ययः विनाशधर्मकं शरीरम् । तदुभयं शरीरिशरीररूपं द्वयं यो योगी सह एकीभूतं वेद जानाति देहभिन्नोऽहं देही वासे कर्मवशादिति ज्ञात्वा शरीरेण ज्ञानोत्पत्तिकराणि निष्कामकर्माणि करोतीत्यर्थः । स विनाशेन विनाशिना शरीरेण मृत्युं तीर्त्वान्तःकरणशुद्धिं सम्पाद्य सम्भूत्यात्मज्ञानेनामृतमश्नुते मुक्तिं प्राप्नोति ॥ अस्या ऋचोऽर्थान्तरम् । यथा । सम्भूत्युपासनयोरेकपुरुषार्थत्वात्समुच्चय एव युक्त इत्याह । अत्र विनाशशब्दद्वयेऽवर्णलोपो द्रष्टव्यः पृषोदरादित्वात् अन्यदाहुरसम्भवादित्युक्तेः । सम्भूतिमविनाशं च व्याकृताव्याकृतोपासनद्वयं (15.) यः सह वेद उभयमुपास्त इत्यर्थः स योगी अविनाशेनाव्याकृतोपासनेन मृत्युमनैश्वर्यमधर्मकामादिदोषजातं च तीर्त्वातिक्रम्य सम्भूत्या हिरण्यगर्भोपासनेनामृतं प्रकृतिलयलक्षणमश्नुते (16.) ॥ ११ ॥

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो यउ विद्यायाᳬ रताः ॥१२॥

ये तु कर्मनिष्ठाः कर्म कुर्वन्त एव जिजीविषन्ति तान्प्रत्युच्यते । विद्याविद्ययोः समुच्चिचीषया प्रत्येकं निन्दोच्यते । विद्याया अन्या अविद्या कर्म । ये जना अविद्यामग्निहोत्रादिलक्षणां केवलामुपासते स्वर्गार्थानि कर्माणि केवलमनुतिष्ठन्ति ते अन्धमदर्शनात्मकं तमोऽज्ञानं प्रविशन्ति संसारपरम्परामनुभवन्तीत्यर्थः । ततस्तस्मादन्धात्मकात्तमसो भूय इव बहुतरमेव तमः ते प्रविशन्ति ये उ ये पुनर्विद्यायामात्मज्ञाने देवताज्ञाने एव रताः कर्माणि हित्वा कर्माकरणे प्रत्यवायोत्पत्त्यान्तःकरणशुद्ध्यभावेन ज्ञानानुदयादिति भावः ॥१२॥

अन्यदेवाहुर्विद्याया अन्यदाहुरविद्यायाः ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥१३॥

तयोः फलभेदमाह । विद्याया आत्मज्ञानस्य फलमन्यदेवाहुरमृतत्वरूपम् अविद्यायाः कर्मणश्च फलं पितृलोकरूपमन्यदेवाहुः धीराः कर्मणा पितृलोको विद्यया देवलोक इति श्रुतेः । ये धीरा धीमन्तः आचार्याः नोऽस्मभ्यं ज्ञानं कर्म च विचचक्षिरे व्याचख्युः तदुक्तम् इत्येवं धीराणां वचः शुश्रुम श्रुतवन्तः ॥१३॥

विद्यां चाविद्यां च यस्तद्वेदोभयᳬ सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥१४॥

समुच्चयमाह । विद्यां देवताज्ञानमविद्यां कर्म च तदुभयं विद्याविद्यारूपं द्वयं यः सह वेद एकीकृत्य वेद एकेन पुरुषेणानुष्ठेयं जानाति कर्मकाण्डं ज्ञानकाण्डस्य गुणभूतमित्यर्थः । सोऽविद्ययाग्निहोत्रादिकर्मणा मृत्युं स्वाभाविककर्मज्ञानं मृत्युशब्दवाच्यं तीर्त्वोत्तीर्यान्तःशुद्ध्या कृतकृत्यो भूत्वा विद्यया देवताज्ञानेनामृतं देवतात्मभावमश्नुते प्राप्नोति तद्ध्यमृतमुच्यते यद्देवतात्मगमनमिति श्रुतेः ॥१४॥

वायुरनिलममृतमथेदं भस्मान्तᳬ शरीरम् ।
ओ३म् क्रतो स्मर क्लिबे स्मर कृतᳬ स्मर ॥१५॥

अथ कृतोपासनो योगी अन्तकाले प्रार्थयते । द्वे यजुषी । अथेदानीं परीष्यतो (17.) मम वायुः प्राणः वायुग्रहणं सप्तदशकलिङ्गोपलक्षणार्थम् सप्तदशात्मकलिङ्गरूपः प्राणोऽध्यात्मपरिच्छिन्नं द्विधाधिदैवतरूपं सर्वात्मकममृतं (18.) सूत्रात्मानमनिलं वायुं प्रतिपाद्यतामिति वाक्यशेषः वायुर्वाव गौतम सूत्रं वायुना गौतम सूत्रेणेदꣳ सर्वꣳ संदृब्धमिति श्रुतेः [बृहदारण्य° माध्य° ३.५.६.] ज्ञानकर्मसंस्कृतं लिङ्गमुत्क्रामत्वित्यर्थः । अथ इदं स्थूलं शरीरमग्नौ हुतं सत् भस्मान्तं भस्मरूपं भूयात् भस्मान्तः स्वरूपं यस्य तत् कृतप्रयोजनत्वात् ॥ अथ योगिनोऽवलम्बभूतमक्षरमुच्यते ओमिति ब्रह्मणः प्रतिमा नाम वा । अस्य ब्रह्म ऋषिः गायत्री छन्दः परमात्मा देवता वेदारम्भे होमे शान्तिपुष्टिकर्मसु काम्येषु नैमित्तिकेष्वपि कर्मसु विनियोगः । ओंप्रतीकात्मकत्वात्सत्यात्मकमग्न्याख्यं ब्रह्माभेदेनोच्यते हे ओम् हे क्रतो संकल्पात्मक स्मर यन्मम स्मर्तव्यं तस्यायं कालः प्रत्युपस्थितोऽतः स्मर (19.) यस्त्वं (20.) ब्रह्मचर्ये गार्हपत्ये च मया परिचरितस्तत्स्मर । क्लिबे (21.) स्मर कल्प्यते भोगायेति क्लृप् लोकः तस्मै स्मर नशादेश (22.) आर्षः छन्दस्युभयथेति पदान्तत्वात् मयास्मै अयं लोको दातव्यस्तस्मै क्लृप्ताय लोकाय स्मर । कृतं स्मर यन्मया बाल्यप्रभृत्यनुष्ठितं कर्म तच्च स्मर । स्मरेत्यस्यावृत्तिरादरार्था । क्रतो त्रिभिर्यजुर्भिरन्ते यज्ञान्योगी स्मारयतीति कात्यायनः [अनुक्रम° ४.१.] ॥१५॥

अग्ने॒ नय॑ सु॒पथा॑ रा॒येऽअ॒स्मान्विश्वा॑नि देव व॒युना॑नि वि॒द्वान् ।
यु॒यो॒ध्य॒स्मज्जु॑हुरा॒णमेनो॒ भूयि॑ष्ठां ते॒ नम॑उक्तिं विधेम ॥१६॥

पुनरन्येन मन्त्रेणाग्न्याख्यं ब्रह्म प्रति योगी मार्गं याचते । अगस्त्यदृष्टाग्नेयी त्रिष्टुप् व्याख्यातापि [५.३६.] विशेषाय पुनर्व्याख्यायते । हे देव दानादिगुणयुक्त हे अग्ने अस्मान् सुपथा शोभनेन मार्गेण देवयानेन नय सुपथेति विशेषणं दक्षिणमार्गनिवृत्त्यर्थम् गतागतलक्षणेन दक्षिणमार्गेण निर्विष्टोऽहम् अतोऽग्ने त्वां याचे पुनर्गमनागमनवर्जितेन शोभनेन पथास्मान्कर्मफलविशिष्टान्नय । किमर्थम् राये धनाय मुक्तिलक्षणाय कर्मफलभोगायेत्यर्थः । किंविधस्त्वम् विश्वानि सर्वाणि

IIIII

वयुनानि कर्माणि प्रज्ञानानि वा विद्वान् जानन् । किं च जुहुराणं जुहो कौटिल्ये शानचि जुहोत्यादित्वेन रूपम् कुटिलं प्रतिबन्धकं वञ्चनात्मकमेनः (23.) पापमस्मत् अस्मत्तः सकाशात् युयोधि पृथक्कुरु वियोजय नाशयेत्यर्थः यु मिश्रणामिश्रणयोः ह्वादित्वाच्छब्लोपद्वित्वे छान्दसं हेर्धित्वम् ततो विशुद्धा वयं ते तुभ्यं भूयिष्ठां बहुतरां नमउक्तिं नमस्कारवचनं विधेम कुर्याम इदानीं सपापत्वात्तव परिचर्यां कर्तुं न शक्नुमस्ततस्त्वया पापनाशे कृते शुद्धा वयं नमस्कारेण त्वां परिचरेमेत्यर्थः ॥ १६ ॥

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
योऽसावादित्ये पुरुषः सोऽसावहम् ॥
ओ३म् खं ब्रह्म ॥ १७ ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां चत्वारिंशोऽध्यायः ॥ ४० ॥ ॥

पुनरादित्योपासनमाह । उष्णिक् यजुर्द्वयात्मा उष्णिक् त्रिपादान्त्यो द्वादशक इति वचनात् । हिरण्मयमिव हिरण्मयं ज्योतिर्मयं यत्पात्रम् पिबन्ति यत्र स्थिता रश्मयो रसानिति पात्रं मण्डलम् तेन तेजोरूपेण मण्डलेन सत्यस्यादित्यमण्डलस्थस्याविनाशिनः पुरुषस्य मुखं शरीरमपिहितमाच्छादितं वर्तते । तथापि यः असौ प्रत्यक्षः आदित्ये रविमण्डले पुरुषः पुरुषाकारत्वात् पूर्णमनेन प्राणबुद्ध्यात्मना जगत्समस्तमिति वा पुरुषः पुरिशयनाद्वा स मण्डलस्थः पुरुषः असौ प्रत्यक्षः कार्यकारणसंघातप्रविष्टोऽहमस्मि । एतां चोपासनां कुर्यादित्यर्थः ॥ ओम् खं ब्रह्मेति (24.) यजुषी । ओ३मिति नामनिर्देशो ब्रह्मणः खं ब्रह्मेत्याकाशरूपमन्ते ब्रह्म ध्यायेत् [अनुक्रम° ४.१.] यद्यपि ब्रह्म चेतनमाकाशस्त्वचेतनस्तथाप्येकदेशे सादृश्यम् नभोवद्व्यापकं ब्रह्म ओमिति जपन्ध्यायेदित्यर्थः । सूर्यमण्डलस्थः पुरुषोऽहमेवेत्यभेदेन चिन्तयेत् ॥ १७ ॥

अथ विचारः । विद्यां चाविद्यां चेत्यत्र [क° १४.] विद्याशब्देन किं मुख्या परमात्मविद्योच्यते उतोपासना वा अमृतमश्नुतऽइत्यत्र [क° १४.] अमृतशब्देन साक्षान्मुक्तिरुत्तरमार्गेण परम्परया वा । नाद्यः । विद्याकर्मणोर्यस्तद्वेदोभय७ सहेति

[क° १४.] समुच्चयानुपपत्तेः तयोर्विरोधात् विद्योत्पत्तौ तदाश्रयेऽविद्यानुत्पत्तेः वह्निरुष्णः प्रकाशश्चेति ज्ञानोत्पत्तौ शीतोऽग्निरप्रकाशश्चेति अविद्योत्पत्तिर्न सम्भवति नापि संशयोऽज्ञानं वा यस्मिन्त्सर्वाणि भूतान्यात्मैवाभूद्विजानतः तत्र को मोहः कः शोक इत्युक्तत्वात् । किं च विद्याशब्देन परमात्मविद्याग्रहणेऽग्ने नयेति सुपथयाचनमनुपपन्नम् । तस्माद्विद्योपासना अमृतं चापेक्षिकमिति दिक् (25.) ॥ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे । व्यरमच्चरमोऽध्यायः परमात्मनिरूपकः ॥
इति वेददीपे चत्वारिंशोऽध्यायः ॥४०॥

अथ काण्वशाखायां पाठविशेषः ॥

१-३ [प्रत्याभिगं°] ॥१-३॥ ४ [°मर्षत्] - ६ [विजुगुप्सते] ॥४-६॥ ७ [यस्मिन्स°] ॥७॥ ८ ॥८॥ १२ ॥९॥ १३ [°र्विद्ययान्यदाहुरविद्यया । -] ॥१०॥ १४ ॥११॥ ९-११ ॥१२-१४॥ १७ [- मुखम् । तत्वं पूषन्नपावृणु सत्यधर्माय दृष्टये] ॥१५॥ पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्समूह तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि । योऽसावसौ पुरुषः । सोऽहमस्मि ॥१६॥ १५ [ओ३म् क्रतो स्मर कृत७ स्मर क्रतो स्मर कृत७ स्मर ।] ॥१७॥ १६ ॥१८॥ ओम् खं ब्रह्म ॥ ॥

अनुवाकेऽष्टादश ॥

इति काण्वीयायां वाजसनेयसंहितायां चत्वारिंशोऽध्यायः ॥४०॥ ॥



ओम् । शुभं भवतु । कल्याणमस्तु ।

संवत्सरे खृष्टीये १८५१. विक्रमार्कगते १९०७. शके १७७३.

समाप्तिमगात्

वोग्देन मुद्रिता सेयं वेबेरेण च शोधिता ।

वाजसनेयसंहिता वेददीपेन संयुक्ता ॥

ओम् श्रीवेदपुरुषाय नमः ॥ ॥

